हरिदाससंस्कृतग्रन्थमालासमाख्य-

काशीसंस्कृतसीरिज़पुस्तकमालायाः

३१

व्याकरणविभागे (५) पञ्चमं पुष्पम् ।

श्रीः

# परिभाषेन्दुशेखरः

महामहोपाध्यायश्रीनागेशभट्टविरचितः ।

महामहोपाध्यायश्रीभैरवमिश्रविरचितया भैरवीत्यपराख्यया परिभाषाविवृत्त्या पं० श्रीलक्ष्मणशर्म्मणा संगृहीतया तत्त्वप्रकाशिकया च सहितः ।

काशीस्थश्रीस्याद्वादमहाविद्यालयव्याकरणाध्यापकेन लब्धसाहित्योपाध्याय-व्याकरणशास्त्रीपदवीकेन जोशीत्युपनामकदामोदरात्मजसदाशिव-शास्त्रिणा टिप्पण्यादिना परिष्कृतः संशोधितश्च ।

प्रकाशकः-

जयकृष्णदास हरिदास गुप्तः-

चौखम्बा संस्कृत सीरिज़ आफिस,

विद्याविलास प्रेस, गोपालमन्दिर के उत्तर फाटक,

बनारस सिटी ।

१९८८.

॥ श्रीः ॥

# भूमिका

सुरासुरासेवितपादपङ्कजा, करे विराजत्कमनीयपुस्तका ।
विधेश्च पत्नी कमलासनप्रिया, सरस्वती नृत्यतु वाचि मे सदा ॥

अयि गीर्वाणवाणीविलासासादितहृदयानन्दाः, पदवाक्यप्रमाणपारावारीणवर्याः पण्डितराजशीर्षण्या महाभागाः, विदितमेवात्रभवताम्भवतामेतद्यत्सुखतया परमपवित्रीभूतं वेदाङ्गधुरीणतामवलम्ब्यमानमखिलभारतवर्षप्रचलितं विशेषतश्च विद्यापीठेषु वाराणस्यादिमाननीयस्थलेषु पठनपाठनगोचरीभूतम्पाणिनीयव्याकरणं नाम शास्त्रं सर्वत्र ।

तत्र तत्रभवता भगवता पाणिनीयमुनिना विरचिताङ्कुरोपणे महर्षिणा पूज्यपादेन श्रीकात्यायनेन विरचितपल्लवे तत्रभवता श्रीमता भाष्यकारेण बाढीकृतस्कन्धेऽत्र शाखिनि समारुरुक्षूणां तत्फलस्वादरसिकानां सुखसमारोहणाय विरचिताः सोपानपरम्परा इव नानाविधाः प्रबन्धाः पण्डितप्रकाण्डैर्मान्यैर्मनीषिभिः ।

येषु प्रबन्धेष्वद्यत्वे श्रीमन्महामहोपाध्यायनागेशभट्टोपनिबद्धः परिभाषेन्दुशेखरः समाद्रियते शेखरतया सर्वैर्विचक्षणैः ।

श्रीमन्महामहोपाध्यायनागेशभट्टाः 'काले'इत्युपनामका महाराष्ट्रीयब्राह्मणा लब्धवागीश्वरीप्रसादका वाराणसीवास्तव्याः सतीदेवीगर्भजाः श्रीशिवभट्टतनुजन्मानः श्रीहरिदीक्षितगुरुवर्यैः प्रशंसिताः शब्देन्दुशेखराद्यनेकग्रन्थकर्तारो निरंतरं विद्यावारिधिप्लवमानाः परमधार्मिका इत्यादि न तिरोहितं विदुषाम् ।

अस्मिन् कुशाग्रबुद्धिनिबद्धे परिभाषेन्दुशेखरे करालकलिकालकूत्कृतिविकम्पितधियां छात्राणां दुरवगाहतामवलोक्य बहुभिर्विद्वद्वरैर्विरचितासु बह्वीष्वपि टीकासु मध्ये सरलतया मूलार्थज्ञापिकामगस्त्यकुलावतंसश्रीमद्भवदेवमिश्रात्मजमहामहोपाध्यायश्रीभैरवमिश्रविरचितां भैरवीं परिभाषावृत्तीत्यपराख्यां टीकां छात्राणाम्परमोपयोगिनीं विचिन्त्य संवलितोऽयम्परिभाषेन्दुशेखरस्तया ।

सम्प्रति वाराणस्यादिविद्यालयेषु प्रचलिताध्यापनशैल्यनुसारेण तत्प्रत्रणानामपि छात्राणामध्ययनाय लक्ष्मणशर्मणा संगृहितया तत्त्वप्रकाशिकया च समलंकृतोऽयं ग्रन्थः ।

यद्यपि टीकाद्वयेन संवलितस्तथापि बहुस्थलेषु भैरव्यास्त्रुट्या नानास्थलेषु तत्त्वप्रका-

शिकाया अंशनेन च न तादृक् आल्हादकोऽयमिति : मत्वा 'चौखम्बासंस्कृतग्रन्थमाला, 'काशीसंस्कृतग्रन्थमाला, 'हरिदाससंस्कृतग्रन्थमाला, इत्येतासामध्यक्षमहोदयेन श्रीहरिदासगुप्तात्मजजयकृष्णदासश्रेष्ठिना प्रोत्साहितेन मया अतिपरिश्रमेण प्राचीनद्वित्रान् ग्रन्थान् समवलम्ब्य साद्यन्तां भैरवीं तत्त्वप्रकाशिकां च पर्यालोच्य सन्देहस्थलानि च गुरुवर्यपूज्यमहोदयपण्डितप्रकाण्डराजकीयसंस्कृतमहाविद्यालयाध्यापकमोकाटेइत्युपनामकश्रीगणपतिशास्त्रिचरणानां सविधे परिज्ञाय तत्तत्स्थलस्य परिपूरणेन विषमस्थले टिप्पणीदानेन कुत्रचित्स्वतन्त्रव्याख्यानेन च परिष्कृत्य यथाशेमुषि संशोधितः ।

मुद्रणसमये अर्थवद्ग्रहणपरिभाषोपरि त्रुटितभैरवीटीकापरिदानेन मित्रवर्यपंडितराजकीयसंस्कृतपाठशालाध्यापकफडकेइत्युपाह्वानन्तशास्त्रिभिरुपकृतास्तेभ्यो धन्यवादान्वितरामः ।

अस्मिन् परिशोधितग्रन्थे गच्छतस्खलनन्यायात् मतिमान्द्याल्लेखदोषान्मुद्रकदोषात् दृष्टिदोषाद्वाशुद्धिः स्यात्तर्हि गुणैकपक्षपातिनो विद्वांसस्तां परिशोधयन्तु कण्टकाविद्धसरोजमुकुलवत् हंसक्षीरन्यायेन निसर्गत एव गुणग्रहणपरा भवेयुः इत्यलम् ।

नचात्रातीवकर्तव्यं दोषदृष्टिपरं मनः ।
दोषो ह्यविद्यमानोऽपि तच्चित्तानां प्रकाशते ॥

इत्युक्तिमनुसंधाय मामनुगृह्णन्त्विति मुहुर्मुहुः साञ्जलिबन्धं सम्प्रार्थयते ।

विदुषामनुचरः

जोशीत्युपाह्वसदाशिवशास्त्री

साहित्योपाध्यायः व्याकरणशास्त्री च

# परिभाषाणां सूचीपत्रम् ।

इति तृतीयम्प्रकरणम् ॥

## शुद्धिपत्रम् ।

| अशुद्धम् | शुद्धम् | पृ. अं. | पं. अं. |
|---|---|---|---|
| आन्तयर्म्बलीयः | आन्तर्यम्बलीयः | ४७ | २ |
| सहिताभरवि | सहिताभैरवी | ८३ | १ |
| पियक्रोष्टूनि | प्रियक्रोष्टूनि | १०८ | ११ |
| संज्ञाकृय | संज्ञाकृ | १९६ | २४ |
| प्रत्ययः | प्रत्ययः | २१६ | १२ |

॥ श्रीः ॥

श्रीगणेशाय नमः ।

# परिभाषेन्दुशेखरः ।

नत्वा साम्बं शिवं ब्रह्म नागेशः कुरुते सुधीः ।

भैरवी ।

वन्देऽहं परमात्मानं सर्वज्ञं रघुनन्दनम् ।
यत्कृपावशतो यान्ति सिद्धिमत्र महर्षयः ॥ १ ॥
सरस्वतीञ्च तां नौमि वागधिष्ठातृदेवताम् ।
देवत्वं प्रतिपद्यन्ते यदनुग्रहतो जनाः ॥ २ ॥
नत्वा तातं गुरुन्देवं भवदेवाभिधं विभुम् ।
यद्यशोभिर्धवलिताः ककुभो जननीं पराम् ॥ ३ ॥
सीतां पतिव्रतां देवीं भारद्वाजकुलोद्भवाम् ।
विवृतेः परिभाषाणां व्याख्यां कुर्वे यथामति ॥ ४ ॥

चिकीर्षितस्य ग्रन्थस्य समाप्तिप्रचारादिप्रतिबन्धकदुरितोपशमाय कृतं मङ्गलं शिष्यशिक्षायै निबध्नाति *नत्वा साम्बं शिवमिति* । नतेः स्वावधिकोत्कर्षप्रकारकज्ञानाऽनुकूलव्यापाररूपतया, उत्कर्षस्य च सर्वजगत्कर्तृत्वादिरूपस्य मायाशबलिते एव सम्भव इत्यभिप्रायेण साम्बमितिविशेषणोपादानम् । *नागेश इति* । न च 'आत्मनाम' इत्यादिना स्वस्य नाम्नो ग्रहणं निषिद्धमिति कथमेतन्निर्देश इति वाच्यम्? तस्य निषेधस्य पितृसङ्केतितनामपरत्वादस्य च निर्देशस्य 'गोनर्दीयस्त्वाह'इति भाष्यकारोक्तिस्थ इव यौगिकशब्दघटितत्वात् । एतेनाऽस्य ग्रन्थस्य भाष्यसिद्धान्ताऽनुसारित्वं ध्वन्यते ।

तत्वप्रकाशिका-

राधयाञ्चितकरः स्मिताननः साभिलाषमभितो विलोकयन् ॥
पातु केलिवनवीथिसंस्थितो माधवो मधुरया गिरा वदन् ॥ १ ॥
पार्वतीतनयं नत्वा कृत्वा गुरुषु वन्दनम् ।
यथामति सतान्तुष्ट्यै कुर्वे तत्त्वप्रकाशिकाम् ॥ २ ॥
भैरवेणार्चिता वाणी नागेशस्यातिदुर्गमा ॥
तत्र गन्तुं प्रवृत्तेऽस्मिन् न हसन्तीह धीवराः ॥ ३ ॥

*साम्बमिति* । अम्बा पार्वती, माया, जननी सतीदेवी वा, तया सहितमित्यर्थः । शिवम् शम्भुं, शेतेऽस्मिन् जगदितिव्युत्पत्या प्रलयकर्तारं, पितरम्वा *ब्रह्म* व्यापकं, पालनकर्तारं, ब्रह्मरूपिणम्वा । नत्वेत्यन्वयः । *यौगिकेति* । ननु नागः ईशः प्रवर्तको यस्येति-व्युत्पत्यङ्गीकारे क्रियावाचकत्वेन विशेषणत्वादीशस्य पूर्वनिपातापत्तिः । नच पितृसङ्केतित-नामलेखने दोषाभावः, तत्रापि स्वीयसूक्ष्मोच्चारणस्यावश्यम्भावात्, यद्यपि प्रतिज्ञावाक्य-घटकतया स्वीयनामनिर्देशे प्रत्यवायाभाव इति नामसङ्कीर्तनपूर्वकमभिवादनं कर्तव्यमित्यर्थ-बोधक'प्रत्यभिवादेऽशूद्रे' इत्यादिभाष्यप्रामाण्याल्लभ्यते तथाप्यभिवादात्परं विप्रो ज्यायांस-मभिवादयन्। असौ नामाहमस्मीति "स्वं नाम परिकीर्तयेत्" इत्यादिस्मृत्येकवाक्यतया नि-

बालानां सुखबोधाय परिभाषेन्दुशेखरम् ॥ १ ॥

प्राचीनवैयाकरणतन्त्रे वाचनिकान्यत्र पाणिनीयतन्त्रे ज्ञापकन्यायसिद्धानि भाष्यवार्त्तिकयोरुपनिबद्धानि यानि परिभाषारूपाणि तानि व्याख्यायन्ते ।

भैरवी ।

*कुरुत इति* । न च 'बालानां सुखबोधाय' इत्युक्त्या क्रियाफलस्य परगामित्वसूचनादात्मनेपदाऽनुपपत्तिरिति वाच्यम् ? स्वस्य यशःप्राप्तिरूपस्य बालसमवेतसुखबोधात्मकसत्कर्मप्रयोज्याऽदृष्टस्य च फलस्य कर्तृगामित्वसम्भवात् । *बालाश्च*—भाष्याद्याकरग्रन्थात्परिभाषार्थस्य झटिति ग्रहणेऽसमर्थाः । *परिभाषेन्दुशेखरमिति* । परिभाषा एव इन्दुः अर्थप्रकाशकत्वात्, सा शेखरे यस्येति ग्रन्थपक्षे, यद्वा शेखरशब्दस्य भूषणवाचकस्य परिभाषेन्दुशब्देन परिभाषेन्दुरेव शेखरो यस्येति बहुव्रीहिः । शिवपक्षे तु परिभाषैवेन्दुः शेखरो यस्येत्यर्थः ॥ १ ॥

ननु कास्ताः परिभाषा अत आह-*प्राचीनेति* । इ(१)न्द्रादिनिर्मिते । *वाचनिकानि* । वचनरूपेण पठितानि । *अत्र* । एतच्छास्त्रे । *ज्ञापकन्यायेति* । अस्य प्रायेणेत्यादिः । ज्ञापकन्यायसिद्धानि, अत्र न्यायशब्दस्याऽल्पाच्त्वेऽपि लौकिकत्वेनाप्राधान्यं, ज्ञापकत्वेनैतच्छास्त्रीयं लिङ्गमिति शास्त्रस्य ऋषिप्रणीतत्वेन स्मृतित्वात् 'स्मृत्यनुगृहीतत्वं ज्ञापकस्य' इत्यभ्यर्हितत्वात्पूर्वनिपातः ।

न चाऽत्र शास्त्रेऽपि कासाञ्चित्परिभाषाणां वाचनिकत्वमिति न्यूनताऽऽपत्तिरिति वाच्यम् ? प्रायेणेत्यादिपूरणेन परिहृतत्वात् । तत्र ज्ञापकमेतच्छास्त्रीयं लिङ्गमेव । न्यायश्चैतच्छास्त्रप्रसिद्धा युक्तिर्यथा--नित्यस्य बलवत्त्वे प्रदर्शिता लाघवरूपा, अपि च लोकतन्त्रान्तरप्रसिद्धा युक्तिः, एताभ्यां सिद्धानि । द्वन्द्वान्ते श्रूयमाणस्य सिद्धशब्दस्य प्रत्येकं सम्बन्धः । तेनैकसिद्धासंग्रहः । ज्ञापकसहितो न्याय इति च समासः । तेनोभयसिद्धायाः संग्रहः पुनरुभयोरेकशेषः ।

ननु सूत्ररूपेण पठितानां परिभाषाणामिहाऽव्याख्यानादप्रामाण्यं प्रतिज्ञायाः प्राप्नोतीत्यत आह—*भाष्येति* । परिभाषापदस्य च, 'परितो भाष्यते या' सा परिभाषेति व्यापृतिरूपस्य रूढ्यर्थताऽवच्छेदकस्यापि सम्भवात्परिभाषापदमासु योगरूढमिति बोध्यम् । न

तत्वप्रकाशिका-

यमस्य विशेषविषयकत्वात्, इति चेत्सत्यं गोनर्दीयस्त्वाह'इति भाष्यबलेन सामान्यविषयकत्वकल्पनेनादोषात् । *कुरुत इति* । "गन्धनावक्षेप" इति प्रकथनादात्मनेपदम् । *सुखबोधायेति* । अनायासेन बोधायेत्यर्थः । एतेन शास्त्रारम्भस्य प्रयोजनं दर्शितम् *सुधीरिति* । एतेनोहापोहकुशलत्वं सूचितम् ॥ १ ॥

परिभाषारूपे विषये दर्शितं तत्स्वरूपजिज्ञासायां जिज्ञासास्वरूपमाह-*ननु कास्ता इति*। *पठितानीति*। एवं च "इको गुणवृद्धी" इत्यादीनां न प्रतिज्ञाविषयीभूतत्वमितिभावः । *परिहृतत्वादिति* । केचित्तु सर्वासां ज्ञापकन्यायसिद्धत्वमेव, वाचनिकत्वकथनन्तु भाष्येऽनुपन्यासमूलकमित्याहुः ।

*व्यापृतिरूपस्येति* । परित इत्यस्य विधिशास्त्रजन्यशाब्दबोधे इत्यर्थः । व्यापृ-

( १ ) इन्द्रादीति । आदिपदेन

ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम् ।

सारस्वतं चापिशलं शाकलम्—इति अष्टव्याकरणानि ज्ञेयानीतिभावः ।

ननु "लण्" "अइउण्"सूत्रयोर्णकारद्वयस्यैवोपादानेनाणिणूग्रहणेषु सन्देहादनिर्णयोऽत आह--

**व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम् ॥१॥**

विशेषस्यान्यतराद्यर्थरूपस्य व्याख्यानाच्छिष्टकृतात् प्रतिपत्तिर्निश्चयो, यतः सन्देहाच्छास्त्रमलक्षणमननुष्ठापकं लक्षणमलक्षणं तथा न, शास्त्रस्य निर्णयजनकत्वौचित्यादित्यर्थः ।

भैरवी ।

तु यौगिकमेव संज्ञायामतिव्याप्तेः ।

यत्तु, परिभाषात्वं 'लिङ्गवत्वे सति नियामकत्वम्' इति तन्न, वक्ष्यमाणे केवलवाचनिकानामसंग्रहाऽऽपत्तेः । यदपि 'अनियमे नियमकारित्वम्' इत्येव तदपि न, अत्राऽव्याख्यातनियमार्थसूत्रेष्वतिव्याप्तेः ।

सर्वशास्त्रोपकारकत्वेन भाष्ये सर्वतः पूर्वं पाठेन चाभ्यर्हितत्वादत्राऽपि सर्वत एतस्याः कथने बीजं वक्तुं भूमिकामाह--*नन्विति* । *व्याख्यानत इत्यादि*--आद्यादित्वात् सार्वविभक्तिकस्तसिः । *विशेषप्रतिपत्तिरिति* । कर्मषष्ठ्यन्तेन समासः, आचार्य्यस्य कर्तुरनुपादानान्नात्र "उभयप्राप्तौ" इति सूत्रविहिता षष्ठी इति "कर्मणि च" इति समासनिषेधो न शङ्क्यः । शेषषष्ठ्यन्तेन वा समासः । व्याख्यानञ्च,--

पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना ।
आक्षेपोऽथ समाधानं व्याख्यानं षड्विधं मतम् ॥

तत्वप्रकाशिका--

तिशब्दस्य व्यापारविशिष्टत्वमर्थान्न्यूनाधिकवृत्तिसङ्कोचकत्वमर्थः । शाब्दबोधजनकपरेण भाषापदेन स्वातन्त्र्येण वाक्यार्थधीप्रयोजकत्वमधिकारादिव्यावृत्तं रूपं सूचितमिति भावः । *अनियमे नियमकारित्वमितीति* । अनियमत्वं न्यूनातिरिक्तवृत्तित्वम्, नियमत्वं--सङ्कोचकत्वमेवं च न्यूनातिरिक्तवृत्तिसङ्कोचकत्वं परिभाषात्वमिति फलितम् । *अतिव्याप्तेरिति* । वस्तुतस्तु साक्षाल्लक्ष्यधर्मिकसाधुत्वप्रकारकविधिशास्त्रजन्यशाब्दबोधीयन्यूनाधिकवृत्तिसङ्कोचकत्वमिति स्वीकारान्न दोषः । नियमनिषेधापवादानां विषयसङ्कोचकत्वेन शाब्दबोधीयसङ्कोचाभावाद्व्युदासः । संज्ञावारणाय।विधिशास्त्रेति । परम्परया तामेव वारणाय साक्षादिति ।

शास्त्रत्वबाधबीजतन्त्रशेषसम्पादिकासु शास्त्रत्वं विना लक्ष्याविषयत्वेन बाधस्यैवासम्भवात् बाधबीजानामुपजीव्यत्वेन तन्त्रशेषस्य च शेषत्वेनैव शेषभूतत्वादुपोद्घातसङ्गत्या शास्त्रत्वसम्पादिकानाम्पूर्वम्पाठे प्राप्ते तास्वपि पूर्वं कस्याः पाठ इत्याशङ्कायामाह--*सर्वशास्त्रोपकारकत्वेनेति* *अभ्यर्हितत्वादिति* उपोद्घातसङ्गत्येति भावः ।

मूले--*सन्देहादिति*। ननु पशुपदं लोमवल्लाङ्गूलावच्छिन्ने शक्तमिति निश्चये श्वेते नीले वेतिसंशयादर्शनाद् "आदिरन्त्येन सहेता" इत्यनुशासनेनाणपदेऽण्त्वावच्छिन्ने यावद्वर्णे शक्तिर्निश्चयेन निश्चयस्य च संशयप्रतिबन्धकत्वेनाणपदं वर्णत्रये वर्णचतुर्दशे वा शक्तमिति शक्तौ, तात्पर्येऽपि चैकत्रानेकेच्छायाः दर्शनेन पूर्वतात्पर्येणोच्चरितम्परतात्पर्येण वेतीच्छायाः विरोधाभावादेकधर्मिकविरुद्धकोटिद्वयावगाहि ज्ञानरूपसंशयस्याभावेन कथं सन्देह इति चेत्सत्यम् पूर्वणकारोच्चारणसामर्थ्याच्छक्तिद्वयकल्पनेन तयोश्च व्याप्यव्यापकयोर्विरोधेन तात्पर्यसंशयस्य जागरूकत्वात् । *अनिर्णय इति* । तात्पर्यसंशयान्निश्चयात्मकशाब्दबोधाभाव इत्यर्थः । अन्यतराद्यर्थस्य । अन्यतम आद्यर्थः ।

असन्दिग्धानुष्ठानसिद्ध्यर्थऽत्र शास्त्रे सन्दिग्धोच्चारणरूपाचार्यव्यवहारेण सन्देहनिवृत्तेर्व्याख्यानातिरिक्तनिमित्तानपेक्षत्वं बोध्यत इति यावत्।

तेन "अणुदित्सवर्णस्य" ( १-१-६९ )! इत्येतत्परिहाय पूर्वेणाण्ग्रहणं, परेणाण्ग्रहणमिति "लण्"सूत्रे भाष्ये स्पष्टम् ॥ १ ॥

तत्र संज्ञापरिभाषाविषये पक्षद्वयमित्याह—

**यथोद्देशं संज्ञापरिभाषम् ॥ २ ॥**

**कार्य्यकालं संज्ञापरिभाषम् ॥ ३ ॥**

उद्देशमनतिक्रम्य यथोद्देशम्। उद्देश उपदेशदेशः। अधिकरणसा-

भैरवी।

इति प्रसिद्धमेव। पदार्थोक्तिरित्यत्र पदार्थपदं वृत्त्या पदबोध्यपरम्। वृत्तिश्च शक्तिलक्षणाव्यञ्जनान्यतमरूपा, तेन ज्ञापकसिद्धानामपि संग्रहः। यथा–परेणाऽण्ग्रहणे "उरृत्" इति-सूत्रस्थं तपरकरणं व्यञ्जकमिति ॥ १ ॥

अत्र शास्त्रे संज्ञापरिभाषाणां कार्य्यनिर्वाहकत्वं पक्षभेदेन तत्र तत्र दृश्यतेऽतस्तौ पक्षावाह–*यथोद्देशमित्यादिना*। तत्र प्रथमपरिभाषाऽर्थमाह–*उद्देशमिति*।

यद्यप्यन्यत्र भावघञन्तयोरुद्देशोपदेशपदयोः 'प्रत्यक्षमाख्यानमुपदेशो' 'गुणैः प्रापणमुद्देशः' इति भेदेनोपादानं दृश्यते। 'उद्देशश्च प्रातिपदिकानां नोपदेश' इति चोक्तम्। तथापीहोद्देशपदमधिकरणघञन्तम्। उदुपेत्युपसर्गभेदेऽपि दिशधातुरुच्चारणार्थक एव। यथा–प्रत्यक्षमाख्यानेऽपि 'इषेत्वकमधीष्व' इति गुरुणा कथिते, शिष्यो वक्ति 'उद्दिष्टो मेऽनुवाकः' इत्यत्रोत्पूर्वकदिशेः प्रयोगे। एवञ्चोद्देशपदस्योद्दिश्यते उच्चार्यतेऽस्मिन्नित्यधिकरणघञन्तस्यो-

तत्वप्रकाशिका–

ननु ज्ञापितेऽपि स्वांशे चारितार्थ्याभावात्, व्याख्यानेनैव सन्देहनिवृत्तेरनन्यथासिद्धफलाभावाच्चेयमसङ्गतेत्यत आह—*असन्दिग्धेति*। सन्देहविषयभिन्नं यदनुष्ठानं शब्दप्रयोगस्तत्सिध्यर्थं इति भावः। भावक्तान्तेनार्श आद्यचि निष्पन्नमेतद्।

अयम्भावः—तद्विषयकप्रवृत्तिं प्रति तद्धर्मिकेष्टसाधनत्वनिश्चयस्य हेतुत्वेनात्रानुष्ठानस्य शब्दोच्चारणविषयकेच्छारूपत्वेन तस्याश्च साधुत्वाभिधानद्वारा पुण्यजनकत्वरूपेष्टसाधनत्वज्ञानजनकत्वाच्छास्त्रस्योत्तेजकत्वेन शास्त्रमसन्दिग्धानुष्ठानप्रयोजकम्भवतीति। प्रयोगश्चेत्थं—शास्त्रं, सन्देहाभाववच्छब्दोच्चारणविषयकेच्छाजनकं इष्टसाधनत्वनिश्चयजनकत्वात्। *सन्दिग्धेति*। भावक्तान्तं सन्देहजनके लाक्षणिकम्। *बोध्यत इति*। अनुमीयत इत्यर्थः। प्रयोगश्चेत्थम्—सन्देहविषयीभूतं शास्त्रं, व्याख्यानातिरिक्तनिमित्तानपेक्षं सन्देहजनकोच्चारणविषयत्वे सति, असन्दिग्धानुष्ठानप्रयोजकत्वात्। अत्र चानुकूलं णकारोच्चारणम्। अन्यथा णकाराद्यनुबन्धेनैव सन्देहनिवृत्तेस्तदुच्चारणं व्यर्थमेव स्यात्। कल्पिते त्वस्मिन्निमित्तान्तरस्यापेक्षाभावेन व्याख्यानेनैव निर्णयः। ननु णकारादिकरणेन। अत एव नञ्द्वयोपादानमपि, इति न स्वांशे चारितार्थ्याभावप्रयुक्तमेतद्वैयर्थ्यमिति बोध्यम्।

*व्यञ्जकमिति*। नच भाव्यमानत्वेन सवर्णाग्राहकत्वाज्ज्ञापितेऽपि कथं स्वांशे चारितार्थ्यमिति वाच्यम्? अपूर्वबोधकत्वाभावेन भाव्यमानत्वाभावात्। "अणुदित्"सूत्रादन्यत्र तु तत्र तत्राण्ग्रहणसामर्थ्यात्पूर्वेणैव, अन्यथाऽचमेव विदध्यात्। य्वोरिति सम्प्रसारणग्रहणादिणपि पूर्वेणैव ॥ १ ॥

*तत्र*–शास्त्रे। तेन, शास्त्रत्वावच्छेदेन पक्षद्वयमिति न प्रत्येकं संज्ञापरिभाषादेशमादाय

धनश्चायम् । यत्र देशे उपदिश्यते तद्देशे एव वाक्यार्थबोधेन गृहीतशक्त्या गृहीतपरिभाषार्थेन च सर्वत्र शास्त्रे व्यवहारः । देशश्चोच्चारणकाल एवात्र शास्त्रे व्यवह्रियते । तत्तद्वाक्यार्थबोधे जाते भविष्यति किञ्चिदनेन प्रयोजनमिति ज्ञानमात्रेण सन्तुष्यद्यथाश्रुतग्राहिप्रतिपत्त्रपेक्षोऽयं पक्ष इति "ईदूत्" ( १-१-११ ) सूत्रे कैयटः ।

भैरवी ।

च्चारणाधिकरणमर्थः । *अनतिक्रम्येति* । ल्यबन्तस्याध्याहृतवर्तेत इति क्रियायामन्वयः ।

यद्यप्युच्चारणस्य शब्दरूपतया तदधिकरणं गगनं सुप्रसिद्धं तथापि तस्याऽनौपाधिकभेदाऽभावेन पौर्वापर्य्यव्यवहारनियामकत्वाभावादिहाऽधिकरणं खण्डकाल एव विवक्षितः । तत्र संज्ञापरिभाषाविषये आह—*यत्र देशइत्यादि* ।

संज्ञाविषये आह—*गृहीतशक्त्येति* । परिभाषाविषये आह—*गृहीतपरिभाषार्थेनेति* । गृहीतपदस्योभयत्र कर्मधारयः । *व्यवह्रियत इति* । वक्ष्यमाणव्यवस्थासिद्धये आश्रीयते । यथोद्देशकार्य्यकालयोर्मध्ये द्वितीयपक्ष एव मुख्यः, प्रथमस्तु क्वचिल्लक्ष्यसिद्धये आश्रीयते । परन्त्वयन्न मुख्याधिकारियोग्यमित्याशयेनाह—*तत्तदिति* । *ईदूत्सूत्र इति* । यथा—अग्नी इत्यत्र "ईदूदेत्" इत्यनेन प्लुतम्बाधित्वा, प्रगृह्यत्वे जाते, तस्य स्था-

तत्वप्रकाशिका—

दोषलेश(१)शोऽपि । *ल्यबन्तस्येति* । "परावरयोगे च" इति क्त्वाप्रत्ययस्य "समासे नञ्पूर्वे" इति ल्यप् । *सुप्रसिद्धमिति* । नैयायिकादीनामित्यादि । *अनौपाधिकभेदाभावेनेति* । नित्यस्याकाशस्यैकविधत्वात्तत्रोपाधिकृत एव भेदः । पौर्वापर्ये चाधिकरणभेदस्यैव नियामकत्वेन वास्तविकस्य तस्यात्राभावेनपौर्वापर्यव्यवहार एव न स्यादतः खण्डकाल एव शब्दाधिकरणत्वेन विवक्षित इत्याह—*पौर्वापर्यंति* ।

*गृहीतशक्त्येति* । अयं भावः—उद्बोधकस्य स्मरणे कारणत्वेन, विधिशास्त्रघटकतत्साङ्केतिकपदानुभवोद्बोधितेन संज्ञाशास्त्रजन्यबोधादासंस्कारेणैव शाब्दबोधे जाते विधिप्रदेशे न संज्ञाशास्त्रोपस्थितेः प्रयोजनम् । कार्यकालपक्षस्तु स्मरणे अपेक्षाबुद्धेरपि सहकारित्वेन फलादर्शनात् गुरुवाक्ये विश्वासाभावाद्यत्र श्रोतुरुपेक्षा जाता तत्रानुभावकताया असम्भवात्पुनर्विधिदेशे संज्ञाशास्त्रजन्यबोधस्यावश्यकत्वादाश्रयणीयः । *गृहीतपरिभाषार्थेनेति* । अत्रापि स्वलिङ्गलिङ्गितविधिशास्त्रघटकस्वलिङ्गानुभवोद्बोधितेन संस्कारेणैव निर्वाहः । अयम्भावः—उभयत्र यथोद्देशे वाक्यैकवाक्यता । साचो(२)पजीव्योपजीवकभावा-

( १ ) दोषलेशोऽपीति । शास्त्रे इत्यस्य पक्षद्वयमित्यत्रान्वयेन पक्षद्वयत्वावच्छिन्नाधेयतानिरूपिताधिकरणता शास्त्रत्वावच्छिन्नेति लभ्यते । अन्यथा संज्ञापरिभाषादेशत्वावच्छिन्नायाः एव तस्या लाभेन प्रतिसंज्ञाविषयं प्रतिपरिभाषाविषयं पक्षद्वयमित्यनिष्टसंभावना स्यादितिभावः ।

( २ ) उपजीव्येति । "वृद्धिरेचि" इत्यादिशास्त्राणां शाब्दबोधः वृद्ध्यादिपदार्थज्ञानाय संज्ञाशास्त्राधीन इत्युपजीव्यत्वं, संज्ञाशास्त्राणामुपजीवकत्वं विधीनाम् । एवं परिभाषाविषयेऽपि बोध्यम् । यद्यपि परिभाषाशास्त्राणां तात्पर्यग्राहकत्वेन शाब्दबोधे च पदपदार्थज्ञानस्यैव कारणत्वेन न तासां तथात्वम्, तथापि निश्चयात्मकशाब्दबोधे तात्पर्यनिश्चयस्यैव कारणत्वेन परिभाषाणामुजीव्यत्वम्बोध्यम् ।

केचित्तु-परिभाषाविषये "तस्मिन्" (१-१-६६) इत्यादिवाक्यार्थबोधे 'सप्तमीनिर्देशादि क' इति पर्य्यालोचनायां सकलतत्तद्विध्युपस्थितौ सकलतत्तत्संस्काराय गुणभेदं परिकल्प्यैकवाक्यतयैव नियमः।

कार्य्यकालपक्षे तु त्रिपाद्यामप्युपस्थितिरिति विशेषः। एतदेवाभिप्रेत्याधिकारो नाम त्रिप्रकारः कश्चिदेकदेशस्थः सर्वं शास्त्रमभिज्वलयति,

भैरवी।

ने प्लुते कृतेऽपि पुनः प्रगृह्यसंज्ञा प्लुतस्याऽसिद्धत्वेन द्विमात्रत्वबुद्ध्या प्रवर्त्तते। यद्यत्र कार्यकालपक्षः स्यात्तदा प्रगृह्यत्वस्य "अणोऽप्रगृह्यस्य" इत्येकवाक्यतापन्नत्वेन प्लुतात्परत्वबुद्ध्या तद्दृष्ट्या प्लुताऽसिद्धत्वन्नस्यात्। 'लक्ष्ये लक्षणं सकृदेव प्रवर्त्तत' इति न्यायस्तु संज्ञाशास्त्रविषये नाश्रीयत इत्यन्यत्र स्पष्टम्। कैयट इत्यनेन सूचितामरुचिं सूचयन् स्वसिद्धान्तमाह-*केचित्विति*।

परिभाषाविषय इति भिन्नो ग्रन्थः। उच्यत इति शेषः। *वाक्यार्थबोध इति*। सतीतिशेषः। *तत्तत्संस्काराय*। सप्तम्यन्तपदघटितवाक्यजन्यशाब्दबोधाय निश्चयात्मकबोधो हि नियामकशास्त्रसहायेन भवतीति भावः। *गुणभेदम्* परिभाषाभेदम्। *एकवाक्यतयैवेति*। एवकारेण यथोद्देशपक्षेऽपि वाक्यभेदो नेति बोधितम्।

ननु यथोद्देशेऽपि चेदेकवाक्यता तर्हि कार्य्यकालपक्षादस्य को विशेष इत्यत आह*कार्य्यकालेति*। *विशेषः*। यथोद्देशपक्षाद्विशेषः। अत्र त्रिपाद्यामप्युपस्थितिरित्यनेन परिभाषायाः यद्यत्स्थानं तत्र वाक्यार्थबोधस्तज्जन्योऽस्त्येव, परन्तु सपादसप्ताध्याय्यां यद्यच्छास्त्रसंस्कारयोग्यं, तैः पदैकवाक्यता न तु त्रैपादिकैः, तेषामसिद्धत्वात्। कार्य्यकालपक्षे, तु परिभाषाशास्त्रं त्रैपादिकेन शास्त्रेण स्वसंस्काराय स्वसन्निधिं प्राप्यते त्रैपादिकदृष्ट्या परिभाषायाः सिद्धत्वात्, तदनन्तरं वाक्यार्थनिश्चयः। एवं च त्रैपादिकस्य शास्त्रस्यानतिप्रसक्तत्वं कार्य्यकालपक्षमाश्रित्यैव सम्पाद्यमिति भावः। अत्र साधकमाह-*एतदेवेति*। पक्षद्वयेऽप्येकवाक्यत्वसत्वादेव। *नामेति*। निश्चित इत्यर्थः। अधिकारत्वेन निश्चितस्त्रिप्रकार इति बोध्यम्।

तत्वप्रकाशिका-

पन्नविषयताश्रयत्वरूपा। कार्यकाले तु पदैकवाक्यता। सापि स्वीयपदेन सह विधिशास्त्रीयपदानां परस्परं नि(१)रूप्यनिरूपकभावापन्नविषयताप्रयोजकत्वरूपा।

ननु शाब्दी ह्याकाङ्क्षा शब्देनैव प्रपूर्यतेऽन्यथाऽशब्दादपि बोधप्रसङ्गः। एवं चोपेक्षाधियामिवापेक्षाधियामपि न स्मरणेन निर्वाह अपि तु पदसमर्पणेनैव, तत्रापेक्षाधियां गुणप्रदेशे विधिशास्त्रोपस्थापनेन, उपेक्षाधियां विधिप्रदेशे गुणशास्त्रोपस्थापनेनेति। प्रभाकरानुयायिनः कैयटस्य मतमसङ्गतमत आह-*अरुचिं सूचयन् स्वसिद्धान्तमिति*। *वाक्यभेदो नेति*। पदैकवाक्यतैव भवतीति भावः।

*को विशेष इति*। बोधस्योभयत्र समत्वादित्यादि। *स्वसन्निधिं प्राप्यते*। अदृष्टपिशाचाकर्षणन्यायेन। *साधकमाहेति*। अनुकूलत्वेनेति शेषः। *अधिकारेति*। स्वदेशे बोधशून्यत्वे सति साक्षादेकवाक्यतया बोधोपयोगित्वमधिकारत्वम्। दीपो यथा-स्वावयव-

---

(१) निरूप्येति। "तस्मिन्" इति परिभाषया पूर्वस्येतिपदेऽर्पिते किन्निरूपितम्पूर्वत्वमित्यवधिजिज्ञासायाम् "इको यणचि" इति सूत्रघटकाचीति तन्निरूपको भवति, परिभाषोपस्थाप्यस्तु निरूप्यः।

यथा प्रदीपः सुप्रज्वलितः सर्वं वेश्माभिज्वलयतीति।"षष्ठी स्थाने"(१-१-४९) इति सूत्रे भाष्ये उक्तम् । अधिकारशब्देन पारार्थ्यात्परिभाषाप्युच्यते । कश्चित् परिभाषारूप इति कैयटः । दीपो यथा प्रभाद्वारा सर्वगृहप्रकाशक एवमेतत् स्वबुद्धिजननद्वारा सर्वशास्त्रोपकारकमिति तत्तात्पर्य्यम् । एतच्च पक्षद्वयसाधारणं भाष्यं पक्षद्वयेऽपि प्रदेशैकवाक्यताया इतः प्रतीतेः । तत्रैतावान् विशेषः । यथोद्देशे परिभाषादेशे सर्वविधिसूत्रबुद्धावात्मभेदं परिकल्प्य तैरेकवाक्यता परिभाषाणाम् । तदुक्तं "क्ङिति च" ( १-१-५ ) इति सूत्रे कैयटेन—'यथोद्देशे, प्रधानान्यात्मसंस्काराय सन्निधीयमानानि गुणभेदं प्रयुञ्जत' इति ।

कार्यकाले, तु तत्तद्विधिप्रदेशे परिभाषाबुद्ध्यैकवाक्यतेति । अत्रैकदेशस्थ इत्यनेन तत्र तत्र तत्तद्बुद्धावपि तत्तद्देशस्थत्वं वारयति, यथा—व्यवहर्तृणां कार्य्यार्थमनेकदेशगमनेऽपि न तत्तद्देशीयत्वव्यवहारः, किन्त्वभिजनदेशीयत्वव्यवहार एव तद्वत् । निषेधवाक्यानामपि निषेध्यविशेषाकाङ्क्षत्वाद्विधेयैकवाक्यतयैवान्वय इति परिभाषासादृश्यात् परिभाषात्वेन व्यवहारः "क्ङिति च" (१-१-५) इत्यत्र भाष्ये । तत्रैकवाक्यता प-

भैरवी ।

परिभाषायाः कथमधिकारत्वमित्याकाङ्क्षायामाह—*अधिकारशब्देनेति । *एतच्चेति* भाष्यमित्यनेनाऽन्वितम् । *प्रदेशः* विधिः । *इतः* । उक्तभाष्यात् । *तत्र* यथोद्देशपक्षे । परिभाषादेशे स्वसंस्कारायोपस्थितं विधिशास्त्रमेव परिभाषाभेदकम् । अस्मिन् पक्षे आत्मशब्द आत्मीयपरिभाषापरः । विधिशास्त्राणां प्राधान्यं, साक्षाल्लक्ष्यसंस्कारकत्वम् । *गुणभेदम्* परिभाषाभेदम् । यथोद्देशपक्षे परिभाषाया एकदेशस्थत्वं स्पष्टमेव, कार्य्यकालपक्षे तु यद्यपि प्रधानदेशे स्वबुद्धिस्तथापि स्वप्रदेशे वाक्यार्थबोधे जाते तत्र तत्रैकवाक्यता-भवतीत्येतावता ।

अत एव वक्ष्यति *'अत्रैकदेशस्थ इत्यादि'* । *अत्र* उक्तभाष्ये । एतेन भाष्येण यद्देशे परिभाषाणां पाठस्तद्देशस्थत्वव्यवहार एवेति सूचितम् ।

ननु कार्य्यकालपक्षमाश्रित्य निषेधशास्त्रविषये व्यवस्थोपपादनमयुक्तं तस्य परिभाषात्वाभावादत आह—*निषेधवाक्यानामपीति* । अत्राऽपिना मुख्यपरिभाषात्वं येषां तेषां संग्रहः । निषेध्यपदञ्च, संस्कार्य्यपरम् । एकवाक्यतामुपपादयति—*तत्रैकेत्यादिना* । पर्युदासन्यायेनेत्यनेन, यथा—तत्र पक्षे पदैकवाक्यता "निपात एकाजनाङ्" इत्यादावाङ्भिन्न एकाजूनिपातः प्रगृह्यसंज्ञक इति दृष्टा, तथा "क्ङिति च" "इति शास्त्रेण विधिशास्त्राणामेकवाक्यता क्ङिद्भिन्नसार्वधातुकार्धधातुकयोरित्यादिरीत्या कार्य्येति बोधितम् । नन्विदमयुक्तम् "नधातुलोप" इत्यादौ नञोऽसमस्तत्वेन क्रियायामेवान्वयस्योचितत्वादित्याशये-

तत्वप्रकाशिका—

प्रभासम्वलितपदार्थप्रकाशक एवं परिभाषाशास्त्रमपि स्वावयवार्पणेनैवेत्याह मूले—*दीपो यथेति* ।

ननु "घटो न पट" इत्यत्र नञर्थे भेदे सत्यऽपि 'घटे न पटे' इत्यादौ तथाभावात्, असमस्तनञर्थभेदबोधे प्रथमान्तपदोपस्थितेः कारणत्वं कल्प्यते । एवंचात्र प्रथमान्तान्यसप्तम्यन्तपदसमभिव्याहृतत्वेन नञो भेदबोधकत्वं न सम्भवति तदाह—*नन्विदमयुक्तमिति* ।

र्य्युदासन्यायेन। प्रसज्यप्रतिषेधेऽपि तेन सह वाक्यार्थबोधमात्रेणैकवाक्यताव्यवहारः।

संज्ञाशास्त्रस्य तु कार्य्यकालपक्षे न पृथग्वाक्यार्थबोधः, किन्तु प्रदेशवाक्यार्थेन सहैव। अत एव "अणोऽप्रगृह्यस्य" (८-४-५७) इत्येतदेकवाक्यतापन्नम् "अदसोमात्" (१-१-१२) इत्येतत् प्रति न मुत्वाद्यसिद्धम्, असिद्धत्वस्यका-

भैरवी।

नाऽऽह—*प्रसज्यप्रतिषेधेऽपीति। तेन* विधिशास्त्रेण। अत्र साहित्यं स्वजन्यशाब्दबोधाव्यवहितोत्तरकालोत्पत्तिकत्वसम्बधेन। एतेन वाक्यैकवाक्यताया लाभः। प्राचीनमते, "ईदूत्"सूत्रस्थकैयटोक्तरीत्या। यथोद्देशपक्षे परिभाषाणां पृथग्वाक्यार्थबोध इति। अस्मिन्मते तु परिभाषादेशे विधिसूत्रबुद्धौ सत्याम् तैरेकवाक्यतया वाक्यर्थबोधपर्य्यवसानमिति। अत्र भाष्ये 'एकदेशस्थ' इत्यनेन कार्य्यकालपक्षेऽपि यद्देशस्थत्वं परिभाषाणान्तद्देशीयपौर्वापर्य्यभाव एव विप्रतिषेधप्रवृत्तौ बीजमिति दर्शितम्। अत एवोभयनिर्द्देशे "ङः सि धुट्" इत्यादावस्मादेव भाष्यात् स्वीयं देशमादाय परत्वात् "तस्मादित्युत्तरस्य"इत्यस्य प्रवृत्तिः। निषेधशास्त्रस्य विषयेऽपि परिभाषात्वव्यवहारेण तद्व्यवस्था। अत एव भिन्नं छिन्नमित्यादौ व्यवहितेऽपि गुणनिषेधसिद्धये कृतस्य 'क्ङिति प्रतिषेधे तन्निमित्तग्रहणम्' इति वार्त्तिकस्य प्रत्याख्याने कार्य्यकालपक्षे "सार्वधातुकार्द्धधातुकयोः" इति सूत्रैकवाक्यतापन्नस्याऽचारितार्थ्येऽपि "पुगन्त" इति सूत्रैकवाक्यतापन्नस्य निषेधशास्त्रस्याचारितार्थ्येन व्यवधानेऽपि 'येन नाव्यवधान' न्यायेन प्रवृत्तिरिति बोध्यम्।

अथ संज्ञाशास्त्रविषये व्यवस्थामाह—*संज्ञेति। पृथक्* स्वप्रदेशे। न च वाक्याऽर्थबोधे पदार्थोपस्थितेः कारणत्वात् तस्याश्चसत्वात् कथन्न वाक्याऽर्थबोध इति वाच्यम्? न वाक्यार्थ बोध इत्यस्य पृथग्जायमानो न लक्ष्यसंस्कारक इत्यर्थात्। *सहैवेति*। एतेनैवकारेण वाक्यैकवा(१)क्यतया यो विधिप्रदेशे वाक्यार्थबोधः स एव लक्ष्यसंस्कारक इति ध्वनितम्। *अत एव* प्रदेशीयवाक्यार्थबोधस्य लक्ष्यसंस्कारकत्वादेव।

ननु तदेकवाक्यत्वमात्रेण कथमसिद्धत्वाऽभाव इत्यत आह—*असिद्धत्वस्येत्यादि*। "पूर्वत्राऽसिद्धम्" इत्यनेनाऽतिदेश्यस्यासिद्धत्वस्य कार्यार्थमेव स्वीकारादिति भावः।

तत्वप्रकाशिका—

मूले—*संज्ञाशास्त्रस्य त्विति*। तुरप्यर्थे। *कार्यकालेति*। प्रदेशवाक्यार्थान्वयी। परिभाषातो यो विशेषस्तं दर्शयति—*किन्त्विति*।

*इत्यर्थादिति*—अयम्भावः—संज्ञाशास्त्रस्यापि परिभाषावत् पृथक्जायमानः वाक्यार्थबोधः न लक्ष्यसंस्कारकः किन्तु कार्यकालपक्षे प्रदेशवाक्यार्थेन सहैवार्थादत्र भाष्यस्य विनिगमकत्वेन संज्ञाशास्त्राणां विधिदेशे गमनेनैकवाक्यत्वमत एव विधिदेशेनैव पौर्वापर्यव्यवहारः, नैवं परिभाषाणां तत्रैकदेशस्थेति दृष्टान्तेन तथा विनिगमकत्वाभावात् इति विशेषः। अत एवास्य कार्यकालपक्षेऽपि स्वपदार्पणमेव नतु तद्देशगमनम्। अत एव स्वदेशेनैव पौर्वापर्यव्यवहारः।

---

(१) वाक्यैकवाक्यतयेति। उपजीव्योपजीवकभावापन्नबोधप्रयोजकत्वरूपा वाक्यैकवाक्यता। यथा—तस्मिन्नित्यादिपरिभाषाणां "वृद्धिरादैच्" इत्यादिसंज्ञाशास्त्राणां बोधः उपजीव्यः "इको यणचि" "वृद्धिरेचि" इत्यादिविधिशास्त्राणां बोधः उपजीवकः। तयोश्च परस्परं उपजीव्योपजीवकभावत्वाद्वाक्यैकवाक्यतेति भावः।

र्थार्थतया कार्य्यज्ञानोत्तरमेव तत् प्रवृत्तिः, कार्य्यज्ञानं च प्रदेशदेश एवेति तद्देशस्थस्यासिद्धत्वात् पूर्वग्रहणेनाग्रहणात्, एवं तद्बोधोत्तरमेव विरोध-प्रतिसन्धानं चेति तत्रत्यपरत्वमेव "विप्रतिषेध" सूत्रप्रवृत्तौ बीजम्। अत एव कार्य्यकालपक्षे 'अयादिभ्यः परैव प्रगृह्यसंज्ञा' इति "अदसो मात्" (१-१-१२) इति सूत्रे भाष्य उक्तम्।

आकाडाराधिकारस्थभपदसंज्ञादिविषये तु यथोद्देशपक्ष एवेति तत्रत्य-

भैरवी।

*प्रदेशेति*। तत्र वाक्यार्थबोधे जाते एव कार्य्यनिश्चयात्। *तद्देशस्थस्य* "अणोऽप्रगृह्य" इत्येतद्देशस्थस्य। "अदसोमात्" इत्यस्येति शेषः। *पूर्वग्रहणेन* "अदसोसेः" इति एत्रैकवाक्यतापन्न "पूर्वत्रासिद्धम्" इत्येकदेशभूतपूर्वग्रहणेन। एवमसिद्धत्वविषये सर्वत्र व्यवस्था बोध्या। असिद्धत्त्वं संज्ञाशास्त्रदृष्ट्या यत्र प्राप्तं, तत्र व्यवस्थामुक्त्वा लाघवाय विप्रतिषेधसूत्रविषयेऽपि व्यवस्थामत्रैवाह—*एवमिति*। तद्बोधोत्तरम्* प्रदेशे वाक्यार्थबो-धोत्तरम्। चेन कार्य्यज्ञानसमुच्चयः। *तत्रत्यपरत्वम्* प्रदेशदेशीयपरत्वम्। अत्र साध-कमाह—*अत एवेति*। प्रदेशदेशीयपरत्त्वस्य विप्रतिषेधसूत्रप्रवृत्तौ बीजत्वादेवेत्यर्थः। *परैवेति*। एवकारेण यद्यप्यष्टाध्याय्यामपूर्वम्पाठः संज्ञायास्तथापि स्वदेशीयवाक्यार्थबो-धस्य लक्ष्यसाधकत्त्वाऽभावेनाष्टाध्यायीपाठकृतम्परत्वं यद्यप्ययादीनान्तथापि तस्य लक्ष्य-साधकत्वन्नेति सूचितम्। अत्र संज्ञापदोपादानेन परिभाषाविषये स्वदेशीयपरत्वस्यैव का-र्य्यकालपक्षेऽपि नियामकत्वमिति ध्वनितम्।

*सूत्रे भाष्य इति*। तत्र हि—'अमू अत्र' अमी अत्र' इत्यादौ मूत्त्वमीत्वयोः "अ-दसो मात्" इति सूत्रदृष्ट्याऽऽरम्भसामर्थ्यादसिद्धत्वाभावेऽपि "एचोऽयवायावः" इत्येतद्दृ-ष्ट्या सिद्धत्वादयादय आदेशाः प्राप्नुवन्तीत्याशङ्कायां, परेण "अदसोमात्" इतिसूत्रस्य तर्हि वैयर्थ्यं प्राप्नोतीति शङ्किते, वचनस्य यद्देशस्थात् "अदसो मात्" इत्येतद्दृष्ट्या मू-त्वमीत्त्वे सिद्धे, तत्र चारितार्थ्यम्प्रदर्शितम्। "अमू अमी" इत्यत्र "अदसो मात्" इत्य-नेन प्रगृह्यते सति 'अप्रगृह्यस्य' इति पर्य्युदासाय तदेकवाक्यतापन्न "अदसो मात्" इत्येतद्-दृष्ट्या सिद्धत्त्वं यथा, ततः सिद्धान्तिना कार्य्यकालपक्षे "प्लुतप्रगृह्या अचि" इति सूत्रैकवा-क्यतापन्नस्य "अदसो मात्" इत्यस्य "एचोऽयवायावः" इत्येतदपेक्षया परत्वाद्विप्रतिषेधशा-स्त्रबलेनायादीन् बाधित्वा प्रगृह्यत्वमेव भवतीतिप्रतिपादितम्।

नन्वेवं सर्वसंज्ञाशास्त्रविषये व्यवस्था स्यात्, एवञ्च भसंज्ञायाः सर्वत्र पदसंज्ञाबाधकत्व-मिष्टन्तन्न सिध्येदत आह—*आकडारेति*। यथोद्देशपक्ष एवेत्येवकारेण कार्य्यकालपक्षव्य-वच्छेदः। यद्यत्र कार्य्यकालपक्षः स्यात् तदा "अदसोमाद्"इति सूत्रस्थोक्तभाष्यरीत्या नलो-पैकवाक्यतापन्नपदत्वस्य त्रैपादिकत्वेनासिद्धत्वाद्भसंज्ञया बाधो न स्यादेवञ्च राज्ञ इत्यादौः नलोपः स्यात्।

यथोद्देशपक्षे तु, स्वदेशीयपरत्वस्यैव नियामकतया पदसंज्ञाया भसंज्ञया परत्वाद्बाधः। अस्मिन्पक्षे 'भविष्यति किञ्चिदनेन प्रयोजनम्' इति ज्ञानमात्रेण प्रवृत्तेः स्वीकारात्। अत्र तु पदत्वस्य बाध एव प्रयोजनमित्यस्य वक्तुं शक्यत्वात्। कार्य्यकालपक्षे तु, तत्त-द्विधिप्रदेशीयपरत्वस्यैव नियामकतया यत्र भाऽधिकारीयशास्त्रस्य प्राप्तिस्तत्र भसंज्ञाप्रवृत्ति-रिति 'सुत्वा, धात्रा' इत्यादौ भाऽधिकारीयशास्त्रस्याऽप्राप्ते भसंज्ञाया अप्राप्तौ "स्वादिषु, इति सूत्रेण पदसंज्ञा "इको सवर्णे" इति सूत्रैकवाक्यतापन्ना स्यात्तथा च प्रकृतिभावः स्यात्।

न च भसंज्ञा पदसंज्ञाया अपवाद इति वाच्यम्? शुनः शुना यून इत्यादौ युगपदुभयो

**परत्वेनैव बाध्यबाधकभावः । पदादिसंज्ञानां तत्र जातशक्तिग्रहेणैव त्रिपाद्यामपि व्यवहारः । अत एव "पूर्वत्रासिद्धम्" ( ८-२-१, ) इति सूत्रे भाष्ये परिभाषाणामेव त्रिपाद्यामप्रवृत्तिमाशङ्क्य कार्य्यकालपक्षाश्रयणेन समाहितमित्याहुः । यथोद्देशपक्षः प्रगृह्यसंज्ञाप्रकरणे भाष्ये ।। २ ।।**

भैरवी ।

स्वस्व कार्य्यसमर्पणाय प्राप्तयोर्भसंज्ञायाः सम्प्रसारणप्रापकतया चारितार्थ्येन तातङ्न्यायेन तत्र प्रदेशीयपरत्वमादाय पदसंज्ञैव स्यादिति भावः ।

नन्वेवम्भपदसंज्ञाविधायकसूत्रदृष्टया त्रैपादिकस्यासिद्धत्वात्तत्र प्रवृत्तिर्न स्यात्, एवञ्चेष्टस्थले एव "नलोपः प्रातिपदिकान्तस्य" इत्यस्य प्रवृत्तिरिति न स्यादत आह—*पदादिसंज्ञानामिति* । *तत्र* स्वदेशे । अत्र मानमाह—*अत एवेति* । संज्ञाविषये स्वीयदेशे जातशक्तिग्रहेणैव त्रिपाद्यामर्थोपस्थितिसत्त्वादेव । परिभाषाणामेवेत्येवकारेण संज्ञाव्यवच्छेदः । एवञ्चैतद्भाष्यसूचितोक्तव्यवस्थासिद्धौ "ष्यङः सम्प्रसारणम्" इति सूत्रभाष्ये भसंज्ञायाःकार्य्यकालपक्षमाश्रित्य कार्य्यनिष्पादकत्वमिति यत् दृश्यते, तद्भाष्यन्त्वेकदेश्युक्तिरिति बोध्यम् । 'अनस्तक्ष्णा' इत्यादावाद्याकारस्य लोपाभावस्तु 'अनन्त्यविकारेऽन्त्यसदेशस्य' इति परिभाषयैवेत्यन्यत्र स्पष्टम् । यथोद्देशपक्षस्य सुप्रसिद्धत्वसूचनाय तस्य स्थलमाह—*यथोद्देशपक्ष इति* । एतेनाऽऽद्यपरिभाषाऽर्थो ध्वनितः ॥ २ ॥

तत्वप्रकाशिका–

*मू०–आहुरिति* । अयमत्र निष्कर्षः–प्राञ्चस्तु संज्ञापरिभाषाणां वाक्यार्थयोः सतोर्जातस्य संस्कारस्य तल्लिङ्गलिङ्गितविधिघटकलिङ्गेनोद्बोधे स्मरणेनैव विधावुपकारः । एवं च यथोद्देशे वाक्यैकवाक्यतैव फलति । तयोर्वाक्यार्थे उपेक्षायां संस्काराभावाद्विधावनुभवेनैवोपकारः । एवं च (१)पदैकवाक्यता फलति । अयमेव कार्यकाल इत्याहुः ।

नवीनाः खलु–शाब्दी ह्याकाङ्क्षा शब्देनैव प्रपूर्यत इति नियमान्न संस्कारस्मरणेनोपकार अपि त्वनुभवेनैव । एवंच परिभाषाविषये पक्षद्वयेऽपि पदैकवाक्यतयैव स्वपदार्पणमेव नतु प्रदेशे स्वस्य गमनं जडत्वादिति फलति । संज्ञाविषये तु यथासम्भवमेकवाक्यताद्वयम्, प्रदेशगमनञ्च विनिगमकत्वादित्याहुः । मतद्वयेऽपि पक्षद्वयमपेक्षोपेक्षाबुद्धिकृतमेव । विवादस्तु स्मरणेऽनुभवे नत्वेकवाक्यतायामिति भावः । वस्तुतस्तु परिभाषाविषये न यथोद्देशः, नापि कार्यकालः, अप्रामाण्यज्ञानानास्कन्दितलक्ष्यधर्मिकसाधुत्वप्रकारकबोधजनकत्वरूपशास्त्रत्वम्विना "पूर्वत्रासिद्धम्" इत्यनेन त्रिपाद्या असिद्धत्वाभावेन, तादृशशास्त्रत्वस्य शास्त्रत्वसम्पादिकाधीनत्वेन शास्त्रत्वसम्पादिकानां परिभाषाणां सर्वत्र प्रवृत्तिः । शास्त्रत्वावच्छिन्नोद्देश्यताकपरिभाषाणाम् 'असिद्धं बहिरङ्गं' "विप्रतिषेधे परम्" इत्यादीनां त्रिपाद्या असिद्धत्वेन न तत्र प्रवृत्तिः । संज्ञाशास्त्राणामपि 'संस्कारकशास्त्रदृष्टया संस्कार्यस्य नासिद्धत्वम्' इत्यवसानसंज्ञाविधानात्कल्पनेन त्रिपाद्याम्प्रवृत्तावविरोधात्तद्विषयेऽपि न पक्षद्वयम् । परत्वादिव्यवस्थातु पाणिन्युच्चारणाधिकरणत्व लक्ष्यसंस्कारजननाधिकरणत्व, पाणिन्युच्चारणाधिकरणत्वे सति लक्ष्यसंस्कारजननाधिकरणत्वरूपाधिकरणत्रयेण कल्पनीया । तत्रोत्तरोत्तरं बलवत । तत्र परिभाषाविषये तृतीयं, भपदसंज्ञादिविषये प्रथमं, द्वितीयं प्रगृह्यादिविषये, इति न क्वापि दोषलेश इति बोध्यम् ॥ २ ॥

---

( १ ) **पदैकवाक्यतेति** । सा च स्वघटकपदप्रयोज्यविषयतानिरूपितविषयताप्रयोजकपदघटितत्वरूपा बोध्या ।

कार्य्यकालमित्यस्य च कार्य्येण काल्यते स्वसन्निधिं प्राप्यत इत्यर्थः। कार्य्येण स्वसंस्काराय स्ववृत्तिलिङ्गचिन्हितपरिभाषाणामाक्षेप इति यावत्। अत एव "पूर्वत्रासिद्धम्" ( ८-२-१ ) इति सूत्रे भाष्ये त्रिपाद्या असिद्धत्वात्तत्र सपादसप्ताध्यायीस्थपरिभाषाणामप्रवृत्तिमाशङ्कय यद्यपीदं तत्रासिद्धं तत्त्विह सिद्धमित्युक्त्वा तावताप्यसिद्धिरित्यभिप्रायके कथमिति प्रश्ने? कार्य्यकालं संज्ञापरिभाषं यत्र कार्य्यं तत्रोपस्थितं द्रष्टव्यमित्युक्तम्।

न च कार्य्यकालपक्षे "ङमो ह्रस्वात्" (८-३-४२) इत्यादौ "तस्मादित्युत्तरस्य" (१-१-६७) "तस्मिन्निति निर्दिष्टे पूर्वस्य" ( १-१-६६ ) इति परिभाषाद्वयोपस्थितौ परत्वात् 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्' इति "तस्मिन्" इति सूत्रस्थभाष्यासङ्गतिः। उभयोरेकदेशस्थत्वेन परत्वादित्यस्यासङ्गत्यापत्तेः। स्पष्ट चेदम् "इको गुण" ( १-१-३ ) इत्यत्र कैयट इति वाच्यम्? "विप्रतिषेध" सूत्रेऽष्टाध्यायीपाठकृतपरत्वस्याश्रयणेनादोषात्। न हि कार्य्यकालपक्ष इत्येतावता तदपैति। पक्षद्वयेऽपि प्रदेशेषु स्व-

भैरवी।

द्वितीयपरिभाषाऽर्थमाह-*कार्य्यकालमिति*। चकारस्त्वर्थे द्रष्टव्यः। *कार्य्येण* कार्य्यविधायकशास्त्रेण। *स्ववृत्तीति* स्वघटकेत्यर्थः। यथा-"इको यणचि" इत्यादावचीति पदम्। *अत एव* कार्य्येण स्ववृत्तिलिङ्गचिन्हितपरिभाषाणामाक्षेपादेव। *इदम्* त्रैपादिकम्। *तत्र* सपादसप्ताध्यायीस्थपरिभाषायाम्। अयम्भावः—यत्कार्य्यं सिद्धन्तत्समकालम्प्रवृत्तिरास्ताम्। येषान्त्वसिद्धत्वन्तत्र।कथम्प्रवृत्तिः, उभयोः परस्पराकाङ्क्षायां समकालप्रवृत्तेर्न्याय्यत्वादिति पूर्वपक्षः। संस्कारकस्य तदाकाङ्क्षाऽभावेऽपि, संस्कार्य्यस्य संस्कारकाकाङ्क्षाऽस्त्येवेत्यन्यतराकाङ्क्षया संबन्ध इति समाधत्ते—*तत्त्वित्यादिना*। *तत्तु* सपादसप्ताध्यायीस्थन्तु। *इह* त्रैपादिकशास्त्रपर्य्यालोचनकाले। *उपस्थितमिति*। एतेनाऽक्षेपपदार्थ उक्तः।

परिभाषाविषये पूर्वोक्तां व्यवस्थामजानन् शङ्कते *न चेति*। "ङमो ह्रस्वादचि" इत्यादिना "ङः सि धुट्" इत्यादेः परिग्रहः। *परत्वादिति* एतदुपादाने परत्वेन व्यवस्था भविष्यतीत्यभिप्रायेण, परिभाषा तूभयनिर्देश इत्याद्येव। *"इको गुण" इत्यत्र कैयट इति* तत्र हि—भाष्ये-नियमात् 'इकोगुणवृद्धी भवतो विप्रतिषेधेन' इति क्रोष्ट्रीयवार्तिकव्याख्यानाऽवसरे, भाष्यकृता नियमस्य, "अलोऽन्त्यस्य" इत्यस्य 'राज्ञः कच' राजकीयमित्यत्राऽवकाशः, "इको गुण" इत्यस्य चयनं लवनमित्यादावकाशः, इहोभयम्प्राप्नोति मेद्यतीति, 'इको गुणवृद्धी भवतो विप्रतिषेधेन' इत्युक्तम्। ततो नैव युक्तो विप्रतिषेधः, विप्रतिषेधे परमित्युच्यते पूर्वश्चाऽयं योगः परो नियम इत्याशङ्क्येष्टवाची परशब्दः, विप्रतिषेधे परं यदिष्टन्तद्भवतीति समाहितम्। तत्र नैष युक्त इति प्रतीकमुपादायेष्ट सिद्धये न युक्तः, यथोद्देशपक्षे परिभाषयोः पौर्वापर्य्यन्नतु कार्य्यकालतायामिति तेनोक्तम्। तस्य भावस्तु, गुणविधायके "सार्वधातुकार्द्धधातुकयोः" इत्यादौ "अलोन्त्यस्येको गुण" इत्यनयोरेकदेशस्थत्वेन विप्रतिषेधाऽसङ्गतिरिति समाधत्ते-*विप्रतिषेधसूत्रे इत्यादिना*। *तदपैतीति*। अष्टाध्यायीपाठकृतम्पर-

तत्वप्रकाशिका-

मू-*परिभाषाणामाक्षेप इति*। परिभाषोपस्थाप्यपदानामुपस्थापनमदृष्टपिशाचाकर्षणन्यायादिति भावः। एतेनाक्षेपइत्यस्य स्मरणमित्यर्थमुरीकृत्य प्राचीनरीत्यापलपन्तः परा-

बुद्धिजननेनाविशेषात्। नहि तत्पक्षेऽप्यचेतनस्य शास्त्रस्य स्वदेशं विहाय तद्देशगमनं सम्भवति। नाप्यस्मदादिबुद्धिजननेन स्वदेशत्यागो भवति। अत एव भाष्ये एकदेशस्थस्यैव सर्वशास्त्राभिज्वालकत्वमुक्तम्। अत एव "तस्मिन्" इति सूत्रे कैयटः। सूत्रपाठापेक्षया परत्वस्य व्यवस्थापकत्वमिति। "इको गुण" इति सूत्रस्थकैयटस्तु चिन्त्य एव। अन्यथा सर्वशास्त्राणां प्रयोगार्थत्वेन प्रयोगरूपैकदेशस्थत्वेन क्वापि परत्वं न स्यात्।

किञ्च "क्ङिति च" इति सूत्रस्थकैयटरीत्या विधिसूत्राणां यथोद्देशपक्षे परिभाषादेशसन्निधानेन तेषां परत्वं व्याहन्येत। एवं च 'वृक्षेभ्य' इत्यत्र "सुपि च" (७-३-१०२) इत्यतः परत्वात् "बहुवचने झल्येत्" (७-३-१०३) इत्येत्त्वमित्याद्युच्छिद्येतेत्यलम्॥ ३॥

इत्संज्ञका अनुबन्धास्तेष्ववयवानवयवत्वसन्देह आह—

भैरवी।

त्वमपगच्छतीत्येतन्नास्तीत्यर्थः। इदं परिभाषाविषये एवेति प्रागुक्तभाष्याद्विज्ञेयम्। *तद्देशगमनमिति* तद्देशीयत्वसम्पादनमित्यर्थः। *अत एव* परिभाषायाः स्वदेशत्यागाऽभावादेव। परिभाषास्थले स्वोक्तव्यवस्थायां कैयटस्यापि सम्मतिमाह—*अत एवेति*। परिभाषायामुक्तव्यवस्थासत्वादेव। *कैयटस्त्विति* यथोद्देशपक्ष इत्याद्युक्तकैयटस्त्वित्यर्थः। *अन्यथा* कैयटोक्तिस्वीकारे। *प्रयोगार्थत्वेन* प्रयोगसिद्धिफलकत्वेन। तत्साधनावसरे द्वयोरप्येकदा बुद्धेर्जातत्वादेकदेशस्थत्वव्यवहारस्तयोः स्यात्। *न स्यादिति* तथा च-विप्रतिषेधशास्त्रासङ्गतिरेव स्यादिति भावः।

ननु विप्रतिषेधशास्त्राऽसङ्गतिभयात् प्रयोगरूपो देशो न गृह्यते इत्यत आह-*किञ्चेति*। *सूत्रस्थेति*। प्रधानान्यात्मेत्याद्युक्तकैयट इत्यर्थः। *एवञ्च*। तेषां परत्वस्य व्याघाते च। नच कार्य्यकालपक्षेऽपि परिभाषाया यदि स्वदेशीयत्वमेव, तदा त्रैपादिकस्य तद्दृष्ट्याऽसिद्धत्वं स्यादेवेति कार्य्यकालपक्षमाश्रित्य प्रागुक्ता व्यवस्था न सङ्गच्छेतेति वाच्यम्,? न हि प्रागुक्तभाष्यात्परिभाषायाः स्वदेशत्यागं कल्पयामः, किन्तु सिद्धायाः परिभाषायास्त्रैपादिकेन स्वसंस्काराऽपेक्षेयम्। एवं सत्युपस्थितपरिभाषयैव त्रिपाद्यामिष्टव्यवस्थासिद्धिरित्याशयात्। अत्र मूले, स्थलान्तरे परेत्विति यथोच्यते तथा नोक्तङ्किन्तु केचित्त्वित्युक्तन्तदरुचिसूचनाय। परिभाषायाः कार्य्यकालपक्षेऽपि यथा न स्वदेशत्यागस्तथा संज्ञाविषयेऽपि बोध्यः। नच "अदसोमात्" इति सूत्रभाष्ये यदुक्तं 'कार्य्यकालपक्षे 'अयादिभ्यः परैव प्रगृह्यसंज्ञा' इति तद्विरोध इति वाच्यम्? तत्रत्यसंज्ञापदस्य संज्ञाकार्य्यप्रकृतिभावोपलक्षकत्वात्। न हि प्रगृह्यसंज्ञाया अनुनासिकादेशप्रवृत्तिप्रतिबन्ध एव फलम्। तत्रैव 'अदसो न' इत्यकथनात्। एवञ्च संज्ञापरिभाषयोरेकरूपता भवतीति बोध्यम्॥ ३॥

अत्र संज्ञापदोपादानेन यथा वृद्ध्यादिसंज्ञाया उपस्थितिस्तथेत्संज्ञाया अपीति तत्प्रसङ्गात्तद्विषये व्यवस्थामाह—*इत्संज्ञका इत्यादिना*। अनुबध्यन्ते परस्मिन् सम्बध्यते,

तत्वप्रकाशिका-

स्ताः। यथोद्देशे उभयाकाङ्क्षारूपप्रकरणरूपेण प्रमाणेनाङ्गाङ्गीभावः। कार्यकाले, त्वन्यतराकाङ्क्षारूपस्थानाख्यात्सचोपस्थाप्यपदाकर्षणेनापि सम्भवतीति भावः॥ ३॥

स्मृतिविषयत्वे सत्युपेक्षानर्हत्वरूपसप्रसङ्गसङ्गत्यानेकान्तपरिभाषामवारयितुकामः स्मरणे उद्बोधकमाह—*अत्र संज्ञापदोपादानेनेति*। अनुबन्धानामित्संज्ञालोपाभ्यामपहारेण विधेये कदाप्यदर्शनात् स्वंरूपशास्त्रेण बोध्यबोधकयोः समानानुपूर्वीकत्वनियमात् "उदीचां माङः"

## अनेकान्ता अनुबन्धा इति ॥ ४ ॥

**अनेकान्ता अनवयवा इत्यर्थः । यो ह्यवयवः स कदाचित् तत्रोपलभ्यत**

भैरवी ।

तेऽनुबन्धाः । सम्बन्धश्च, शास्त्रे नानाविधो दृष्टः, काकवृक्षयोः संयोगः, वृक्षशाखयोः समवायो वा यथा, तत्राद्यसम्बन्धाश्रयणेऽनवयवत्वन्द्वितीयसम्बन्धाश्रयणे त्ववयवत्वमिति सन्देहबीजम् द्रष्टव्यम् । अत्रेत्संज्ञकत्वमनुबन्धत्वमिति प्राचीनानामुक्तिस्तदनुवादोऽयमित्संज्ञका इति । एकान्तशब्दोऽवयववाची, तस्य नञा समासेऽनवयवा इत्यर्थ इत्याशयेनाह—*अनेकान्ता इत्यादि* । वाच्यवाचकयोर्भेदाभेदौ स्वशास्त्रे प्रसिद्धौ, तत्राऽद्यपक्षाभिप्रायेणानवयवत्त्वसम्भावना । *यो ह्यवयव इत्यादिना* । एवञ्चानुबन्धाः अनेकान्ताः अवयववृत्तिधर्माभावादिति हेतुः । अवयववृत्तिधर्मश्चावयविसम्बन्धित्वेन प्रतीतत्वमेव, शाखायां यथेति व्यतिरेकदृष्टान्तो बोध्यः ।

नन्ववयवस्यापि न सर्वदा प्रतीतत्वं सम्भवति छेदनेऽनुपलम्भादत आह—*कदाचि-

तत्वप्रकाशिका-

इति निर्देशाच्च बोधकताया अनुबन्धरहिते पर्याप्तेरवगमादाह-*आद्यसाम्बन्धाश्रयण इति*। "हलन्त्यम्" इत्यत्रावयवबोधकान्त्यशब्देन शित्किदादौ बहुव्रीहिनिर्देशेन "आटश्च" इत्यादौ सानुबन्धाद्विभक्तिदर्शनेन च अनुबन्धविशिष्टे पर्याप्तत्वमपि बोधकताया सत्वादाह-*द्वितीयसम्बन्धाश्रयणे त्विति* । *सन्देहेति* । सन्देहस्तु, अनुबन्धाः, बोधकावयवास्तदनवयवा वेति । एतेनानुबन्धेऽवयवानवयवत्वस्य प्रत्यक्षत्वेन, सिद्धेश्च पक्षताज्ञानप्रतिबन्धकत्वेन मूले सन्देह इत्युक्तिरसङ्गतेति वदन्तः प्रत्युक्ताः, बोधकतानिश्चयस्यासत्वात् । यद्यपि निरूपकभेदेन तयोरेकत्र सम्भवेनाविरोधान्न सम्भवति सन्देहः, तथापि स्वघटितेत्यादिवक्ष्यमाणसाध्यशरीरस्वीकारेण विरोधस्य स्पष्टत्वात् । इदमत्र तत्वम्—सन्देहम्प्रति साधारणधर्मज्ञानस्य कारणत्वेन, कर्मघञन्तानुबन्धशब्देन परस्मिन् सम्बन्धसामान्येन वृत्तिमत्वस्य प्रतीत्यानुबन्धे अवयवानवयत्वसाधकसंयोगसमवायोभयसाधारणस्य सम्बन्धत्वस्य दर्शनेन संशयः । दर्शनन्तु, 'माङः, आटश्च' इति निर्देशे । प्रत्यक्षेण तु न निवृत्तिस्ततो बोधकतासंशयस्योत्थितत्वात् । तस्य चानुबन्धत्वस्योच्चारणार्थकवर्णेऽपि संक्रान्तत्वादनुगतरूपेण पक्षतावच्छेदकत्वज्ञानाय मूले 'इत्संज्ञका' इत्युक्तम् ।

ननु सन्देहशब्दादेव भावाभावयोरुभयोरुल्लेखादेकतरोपादानेनैव सिद्धेः, मूलेऽवयवानवयवत्वोभयोरुपादानं व्यर्थम्, नच परिभाषाद्वयसाधारणत्वेन अवतरणत्वज्ञापनाय तथोपादानमिति वाच्यम् ? अन्यतरेणान्यतरस्याक्षेपेणैव तथात्वावगमादिति चेन्न, यद्धर्मिकयत्सम्बन्धावच्छिन्नयत्प्रकारकनिश्चयत्वेन साध्याभावत्वावच्छिन्नप्रकारित्वसाध्यविशेष्यकत्वान्यतरावच्छिन्नम् यत्संशयं प्रति निवर्तकत्वं, तस्य सन्देहस्य तत्पक्षकतद्विधेयकानुमितौ पक्षतात्वस्वीकारेणादोषात् । अन्यथा वह्निव्याप्यसाध्यकानुमितौ वह्निमान्नवेति संशयस्य पक्षधर्मिकवह्निव्याप्यवत्त्वरूपसाध्यनिर्णयनिवर्त्यत्वात्तादृशनिश्चयाप्रतिबन्धकत्वाच्च पक्षतात्वं स्यात् । अत एव हृदादौ वह्न्यभावस्यानुमाने वह्निमान्नवेति संशयस्य न पक्षतात्वं, हृदनिष्ठायाः साध्यवत्तानिश्चयप्रतिबध्यताया वह्निमत्ताविषयकत्वेनैवावच्छेद्यतया साध्याभावत्वावच्छिन्नप्रकारित्वानवच्छेद्यत्वात् । प्रकृतपक्षविषयिताबहिर्भूतसाध्यविषयिताघटितधर्मावच्छिन्नं यत्प्रकृतपक्षधर्मिकप्रकृतसाध्यवत्तानिश्चयनिवर्त्यत्वमिति निवेशेन तु न निर्वाहः, वह्नौ पक्षे वह्नेः साध्यतायां वह्निर्वह्निमान्नवेति संशयस्य पक्षविषयताबहिर्भावेण साध्यविषयत्वाप्रसिद्धत्वादव्याप्तेः ।

ननु प्रतिज्ञावाक्यानन्तरं हेतुमप्रदर्श्य, उपनयमुपादाय हेतुप्रदर्शनमसङ्गतमत आह *अ-

एव, अयं तु न तथा, तदर्थभूते विधेये कदाप्यदर्शनात्। शित्किदित्यादौ समीपेऽवयवत्वारोपेण समासो बोध्यः। "वुञ्छण्कठ" (४-२-८०) इत्यादौ

भैरवी।

दिति*। एतेन

दोषोत्पा(१)देऽनुबन्धः स्यात्, प्रकृत्यादिषु नश्वरे।

इति कोशसम्मतिरपि सम्भवति। एवञ्चानुपलम्भजनकयत्नं विनाऽवयविन्युपलभ्यमानत्वमवयवत्वम्। तथात्र नास्तीति फलितम्।

नन्वनवयवत्वे शित्किदित्यादौ समासाऽनुपपत्तिः, अवयवत्वे तु षष्ठ्यर्थस्यावयवावयविभावस्य सम्भवादत आह—*शित्किदित्यादाविति*। समीपेऽवयवत्वारोपेण व्यवहारो, लोके यथा—गृहसमुदायस्य ग्रामपदार्थत्वेऽपि ग्रामरूपो(२)ऽयमित्यादौ दृष्टः, तथात्रापि कल्पना सम्भवतीति भावः।

ननु समीपेऽवयवत्वारोपेण चेद् बहुव्रीहिस्तदा "वुञ्छण्" इति सूत्रनिर्दिष्टकप्रत्ययस्यापि णित्वाऽऽपत्तिरत आह-*वुञ्छणेति*। सामीप्यञ्च स्वोच्चारणाऽव्यवहितोच्चारणविषयत्वम्, तच्च शप्रत्ययणप्रत्ययाण्प्रत्ययादिषु शित्वादिव्यवहारसिद्धये अश्रीयते। एवञ्च शप्रत्ययस्थ-

तत्वप्रकाशिका—

वयववृत्तिधर्माभावादिति*। हेतोः प्रसिद्धत्वाद्नुपादानमिति भावः। बोध्यबोधकयोर्निश्चयाभावेन हेतुतावच्छेदकरूपेण हेतोरप्रसिद्धिमाशङ्क्याह—मूले *विधेय इति*। एवञ्च, अनुबन्धाः बोधकानवयवाः, विधेये कदाप्यदर्शनादिति तत्वं सिद्धम्।

नन्वेवं साध्याभाववद्गुणघटकगकारे हेतोः सत्वाद्व्यभिचारः, नच साध्यस्य स्वरूपबोधकानवयवत्वेन गुणशब्दस्य स्वरूपबोधकाभावान्न व्यभिचार इति वाच्यम्? निरूपकभेदेन धर्मद्वयस्यैकत्र समावेशदर्शनाद्विरोधाभावेन संशयाभावादनुमानस्यानुत्थानापत्तेरिति चेन्न, स्वघटितघटकवृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मेण साक्षादवच्छिन्नविधेयताप्रयोजकपदानवयवा इत्यर्थेनादोषात्। यस्मिन्ननवयवत्वं साध्यं, तत्स्वमिति। एवञ्च, गकारघटितगुणघटकगकारवृत्तिधर्मः गत्वरूपस्तेन धर्मेण साक्षादवच्छिन्नविधेयताया अभावेन, हेतोस्तत्र सत्वेऽपि न क्षतिः। सनि तु, नकारघटितसन्घटकसवृत्तिधर्मः सत्वरूपस्तेनावच्छिन्नाया विधेयतायाः प्रयोजकत्वात्सनो नकारेऽनवयवत्वं सिद्धम्। विधेयतायाः धर्मेण साक्षादवच्छिन्नायाः ग्रहणात्, गुणस्य व्यपदेशिवद्भावेन गकारघटितगुणघटकः गुणस्तद्वृत्तिधर्मेण गुणत्वेन परम्परयाऽवच्छिन्नाया अकारादिनिष्ठायाः गुणरूपायाः विधेयतायाः प्रयोजकत्वेऽपि न दोषः, साक्षाद्गुणत्वावच्छिन्नविधेयताया अभावात्। एत्वादिधर्मावच्छिन्नविधेयताप्रयोजकत्वमादायव्यभिचारवारणाय श्रावणप्रत्यक्षविषयतवाच्छेदकेतिधर्मे विशेषणम्। नहि गुणादिविषयताया अवच्छेदकस्यैत्वादिकस्य प्रत्यक्षं श्रवणनिर्वर्त्यम्, अपितु गुणत्वादिकस्यैव तथा। यद्यपि गुणघटकाकारवृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकाऽत्वरूपधर्मेणावच्छिन्ना विधेयताऽकारेऽस्ति, तत्प्रयोजकत्वं गुणे, इति व्यभिचारस्य तादवस्थ्यन्तथापि स्वघटितघटकयावद्वृत्तीतिवृत्त्यन्तेन विवक्षितत्वेन, यावत्त्वस्य समुदाये गुणे पर्याप्तत्वेनाकारे तदभावान्न दोषः। नचैवं सति सनो नकारे दोषः समुदायनिरूपितविधेयताया अप्रसिद्धत्वादेवमनुवादे "सन्यतः" इत्यादौ विभ-

(१) दोषोत्पाद इति। दोषोत्पादनं दोषोत्पादस्तस्मिन्, प्रकृत्यादिषु प्रकृतिप्रत्ययागमादेशेषु इक्यणुडादिषु यन्नश्वरमित्संज्ञालोपाभ्यामदर्शनशीलमक्षरम्, तत्रार्थेऽनुबन्ध इति भावः॥

(२) ग्रामरूपोऽयमित्यादाविति। एवमेव ग्रामकूपो गंगातीरमित्यादावपि बोध्यम्।

**णित्त्वप्रयुक्तं कार्य्यं पूर्वस्यैवेत्यादि तु व्याख्यानतो निर्णेयम् । "हलन्त्यम्" (१-३-३) इत्यत्रान्त्यशब्दः परसमीपबोधकः ॥ ४ ॥**

**वस्तुतस्तु—**

भैरवी ।

ले पूर्वस्मिन् समीपे यथास्तीति तत्राऽवयवत्वारोपो भवति, तथा णकारस्य ककारसामीप्यं यद्यप्यस्ति, तथापि 'ऋश्यकः' इत्यादौ णित्वप्रयुक्तकार्य्याऽदर्शनमूलकवृद्धव्यवहारमूलकव्याख्यानेन, न णकारे कप्रत्ययसमीपेऽपि ककाराऽवयवत्वाऽऽरोपः; किन्तु छकारावयवत्वारोप एवेति निर्णेयमित्यर्थः ।

ननु यत्रान्त्यशब्दोच्चारणन्तस्य का गतिरत आह—*हलन्त्यमित्यत्रेति* । "उदीचां माङो व्यतीहारे" इति निर्देशोऽनवयवत्वे ज्ञापक इत्यपि सम्भाव्यते । अन्यथा मेङ एजन्तत्वाभावादात्वासम्भवेन निर्देशासङ्गतिः स्पष्टैव । अतएव "अर्वणस्त्रसौ" इति सूत्रविहित त्रादेशस्य सर्वादेशत्वञ्च न । एवमस्मिन्पक्षे 'नानुबन्धकृतमनेजन्तत्वम्' इत्यादिवक्ष्यमाणपरिभाषाणामनारम्भेण लाघवमपि सम्भवति ॥ ४ ॥

एतावता प्रबन्धेन एकदेशिमतमुपपाद्य सिद्धान्तिमतमाह—*वस्तुतस्त्विति* ।

तत्वप्रकाशिका-

किमादाय दोष इति वाच्यम् ? स्वघटितघटकानुबन्धेतरविभक्तीतरयावद्वृत्तीतिविवक्षितत्वात् । "वुञ्छण" इत्यादौ द्वन्द्वात्मकपदमादाय दोषवारणाय स्वघटितपदाघटितपदघटकस्य यावतो ग्रहणं बोध्यम् ।

अथ प्रत्युच्चारणं शब्दो भिद्यते चेत्सनः सकारे हेतोः सत्वाद्यभिचारः, नचाभेदस्तर्हि मनिनो नकारे भागासिद्धिरिति चेत्सत्यम्, स्वघटितपदाघटितपदघटकानुबन्धेतरविभक्तीतरयावत्प्रयोज्यविधेयतावच्छेदकधर्माभावस्य हेतुत्वेनादोषात् । धर्मस्य विशेष्यविशेषणदलसङ्कुचितस्य ग्रहणेन न केवलं नत्वधर्ममादाय दोषः । इतरविशेषणानां फलन्तु ,साध्यदलवदवगन्तव्यम् । कुक्मुमोः ककारमकारयोर्भागासिद्धिस्तु कुक्मुमोः ककारमकारौ बोधकानवयवौ, स्वबोधकावयवोत्तरबोधकानवयवोत्तरत्वात्" इत्यनुमानान्तरेण परिहरणीया । *वृद्धव्यवहारमूलकव्याख्यानेनेति* । मात्रचश्चित्वेन "स्वाघटितपदघटकेऽनुबन्धे स्वनिरूपितावयवत्वेन" इति कल्पनेनेति भावः । अनतिदिष्टघटकत्वस्वीकाराल्लोपशित्यत्र शितिभिन्नपदत्वेऽ[illegible]नावयवत्वारोपदोषः ।

केचित्तु, स्वसमीपत्व स्वाघटितपदाघटकत्वोभयसम्बन्धेन स्वविशिष्टेऽनुबन्धे स्वनिरूपितावयवत्वमारोप्यते । अत्रापि घटकत्वं व्यपदेशिवद्भावा(१)नतिदिष्टम् । ङमुडादौ ङम् उद्, इति पृथक्पदत्वकल्पे तु, अर्थवद्घटकत्वं, ङम्, उ, द्, पदत्रयम्वा परिकल्प्यावयवत्वं कल्प्यम् । आद्ये, उटः अर्थवत्वाभावात्, अन्त्येऽतिदिष्टघटकत्वसत्वादित्याहुः ॥ ४ ॥

ननु हेतोरानङः नकारे सत्वाद्व्यभिचारः, अपिच "श्विन्विकृण्व्योर च" इति सूत्रघटकाकारे गणधातुघटकाकारे च, हेतोः सत्वाद्व्य(२)भिचार अत आह—*एकदेशिमतमिति*

---

( १ ) **व्यपदेशिवद्भावानतिदिष्टमिति** । तेन लोपश् इत्यत्र न दोषः। तथाहि—स्वं लोपश् इत्यत्र लोप इति पदम् तेनाघटितं शितिपदं व्यपदेशिवद्भावेन तद्घटकत्वस्य शकारे सत्वेऽपि वस्तुतोऽघटकत्वेन शे लोपनिरूपितावयवत्वासिद्धिः ।

( २ ) **व्यभिचार इति** । अत्र चक्रकापत्तिरपि दोषो ज्ञेयः । तथाहि—'विधेये कदाप्यदर्शनादिति हेतोः सिद्धिः "तस्य लोपः" इति वाक्यार्थज्ञानाधीना "तस्य लोप"

## एकान्ताः ॥ ५ ॥

इत्येव न्याय्यम् । शास्त्रे तत्रोपलम्भादन्यत्रानुपलम्भाच्च । अनवयवो हि काकादिरेकजातीयसम्बन्धेन गृहवृक्षादष्वूपलभ्यते नैवमयम् । एवं हि बहु-

भैरवी ।

*शास्त्रे तत्र इति*—अयम्भावः, "वृद्धिरादैच्" इत्यादौ शास्त्रे सामानाधिकरण्येन निर्देशात् ।

'रामेतिद्व्यक्षरन्नाम मानभङ्गः पिनाकिनः' ।

इत्यादौ लोके सामानाधिकरण्येन व्यवहाराच्च वाच्यवाचकयोरभेदेन व्यवहारो न्याय्यः । तथा च-पूर्वोक्तो हेतुर्दुष्टः, स्वरूपासिद्धत्वरूपदोषाक्रान्तत्वादिति । *तत्र*—वाचकत्वाभिप्रेताणादिशब्दे । *अन्यत्र* वाच्ये औपगवादिशब्दघटकाकारप्रत्यये । एवञ्च यथा कुठारादिना छेदनेऽवयवभूतापि शाखाऽवयविनि वृक्षे नोपलभ्यते तथाऽस्यापीत्संज्ञालोपाभ्यामपहाराद्यत्नेनानुपलम्भो न्याय्य एवेति ।

एतेन 'यो ह्येकान्तः स कदाचित्तत्रोपलभ्यत एव' इत्यादि यत् प्रागुक्तन्तत्सत्तोक्ता, तथावयविनि वाचके तस्य सत्वात्तत्सम्बन्धित्वेन प्रतीतत्वरूपो यः प्रागुक्तहेत्वभावस्तल्लाभः, अन्यत्रानुपलम्भादित्यनेन वाच्ये प्रयोगघटकेऽनुपलम्भोऽपि प्रकृतस्यावयवत्वस्य साधक इति ध्वनितम् ।

एवञ्चानुबन्धाः अवयवाः अवयविसम्बन्धित्वेनाप्रतीतत्वात् छिन्नशाखादिवदित्यनुमानमस्मिन्नपि पक्षे सम्भवतीति । परमते हेतोः सत्प्रतिपक्षे तत्त्वमपि सम्भवतीति बोधितम् । एवं हेत्वन्तरेणाप्यवयवत्वं सिध्यतीत्याह—*अनवयवो हीति* । एकजातीयसम्बन्धेन*—संयोगेन । *नैवमयमिति* । तादृशैकजातीयसम्बन्धेन सर्वत्रोपलभ्यमानत्वरूपो योऽनवयववृत्तिधर्मस्तदभावो दर्शितः ।

तत्वप्रकाशिका-

नचैतन्मते "नानुबन्ध' इत्यादि परिभाषात्रयकरणाद्गौरवमिति वाच्यम् ? अनवयवत्ववादिनोऽपि लक्षणाव्याख्यानादिकरणगौरवस्य समत्वात्, सामीप्येऽवयवत्वारोपे त्रादेशे सर्वादेशत्ववारणायोक्तपरिभाषात्रयस्यावश्यं कर्त्तव्यत्वात् ।

*तत्र* बोधके । बोधकत्वनिर्णयस्तु समुदायाद्विभक्त्युत्पत्त्याऽनुमेयः । *अन्यत्र* विधेये।

तथा च—'अनुबन्धाः बोधकावयवाः, एकजातीयसम्बन्धेन बोधके उपलब्धिविषयत्वे सत्यन्यत्र तदभावात् । कपालवत् । घटावयवः कपालः घटप्रतियोगिकसमवायानुयोगिकत्वसम्बन्धेन घटे उपलभ्यते । अन्यत्र सम्बन्धान्तरेणोपलम्भेऽपि तेन सम्बन्धेन तदभावोऽस्त्येव । यो ह्यनवयवः वृक्षादेः काकादिः स संयोगेनैकेन गृहवृक्षादिपूपलभ्यते । नचैवं चक्रे उत्पन्नविनष्टस्य घटस्य चक्रावयवत्वं स्यादिति वाच्यम् ? अन्यत्रोपलब्धिप्रकारकसम्भावनाभावस्य हेतुत्वेन विवक्षितत्वात । *हेतुर्दुष्ट इति* । अवयववृत्तिधर्माभावरूपहेतुर्दुष्टः । *दोषाक्रान्तत्वादिति* । अवयवत्वे सिद्धे सतीति भावः । *अस्मिन्नपि पक्षे सम्भवतीति* । एवञ्च विरुद्धदोषाक्रान्तोऽप्ययं हेतुः । अस्य मतेऽनुपलम्भाच्चेत्यत्र चकारो हेत्वन्तरसमुच्चायकः ।

---

इति सूत्रार्थबोधश्च "हलन्त्यम्" इति सूत्रार्थाधीनस्तदर्थबोधश्च पदार्थज्ञानविधया लक्षणाग्रहाधीनः, लक्षणाग्रहश्च अनवयवत्वग्रहपूर्वकशक्यार्थबाधग्रहपूर्वकः, अनवयवत्वग्रहश्च प्रकृतहेतुज्ञानपूर्वक इति ।

व्रीहिरपि न्यायत एवोपपन्नः । अन्त्यादिशब्दे लक्षणा च न ।

किञ्चानवयवत्वे 'णशक'प्रत्ययादौ णादेरित्वानापत्तिः प्रत्ययादित्वाभावात् । दघ्नचश्चकारस्य वैयर्थ्यापत्तेश्च । इदं च "तस्य लोपः"(१-३-६) इत्यत्र भाष्ये स्पष्टम् । तत्र ह्युक्तं 'एकान्ता अनुबन्धा' इत्येव न्याय्यमिति दिक् ॥ ५ ॥

नन्वेकान्तत्वेऽनेकाल्त्वादेव औशादीनां सर्वादेशत्वसिद्ध्या "अनेकाल्" (१-१-५५) सूत्रे शिद्ग्रहणं व्यर्थमत आह—

भैरवी ।

एतेनानुबन्धाः अवयवाः अनवयववृत्तिधर्माभावादित्यस्य लाभेन सत्प्रतिपक्षितत्वमिति भावः । एतावता प्रबन्धेन प्रागुक्तहेतोर्दुष्टत्वं प्रसाध्यावयवत्वे साधकान्तरमाह—*एवंहीति* । अवयवत्वे हीत्यर्थः । *न्यायतः—अरोपं विनैवेत्यर्थः ।

किञ्च प्राथमिकशक्तिग्रहेणैव "हलन्त्य"सूत्रजन्यशाब्दबोधोपपत्तौ लक्षणाकल्पनं गौरवग्रस्तमिति भावः । एवमादिशब्दस्याद्यावयवबोधकत्वं "हलादिः शेषः" इत्यादौ दृष्टमनुबन्धस्यातथात्वे णादिप्रत्ययावयवणादेरित्वानापत्तौ "आदिर्ञि" त्यादिशास्त्राणामसङ्गतिरिति भावः ।

नन्वित एवानुपपत्तेस्तत्रापि लक्षणां वदाम इति चेत्तत्राह—*दघ्नचश्चेति । एवञ्च दघ्नच्प्रत्यये चकारोच्चारणमेकान्तपक्षे ज्ञापकमपीति भावः । *इदञ्च*—प्रागुक्तं सर्वञ्चेत्यर्थः । "एकान्ता अनुबन्धा इत्यस्योभयमिदमनुबन्धेषूक्तम्, एकान्ता अनेकान्ता इति, किं पुनरत्र न्याय्यमेकान्ता अनुबन्धा इत्येव न्याय्यम्" इत्युक्तमित्यर्थः ।

ननु णादिप्रत्ययावयवाणादेरित्वाभावापत्तिरूपः प्रागुक्तोऽनवयवत्वे यो दोषस्तस्य ज्ञापकेन वारणमपि सम्भवति, यदि णशयोरित्वन्न स्यात्तदा द्वयोरसत्वरूपत्वादेव विकल्पे सिद्धे "श्याद्व्यध" इति सूत्रे "विहितप्रापकन्दधातीति" सूत्रे विभाषाग्रहणं व्यर्थमिति तत्सामर्थ्यादेवेत्संज्ञा भविष्यतीतिचेन्न, कप्रत्ययादेः ककारस्य सा नस्यादित्यनेन प्रागुक्तदोषस्याढौकरणात् । "इगुपध"इति यः कस्तस्य सा न स्यादित्यर्थाद्भवदुक्तं ज्ञापकं हि "श्याद्व्यध" इतिसूत्रविहितप्रत्ययविषय एवेति भावात् । *दिगिति*—दिगर्थस्तु "द्वयसच्" इति चकार एकोऽवयवो द्वयोर्न सम्भवतीति चकारोच्चारणं दघ्नच्प्रत्यये कृतमनवयवत्वे तु सामीप्यस्योभयनिरूपितस्य सम्भव इति तस्य वैयर्थ्यम् । लक्षणाकल्पनाभावेन लाघवञ्चेति ॥ ५ ॥

अवयवत्वपक्षे यो दोषः 'अर्वणस्त्रसौ'इत्यादेः सर्वादेशत्वाऽपत्तिरूपस्तमुद्धर्तुमाह-*नन्वे-

तत्वप्रकाशिका

*अवयवत्वे साधकान्तरम्* । लाघवमूलकं तर्कमिति भावः । *लाघवञ्चेति* । अनेकान्तपक्षेऽनुवादे "सन्त्यतः" इत्यादौ नकारेत्संज्ञकसकारे परतः, विधौ "गुपसिज्किद्भ्यः" इत्यादौ नकारेत्संज्ञकः सो भवतीत्याद्यर्थकल्पनागौरवम् । एकान्तपक्षे तु सन् भवति सनि परत इत्याद्यर्थ एवेति लाघवम् ।

एवञ्च 'न विधौ परः शब्दार्थ' इति न्यायविरोधोऽपि न । अनुपलब्धिस्तु बलवद्धामित्संज्ञालोपाभ्यामपहारेणेति बोध्यम् । न च सूत्र एव अपहारेण नकाराभावात्सन् भवतीत्याद्यर्थासङ्गतिः, स एवायमिति प्रत्यभिज्ञया सकारे सन् बुद्धेः सत्त्वेनादोषात् ॥ ५ ॥

*सर्वादेशत्वापत्तीति* । नचैतदनुपपन्नं "तृङ्" इति न्यासेनान्त्यादेशत्वोपपत्तेः, नचाचारक्विबन्तादशब्दाद्ङ्सि अल्लोपे सौ स्थानिवद्भावेन हलन्तत्वमादाय "हल्ङ्याब्" इति सुलोपापत्तिः, ङ्याब्ग्रहणेन "अनुबन्धगतहलन्तत्वमादाय सुलोपश्चेन्ङ्याब्भ्यामेव" इति नियमेनादोषादिति वाच्यम् ? 'ओव्रश्चु छेदने' इति निष्पन्नस्य वश्चनशब्दस्य कुशब्देन समासे

## नानुबन्धकृतमनेकाल्त्वम् ॥ ६ ॥

शिद्ग्रहणमेवैतज्ज्ञापकम्। तेन "अर्वणस्तृ" (६-४-१२७) इत्यादेर्न सर्वादेशत्वम्। डादिविषये तु सर्वादेशत्वं विनानुबन्धत्वस्यैवाभावेनानुपूर्व्या-

भैरवी।

कान्तत्व इति*। *एतज्ज्ञापकमिति*। तथा च-शिद्ग्रहणेनानुबन्धानामल्व्यवहारविषयत्वं नास्तीति ज्ञाप्यते इति बोध्यम्।

नन्वेवं डादिविषये सर्वादेशत्वानापत्तिरत आह—*डादिविषये त्विति*। अत्रादिपदेन "जसःशि" इत्यस्य, "सुपां सुलुग्" इति सूत्रोक्तादेशस्य संग्रहो, न तु णलन्तस्य, प्रत्ययाधिकारे पाठेन स्वतः प्रत्ययत्वात्। न च डादिविषये आनुपूर्व्यात्सर्वादेशत्वस्वीकारे सर्वादेशसम्पादकतया डकारोच्चारणस्य चरितार्थतया डित्वसामर्थ्याद्भस्यापि टेर्लोप इत्यस्यासङ्गतिरिति वाच्यम्? डेत्यस्य स्थाने केतिसिद्धे डेत्याकारोच्चारणमेतदर्थमित्याशयात्।

यदि त्वित्संज्ञायोग्यत्वमनुबन्धत्वमिति डकारस्य सर्वादेशत्वात् प्रागित्संज्ञाभावेऽप्यनेकाल्त्वन्नभविष्यतीत्युच्यते तदा "डा आ" इत्याकारस्य प्रश्लेषेण सर्वादेशत्वं बोध्यम्। प्रकृतग्रन्थस्तु प्राचीनरीत्या।

नच "अनेकाल्" इति सूत्रे शिद्ग्रहणस्य पूर्वोक्तार्थज्ञापकत्वकथनमसङ्गतम् "घ्वसोरेद्धौ" इति सूत्रविहितलोपस्य सर्वादेशत्वसम्पादकतया शिद्ग्रहणस्य चारितार्थ्यादिति वाच्यम्? "लोपोयि" इत्यतो लोपग्रहणे प्रकृते पुनर्लोपग्रहणसामर्थ्यात्सर्वादेशत्वं भविष्यतीत्याशयात्।

यत्तु 'अनुबन्धा एकान्ता' इति मुख्यपक्षे, उच्चारणार्थकानामित्संज्ञां विना निवृत्त्यभाव इति सिद्धान्तात् 'दिव औत्' इत्यत्रौतस्तकारस्येत्वेऽप्यौदवयवत्वेनौदादेशस्यानेकाल्त्वेन सर्वादेशत्वापत्तिरिति कस्यचिद् दूषणाभिधानन्तत् स्वीयो योऽनुबन्धानामल्व्यवहारविषयत्वाभाव इत्यर्थे शिद्ग्रहणस्य ज्ञापकत्वमिति निष्कर्षस्तदज्ञानेन।

यदपि वैयाकरण इत्यत्रैचश्चित्वाच्चित्स्वरापत्तिः, न चास्य प्रवृत्तावपि बहुपटव इत्यत्र-बहुचश्चित्वाद्यथा समुदायस्यान्तोदात्तत्वं भवति, तथा वैयाकरणेति समुदायान्त्यस्योदात्तत्वं भविष्यतीत्यण्प्रत्ययाद्युदात्तत्वाच्च विशेष इति वाच्यम्? "चित" इति सूत्रे "सप्रकृतेः" इ-

तत्वप्रकाशिका-

कुब्रश्चन इत्यत्रोत्तरपदे स्थानिवद्भावेनाजादित्वमादाय कोः कदादेशापत्तेरुपलक्षकत्वात्। *बोध्यमिति*। एवञ्च नानुबन्धेत्यादिपरिभाषात्रयमत्रैव गतार्थम्। भाष्ये नानुबन्धेत्यादिकथनन्त्वेतदभिप्रायेणैव। अत एवानुबन्धकृतोऽनेकाल्त्वव्यवहारो यथा न भवेत्तथा कर्तव्यमिति व्याख्यानमपि सङ्गच्छते। अनुबन्धकार्ये "अनल्विधौ" इतिनिषेधो न प्रवर्तत इति प्रवाद एतन्मूलकः। "न ल्यपि" इतिनिषेधोऽपि एतदर्थे एव ज्ञापकः। नचैवं "हलन्त्यम्" शित्किदित्यादौ हलादिपदेनानुबन्धानामग्रहणादित्संज्ञाद्यनापत्तिः, तत्तत्सूत्रारम्भसामर्थ्यादित्पदप्रयोज्यविषयतानिरूपितविषयत्वाप्रयोजकानुबन्धानामल्त्वव्यवहारो नेति कल्पनेनादोषात्। इत्पदप्रयोज्यविषयतानिरूपितविषयत्वप्रयोजकत्वात्।

*इत्संज्ञायोग्यत्वमिति*। अत्रार्थे णबाधकशस्य विकल्पविधायके "ददातिदधात्योर्विभाषा" इति विभाषाग्रहणं ज्ञापकम्। अन्यथा प्रत्ययसंज्ञायाः पूर्वमित्संज्ञाया अभावेन"वाऽसरूपोऽस्त्रियाम्"इति विकल्पे सिद्धे विभाषाग्रहणं व्यर्थमेव स्यात्। *प्राचीनरीत्येति* यद्वाप्यर्थे एवशब्दः।

एवञ्चानुबन्धत्वस्याभावेन विनापि, अर्थादनुबन्धत्वसत्वेऽपि "आ आ" आनुपूर्व्यादा-

त्सिद्धम् ॥ ६ ॥

नन्वेवमप्यवदातं मुखमित्यत्र पलोपोत्तरमात्त्वे कृते "अदाप्" (१-१-२०) इति घुसंज्ञाप्रतिषेधो न स्यादैपः पकारसत्त्वेऽनेजन्तत्वादात्वाप्राप्त्या पलोपोत्तरं पकाराभावेनास्य दापूरूपत्वाभावादत आह—

## नानुबन्धकृतमनेजन्तत्वम् ॥ ७ ॥

"उदीचां माङः" (३-४-१९) इति निर्देशोऽस्या ज्ञापकः । "आदेच उ-

भैरवी

तिवार्त्तिके प्रकृतिप्रत्ययसमुदायस्य चिद्ग्रहणेन ग्रहणेऽपि वैयाकरणशब्दावयवैचोऽप्रत्ययतया अत्रापि समुदायग्रहणे मानाभावादिति चेन्न, ऐजित्यत्र चकारस्यैच्चकारसदृशत्वेऽपीत्वाभावात् ।

यद्यप्यनुबन्धानामल्त्वव्यवहारविषयत्वं नास्तीतिसिद्धान्तोपरि अनुबन्धविनिर्मुक्तपदार्थोपस्थितेः सर्वसम्मतत्वेनेशूशब्दादिकारमात्रोपस्थितेस्तस्य च नानेकाल्त्वमिति सर्वादेशत्वप्रापकस्य शकारस्यावश्यकत्वेन ज्ञापकत्वासङ्गतिरिति मूलशैथिल्याभिधानन्तत्त्वचीयः, अनुबन्धानामेकान्तपक्षस्य वाच्यवाचकयोरभेद इत्येतत्पक्षोपबृंहिततयाऽनेकाल्पदस्याऽनेकाल्विषयकोपस्थितिविषयार्थकतया च वाचकोपस्थितिमादाय सर्वादेशत्वे सिद्धे शिद्ग्रहणं व्यर्थमिति मूलशैथिल्याभावात्, उपस्थाप्योपस्थापकयोरभेदादेवाग्रहीदित्यत्र "ग्रहो लिटि" इति दीर्घे कृतेऽपि स्थानिवद्भावः सिध्यति, आदेशविधायकवाक्यघटकेट्पदाद्विशिष्टोपस्थितेः सत्वात् ।

यत्तु शब्दत उपात्तस्थानिस्थान्यत्रयवान्यतराल्वृत्तिधर्मवत उपस्थितिर्यत्र तत्र "अनल्विधौ" इति निषेध इति सिद्धान्ते ईट्पदादिकारमात्रोपस्थितेः सत्वादनल्विधाविति-निषेधापत्तिरिति दूषणोद्भनन्तदपेशलम् । अल्वृत्तिधर्मवत इत्यस्याल्पर्याप्तधर्मावच्छिन्न-विषयताकोपस्थितिविषयधर्मवत इत्यर्थः । प्रकृते त्विट्पदादुभयपर्याप्तं यदिट्त्वन्तद्धर्माव-च्छिन्नविषयताकोपस्थितेः सत्वेन निषेधविषयताया अप्रसक्तेः ॥ ६ ॥

अथानुबन्धानामवयवत्वपक्ष एवावदातं मुखमित्यादिसिद्ध्यर्थम्भाष्ये परिभाषान्तरमुपन्यस्तन्तद्वक्तुम्भूमिकां रचयति—*नन्वेवमित्यादिना* । *एवमपि*उक्तदोषस्योक्तरीत्योद्धारेऽपि । *आत्वाप्राप्त्येति* । अस्य दाप्त्वाभावादित्यत्रान्वयः ।

ननु पलोपोत्तरमात्वं भविष्यतीत्यत आह—*पकाराभावेनेति* । *माङ इति निर्देशः*—मेङः सानुबन्धकमाङ इति निर्देशः । ज्ञापकत्वमुपपादयति *"आदेच" इतीत्यादिना:* ।

तत्वप्रकाशिका—

कारप्रश्लेषात्सर्वादेशत्वं सिद्धमितियोजनया नवीनरीत्यापि व्याख्येयम् । *ज्ञापकत्वासङ्गतिरिति* । अयम्भावः "अनेकाल्"सूत्रस्यानेकालादेशः सर्वस्येत्यर्थेनानुबन्धविनिर्मुक्तपदार्थोपस्थितेः आदेशस्यानेकाल्त्वाभावेन सर्वादेशत्वसम्पादनार्थं शिद्ग्रहणं चरितार्थमिति कथं ज्ञापकत्वमितिभावः । बोधकवृत्त्यनेकाल्त्वमादाय तु न निर्वाहः, "पादस्य लोप" इति विहितलोपस्यापि सर्वादेशत्वापत्तेः, बोधकस्य लोपस्यानेकाल्त्वात् । *अभेद इत्येतत्पक्षेति* इत्थञ्च स एवायमिति प्रत्यभिज्ञयाऽऽदेशस्याप्यनेकाल्धर्मवत्त्वं भविष्यतीतिभावः । नचौशादौ शकारोच्चारणसामर्थ्यात् भूतपूर्वानेकाल्त्वमादाय सर्वादेशत्वसिद्ध्या ज्ञापितेऽपि "अनेकाल्" सूत्रे शिद्ग्रहणं व्यर्थमितिवाच्यम्,? "विभाषाङिश्योः" "शिः सर्वनामस्थानम्"।इत्यादौ विशेषणार्थत्वेन चारितार्थ्येन "जसः शि" इत्यादेः शित्वस्य वैयर्थ्याभावात् ॥ ६ ॥

*पलोपोत्तरमात्वमिति* नन्वज्ञातस्वस्वरूपज्ञापकोच्चारणविषयत्वस्योपदिश्यमानत्व-

पदेशे" (६-१-४५) इति सूत्रेणोपदिश्यमानस्यैजन्तस्यात्त्वं क्रियते, ङकारसत्त्वे तु एजन्तत्वाभावादात्त्वाप्राप्तेस्तस्यासङ्गतिः। न चास्यामवस्थायां तस्य धातुत्वाभावात्कथमात्त्वम्? "तत्र धातोः" (६-१-८) इत्यस्य निवृत्तेरित्यन्यत्र विस्तरः। स्पष्टं चेदं "दाधा घ्वदाप्" (१-१-२०) इति सूत्रे भाष्ये॥ ७॥

नन्वेवमपि "वासरूपः" (३-१-९४) इति सूत्रेण कविषयेऽणोऽप्यापत्ति-

भैरवी।

उपदिश्यमानस्येति*। उपदेशपदे कर्मणि घञ्, षष्ठ्यर्थे च सप्तमीत्यभिप्रायेणेदम्। धातुग्रहणङ्किम्? 'लूञ् लवितां' 'पूञ् पविता' इति "न धातुलोप" इति सूत्रभाष्यादनुबन्धसद्भावकाले धातुत्वाभावात्कथन्धातुत्वमित्याशङ्कते-*नचेति*। समाधत्ते-*तत्रेति*। *अन्यत्र विस्तर इति*। गवादिकानामुद्देशो नतूपदेशः येषामिरेप्रभृतीनां प्रत्यक्षमाख्यानमस्ति तेषामपि शित्परत्वयोग्यानाम् नचेति प्रत्यासत्त्या लाभादित्यादिविस्तर इत्यर्थः।

यदि तु "लिटि धातोः" इतिसूत्रस्थधातुग्रहणं तिष्ठतु तावत्, सान्न्यासिकमिति भाष्यादिरेप्रभृतीनामेकाराणान्तङादेशानां टेरेत्वन्नेति ज्ञापकतया चारितार्थ्येनैकारोच्चारणसामर्थ्यान्नात्वमित्यस्य वक्तुमशक्यतया च धातुग्रहणानुवृत्तेः "आदेच उपदेश" इति सूत्रे आवश्यकतेति विभाव्यते। तदा "लिट" इति सूत्रविहितादेशावयवैकारस्योभयांशे ज्ञापकता स्वीकार्य्या, यावता विनेतिन्यायात्। अत्रार्थे मानन्तु 'माङ' इति निर्देशस्य नानुबन्धकृतमनेजन्तत्वमित्यर्थज्ञापकतापरं भाष्यमेव। एवं तादृशभाष्यादेव "माङ् माने" इति धातोः क्त्वाप्रत्ययोऽनभिधानान्न भवतीत्यपि ज्ञेयमित्याशयः॥ ७॥

अनुबन्धानामेकान्तत्वपक्ष एव सम्भाविनन्दोषान्तरन्निरसितुमाह—*नन्वेवमित्यादि*।

तत्वप्रकाशिका—

स्याभावेन पलोपोत्तरं कथमात्वं भविष्यति, नच स्थानिवद्भावेन तल्लाभः, इत्संज्ञाविधौ तु मकारेत्संज्ञापरित्राणार्थं कृतेन थमोरुकारेणानतिदिष्टोपदिश्यमानत्वस्य ग्रहणम्। अत एवाटधातावकारस्येत्संज्ञालोपोत्तरमतिदिष्टोपदिश्यमानत्वमादाय न टकारस्येत्संज्ञा। अनेकानुबन्धघटितस्थले युगपदेव सर्वेषु विरोधाभावेन संज्ञायाः प्रवृत्तिः। आत्वविधौ त्वतिदिष्टानतिदिष्टयोरुभयोर्ग्रहणम्। अत एव "दो दद्घोः" इत्यत्र दाग्रहणं चरितार्थम्। अन्यथा धारूपं घावस्याप्राप्तेर्दाग्रहणमनर्थकं स्यात्, धेटष्टित्त्वेनोपदिश्यमानत्वाभावादात्वाप्राप्तेरन्यत्र "दधातेर्हिः" इत्यनेन बाधादिति वाच्यम्, तस्य शास्त्रप्रयोज्यविधेयताश्रयत्वरूपशास्त्रीयकार्यत्वाभावादिति चेन्न तदेवेदमिति प्रत्यभिज्ञयोपदिश्यमानत्वस्य सत्वेनादोषात्, "दोदद्घोः" इत्यत्र दाग्रहणेन "आत्वविधावनुबन्धलोपोत्तरमपि उपदिश्यमानत्वम्" इति कल्पनेनादोषाच्च। इत्संज्ञाविधौ तु करणघञन्तस्यैवास्य मते सिद्धान्तितत्वेन तत्र शङ्कैव नोदेतीति बोध्यम्।

*दाप्त्वाभावादि*। दाप्त्वमानुपूर्वीरूपत्वम्। अत एव 'न विधौ परः शब्दार्थः' इति न विरुध्यते। अन्यथा पकारेत्संज्ञकदात्वरूपदाप्त्वस्य लक्षणां विनाऽसम्भवेन न्यायविरोधोऽपरिहार्यः स्यात्। न चैवं 'देव रुही'त्यत्रोत्वं स्यादिति वाच्यम्? "अतो रोः" इत्यत्रानुनासिकोकारस्य विवक्षितत्वेनात्र तत्वाभावात्। *निर्देश इति*। ननु माङो निर्देशः ज्ञापकपरभाष्यप्रामाण्येन कर्मव्यतिहारे तस्यानभिधानात्॥ ७॥

*अणोऽप्यापत्तिरिति* अनुबन्धस्यावयवत्वेन काणोरसरूपत्वादितिभावः।

ननु वासरूप्यमौपदेशिकं प्रायोगिकम्वा, नाद्यः व्यावर्त्याप्रसिद्धेः। नापि द्वितीयः लक्षणेकचक्षुषां शास्त्रप्रवृत्तिं विना निश्चितप्रयोगज्ञानाभावादिति चेन्न वधादेशसन्नियोगशिष्ट"हनश्च-

रित्यत आह—

नानुबन्धकृतमसारूप्यम् ॥ ८ ॥

"ददातिदधात्योर्विभाषा" (३-१-१३९) इति णबाधकशस्य विकल्पविधायकमस्या ज्ञापकम् । तेन गोद इत्यादौ नाणिणति वासरूपसूत्रे भाष्ये स्पष्टम् ॥ ८ ॥

ननु संख्याग्रहणे बह्वादीनामेव ग्रहणं स्यात् प्रकरणस्याभिधानियामकत्वसिद्धात् 'कृत्रिमाकृत्रिमयोः कृत्रिमे कार्य्यसम्प्रत्यय' इति न्यायात् । अस्ति च प्रकृते बह्वादीनां संख्यासंज्ञा कृतेति ज्ञानरूपं प्रकरणम् । न तु लोकप्रसिद्धैकद्व्यादीनामित्यत आह—

उभयगतिरिह भवति ॥ ९ ॥

इह = शास्त्रे । "संख्याया अतिशदन्तायाः" (५-१-२२) इति निषेधोऽस्या ज्ञापकः । न हि कृत्रिमा संख्या त्यन्ता शदन्ता वास्ति । तेन "कर्त्तरि

भैरवी ।

*एवमपीति* । पूर्वोक्तदोषवारणेऽपि । *णबाधकशस्य*। "श्याद्व्यध" इति सूत्रप्राप्तस्य णस्य बाधको यः शस्तस्येत्यर्थः ।

ननु 'नानुबन्धकृतमनेकाल्त्वम्' इत्यादिपरिभाषात्रयस्वीकारोऽनुबन्धानामेकान्तत्वपक्षे कार्य्य इति गौरवमतोऽनेकान्तत्वपक्ष एव स्वीकार्य्य इति चेन्न, अनेकान्तत्वपक्षस्य दृढतरसाधकाभावेन पूर्वोक्तानुमानस्योक्तरीत्या दोषाक्रान्तत्वेनैकान्तत्वपक्षेण सम्मतेनाविरोधाच्चायुक्तत्वमिति स्वीकारात् ॥ ८ ॥

इत्संज्ञाविषये व्यवस्थायाः कथने संज्ञाप्रसङ्गेन सङ्ख्यासंज्ञाविषयेऽप्याह—*नन्वित्यादिना* । *प्रकरणस्य* । भोजनादिप्रकरणस्य । *अभिधानियामकत्वम्* । शक्तिनियामकत्वम् । यथा सैन्धवपदस्य नानाधर्मावच्छिन्नशक्यताकत्वेऽपि भोजनरूपेण प्रकरणेन सैन्धवपदस्य लवणप्रतिपादकतैव तदा, नत्वश्वप्रतिपादकता तद्वत् ।

ननु 'कृत्रिमाकृत्रिमयोः' इत्यत्र कृत्रिमशब्दः कृतिमप्रयोज्योत्पत्त्याश्रयपरः। एवञ्च घटाद्यर्थवत् कृत्रिमत्वं संज्ञायामेव न तु संज्ञिन इत्यनुपपत्तिः कृत्या निर्वृत्तमिति विग्रहादिति चेन्न, शब्दार्थयोस्तादात्म्यादेवैतादृशव्यवहारात् ।

ननु लोके यथा भोजनगमनादिकं प्रकरणं तथेह शास्त्रे किमित्याशङ्कानुपपत्त्यर्थमाह—*अस्तिचेति*। "अतिशदन्तायाः" इति निषेधस्य ज्ञापकत्वमुपपादयति—*नहीत्यादिना* । त्यन्तस्य विंशतिशब्दस्य सत्वेऽपि सा न कृत्रिमेतित्यन्तप्रतिषेधवैयर्थ्यं स्पष्टमेव, कतिशब्दस्य व्याप्त्यर्थन्तदिति तु न कतीतिसमुदायस्य कृत्रिमत्वेऽपि तेस्तिशब्दस्यानर्थकत्वात् ।

तत्वप्रकाशिका-

वधः" इति विहितापः सरूपत्वेन "मूर्तौघन" इत्यपा विकल्पेन बाधाभावायासरूपपदसार्थक्यात् । "हनश्चवधोऽमूर्तौ"इति न्यासेन बाध्यबाधकभावाभावकल्पने तु इगुपधलक्षणकस्य "तुन्दशोकयोः" इति केन विकल्पेन बाधाभावाय तत् । तत्त्वे तु विकल्पसमासापत्तिरिति बोध्यम् । सारूप्यञ्च स्वाघटकधर्मवदघटितत्वे सति स्वघटकधर्मवद्घटितत्वम् ॥ ८ ॥

*शक्तिविषयकत्वम्* । शक्तिनियन्त्रणम् । नियन्त्रणञ्चानेकार्थस्य शब्दस्यैकार्थपरत्वम्

कर्मव्यतिहारे" (१-३-१४) "कण्वमेघेभ्यः करणे" (३-१-१७) "विप्रतिषिद्धं चानधिकरणे" (२-४-१३) इत्यादौ लौकिकक्रियाद्रव्याद्यवगतिः। तत्र क्वोभयगतिः क्वाकृत्रिमस्यैव क्व कृत्रिमस्यैवेत्यत्र लक्ष्यानुसारि व्याख्यानमेव शरणम्। अत एवाम्रेडितशब्देन कृत्रिमस्यैव ग्रहणं, न तु द्विस्त्रिर्घुष्टमात्रस्य। स्पष्टं चेदं संख्यासंज्ञासूत्रे भाष्ये।

यत्तु, संज्ञाशास्त्राणां मच्छास्त्रेऽनेन शब्देनैत एवेति नियमार्थत्वं कृत्रिमाकृत्रिमन्यायबीजमिति, तन्न तेषामगृहीतशक्तिग्राहकत्वेन विधित्वे सम्भवति नियमत्वायोगात्। 'सर्वे सर्वार्थवाचकाः' इत्यभ्युपगमोऽपि योगिदृष्ट्या, नत्वस्मदादिदृष्ट्या विशिष्य सर्वशब्दार्थज्ञानस्याशक्यत्वात्। सामान्यज्ञानं तु न बोधोपयोगीत्यन्यत्र निरूपितम् ॥ ९ ॥

नन्वध्येता शयितेत्यादाविङ्शीङोर्ङित्त्वाद्गुणनिषेधःस्यादत आह—

## कार्यमनुभवन् हि कार्यीनिमित्ततया नाश्रीयते ॥१०॥

भैरवी।

*तेन* 'उभयगतिरिह' इति परिभाषासत्त्वेन। *लौकिकेत्यादि*। आद्ययोः क्रियावगतिः, अन्त्ये द्रव्यावगतिरिति विवेकः। *तत्र* उभयगतौ। उभयोः कृत्रिमाकृत्रिमयोरित्यस्य कृत्रिमस्यैवाकृत्रिमस्यैवोभयोर्वेत्यर्थः। उक्तानां लौकिकत्वञ्च वेदभिन्नप्रसिद्धरूपम्। नच कृत्रिमस्यैव ग्रहणमित्यर्थ एव ज्ञाप्यतामिति वाच्यम्? आम्रेडितादिसंज्ञाविषये दोषापत्तेः। *व्याख्यानमिति* = भाष्यकारादिव्याख्यानमित्यर्थः। *अत एव* व्याख्यानस्य शरणत्वादेव। *स्पष्टञ्चेदमिति*। प्रागुक्तं सर्वमित्यर्थः। प्राचामुक्तिं खण्डयति—*यत्त्विति*। *नियमार्थत्वमिति*। तन्मते बोधकत्वस्य शक्तिरूपत्वेन यथा कथञ्चित् सर्वेषां शब्दानां सर्वार्थबोधकत्वं सिद्धमेवेति संज्ञासूत्राणि नियमार्थानीति भावः। *तेषाम्* संज्ञासूत्राणाम्। नियमार्थत्वसाधकयुक्तिं खण्डयति—*सर्वेति*। सर्वशब्दार्थेत्यत्र शब्दार्थशब्दयोर्द्वन्द्वं कृत्वा सर्वशब्देन कर्मधारयोत्तरं तत्प्रकृतिकषष्ठ्यन्तस्य ज्ञानशब्देन सह तत्पुरुषः। *सामान्यज्ञानमिति*। शब्दत्वेनार्थत्वेन च सामान्यरूपेणेत्यर्थः। "व्यवहाराय नियमः, संज्ञायाः संज्ञिनि क्वचित्"इति हरिग्रन्थस्य तु, संज्ञाशास्त्रेण संज्ञाशब्दानां संज्ञिनि शक्तिग्रहे वृत्ते अन्येषामर्थानामुपस्थितिर्झटिति न भवतीति फलितार्थपरत्वेनोपपत्तिः कार्या ॥ ९ ॥

सिंहावलोकनन्यायेनेत्संज्ञायाः पुनः स्मरणात् तद्विषये वक्तुं शङ्कते—*नन्विति*। "क्ङिति"इति सूत्रार्थप्रविष्टन्निमित्तपदङ्कारणमात्रपरमित्यभिप्रायेण शङ्का। *कार्यमनुभवन्नि-

तत्वप्रकाशिका-

तात्पर्यबोधकत्वमितिभावः। *सिद्धमिति*"सिद्धे शब्दार्थसम्बन्धे" इति वार्तिकाच्छक्तिसम्बन्धस्य सिद्धत्वबोधनादिति भावः। *अगृहीतेति* =। सत्यपि सम्बन्धे ग्राहकाभावे बोधो न दृश्यतेऽतः शक्तिग्राहकत्वेन विधित्वमेव युक्तम्। एवञ्चागृहीतशक्तिग्राहकत्वं विधित्वमितिविधेर्लक्षणं निष्पन्नम् ॥ ९ ॥

*शङ्कत इति*। यथोद्देशविचारे "क्ङिति च" इत्यत्र कैयट इत्युक्तम्, तत्र "क्ङिति च" इत्यस्य कीदृग्वाक्यार्थ इत्याशङ्कायां संज्ञाविषयकविचारे निष्पन्ने, सप्रसङ्गसङ्गत्या तद्विषयिणीं व्यवस्थां वक्तुमाहेत्यपि बोध्यम्।

*कारणमात्रेति*। समवायिनिमित्तोभयपरमितिभावः। कारणत्वञ्च—कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्याधिकरणवृत्तित्वम्। तस्य च प्रकृते, ईकारेऽपि सत्त्वेनेयमाशङ्केति

भैरवी।

त्यस्य* कार्य्येण सम्बद्धमित्यर्थः। *कार्य्यीत्यस्य*। तु कार्य्यसम्बन्धित्वेन प्रसक्तमित्यर्थः।

तत्वप्रकाशिका।

तत्वम्। इदञ्च 'निमित्तग्रहणं कर्तव्यमुपधारोरवीत्यर्थम्' इति वार्तिकाभिप्रायेण, वस्तुतस्तु परसप्तम्याश्रयणेऽपि रोरवीतीत्यादावनन्तरङ्गे प्रतिषेधे बहिरङ्गगुणस्यासिद्धत्वेन, भिन्नं छिन्नमित्यादौ दकारेण व्यवधानेऽपि क्नोः कित्त्वसामर्थ्येनैकवर्णव्यवधानेऽपि निषेधप्रवृत्तिस्वीकारेण चेष्टसिद्धेः नेदम्फलमिति बोध्यम्। भवत इत्यादावकारव्यवधाने तु न गुणनिषेधः हल्वर्णग्रहणस्य विवक्षितत्वात्।

केचित्तु निषेधं बहिरङ्गतया वारयन्ति तन्न 'निषेधाश्च बलीयांस' इत्यनेन तद्बाधात्। निषेधविषयेऽन्तरङ्गपरिभाषाया अप्रवृत्तेश्च। अत एव "दीधीवेवीटाम्" इति सूत्रं प्रत्याख्यानपरं तद्भाष्यं च सङ्गच्छते। अन्यथा निषेधदृष्ट्या गुणस्यासिद्धत्वेन तद्वैयर्थ्यं स्यात्।

नच 'प्रेद्ध' इत्यत्र गुणनिषेधवारणपर "न धातुलोप" इति सूत्रस्थभाष्यविरोधः, प्रकृतिप्रत्ययोभयकृतान्तरङ्गबहिरङ्गभावेऽप्रवृत्तिकल्पनेन प्रकृते प्रत्ययमात्रकृतत्वेनादोषात्। नचाक्षैष्टामित्यत्र सिचः सकारेण व्यवधानात् वृद्धिनिषेधः स्यात्, ज्ञापकसाजात्यात् धात्ववयवहल्वर्णस्य ग्रहणेनानिषेधात्।

ननु गुतेत्यत्र धात्ववयवैकहल्वर्णाभावेन निषेधाप्रवृत्तिः, सिज्भिन्नहल्वर्णैकव्यवधान इति कल्पनेन तु न निर्वाह अगुपीदित्यत्र सिचो व्यवधानेन निषेधाप्रसक्तेः। नच "गाङ्कुटादिभ्य" इत्यनेन कुटादिभ्यः परस्य प्रत्ययमात्रस्य ङित्वविधानेन सिज्निमित्तको निषेधो भविष्यतीति वाच्यम्? अन्तरङ्गे निषेधे बहिरङ्गस्य तिङ्निमित्तकगुणस्यासिद्धत्वात् इति चेन्नागुषीदितिभाष्योदाहरणात् "गाङ्कुटादिभ्य" इति विहितङित्वाश्रयनिषेधे गुणवृद्ध्योरसिद्धत्वञ्चेति ज्ञापनेनादोषात्।

यत्तु व्यवधानं हल्रूपैकवर्णस्यैवास्तु तच्च गुणांशे, इत्थञ्चाक्षैष्टामित्यत्र वृद्धिः सुलभा नवागुपीदित्यत्र दोष इति तन्न। मृष्ट इत्यत्र "मृजेर्वृद्धिः" इत्यनेन प्राप्तायाः वृद्धेर्दुर्वारत्वात्।

अन्येतु निषेधशास्त्राणां तत्तच्छास्त्रारम्भसामर्थ्याद्विधिनिषेधयोः पर्यायापत्तिवारणाय विध्येकवाक्यतयैव बोधः। सच पर्युदासन्यायेन। एवञ्च क्ङिद्भिन्नसार्वधातुकार्धधातुकयोरित्याद्यर्थेन सर्वत्र बाधायोगात्परसप्तम्याश्रयणन्नतु निमित्तग्रहणं कर्तव्यम् इति वदन्ति, तन्न प्रथमान्तान्यपदार्थसमभिव्याहारे नञो भेदबोधकत्वं नेति सिद्धान्तेन नञोऽत्र भेदबोधकत्वाभावात्। येऽपि पूर्वोक्तार्थं लक्षणया सम्पाद्य "क्ङिति च" इत्यस्य तात्पर्यग्राहकत्वं वदन्ति, तेऽप्यमान्याः, निमित्तग्रहणाभावे पृथक्वाक्यार्थबोधे भेन्नम् लक्षणायां भिन्नम् इति स्वरूपभेदेन लक्षणाया अप्रवृत्तेः।

अपरेतु सत्यपि निमित्तग्रहणे कितः सर्वत्र प्रत्ययसम्बन्धिसत्वेन तत्साहचर्यान्ङितोऽपि प्रत्ययसम्बन्धिनो ग्रहणेनेङ्शीङोर्ङित्त्वस्य तथाभावेनावतरणासङ्गतिः, नव 'इकृ, स्मरणे" इत्यादौ धातुरपि किदस्तीतिवाच्यम्? तस्य गान्तत्वात् कान्तस्तु चर्त्वेन, एवं सर्वत्र। नच 'ओहाक्' धातोर्यङि "जाहायत" इत्यत्र दीर्घपर्युदासार्थं कित्करणमिति वाच्यम्? "दीर्घोऽकित" इत्यत्राकितोऽभ्यासविशेषणत्वादत्र पर्युदासाभावात्। नवा "अस्य स्त्री ई" ई इवाचरतीत्यर्थे क्विपि लटि शपि निष्पन्नस्यायतीतिरूपस्य प्रत्ययसम्बधिनो ङितः सत्वेनोपलक्षणम्। कित्साहचर्यादुद्देश्यताश्रयभिन्नस्य, धातुविहितस्यैव वा ङितो ग्रहणेनात्र तथात्वाभावात्।

यद्यपि आद्ये छिन्नम् भिन्नमित्यादावेव निषेधाप्रवृत्तिः तकारस्य नकारनिरूपितोद्देश्यताश्रयत्वात् द्वितीये अशब्दादाचारक्विबन्तात्कर्तरि क्विपि ततो ङीपि आचारक्विपि "अयती" इत्युदाहरणं भविष्यति, अस्य ङितो धातुविहितत्वात्। तथाप्यौपदेशिकधातुविहितस्येतिक-

"स्थण्डिलाच्छयितरि" (४-२-१५) इति निर्देशश्चास्या ज्ञापकः। "ऊर्णुनविषति' इत्यादिसिद्धये कार्य्यमनुभवन्निति। अत्र हि-"द्विर्वचनेऽचि" (१-१-६८) इति नुशब्दस्य द्वित्वम्। अन्यथा "सन्यङोः" (६-२-९) इत्यस्य षष्ठ्यन्तत्वात्सन्नन्तस्य कार्यित्वेन इसो द्वित्वनिमित्तत्वाभावात् तत्प्रवृत्तिर्न स्यात्। वस्तुतः समवायिकारणनिमित्तकारणयोर्भेदस्य सकललोकतन्त्रप्रसिद्धतया तस्य तत्त्वेनाश्रयणाभावेन नैषा ज्ञापकसाध्या। अतएव हिः प्रयुक्तः। स हि तत्त्वेनानाश्रयणे हेतोः प्रसिद्धत्वं द्योतयतीति

भैरवी।

*निर्देशश्चेति*। चस्त्वर्थे।

यत्तु "दीधीवेवीटाम्" इति सूत्रे दीधीवेवीङ्ग्रहणमस्यां ज्ञापकं कुटादिषु कुङ्धातुपाठश्च तथेति तन्न। आद्ये दीधीवेवीग्रहणस्य भाष्यकृता प्रत्याख्यानात्, सूत्रकाररीत्या ज्ञापकत्वमित्यपि न आदीध्यक इत्यत्रानिग्लक्षणवृद्धिवारणतया साफल्यात्। अन्त्यस्य ज्ञापकत्वमपि न चमत्कृतिकारि तत्रान्यत्र वा पाठे लाघवगौरवविरहात् *अन्यथा*= । कार्य्यमनुभवन्नित्यस्याभावे। "इको यणचि" इति सूत्रस्य विषये 'सुध्युपास्य' इत्यादाविको निमित्तत्वन्तु "तस्मिन्" इति परिभाषाबलादजुपश्लिष्टस्याचः पूर्वस्येकः कार्यित्वस्वीकारादुकारस्य न कार्य्यानुभव इति स्पष्टमेव। कार्य्येण उपश्लिष्टस्य कार्य्यित्वमित्येतद्व्यवहारात् तन्त्रान्तरीयव्यवहाराच्च सर्वेष्टसिद्धौ नेयं परिभाषा ज्ञापकसिद्धेति सूचयन्नाह-*वस्तुत इति*। *तत्त्वेन*=निमित्तत्वेन। *अतएव*=तन्त्रान्तरीयव्यवहारसाध्यत्वादेव। *तत्त्वेनानाश्रयणे* निमित्तत्वेना-

तत्वप्रकाशिका-

ल्पनेन नदोषः। नैवमपि श्नुप्रत्ययस्य औपदेशिकधातुविहितत्वेन ङित्वेन सुनोतीत्यस्योपपलक्षणम्, इक्त्वावच्छिन्नाया उकारे अङ्गत्वावच्छिन्नायाः सुन्वित्यस्मिन्नुद्देश्यतायाः सत्वेऽपि नुशब्दे कस्याप्यभावात्। एवं जिष्णवतीत्यत्रापि स्नुनिष्ठाया उद्देश्यताया अभावो बोध्यः। अथाङ्पूर्वाद्धाधातोः किप्रत्यये, आचारक्विपि "आधयति" इत्यत्र औपदेशिकधातुविहितकिप्रत्ययसम्बन्धिकित्त्वस्य सत्वात्तदुपलक्षणं चेत्तर्हि गिन्निष्ठाया निमित्ततायाः सर्वत्र सप्तम्यन्तपदप्रयोज्यायाः सत्त्वेन तत्साहचर्यान्ङिन्निष्ठाया अपि तथाग्रहणात् प्रकृते षष्ठ्यन्तपदप्रयोज्यायाः सत्वात्। एवञ्चारिरिपतीत्यस्योपलक्षणम्बोध्यमिति वदन्ति।

*कार्यीति*। इन्प्रत्ययस्योद्देश्यताश्रयत्वमर्थः। कार्यनिष्ठविधेयतानिरूपितोद्देश्यताश्रयः निमित्ततया न गृह्यत इत्यर्थः। उद्देश्यत्वं विधेयतया साक्षान्निरूपितविषयताश्रयत्वम्। विधेयत्वञ्चापूर्वज्ञानीयविषयताश्रयत्वम्। एवञ्च गुणनिष्ठविधेयताया इक्पदसन्निधानेन साक्षाद्विषयताश्रयत्वमिकारे तत्र निमित्ततायाः निषेधेन परम्परया समुदायेऽपि निषेधेन न समुदायवृत्तिनिमित्ततामादाय निषेधप्रवृत्तिः। यदितु यदुपदेशप्रयुक्ता यस्येत्संज्ञा तदनुबन्धकत्वं तस्येत्युच्यते तर्हि अव्याप्यवृत्त्युद्देश्यताश्रयत्वमादाय निमित्तत्वं वारणीयम्।

इत्थञ्च-स्वाश्रयत्व स्वाश्रयघटितत्वान्यतरसम्बन्धेन कार्यनिष्ठविधेयतानिरूपितसाक्षाद्विषयताविशिष्टः कार्यस्य निमित्ततया नाश्रीयत इति फलितोऽर्थः। एतदभिप्रायेण मूलेऽवतरणेऽध्येताशयितेत्युदाहरणद्वयमुक्तम्

*वस्त्वर्थ इति*= । अर्थः प्रयोजनं संग्रहरूपमिति बोध्यम्। तेन "निष्ठाशीङ्" इत्यस्य संग्रहः। अन्यथा शयित इत्यत्र प्रकृतिनिष्ठङित्त्वेन गुणे प्रतिषिद्धे कित्त्वप्रतिषेधस्य वैयर्थ्यं स्यात्। *सकललोकतन्त्रेति*। अत्र सकलपदं लोकेऽन्वितं नतु तन्त्रे, तेन वेदान्तिनये एक-

तत्त्वम् । "द्विर्वचनेऽचि" (१-१-५९) इत्यत्र भाष्ये ध्वनितैषा ॥ १० ॥

भैरवी ।

नाश्रयणे* निमित्तत्वेनानाश्रयणे । *तत्त्वम्* सिद्धान्तः । *ध्वनितैषेति* । तत्र हि-अचीत्यस्य जेघ्रीयते देध्मीयते इति प्रत्युदाहरणमुक्तम् । अत्र "ईघ्राध्मोः" इतीत्वस्याज्ग्रहणाभावे स्थानिवत्त्वेन निवृत्तिः स्यात्, रूपातिदेशस्य सिद्धान्तिसम्मतत्वात्, 'कार्यमनुभवन्' इत्यं-

तत्वप्रकाशिका ।

स्मिन्नेव ब्रह्मणि कारणद्वयस्वीकारेऽपि न क्षतिः । *सिद्धान्त इति* । चिन्त्यमिदम्, वैयाकरणनये शब्दस्य नित्यत्वेन तन्निरूपिततत्त्वयोर्गगनकुसुमायमानत्वात्। न्यायनयेऽप्येकारादेः समवायिकारणमाकाशः नत्विकारादिः ।

केचित्तु सकललोकतन्त्रेऽप्रसिद्धतयेति पाठम्मत्वा नैषेत्यत्रत्यनकारस्य काकुपरतया, ज्ञापकसाध्या न, अपितु ज्ञापकसाध्यैवेति । *अत एव* ज्ञापकसाध्यत्वादेव । यद्वा तत्त्वेनाश्रयणाभावे सत्येषा ज्ञापकसाध्या नेति न, अपितु ज्ञापकसाध्यैवेति वर्णयन्ति ।

परेतु अचीत्यादौ शाब्दे निमित्तकारणत्वव्यवहारस्य नित्यतापक्षे वास्तविकस्यासम्भवेन काल्पनिकत्वम्, जन्यतापक्षे कण्ठताल्वाद्यवच्छेदेन वायुसंयोगस्येव निमित्तकारणत्वम्, एवं स्थानिरूपसमवायिकाणत्वमपि काल्पनिकं शक्यते वक्तुं, लोकेऽपि घटोत्पत्यनन्तरं कपालस्य व्यवहाराभावः, एवमादेशोत्पत्यनन्तरं स्थानिनो व्यवहाराभावेऽपि निमित्तात्पृथक् समवायिकारणत्वेन परिभाषा न ज्ञापकसाध्येति यथाश्रुतं युक्तमेवेत्याहुः ।

*सिद्धान्तिसम्मतत्वादिति* । अयम्भावः, अचिग्रहणाभावे द्विरुच्यतेऽस्मिन्निति व्युत्पत्त्या द्वित्वे निमित्ते परत आदेशः स्थानिवदित्यर्थकम् "द्विर्वचने" इत्येव सूत्रमस्तु । घ्राध्माधातोर्यङि परत्वात् "ईघ्राध्मोः" इतीत्वे "द्विर्वचने" इत्यनेन कार्यातिदेशे "घ्राध्मा" इति बुद्धावपि द्वित्वन्तु घ्रीध्मीत्यस्यैवेति "जेघ्रीयते देध्मीयते" इतीष्टं सेत्स्यतीतिप्रश्नः । चक्रतुरित्यत्र द्वित्वात्परत्वाद्यणि, अनच्कत्वेन द्वित्वाप्राप्तावनेन कृबुद्धावपि यणविशिष्टस्यैव द्वित्वेऽभ्यासेऽकारस्य श्रवणं नस्यात्तदर्थं रूपातिदेशेऽङ्गीकृते जेघ्रीयते देध्मीयते इत्यत्रापि घ्राध्मेति रूपातिदेशेऽभ्यासे एकारश्रवणं नस्यात्तदर्थमचिग्रहणे कृते 'स्वरान्तरं व्यञ्जनान्युत्तरस्य' इति प्रातिशाख्येन यङोऽजादिद्वित्वनिमित्तत्वाभावेनातिदेशाभावादिष्टसिद्धिरित्युत्तरम् । अचिग्रहणमेव रूपातिदेशे ज्ञापकमिति तात्पर्यम् ।

एवञ्च विशेषणांशविशिष्टेयम्परिभाषा ध्वनिता । अन्यथा "सन्यङोः" इत्यस्य षष्ठ्यन्तत्वेन कार्यिणो यङो निमित्तत्वाभावेनातिदेशाभावे जेघ्रीयत इत्यादीष्टसिद्धौ फलाभिधानमसङ्गतम् स्यात् ।

अत्रेत्थं वदन्ति "द्विर्वचनेऽचि" इत्यस्य यदि द्वित्वनिमित्ततापर्याप्त्यधिकरणेऽचीत्यर्थस्तदैधाञ्चक्रे इत्यादौ यणि वारितेऽपि चक्रतुरित्यादौ द्वित्वात्पूर्वं यण् दुर्वारस्तत्रातुसोऽकारस्य द्वित्वपर्याप्त्यधिकरणत्वाभावात् । यदितु द्वित्वपर्याप्त्यधिकरणघटकेऽचीत्यर्थस्तदा जग्मतुरित्यत्र द्वित्वात्पूर्वमुपधालोपः प्रवर्तेत मकारेण व्यवधानाद् "द्विर्वचनेऽचि" इत्यस्याप्रवृत्तेः । अथ द्वित्वनिमित्ततापर्याप्त्यधिकरणघटकाज्निमित्तकोऽजादेशो नेत्यर्थस्तदा जेघ्रीयत इत्यादौ द्वित्वात्पूर्वमीत्वं न स्यादेतदर्थमचि पर्याप्तिनिवेशे जग्मतुरित्यादौ दोषः, अतुसोऽकारे लोपशास्त्रीयनिमित्ततापर्याप्तेरभावात् । तस्मात्, द्वित्वनिमित्ततापर्याप्त्यधिकरणघटकाच्चूपर्याप्ता या निमित्तदलप्रविष्टा विषयता तन्निमित्तक इत्यर्थ आवश्यकः, तेनाल्पदीया या निमित्तदलप्रविष्टा विषयता तस्या अतुसोऽकारे सत्त्वाज्जग्मतुरित्यादौ न दोषः, नापि जेघ्रीयते इत्यादौ, तत्र यङोऽकारे निमित्तदलीयायाः कस्या अपि विषयताया अभावात् ।

एवं सति, ऊर्णुनविषतीत्यादाविसः इकारेऽपि कस्यापि विषयताया अभावात् गुणस्य नि

ननु 'प्रणिदापयति' इत्यादौ दारूपस्य विधीयमाना घुसंज्ञा दापेर्न स्यादत आह—

भैरवी ।

शोऽपि तस्माद्भाष्यादेव लभ्यते, अन्यथा यङन्तस्य कार्यित्वेन "द्विर्वचनेऽचि" इत्यस्य प्रवृत्तिर्न स्यात्॥ १० ॥

संज्ञाप्रसङ्गाद्घुसंज्ञापि स्मृतेत्येतद्विषये विशेषं वक्तुमुपक्रमते—*नन्विति । *दापेर्न स्यादिति* । यत्तु 'यदागमा' इति परिभाषाया एतावत्पर्यन्तमसिद्धतया तद्घटकदाशब्दस्य स्यादेवेति तन्न, तस्यानर्थकत्वात् । अर्थस्य वाच्यता हि, लोके, यदर्थबोधनाय यस्य प्रयोगो भवति तन्निरूपिता कल्पनीया, लोके हि यत्रागमप्रवृत्तिस्तत्रागमसहितप्रयोग एव दृश्यत इत्यनर्थकत्वं स्पष्टमेव। *न स्यादित्यस्य* । तादृशेऽर्थे प्रयोगेऽपि शब्दान्तरत्वादिति शेषः। स्वे-

तत्वप्रकाशिका ।

षेधो न स्यादिति चेन्न कापि क्षतिः, अवादेशे निषेधस्य प्रवृत्तेः तत्राच्पदीयविषयताया इस इकारे सत्वात् इति परिभाषा निष्फला । न च दुद्युषतीत्यत्र दि उसेतिदशायां यणो द्वित्वनिमित्तता पर्याप्त्यधिकरणघटकाच्पर्यात्पनिमित्तदलप्रविष्टविषयताकत्वेन निषेधात्पूर्वं द्वित्वे दिद्युषतीत्यनिष्टं स्यात् । सत्यां परिभाषायां साम्भावनिकस्य कार्यानुभवकर्तृत्वस्य ग्रहणेन यद्यत्र "द्विर्वचनेऽचि" इति न प्रवर्तेत तर्हि यणि परिभाषाया विषयस्स्यादिति सम्भावनया न दोष इति वाच्यम् 'प्रत्यय इति वक्तव्यम्' इति भाष्यात् प्रत्ययावयवस्याचो ग्रहणेनात्राप्रवृत्तेः। नचात्मनो भवनमिच्छति भवनीयति ततः सनि द्वित्वात्पूर्वं ल्युट्स्थानिकाननिमित्तकगुणनिषेधे, "ओः पुयण्" इत्यस्याभ्यासोत्तरखण्डव्यवधान एव प्रवृत्त्याऽत्राप्राप्तेः, बिभवनीयिषतीति रूपन्नस्यादिति परिभाषा सफलेति वाच्यम्? "द्विर्वचनेऽचि" इत्यस्य द्वित्वविधायकशास्त्रीयनिमित्तदलप्रविष्टविषयताप्रयोजकप्रत्ययघटकाच्पर्यात्पनिमित्तदलप्रविष्टविषयताके कार्ये ऽजादेशो नेत्यर्थेनात्रानस्य द्वित्वविधायकशास्त्रे निमित्तत्वेनाश्रयणाभावेनाप्राप्तेः । अध्यजीगपदित्येतदर्थमज्निष्ठा निमित्तताप्रत्ययनिष्ठविशेष्यतानिरूपिताव्यवहितपूर्वत्वसम्बन्धावच्छिन्नप्रकारता ऽसमानाधिकरणा ग्राह्या, "णौ च सँश्चङोः" इत्यत्र समानाधिकरणस्यैव सत्वेन द्वित्वात्पूर्वं गाङादेशो भवत्येव। चक्रतुरित्यादेस्तु एकाच्भ्यः आचारक्किपोऽनभिधानादनभिधानम् । सत्यप्यभिधाने प्रत्ययान्तत्वादामुत्पत्त्योक्तरूपालाभः । उशब्दादाचारक्विबन्तात्सनि, अविविषतीत्यत्र द्वित्वात्पूर्वं गुणेऽप्यवादेशे प्राप्तस्य निषेधस्य प्रतिबन्धाय परिभाषाऽऽवश्यिकेतिचेत्तर्हि "द्विर्वचनेऽचि" इत्यत्र "अचः परस्मिन्" इत्यतः पूर्वविधावित्यनुवर्त्य पूर्वत्वेन दृष्टस्यैव द्वित्वे कर्तव्ये इत्यर्थेन प्रकृते तथाभावेन तद्प्राप्तिरिति बोध्यम्॥ १० ॥

*स्मृतेऽपि* एतेन सप्रसङ्गसङ्गतिरुक्ता । पूर्वाऽवतरणस्य शयितेत्यत्रेतेत्यस्यार्धधातुकत्वं कथमित्याशङ्कायां तदुपपादकतयोपोद्घातसङ्गत्या तदनन्तरं "यदागमा" परिभाषां वक्तुमुपक्रमते-*नन्वितीत्यपि कश्चित्* । *असिद्धतयेति* । एवञ्च ग्राहकाभावेन स्वतन्त्रे दाशब्दे दाशब्दत्वमर्थवत्वञ्चास्त्येव । *तस्यानर्थकत्वादिति । अयमाशयः—"दाधाघ्वदाप्" इत्यत्र "दा" इति विशिष्टरूपोपादानेन- अर्थवद्ग्रहणपरिभाषयाऽर्थवद्दाशब्दस्य ग्रहणेनात्र "आगमसमभिव्याहारे आगमविशिष्टस्यैवार्थवत्वम्" इति सिद्धान्तेन, दाप्घटकदाभागस्यानर्थकत्वम्। तदुपपादयति—*अर्थस्य वाच्यतेति* । *तन्निरूपिता कल्पनीयेति*। यच्च यस्मान्नियमेन प्रतीयते तत्तस्य वाच्यम् यथा गोशब्दस्य गोत्वमितिव्याप्तेः । *स्पष्टमेवेति* तथा चागमप्रवृत्तियोग्ये आगमरहितः अनर्थकः तदर्थविवक्षायान्तद्रहितस्याप्रयोगादित्यनुमानमागमसमभिव्याहारन्यायविनिगमकम् ।

तत्वप्रकाशिका ।

अत एव नैतौ दाधौ अर्थवन्तौ, कौ तर्हि पुग्विशिष्टौ" इति "दाधाघ्वदाप्" सूत्रस्थभाष्यं सङ्गच्छते । अतएव भावकर्मवाचिनि परतो ये स्यादय इत्यर्थे सीयुडविशेषितस्स्यादिति "स्यसिच्" सूत्रस्थभाष्यमपि सङ्गच्छते । अन्यथा सीयुट्समभिव्याहारेऽपि केवलस्य भावकर्मवाचकत्वाक्षतेरविशेषित इत्युक्तिरसङ्गतैव स्यात् । सीयुट्समभिव्याहारे लिङि प्रत्ययत्वाभाव इति तु नैतद्भाष्यारूढम्, अर्थवत्वाभावकल्पनायाः लघुत्वात् । प्रत्ययत्वस्य प्रत्यय इति महासंज्ञाबलात् स्वस्वप्रकृत्यन्यतरार्थप्रत्यायकत्वे सति प्रत्ययपदवत्त्वाद् । तत्र स्वार्थत्त्वं प्रत्ययनिष्ठविधेयतानिरूपितबोधकतानिष्ठावच्छेदकतानिरूपितावच्छेदकतावत्वम् ।

प्रकृत्यर्थत्वञ्च धातुपाठकोशादौ प्रकृतिमुच्चार्य बोधितत्वम् । तत्र प्रकृतित्वं प्रत्ययत्वेन चिकीर्षितो यस्तन्निष्ठविधेयतानिरूपितपञ्चम्यन्तपदप्रयोज्योद्देश्यतावत्वम् । अत एव वधाद्यादेशानां न प्रत्ययत्वम् । एतदर्थं भाष्ये स्वीयमर्थं प्रत्याययन्तीतिविग्रहे स्वीयपदोपादानम् ।

एतेन साधुत्वं द्विविधम्, एकं शास्त्रप्रवृत्तिप्रयोजकम् । अपरं लोके प्रयोगत्वसम्पादकम् । तत्रोत्तरोत्तरप्रवृत्तैः शास्त्रैः पूर्वपूर्वप्रवृत्तशास्त्रबोधितस्य लोके प्रयोगाभावरूपमसाधुत्वम्बोध्यते, नतु शास्त्रप्रवृत्त्युपयोगित्वं वार्यते, तथाचार्थबोधजनकत्वं पूर्वपूर्वप्रवृत्तशास्त्रबोधितं साधुत्वमस्त्येवेति कथमागमसन्निधाने आगमिनोऽनर्थकत्वं सम्भविष्यतीति न प्रणिदापयतीत्येतत् फलम्, "दा" इत्यस्यार्थवत्वमादाय घुत्वादिप्रवृत्तेरितिप्रत्युक्तम् ।

केचित्तु "समस्तुट्च" इति सूत्रे भाष्ये पूर्वान्तोऽयं तुट् परादिर्वेतिशङ्कायां यद्ययं प्रत्ययस्य स्यात् तर्हि प्रत्ययस्यैकादेशो न प्राप्नोति प्रत्ययादिठस्याभावात्, इत्याशङ्क्य ठकारेणैकसन्नियोगशिष्टस्तुट् विधीयत इत्युक्तम् । तद्द्योतन्न्यायस्वीकार एव सङ्गच्छते । अन्यथा तुट्यपि प्रत्ययादिठस्य सत्वेन सन्नियोगशिष्टठविधानमसङ्गतं स्यादिति वदन्ति ।

यत्तु "आद्यन्तौ टकितौ" इत्यनेन तुटः प्रत्ययादित्वबोधनाट्ठस्य प्रत्ययादित्वाभावान्नैकादेश इति भाष्यतात्पर्यमिति तत्तुच्छम्, आगमे तुटि प्रत्ययादित्वेऽपि केवलस्यागमिनोऽपि प्रत्ययत्वेन तन्मात्रादित्वमादायैकादेशप्रवृत्तेः ।

यद्यपि "ठस्येकः" इत्यत्रादिग्रहणं नानुवर्तते तथापि अङ्गस्य निमित्तं यष्ठस्तस्येक इत्यर्थाश्रयणेन "कर्मणि घटोऽठच्" इत्यत्र यथाऽठजङ्गस्य निमित्तं, न ठ इति न तत्रैकादेशः, एवं तुटि सति समुदायोऽङ्गस्य निमित्तं न ठमात्रमितीकादेशो न प्राप्नोतीतिभाव इति कैयटः ।

परे तु, आगमप्रवृत्तियोग्ये आगमरहितः अनर्थकः शक्तिविशिष्टत्वात् । अत्र वै० स्वाश्रयत्व स्वाश्रयसमभिव्याहृतत्व स्वाश्रयघटकत्व एतत्त्रितयसम्बन्धेन । रामशब्दघटको रेफो यथा । अत्र रेफे दशरथापत्यत्वरूपशक्त्याश्रयत्वं स्वाश्रयमकारसमभिव्याहृतत्वं स्वराश्रयो रामस्तद्घटकत्वञ्चास्तीत्यनर्थकत्वम् ।

नचैवं राजपुरुषघटकराजेत्यस्याप्यनर्थकत्वं स्यादिति वाच्यम्? एकार्थीभावानापन्नेतिशक्तौ विशेषणादित्याहुः । अतएव नञा उशब्दस्य समासे आगमरहितस्योशब्दस्यानर्थकत्वेनान्वत्रेत्यत्र "निपात एकाजनाङ्" इति प्रगृह्यत्वं न । रामाणामित्यत्र नुट्सन्निधाने आमोऽनर्थकत्वेन भत्वाभावे "अल्लोपोन" इत्यनेन रामामूघटकानोऽकारस्य लोपो न, नच सन्निपातपरिभाषया नाल्लोपः, "नामी" इत्यारम्भसामर्थ्येन तस्या अनित्यत्वात् ।

यत्तु निपातानां द्योतकत्वेन परस्परासामर्थ्येन न उशब्दस्य नञा समास इति तन्न वाचकत्वपक्षे सामर्थ्यात् । अत एव "निपातस्यानर्थकस्य" इत्यत्रानर्थकपदं चरितार्थम् । अन्यथा द्योतकत्वेन सर्वत्रानर्थकस्यैव सम्भवेनानर्थकस्येति पदं व्यर्थं स्यात् । तत्र क वाचकत्वं क द्योतकत्वमिति जिज्ञासायां, यत्र तदर्थवाचकपदसमभिव्याहारस्तत्र द्योतकत्वमन्यत्र वाचकत्वमिति विवेकः । सर्वत्र लक्षणाकल्पने गौरवात् ।

भैरवी ।

रूपमिति शब्दोपस्थितिसत्त्वाच्चेत्यपि बोध्यम्।णत्वात्मककार्यकालपक्षाभिप्रायेणेयमाशङ्का।

तत्वप्रकाशिका ।

यत्तु न्यायस्य भूयादित्यत्र "तृ" लोपाभावः, भूयास्तामित्यत्रेडभावः, पुथिषीध्वमित्यत्र मूर्धन्याभावः फलम्, अन्यथा ततांध्वमित्येत्येतेषामर्थवत्त्वेन लोपादीनां प्रवृत्तिर्दुर्वारा स्यादितितन्न, आद्ये ङ्याप्साहचर्येण लुप्यमानप्रत्ययानवयवस्य हलो ग्रहणेन, द्वितीये धातोः परस्येत्यर्थेन यासुटा व्यवधानात्, तृतीये इङ्भिन्न इणः ग्रहणेनादोषात् ।

यद्यपि फलोपधायकतारूपजनकतायाः ग्रहणे कामिनीजिज्ञासादिप्रतिबन्धकवशाद्बोधाजनने प्रणिदातेत्यादौ घुत्वानापत्तिः, स्वरूपयोग्यतायाः ग्रहणे प्रकृते दाशब्देऽपि सत्त्वादवतरणासङ्गतिः । अत अर्थविषयकबोधजनकत्वमिति परित्यज्य, अर्थविषयकबोधजनकत्वप्रकारकतात्पर्यविशेष्यत्वरूपमर्थवत्त्वं वाच्यम्, दाश्ववर्तिनः तस्यापि समुदायस्य प्रत्येकानतिरिक्तनया दाशब्दे प्रकृते सत्त्वेनावतरणासङ्गतेस्तादवस्थ्यमिति तदपि न । तादृशतात्पर्यविशेष्यत्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकधर्मत्वरूपस्यार्थवत्त्वस्य ग्रहणेनादोषात् । अवच्छेदकत्वञ्चात्रान्यूनानतिरिक्तवृत्तित्वं ग्राह्यम् । पर्याप्तिश्चायमेको घटः, इमौ द्वौ, इति प्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेषः । एवञ्च प्रकृतेऽनुयोगितावच्छेदकधर्मः त्रित्वं न तु दागतद्वित्वं तस्य न्यूनवृत्तित्वेनावच्छेदकत्वाभावात् ।

नच तत्सम्बन्धेन प्रत्येकावृत्तिधर्मस्य तत्सम्बन्धेन समुदायावृत्तित्वनियमात् दागतद्वित्वेऽपि तद्वर्तत इति वाच्यम् ? अवयवस्य समुदायातिरिक्तत्वस्वीकारेणादोषात्, प्रकारान्तरस्य सर्वथा दुर्वचत्वात् ।

ननु "अर्तिह्री" त्यादिना णेः पुट् विधीयताम्, णेरवयवत्वेन पुटोऽप्यार्धधातुकत्वादर्पयतीत्यादौ गुणानापत्तिर्दोषः "पुगन्त" इति सूत्रे पुगन्तग्रहणं च न कार्यमिति लाघवमिति प्रकृते प्रणिदापयतीति णत्वसिद्धिरिति चेन्न उत्तरसूत्रे पष्ठ्यन्तस्य णेरनुवृत्तौ लुक् नुकादीनामन्त्यावयवत्वेन ह्लाययति वाजयतीत्याद्यसिद्धेः । न च तत्रापि युट् जुट् इति न्यस्यतामिति वाच्यम्, विलीनयतीत्यादौ गुणापत्तेः। न चोत्तरत्र प्रयोगानुरोधेन णाविति सप्तम्यन्तत्वेन विपरिणाम इति न क्वाप्यनुपपत्तिरितिवाच्यम् ? दापेर्लुङि पुड्विशिष्टस्य णेर्लोपेऽदीदपदित्याद्यसिद्धेः, दावर्त्याकारस्योपधात्वाभावेन।ह्रस्वासिद्धेश्च ।

न च श्पप्णाविति न्यासेन न क्वापि दोषः, घ्रापयतीत्यादौ जिघ्रादेशापत्तेः । न च पप्रत्ययः विधीयतामिति वाच्यम् ? क्नोपयतीत्यत्र गुणानापत्तेः पिचेतिन्यासेन तु न गुणनिर्वाहः पकारादिसार्वधातुकार्धधातुकयोरित्यर्थेन प्रकृते व्यपदेशिवद्भावेन निर्वाहेऽपि तदादिविधेः फलाभावेनाप्रवृत्त्या सार्वधातुकार्धधातुकपरकपकार इत्यर्थे श्रीपयतीत्यत्र गुणापत्तेः । नच पनिरूपितमङ्गत्वमितिवाच्यम् ? श्रीपाशशब्दादाचक्षाणण्यन्तात् क्विपि णिचि श्रेपयतीत्यनिष्टापत्तेः । पकाररूपार्धधातुकइत्यर्थेन तु न निर्वाहः पुग्विधायके धातोरित्यस्यानुवृत्त्या पकारस्यार्धधातुकत्वाभावेन ह्रेपयतीत्यसिद्धेः ।

*णत्वात्मककार्यकालपक्षेति* न यथोद्देशपक्षे, तत्र प्रयोजन विशेषानुद्देशेन धातुसंज्ञासमनन्तरमेव घुसंज्ञायां सम्प्रति पुक्यपि गृहीतसंज्ञास्मरणेन णत्वस्य सुलभत्वात् । किञ्च कार्यकालेऽपि 'पूर्वं धातुः साधनेन युज्यते' इति मते, न पुनरुपसर्गेणेति मते, पूर्वमेव प्रनिभ्यां योगे घुसंज्ञायामन्तरङ्गतया पूर्वमेव णत्वप्रवृत्तेरिष्टसिद्धेः, एतदपि अकृतव्यूहपरिभाषां स्वीकुर्वतां प्राचीनानां मते तत्रार्थवद्दारूपनिमित्तस्य पुका विनाशसम्भवात्पूर्वं घुसंज्ञाया अप्रवृत्तेः, न तदस्वीकुर्वतां नवीनानां मते किञ्च पुको बहिरङ्गतयाऽसिद्धत्वेन दा बुध्यैव घुत्वं भविष्यतीति।

वस्तुतस्तु 'यत् क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञाः' भवन्तीति नियमेन यथो-

**यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते ॥ १ ॥**

**यमुद्दिश्यागमो विहितः स तद्गुणीभूतः शास्त्रेण तदवयवत्वेन बोधि-**

**भैरवी ।**

यदागमेतिपरिभाषार्थमाह—*यमुद्दिश्येत्यादिना* । यद्यपि परिभाषायां यदागमा इति बहुव-चनान्तं, तथापि तत्सङ्ग्राहकवाक्यमित्यभिप्रायेण, इदञ्चैकवचनं प्रत्येकमेव लक्ष्यसंस्कारो ल-क्षणेन भवतीत्याशयेन । अस्यां यत्तच्छब्दौ कार्य्यिपरौ । तद्गुणीभूत—इत्यस्य व्याख्या—*शास्त्रेणेत्यादि*। शास्त्रमत्राद्यन्तावित्यादिशास्त्रसहितमर्तिर्ह्रात्यादि। लोके यथा देवदत्तेत्या-दिशब्देन व्यवहृतस्य पश्चादङ्गाधिक्येऽपि देवदत्तेति व्यपदेशहानिर्न भवतीति दृश्यते तथाऽत्र शास्त्रेऽपि यादृशागमेन पूर्वकालजातव्यवहारहानिर्न भवति तादृशागमेन तद्व्यवहारविषयता-

**तत्वप्रकाशिका ।**

दुद्देशपक्षे पूर्वं घुसंज्ञायां सत्यामपि प्रकृते निशब्दादौ तन्निरूपितोपसर्गत्वाभावेन णत्वाप्रवृ-त्तिः । उपसर्गत्वस्य जन्यबोधविपर्यीभूतक्रियाविशेषविषयकतात्पर्यग्राहकत्वे सति प्राद्यन्यत-मत्वरूपत्वेन जन्यत्वस्य निरूपकांशे साकाङ्क्षत्वेन, किन्निरूपितजन्यतावद्बोध इत्याकाङ्क्षायां "नेर्गद" इत्यत्र प्रत्यासत्या गदादिनिरूपितस्य ग्रहणेन प्रकृतेऽर्थवत्त्वस्य दापि सत्वेन घुप्रकृ-र्यासजनकतानिरूपितजन्यतावद्बोधविपर्यीभूतक्रियाविशेषविषयकतात्पर्यग्राहकतायाः प्रणिश-ब्देऽसत्वात् । एतेन पूर्वं धातुरुपसर्गेणेति मतमपि प्रत्युक्तम् । नवीनानां मतेऽपि 'स्थादिष्व-भ्यासेन' इत्यादिनिर्देशेनासिद्धशास्त्रप्रवृत्युत्तरकालिकसापादिकशास्त्रप्रवृत्तिप्रयोज्यासिद्धशा-स्त्रनिमित्तविनाशसम्भावनायां पूर्वमसिद्धशास्त्रस्याप्रवृत्तिरितिकल्पनेनादोषात्। अन्यथा ष्ठा-धातावन्तरङ्गतया पूर्वं ष्टुत्वे पश्चाद्धातुसंज्ञोत्तरं सत्वेऽपि ठकारश्रवणापत्तौ निर्देशासङ्गतिः स्पष्टैव।

प्रकृते तु सापादिकशास्त्रप्रवृत्त्या त्रैपादिकशास्त्रनिमित्तविनाशः घुसंज्ञानिमित्तविनाश-द्वारा परम्परया बोध्यः । संज्ञाशास्त्राणां विधिनिमित्तनिमित्तकत्वेनान्तरत्वाङ्गभावाच्च । अत एव "न यासयोः"इत्यादिनिर्देशः सङ्गच्छते। अन्यथा परनिमित्तकत्वेनात्वस्य बहिरङ्गासिद्ध्या गुणसंज्ञाया अप्रवृत्त्या पररूपाप्रवृत्तेः निर्देशासङ्गतिरिति बोध्यम् । न च तथापि विभक्तिनि-रपेक्षत्वेनान्तरङ्गत्वं, 'नाजानन्तर्य' इति निषेधात् । न चैवमप्यदाबितिनिषेधेन घुसंज्ञाया अप्राप्तिरितिवाच्यम् ? 'अपिद्ग्रहणंकर्तव्यम्' इतिवार्तिकेन फलैक्याय पकारेत्संज्ञकदापः प्रतिषेधात् बान्तस्य प्रतिषेधाद्वा । पान्तनिर्देशस्तु चर्त्वेन ।

केचित्तु 'सर्वे सर्वपदादेशाः' 'अनागमकानां सागमकादेशा' इति न्यायाभ्यां दास्थानिका-देशतां दापि प्रतिपाद्य स्थानिवद्भावेनैकदेशविकृतन्यायेन वा दापि घुत्वमादायावतरणासङ्गतिं वदन्ति, तन्मुधैव स्थानिवद्भावाप्रवृत्तेर्ग्रन्थकृता वक्ष्यमाणत्वात् । विकारपदेन स्थाने जाय-मानह्रासवृद्ध्योरेव ग्रहणेनागमविषये एकदेशविकृतन्यायाप्रवृत्तेश्च । अत एव लोपागमवर्णवि-कारेष्वित्यत्रागमात्पृथक् विकारव्यवहारोऽप्युपपद्यते । प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणमित्य-पि न शरणम्। कुत्वविषय एव तस्याः प्रवृत्तेः। येऽपि 'लक्षणप्रतिपदोक्त' परिभाषयाऽवतरणा-सङ्गतिं वदन्ति तेऽप्यमान्याः । 'गामादाग्रहणेष्वविशेषः' इति तत्प्रतिषेधात् । न चानयान-र्थकस्यापि दाशब्दस्य घुसंज्ञेति वाच्यम् ? अर्थवत्परिभाषाविषयेऽस्या अप्रवृत्तेः । अत एव जन्मतः प्राक्कालिकविशेषणानां त्यागाभावो मीमांसकैः स्वीक्रीयत इति बोध्यम् ।

*यमुद्दिश्येति* यस्यागमा इति विग्रहः । उद्देश्यत्वं षष्ठ्यर्थः अवयवत्वावच्छिन्नविधेय-ताश्रय इति आगमपदार्थः । मूले 'विहित' इति तु फलितार्थकथनम्, आगमपदेनैव तल्लाभा-त् । षष्ठ्यर्थस्योद्देश्यतायाः विधेयतायामन्वयः । *तत्संग्राहकेति* । तत्, यदागमा इति बहुवचनान्तम् । *कार्यिपरौ* आगमिपरौ । *तद्गुणीभूत इति* । गुणशब्द अवयवपरः। आ-रोपितत्वं च्विप्रत्ययार्थः । क्तप्रत्ययार्थो विषयताश्रयः । ननु ग्रहणं ज्ञानमुच्चारणम्वा, तस्य

तोऽतस्तद्ग्रहणेन तद्ग्राहकेण तद्बोधकेन शब्देन गृह्यते बोध्यत इत्यर्थः। तत्र तद्गुणीभूता इत्यंशो बीजकथनम्। लोकेऽपि देवदत्तस्याङ्गाधिक्ये तद्विशिष्टस्यैव देवदत्तग्रहणेन ग्रहणं दृश्यते। यमुद्दिश्य विहित इत्युक्तेः प्रनिदारयतीत्यादौ न दारित्यस्य घुत्वम्। "आने मुक्"( ७-२-८२ ) इति मुग्विधानसामर्थ्यादेषाऽनित्या। अन्यथा 'पचमानः' इत्यादावकारस्य मुकि

भैरवी।

वच्छेदकधर्मातिदेशो विशिष्टे भवतीति लोकसिद्धेयम्।

यस्य तु परिमाणस्याङ्गाधिक्ये तादृशपरिमाणवत्त्वेन यथा लोके न व्यवहारस्तथात्र शास्त्रेऽपि, पश्चादागतागमसहिते पूर्वं जातव्यवहारविघट्टकागमसहिते न तद्व्यवहारः। अत्रार्थे मानमपिवक्ष्यति—*आने मुगित्यादिना*। बोध्यत इत्यस्य, समुदाय इति शेषः। अस्याः परिभाषाया लोकसिद्धत्वमभिव्यञ्जयति—*तत्रेत्यादिना। लोकेऽपीत्यपिशब्दः शास्त्रसमुच्चायकः। अत्र यथाधिकाङ्गविशिष्ट एव देवदत्तशब्देन व्यवह्रियते नत्वधिकाङ्गरहितस्तथात्रापि उत्तरकालजातागमसहितस्यैव तद्ग्रहणेन ग्रहणन्न तु तद्रहितस्येति बोध्यम्। *न घुत्वमिति*। रेफस्य घुसंज्ञायोग्यसमुदायोद्देशेन विधानाभावादिति भावः। यमुद्दिश्येत्यनुपादाने तु रेफस्याकारावयवत्वादवयवावयवस्य समुदायावयवत्वाद्दारित्यस्य घुत्वव्यवहारे सति नेर्णत्वापत्तिः स्यात्। यदुक्तं पूर्वत्र, "पूर्वकालजातव्यवहारविघट्टकागमसहिते नतद्व्यवहारः" इति तत्र मानमुद्धाटयति—*आने मुगित्यादिना*। *अन्यथा*। अनित्यत्वानङ्गीकारे। अङ्गस्यातो मुगित्यर्थे-

तत्वप्रकाशिका।

ग्रहणे नहि सम्भवतीत्याह मूले-*तद्ग्राहकेति-।* कर्तृबोधकः ल्युट्प्रत्यय इतिभावः। श्रोत्रे भ्रान्तिवारणाय आह-*बोधकेनेति*। *बीजकथनमिति*। तद्ग्रहणेन गृह्यत इत्यंशो हेतुकथनम्। तद्गुणिभूता इत्यंशे 'यदागमा' इति बीजकथनमित्यपि बोध्यम्।

एवञ्चानुमानगम्येयम्। तथाहि-स्वेतरत्व स्वोद्देश्यावयवेतरत्वोभयसम्बन्धेन स्वविशिष्टाघटितत्व स्वघटितत्व स्वोद्देश्यताश्रयघटितत्व त्रितयसम्बन्धेन आगमविशिष्टः आगमिबोधजनकपदजन्यबोधविषयताश्रयः, आगमिनिरूपितावयवत्वप्रकारकाहार्यज्ञानविषयत्वात्। अधिकाङ्गदेवदत्तवत्। दापीति ण्यन्ते व्यभिचारवारणाय स्वविशिष्टाघटितत्वेति। दापूघटकापमादाय तद्वारणाय सम्बन्धघटकद्वितीयसम्बन्धः। पुकमादाय तद्वारणाय प्रथमः। न च स्वरूपासिद्धिः, आगमविशिष्टस्तत् गुणीभूतः, आगमिनिष्टोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रयत्वादित्यनुमानेन पक्षे तत्साधनात् अत्र चानुकूलं "आद्यन्तौ टकितौ" इत्यादिसहकृतं तत्तद्विधिशास्त्रमेव। व्याप्तिं विवृणोति-*लोके यथेति*।

ननु यदागमा इत्यत्र निरूपितत्वं षष्ठ्यर्थस्तस्य चावयवपदार्थेऽन्वयोऽस्त्वत आह-*यमुद्दिश्येति*। *विधानाभावादिति*। अपितु "उरण्रपरः" इत्यणमुद्दिश्य विधानमितिभावः। *अवयवावयवस्येति* अवयवावयवः समुदायावयवो भवतीति न्यायात्। अत एव लोके शरीरावयवकरस्यावयवानाङ्गुल्यादीनां शरीरावयवत्वम्। अत एव 'शेरते' इत्यत्रातमाश्रित्य जातस्य रुटः समुदायावयवत्वेन सार्वधातुकत्वात् "शीङः सार्वधातुके गुण" इति गुणसिद्धिः।

यत्तु दधिच्छादयतीत्यत्र "तिङ्ङतिङः" इति निघातसिद्धिरिति तन्न "छे च" इत्यत्र पूर्वपदमध्याहृत्य ह्रस्वान्तपूर्वपदस्य तुग्विधानेनादोषात्। न च परमे दधिच्छादयतीत्यत्र वृक्षप्रचलन्न्यायेन तुकः समुदायावयवत्वान्निघातो न स्यादिति वाच्यम्? पदद्वयनिमित्तकतुको बहिरङ्गासिद्धत्वेन निघातस्य सुलभत्वात।

केचित्तु "पदस्य" इत्यध्याहृत्य गच्छतीत्येतदर्थम् "इषुगमियमां च्छः" इति छं विधाय

**अनया परिभाषया विशिष्टस्य सवर्णदीर्घे तद्वैयर्थ्यं स्पष्टमेव ।**

भैरवी ।

नाकारोद्देशेन मुग्विधानात्, मकारविशिष्टस्यातोऽग्ग्रहणेन ग्रहणे सति आकारसहितस्य तस्य स्थाने सवर्णदीर्घः स्यात्। यत्तु मुकि कृते मकारसहितस्य स्थानित्वेन समुदायान्तरतमो दीर्घ औकारः स्यादागमाभावे त्वाकार एव स्यादिति फलभेदस्य स्पष्टतया कथं मुग्विधानसामर्थ्यमिति तन्न । मुकि कृते तद्विशिष्टेऽत्वातिदेशेन तद्विरुद्धस्यामत्वस्याव्यवहारात् स्थानिनि कण्ठ्यौष्ठ्यव्यवहारो न, किन्तु कण्ठ्यव्यवहार एवेति केवलकण्ठ्य एवाऽऽदेशः स्यादिति फलभेदाभावात्। अत एव मकारसहितसमुदायस्य यो दीर्घः सोऽनुनासिकः स्यादिति मुग्विधानसामर्थ्यं दुरुपपादमिति प्रलपितमप्यपास्तम् । पूर्वस्याग्ग्रहणेन ग्रहणात् तस्मिन्ननुनासिकत्वबुध्यभावेनाक्सहिताकारस्य स्थाने निरनुनासिक एव स्यात् ।

ननु पचमान इति स्थिते दीर्घस्य मुक "आतो ङित" इतीयादेशस्य च प्राप्तावनवकाशत्वेन दीर्घबाधके इयादेशे कृते 'सर्वे सर्वपदादेशाः' इति न्यायेन समुदाये आनबुद्धौ मुक्प्राप्तिः मुकि कृते न दीर्घप्राप्तिरिति मुग्विधानसामर्थ्य दुरुपपादमिति चेन्न । बाध्यविशेषचिन्तया मु-

तत्वप्रकाशिका ।

पृच्छति प्रश्न इति रूपं इष्टापत्तिं कृत्वा दधिच्छादयतीत्यत्र निघातं साधयन्ति ते त्वमान्याः "प्रश्नेचासन्नकाले" इति निर्देशस्यासङ्गत्यापत्तेः ।

अन्येतु वृदित्यत्र प्रत्ययलक्षणेन कृदन्तत्वमादाय प्रातिपदिकत्वं यथा, तद्वद्धिदित्यस्यापि प्रत्ययलक्षणेन पदत्वं वदन्ति। यत्तु बाणेन च्छिनत्तीत्यत्र निघातः प्रयोजनं तन्न 'पूर्वोत्तरपदेति' परिभाषायामेकादेशपदस्य संहिताधिकारे विहितकार्योपलक्षणत्वस्य रात्रिमट् इत्याद्यर्थमवश्यं स्वीकार्यत्वेन तयैव पूर्वं तुको निघातसिद्धेः । गीः पूरित्यत्रेकारोकारावयवरेफस्य समुदायावयवत्वेन दीर्घः फलमित्यपि न "उरण्रपर" इत्यनेनावयवत्वविशिष्टपरस्परविधानात्।

वस्तुतस्तु शेरत इत्यत्र रुटः समुदायावयवत्वेऽपि ग्राहकाभावेन गुणानापत्ताववश्यं तस्मिन्न्याये ग्राहकत्वं स्वीकार्यम् । एवञ्च प्रनिदारयतीत्यत्र घुत्वापत्तेस्तादवस्थ्यम्, अत आगमात्प्राक्कालिकस्यावयवावयवस्य समुदायावयवत्वं न्याय्यम्। अत एव "सायं चिरं प्राह्णेप्रगे" इति सूत्रे ट्युट्युलोष्टित्वं चरितार्थम्। एवंच यन्निरूपितावयवत्वावच्छिन्नविधेयताश्रय इत्यर्थेऽपि न दोषः । नच शेरत इति न फलं 'शीङोरुट्' इति न्यायेन 'सार्वधातुक' इति विषयसप्तम्याश्रयणेन वेष्टसिद्धेरिति वाच्यम् ? प्रदीव्यमान इत्यत्राकारावयवस्य मकारस्य समुदायावयवत्वेन "तास्यनुदात्तेत्" इतिस्वरसिद्धेः फलत्वात् ।

परेतु यन्निष्ठोद्देश्यताया अपर्याप्त्याऽपि ग्रहणेन शेरत इत्यस्यानयैव निर्वाहे प्रनिदारयतीत्येतदर्थम् ट्युट्युलोष्टित्करणेनागमविधानात्प्राक्कालिकस्योद्देश्यस्य ग्रहणेन यमुद्दिश्येतिग्रन्थप्रवृत्तिरित्याहुः । *समुदायान्तरतम इति* । कण्ठ्यौष्ठ्यस्थानतयेति शेषः । *औकार इति* ओकारस्याप्युपलक्षणम् । *अव्यवहारादिति* अतिदिश्यमानधर्मविरुद्धस्वाश्रयधर्मप्रयुक्तकार्याभावस्यातिदेशस्वभावसिद्धत्वात् ।

*फलभेदाभावादिति* । केचित्तु तावन्मात्रफलकत्वे उदानस्येति वदेत्, औदानस्येतिन्यासेन तु न निर्वाहः, "अतो गुण" इति पररूपे ओकार एव विधेयः स्यात्, सत्युदानस्येतिन्यासे विधानसामर्थ्यात् पररूपस्य बाधेन कदाचिदौकारोऽपीति मुमाऽभेदः । लाघवस्त्वाद्यन्ताविदत्यस्याप्रवृत्त्येत्यपि वदन्ति । *आनबुद्धौ मुक्प्राप्तिरिति* । एवंच तक्रकौण्डिन्यन्यायेन इयादेशबाधे पुनर्मुग्विषये इयादेशप्राप्तिरिति भावः ।

यत्तु मुकि कृतेऽत इति तपरकरणान्नेयादेश इति तन्न, पचमान इत्यत्रादुपदेशप्रयुक्तस्वरसाधकपरभाष्यप्रामाण्येन यदागमलब्धस्य तपरत्वेनाव्यावृतेः । *न दीर्घप्राप्तिरिति* तक्रन्यायेन

तेन 'दिद्दीय' इत्यादौ यणादि न, 'जहार' इत्यादौ "आत औ णलः" (७-१-३४) इति च न।

भैरवी।

ग्विधायकशास्त्रस्य 'येन नाप्राप्तिन्यायेन' दीर्घेयादेशोभयाबाधकत्वात्। तथाहि-कृतेऽपीयादेशे मुकः प्राप्तिरितीयादेशस्यैतद्विषयत्वाभावे सम्पादिते सति केवलसवर्णदीर्घस्यैव प्राप्तिस्तेन सह मुकः स्पर्द्धायां तूत्सर्गे दीर्घे कृते न मुकः प्राप्तिरिति येन नाप्राप्तिन्यायविषयताया अभावेन निरवकाशत्वेनैव मुका दीर्घबाध इति मुकि कृतेऽपि दीर्घः स्यात्तथाच सति मुग्विधानस्य वैयर्थ्यं स्पष्टमेवेत्याशयात्।

*तेन*। यद्यागमा इति न्यायस्यानित्यत्वेन। *दिद्दीय इति*। अत्र "दी ऐ" इति स्थितेऽन्तरङ्गे युडागमे कृते ततो द्वित्वे यदागमन्यायेन युड्विशिष्टस्याच्त्वे "एरनेकाच" इति यण् स्यात्। न चाकृतेऽपि युडागमे यणादेशे "यणो मय" इति यस्य द्वित्वे तादृशं रूपं सिद्धमेवेति वाच्यम्? यत्रयसिद्ध्यर्थन्तस्यावश्यकत्वात्।

ननु युटि कृतेऽपि यदि यणादेशस्तर्हि "वुग्युटावुवङ्यणोः" इतिवार्त्तिकवैय्यर्थ्यमिति यण् न भविष्यतीत्यत आह—*जहार इति*। अत्राकारोद्देशेन रेफविधानादादूग्रहणेन रेफविशिष्टस्य ग्रहणं स्यात्। न चादन्तादङ्गात्परस्य णल इत्यर्थे रेफविशिष्टस्य प्रनिदारयतीत्यत्रेव नादन्ताङ्गत्वमिति कथमात इत्यस्य प्राप्तिरिति वाच्यम्? भाष्यरीत्याऽऽतः परस्याङ्गसंज्ञानि-

तत्वप्रकाशिका।

दीर्घस्यापि बाधादित्यभिमानः। *येन नाप्राप्तिन्यायेनेति* तक्रकौण्डिन्यन्यायेनेतिभावः। *एतद्विषयत्वाभाव इति* तक्रन्यायेन बाधात्। *विषयताया अभावेनेति*। तदप्राप्तियोग्येऽचारितार्थ्ये सति कृते चारितार्थ्यविशिष्टत्वतक्रन्यायस्य विषयस्तस्यात्राभावेन। *दीर्घः स्यादिति*। रमायामित्यादाविव निरवकाशत्वेन बाधे पुनस्तत्प्रवृत्तेरक्षतत्वात्। *वैयर्थ्यं स्पष्टमेवेति*। न च मुगभावे सवर्णदीर्घं बाधित्वा इयादेश एव स्यादिति तद्बाधनार्थं मुकश्चारितार्थ्यमितिवाच्यम्? तद्बाधमात्रफलकत्वे "अतो दीर्घो यञि" इत्यस्य स्थाने "अत आ ने दीर्घः" "इदासः" "यञिच" इति न्यासेन ईदास इत्यत्र ईइति दीर्घग्रहणाभावरूपफलेन च विशिष्य दीर्घविधानात्तद्बाधसिद्धेः। एतेन "आतो ङित" इत्यनन्तरञ्चानस्येत्यादिन्यासकल्पनं गौरवग्रस्तत्वादयुक्तमितिबोध्यम्। न च मुग्विषयेऽप्रवृत्तिरित्येव कल्प्यतामिति वाच्यम्? बाधापेक्षयाऽनित्यत्वकल्पनस्य लघुभूतत्वात् बहुलक्ष्यसंस्कारानुरोधाच।

वस्तुतस्तु 'सम्भवति सामानाधिकरण्य' इति न्यायेन अदन्ताङ्गस्य मुगित्यर्थ उचितः। करिष्यमाण इत्यादौ स्वरसिद्धये उपदेशपदविशेषणकतदन्तविधेरावश्यकत्वेन सार्वधातुकप्रत्ययेनोपस्थिततदादिविशेषणकद्वितीयतदन्तविधेर्दुर्वारत्वेन चादन्तोपदिश्यमानान्ततदादेः परं यत्सार्वधातुकमित्यर्थेनादन्तोपदिश्यमानान्ततदादिग्रहणेन मुग्विशिष्टस्य ग्रहणात्पचमान इत्यादौ "तास्यनुदात्तेत्"इतिस्वरसिद्धिः सुलभा। अदुपदेशभक्तस्तद्ग्रहणेनेति भाष्यन्तु फलितार्थपरतया नेयम्। एवञ्चाङ्गग्रहणेन मुको ग्रहणेऽप्यङ्ग्रहणेनाग्रहणान्नेदमनित्यत्वज्ञापकम्। किन्तर्हि ज्ञापकमित्यपेक्षायां "न पदान्तात्" इत्यत्रानां ग्रहणं बोध्यम्। अन्यथा षण्णामित्यत्र "यचि,भम्" इति भत्वेन जश्त्वाप्रवृत्त्या ष्टुत्वप्राप्तिर्दुर्लभैवेति दिक्।

*यण् स्यादिति*। इयङस्तु न प्राप्तिः, तक्रन्यायेनेयङो युटा बाधात्। अत एव द्वित्वोत्तरमपि न प्राप्तिः, स्वोद्देश्यातावच्छेदकावच्छिन्नातिरिक्तत्वेन सङ्कोचात्। एतेन "वुग्युटौ" इत्यत्र यणि यङोऽप्युपलक्षणम्। यणादिनेत्यत्रादिना इयङोऽपि संग्रहः, इति वदन्तः प्रत्युक्ताः। यणस्तु नेयङ्वत् युटा बाधः, तदप्राप्तियोग्ये घञर्थे के दीय इत्यादौ युटश्चारितार्थ्यात्। *जहारेत्यादाविति*। आदिना षण्णामिनि इत्यादीनां संग्रहः। आद्ये नामि आमुवुध्या ष्टुत्वप्रवृत्तिर्

न चाकारादेर्वर्णस्य वर्णान्तरमवयवः कथमिति वाच्यम् ? वचनेनावयवत्वबोधनात् । तस्य चावयवत्वसादृश्ये पर्य्यवसानं बोध्यम् । न चोक्तज्ञापकाद्वर्णग्रहणेऽस्या अप्रवृत्तिरिति वाच्यम् ? "आनेमुक्" ( ७-२-८२ ) इति सूत्रे भाष्येऽकारस्याङ्गावयवस्य मुगित्यर्थे 'पचमानः' इत्यत्र 'तास्यनुदात्तेत्' ( ६-१-१८६ ) इति स्वरो न स्यादित्याशङ्क्यादुपदेशभक्तस्तद्ग्रहणेन ग्राहीष्यत इत्युक्तेरसङ्गत्यापत्तेः ।

किञ्च ङमन्तपदावयवस्य ह्रस्वात्परस्य ङमो ङमुडित्यर्थे 'कुर्वन्नास्ते'

भैरवी ।

मित्तस्य णल इत्यर्थस्यैव सत्त्वात् । न च णल्लोऽकारात्मकस्य सन्निपातेनारित्यस्य सिद्धिरिति पुनस्तस्य स्थाने आदेशो न, उपजीव्यविरोधादिति वाच्यम् ? "तौ सत्" इतिनिर्देशेन विभक्त्यादेशे उपजीव्यविरोधस्यान्याय्यत्वमूलकसन्निपातपरिभाषाप्रवृत्त्यनङ्गीकारात् ।

केचित्तु "यासुट्परस्मैपदेषूदात्त" इति सूत्रेणोदात्तविधानं यदागमन्यायस्यानित्यत्वे ज्ञापकमित्याहुः । तत्तुच्छम् । भूयासमित्यादौ चारितार्थ्यात् । दिदीय इत्यादिस्थले शङ्कते—*कथमिति* । अङ्गुल्योः परस्परमवयवावयविभावादर्शनादिति भावः । गगनकुसुमवद्वचनेनासतो बोधनङ्कथमत आह—*तस्य चेत्यादि* ।

सामान्यतो नानित्यत्वं किन्तु वर्णग्रहणे उक्तन्यायाप्रवृत्तावेव मुग्विधानं ज्ञापकमिति वादिमतन्निरस्यति-*नचेति । *इत्यर्थे* सिद्धान्तात्मके । *अदुपदेशभक्त इति* । तस्य स्वरविधायकस्य उपदिश्यमानाकारान्तस्येत्यर्थः । अत एव हतो हथ इत्यादौ नातिप्रसङ्गः । वर्णस्य ग्रहणं विशेषणतया विशेष्यतया वोभयत्र यदागमन्यायप्रवृत्तिः । यदागमा इति परिभाषार्थस्य यमुद्दिश्य य आगमो विहितः स तन्निष्ठविशेषणत्वविशेष्यत्वान्यतरविषयताकबोधजनकशब्देन गृह्यत इत्यकारकस्य स्वीकारात् । एतत्स्वरविधायके सूत्रे वर्णस्य विशेषणतया ग्रहणेऽपि परिभाषायाः प्रवृत्तिमुक्त्वा विशेष्यत्वेन ग्रहणेऽपि तदप्रवृत्तौ दोषमाह—

*किञ्चेति* । *इत्यर्थे इति * । तत्र हि, ङमुटि पदादिति ग्रहणं कर्त्तव्यम् । इह माभूत्, दण्डिना शकटिना, तर्त्तर्हि वक्तव्यं न वक्तव्यम्, पदादिति वर्तते, एवमपि परमदण्डिना परमच्छत्रिणेति प्राप्नोति, नैष दोषः । 'उत्तरपदत्वे चापदादिविधौ' इतिप्रत्ययलक्षणान्न भवति । एवमपि पदादिति वक्तव्यम् । यद्धि तत् प्रकृतं, प्राक् सुपि कृत्सनादित्येवन्तत् । एवं तर्हि ञम एवायं

तत्वप्रकाशिका ।

स्यादन्त्ये इशब्दाज्जसश्शौ नुमि यदागमपरिभाषया नीत्यस्य इग्रहणेन ग्रहणे सवर्णदीर्घे इनि इति रूपं न स्यात् ।

यत्तु निर्दिश्यमानपरिभाषया न दीर्घ इति तन्न स्थानिनिर्णायकपरिभाषाणां स्थानिनिर्णायकत्वे न प्रवृत्तिरितिनियमेन तदप्रवृत्तेः। अत एव "नाम्रेडितस्यान्त्यस्य तु वा"इति सूत्रस्थान्त्यग्रहणं चरितार्थम् । अन्यथालोन्त्यपरिभाषयैव सिद्धेस्तद्वैयर्थ्यं स्पष्टमेव । अत एव "अमि पूर्वः" इत्यत्राकोऽनुवृत्तिश्चरितार्थाऽन्यथाऽमः पूर्व इति न्यासेन "आदेः परस्य" इत्युपस्थित्यातद्वैयर्थ्यं स्यात् ।

यत्तु आदिना भवेयुरित्यस्य संग्रहः। अन्यथा "अतो येयः"इतीयादेशे तद्विशिष्टस्येयुसित्यस्योस्ग्रहणेन ग्रहणे "उस्य पदान्तात्" इति पररूपापत्तिरिति तन्न । यासुटि उस उद्देश्यत्वाभावेन परिभाषाया अप्रवृत्तेः । *अदुपदेशभक्त इति* । अत् उपदेशे यस्य तस्य भक्तः अवयव इत्यर्थः । यतस्तदवयवोऽतस्तद्बोधकेन तद्विशिष्टः ग्रहीष्यते यदागमपरिभाषयेति भावः। *विशेष्यतया* वर्णमात्रवृत्तिधर्मातिदेश इति भावः। *विशेषणतया* तद्घटितधर्मातिदेश-

इत्यादौ ङमो ङमुडागमे णत्वप्राप्तिमाशङ्क्य 'यदागमा' इति न्यायेनाद्यन-स्यापि पदान्तग्रहणेन ग्रहणात् "पदान्तस्य" ( ८-४-३७ ) इति निषेध इति । अनया परिभाषया आगमानामागमिधर्मवैशिष्ट्यमपि बोध्यत इत्याशयक "ङमुट्" ( ८-३-३२ ) सूत्रस्थभाष्यासङ्गतेः ।

भैरवी ।

ङमुट् क्रियते, कथं, पदस्येति वर्त्तते ङम इति च नैषा पञ्चमी, का तर्हि ? सम्बन्धषष्ठी ह्रस्वादुत्तरस्य पदान्तस्य ङमो ङमुट् भवतीति, यदि ङम एव ङमुट् भवति कुर्वन्नास्ते "रषाभ्यां-नोणः समानपदे" इति णत्वं प्राप्नोति पदान्तस्य इति प्रतिषेधो भविष्यति पदान्तस्येत्युच्यते नैष पदान्तः पदान्तभक्तः पदान्तग्रहणेन ग्राहिष्यते । एवमपि न सिद्ध्यति, उक्तमेतत् न वा पदाधिकारस्य विशेषणत्वादिति, एवं तर्हि पदे इति वर्तते । क्व प्रकृतम्, "उञिच पदे" इति एवमुक्तम् । तत्र कैयटः एवं तर्हि ङम एवेति । ङमा पदस्य विशेषणात्तदन्तविधिना ङमन्तस्य पदस्यागमो विधीयमानो दण्डिनेत्यादौ ङमन्तपदाभावान्न भवति । नवा पदार्थेति । पदस्येति नहि विशेष्यं किं तर्हि विशेषणमतस्तदन्तविध्यभावाद् दण्डिनेत्यत्र ङमुट्प्रसङ्ग इति एतादृशभाष्यकारोक्त्या ङमन्तपदावयवेत्यर्थ एव नास्तीत्यर्थकथनेन ध्वनितम् । *आद्यनस्य* आगमनस्य ।

ननु कुर्वन्नास्त इत्यत्र आगमनकारस्योक्तरीत्या पदान्तत्वमिति यदुक्तन्तदसङ्गतम् 'यदागमा' इति परिभाषयाऽऽगमविशिष्टस्य समुदायस्यागमिधर्मातिदेश एव युक्तो नतु आगममात्रस्येति कथं 'कुर्वन्नास्त' इत्यत्र णत्वापत्तिवारणमत आह *अनया चेति*। आगमिधर्मवैशिष्ट्यमपीत्यपिशब्द आगमानामित्युत्तरमर्थक्रमेण द्रष्टव्यः । अस्मिन् पक्षे यदागमा इत्युत्तरमर्यातिशेषो बोध्यः । *तद्ग्रहणेन । इत्यस्यागमिग्राहकधर्मेण । *गृह्यन्ते । ज्ञानविषयीक्रियन्त इत्यर्थः । एवञ्चागमी यद्धर्मप्रकारकज्ञानविषयो भवति तद्धर्मप्रकारकज्ञानविषय आगमोऽपि भवतीति फलितम् । अङ्गुल्याद्यवयवविच्छेदेनापि अङ्गुलिव्यवहारस्य तस्मिन्नवयवे व्रणादिसद्भावदर्शनादयमप्यर्थो लोकदृष्ट एवेति बोध्यम् ।

ननु वर्णस्य विशेषणतया ग्रहणे परिभाषाप्रवृत्त्युपपादनसमये 'पचमान' इत्यत्र या स्वरासिद्धिरुक्ता सा कथं,पचमान इत्यत्र पचमान इत्यवस्थायां मुकः "तास्यनुदात्तेत्" इत्यस्य च प्राप्तावपरनिमित्तकत्वेन स्वरस्यान्तरङ्गत्वात्पूर्वमेव प्राप्तेः । न च "वार्णादाङ्गम्बलीयः" इति परिभाषाया पूर्वम्मुक एव स्यादिति वाच्यम्? वार्णपरिभाषाज्ञापकस्यासिद्धपरिभाषाया

तत्वप्रकाशिका ।

इति भावः। *असङ्गत्यापत्तेरिति* ।अयम्भावः—यदि तद्घटितधर्मातिदेशेऽस्या अप्रवृत्तिरित्युच्यते तर्हि "आनेमुग्" इत्यास्याङ्गावयवस्याकारस्य मुगित्यर्थे 'पचमान' इत्यत्र "तास्यनुदात्तेत्" इति स्वरो न स्याददुपदेशात्परत्वाभावादित्याशङ्कायां यदागमपरिभाषयादुपदेशत्वसाधनपरभाष्यासङ्गतिः स्यात् । अदुपदेशत्वस्यावर्णघटितधर्मत्वात । अदुपदेशत्वमित्यस्यादन्तोपदिश्यमानत्वमित्यर्थात् । शपि व्यपदेशिवद्भावेनादन्तत्वं बोध्यम् । *बोध्यमिति* । एवञ्चागमानामिति परिभाषाऽपि यदागमशरीरेणैवानुमानगम्या । प्रयोगश्चेत्थम्—आगमाअगमिवृत्तिधर्मप्रकारकज्ञानविषयताश्रया आगमिनिरूपितावयवत्वप्रकारकाहार्यज्ञानविषयत्वात् । व्रणादिसद्भावदशायामङ्गुलिव्यवहारवत् ।

वस्तुतस्त्विदं चिन्त्यम्, अङ्गुल्यग्रपर्वादावारोपज्ञानाभावेन दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यात् । नच पश्चाज्जाते गलकम्बले व्रणादिसद्भावदशायां गले व्रण इति व्यवहारदर्शनेन गलकम्बलस्य दृष्टान्तत्वसम्भवेन न व्यभिचार इति वाच्यम्? फलाभावात् ।

किञ्च गुणादे रपरत्वे रेफविशि` गुणत्वाद्येष्टव्यम्। अन्यथा ऋकारस्य गुणवृद्धी अरारावेवेति नियमो न स्यात्। तच्च वर्णग्रहणे एतदप्रवृत्तौ न सङ्गच्छते। अतएव "रदाभ्याम्" (८-२-४२) इति सूत्रे भाष्यं 'गुणो भवति वृद्धिर्भवतीति रेफशिरा गुणवृद्धिसंज्ञकोऽभिनिर्वर्त्तत' इति। अतएव "नेटि" (७-२-४) "णेरनिटि" (६-४-५१) इत्यादिचरितार्थम्। अनागमकानां

भैरवी।

अनित्यत्व एव ज्ञापकत्वसम्भवेन वार्णपरिभाषाया एवाऽभावात्। असिद्धपरिभाषाया अनित्यत्वं च यासेतिरूपसिध्यर्थमावश्यकम्। अन्यथा वार्णटाबपेक्षयाऽऽङ्गत्यदाद्यत्वस्यासिद्धत्वं स्यात्। एवञ्च वार्णपरिभाषाया असत्वान्न तया मुकः पूर्वं प्रवृत्तिः।

किन्तु पूर्वोक्तरीत्या स्वरस्यान्तरङ्गत्वात् पूर्वमेव प्रवृत्तिरितिचेत, अत एवास्वरसात्किञ्चेति दूषणान्तरं वक्ष्यति—*किञ्चेति*। कथनोत्तरं यद्भाष्यीयप्रघट्टकबलेन दूषणाभिधानन्तदप्यसङ्गतम्। तस्य भाष्यस्यैकदेशयुक्तित्वात्। कथमिति चेच्छृणु। 'उत्तरपदत्व' इति परिभाषायाम-पदादिविधावितिपर्य्युदासेन पदान्तत्वप्रयुक्तकार्य्यं एव उत्तरपदत्व इत्यस्य प्रवृत्तेरिति परमदण्डिनेत्यत्र ङमुडापत्तेरत आह *किञ्च गुणादेरिति*। अन्यथा*। विशिष्टे तदभावे। *अतएव* वर्णग्रहणेऽपि यदागमन्यायस्यप्रवृत्तेरेव। अत्र रेफशिरा गुणवृद्धिसंज्ञक इति कथनेन वर्णग्रहणे यदागमा इति न्यायस्य प्रवृत्तिः स्फुटैव। *अतएव*। यदागमा इति न्यायस्य स्वीकारादेव। एवं च लोकन्यायसिद्धयदागमा इति वचनस्य शास्त्रे आश्रयणे "नेटी" त्यादिज्ञापकं बोध्यम्। आदिना "पूर्वपरावर" इति सूत्रेऽधराणीत्यत्र दीर्घत्वप्रवृत्तेः संग्रहः।

ननु शब्दस्य नित्यत्वस्वीकारेणागमविधानं यथाश्रुतेऽनुपपन्नम्। यदि तु "तेस्तुः" इति-

तत्वप्रकाशिका।

नच कुर्वन्नास्त इत्येव फलमिति वाच्यम्? रामाणामित्यादौ नुटः सुप्त्वेन नान्तस्य पदत्वेन "पदान्तस्य" इतिणत्वनिषेधापत्त्या सर्वेषामिति निर्देशेन एतस्याप्यनित्यत्वाश्रयणे महतः क्लेशस्य सद्भावात्। भाष्यन्तु णत्वविधायकशास्त्रे नस्येत्यनेन ङमुट्सहितस्य यदागमपरिभाषया ग्रहणेन, कुर्वन्नास्ते इत्यत्र नद्वयस्य णत्वं प्राप्तं पदान्तस्येत्यनेन वार्यते, नत्वं न पर्याप्त्यधिकरणसम्बन्धेन, किन्त्वाश्रयतासम्बन्धेन। एवं च नत्वाश्रयः पूर्वोऽपि भवत्येवेति पादान्तस्येति निषेधसिद्धिरित्यभिप्रायेण।

किञ्च वर्णमात्रवृत्तिधर्मातिदेशे परिभाषाया अप्रवृत्तेरङ्गीकारेण पदान्तत्वस्य वर्णमात्रवृत्तिधर्मत्वाभावेन पदान्तभक्तेतिभाष्यस्यासङ्गत्यभावात। *वार्णपरिभाषाया असत्वादिति* समानकार्यित्वे एव प्रवृत्तेरङ्गीकारेण प्रकृते तथाभावाच्चेति शेषः। "रदाभ्याम्" इति सूत्रे भाष्यमिति। सङ्गच्छते इति शेषः। तत्रहि—कार्तिरित्यत्र रेफात्परत्वेन "रदाभ्याम्" इति तकारस्य नत्वमाशङ्क्य वृद्धिर्निमित्तं यस्य तस्मात्परस्य प्रतिषेध इत्यर्थकेन वृद्धिनिमित्तात्प्रतिषेध इतिवार्तिकेन समाहितम्।

किञ्च रेफशिरा गुणवृद्धिसंज्ञक इत्युपसंहृतम्। *अभिनिर्वर्तत इति*। उत्पद्यत इत्यर्थः। वस्तुतस्तु रेफः शिरसि यस्येत्यतद्गुणसंविज्ञानबहुव्रीहिणा गुणवृद्धिसंज्ञकोऽभिनिर्वर्तमानो रेफशिरस्कः जायते "उरण्रपर" इति शास्त्रात्, इति भाष्यस्याभिप्रायेणारारावेवेति नियमो न भाष्याभिप्रेतः। अत एवानयोरसादृश्यमेव सादृश्यमिति नष्टाश्वदग्धरथन्यायश्च भाष्योक्तः सङ्गच्छते।

ननु "स्वरूपम्" इतिशास्त्रेण दाशब्दस्य संज्ञित्वं, लोकन्यायसिद्धयाऽनया पुग्विशिष्टस्य बोध्यते, इति स्मृतिलोकयोर्विरोधे स्मृतेर्बलीयस्त्वेन नानया शास्त्रे व्यवस्था स्यादत आह—*अत एवेति*। *स्वीकारादेवेति*। अन्यथाऽपटीत् कारयितव्यमित्यादाविटा व्यवधानेन

सागमका आदेशा इत्यस्य त्वयमर्थः । आर्द्धधातुकस्येडागम इत्यर्थे ज्ञाते नित्येषु शब्देष्वागमविधानानुपपत्त्याऽर्थापत्तिमूलकवाक्यान्तरकल्पने नेड्हितबुद्धिप्रसङ्गे सेड्बुद्धिः कर्त्तव्येति । एवं चादेशेष्विवात्रापि बुद्धिविपरिणाम इति न नित्यत्वहानिः । स्थानिवत्सूत्रे च नेदृशादेशग्रहणं साक्षादष्टाध्यायीबोधितस्थान्यादेशभावे चारितार्थ्यात् ।

किञ्चैवं सति स्थानिबुद्ध्यैव कार्यप्रवृत्त्या 'निर्दिश्यमानस्य' (प० १२) इति परिभाषया अप्राप्त्याडागमसहितस्य पिबाद्यादेशपत्त्या लावस्थायामडिति भाष्योक्तसिद्धान्तासङ्गतिः । स्थानिवद्भावविषये 'निर्दिश्यमानस्य' इति परिभाषायाः प्रवृत्तौ 'तिसृणाम्' इत्यत्र परत्वात्तिस्रादेशे स्थानिवद्भावेन त्रयादेशमाशङ्क्य सकृद्गतिन्यायेन समाधानपरभाष्यासङ्गतिः । "एरुः" (३-४-८६)

भैरवी ।

त्वदनागमकानां सागमका आदेशा इति स्वीक्रियते तदा स्थानिवद्भावेन यदागमपरिभाषा गतार्थेति केचित् तन्मतखण्डनायाह *अनागमकानामिति । अर्थापत्तीति* । अर्थापत्तिरपि प्रमाणमितिवादिनो मतेनेदम् । यदागमा इति न्यायस्य गतार्थतां निरस्यति-*स्थानिवत्सूत्र इत्यादिना । साक्षादिति* । ययोः स्थान्यादेशभाव इष्टस्तयोरानुपूर्व्या उपादानं यत्र तत्रेत्यर्थः "अदोजग्धिः" इत्यादौ यथा ।

ननु यत्र साक्षात्तयोरुपादानन्तत्रापि सिद्धान्ते बुद्धिविपरिणाम एव कल्प्यत इत्यत आह-*किञ्चैवमिति । *एवम्* । आनुमानिकस्थान्यादेशभावो यत्र तत्रापि स्थानिवद्भावप्रवृत्तिस्वीकारे । प्रथमतृतीयान्तस्य निर्दिश्यमानपरिभाषाया अप्रवृत्तौ हेतुत्वम्, स्थानिबुद्धौ निर्दिश्यमानभिन्नत्वबुद्धेस्तत्राभावादिति भावः । *अप्राप्त्येति* अपिबदित्यादौ यथा । न चात्र लावस्थायामडागमेऽनुस्वहितस्यैवार्थवत्त्वन्न तु तद्रहितस्येत्यर्थवद्ग्रहणपरिभाषयाड्रहितस्यादेशो न प्राप्नोतीति वाच्यम् ? पाघ्रन्तानामङ्गानामर्थवतामवयवस्य निर्दिश्यमानस्येत्यर्थाश्रयणात् । आदेशे स्थानिवद्भावेन स्थानिबुद्धिर्यत्र तत्र निर्दिश्यमानभिन्नत्वबुद्ध्यभावे भाष्यं साधकमाह-*स्थानीति* । *परत्वादिति* । त्रयादेशापेक्षया परत्वादित्यर्थः । *भाष्यासङ्गतिरिति । 'निर्दिश्यमाना' इति परिभाषाया जागरूकत्वेन शङ्काया एवाभावात्, यद्येतत्परिभाषाया अज्ञानेन शङ्का, तदा समाधानसमये निर्दिश्यमानपरिभाषयैव समाधानं कर्तुमुचितमिति भावः ।

ननु यत्र न साक्षात् स्थान्यादेशभावः किन्त्वानुमानिकस्तत्र स्थानिवद्भावाप्रवृत्तौ पचत्वित्यादौ तुशब्दे तिङ्त्वाभावेन समुदायस्य पदत्वन्न स्यादत आह—*एरुरित्यादाविति* । स-

तत्वप्रकाशिका ।

वृद्धिगिकारयोरप्राप्तौ निषेधस्य वैयर्थ्यापत्तिरिति भावः । *अनागमकानामिति* इडित्यत्र बहुव्रीहिणाऽऽर्धधातुकस्येति स्थानषष्ठ्यन्तताश्रयणपरम् "आद्यन्तौ" इति सूत्रस्थभाष्यं त्वेकदेश्युक्तिरातः उदात्तत्वानुपपत्तेः । *बुद्धिः कर्तव्येति* । अत एव कार्यविपरिणामाद्वा सिद्धम् । कार्या बुद्धिः सा विपरिणम्यते । तद्यथा कस्मैचित् प्राचीनं ग्रामादाम्र इत्युपदिष्टे तस्य सर्वत्राम्रबुद्धौ पश्चात् ये क्षीरिणोऽवरोहवन्तः पृथुपर्णास्ते न्यग्रोधा इति कथिते स तत्राम्रबुद्ध्या न्यग्रोधबुद्धिं प्रतिपद्यते । नित्याश्च स्वस्मिन्विषये आम्राः न्यग्रोधाश्च बुद्धिस्तस्य विपरिणम्यते । एवं नित्य एव स्वस्मिन् विषयेऽस्तिर्नित्यश्च भवतिः, बुद्धिस्तस्य विपरिणम्यते इति स्थानिवत्सूत्रे भाष्ये उक्तम् ।

नन्वादेशग्रहणादानुमानिकस्थान्यादेशभावेऽपि प्रवृत्तिरस्तीत्यत आह-*स्थानिवत्सूत्रे

इत्यादौ स्थानषष्ठीनिर्देशात्तदन्तपरतया पठितवाक्यस्यैव समुदायादेशपरत्वेनादेशग्रहणसामर्थ्यात्तस्य स्थानिवत्सूत्रे ग्रहणेन न दोषः । आनुमानिकस्थान्यादेशभावकल्पनेऽपि श्रौतस्थान्यादेशभावस्य न त्याग इति "अचः परस्मिन्" (१-१-५७) इत्यादेर्नासङ्गतिः । एतेन 'यदागमा' इति परिभाषा स्थानिवत्सूत्रेण गतार्थेत्यपास्तम् । एतत्सर्वं "दाधा घ्वदाप्" (१-१-२०) इति सूत्रे भाष्ये स्पष्टम् ॥ ११ ॥

ननु एवं 'उदस्थात्' इत्यादौ "उदः स्थास्तम्भोः पूर्वस्य" (८-४-६१) इति पूर्वसवर्णापत्तिरत आह—

## निर्दिश्यमानस्यादेशा भवन्ति ॥ १२ ॥

"षष्ठी स्थानेयोगा" (१-१-४९) इति सूत्रमावर्त्तते । तत्र द्वितीयस्या-

भैरवी ।

मुदायादेशपरत्वेन समुदाययोः स्थान्यादेशभावबोधकत्वेन तदन्तेति नित्यत्वसंरक्षणायैवमेवस्वीकारात् । अत एव पठन्ति, 'सर्वे सर्वपदादेशाः इत्यादि पदशब्दोऽत्र अर्थवत्परः पठितवाक्यस्यैवेत्यनेन यत्र न तथा पाठस्तत्र आगमविषये बुद्धिविपरिणामसत्वेऽपि न स्थानिवद्भाव इति ध्वनितम् । *आदेशग्रहणसामर्थ्यादिति* । सम्बन्धिशब्दत्वात् स्थानिवदित्युक्त्यैवादेशलाभे आदेशग्रहणमानुमानिकस्यैवं विधादेशस्यापि ग्रहणार्थमिति भावः ।

ननु वर्णमात्रस्य यत्र स्थानित्वं तत्रानुमानिकस्य तस्य कल्पने "अचःपरस्मिन्" इत्यस्यासङ्गतिः स्यादत आह—*आनुमानिकेति* । *नासङ्गतिरिति* । एवञ्च तत्र यथा श्रौतस्थान्यादेशभावस्य न त्यागस्तथागमविषयेऽपि श्रौतस्यागमित्वस्य न त्याग इति 'यदागमा' इति परिभाषा नासङ्गतेति सूचितम् ॥ ११ ॥

*नन्वेवमिति* । यदागमन्यायस्वीकारे । *पूर्वसवर्णापत्तिरिति* । पूर्वस्य दकारस्य सवर्णः प्रथमोपस्थितस्तकारोऽकारस्य स्थाने स्यात् । निर्दिश्यमानपरिभाषा न ज्ञापकलौकिकन्यायसिद्धा किन्तु सूत्रबलादेव लभ्यत इत्याह—*षष्ठीस्थान इति* । *आवर्त्तत इति* । यद्यपि भाष्ये "षष्ठीस्थान" इति सूत्राभावेऽप्यन्तरङ्गत्वादिनान्यथासिद्धिरुद्भाविता, तथापि स्पष्टप्रतिपत्तये सूत्रञ्चेदारभ्यते तदाप्यावृत्त्यैतादृशार्थलाभ इति भावः । षष्ठीपदं प्रत्ययग्रह-

तत्वप्रकाशिका ।

चेति* । *उपादानमिति* । स्थानषष्ठीतयेति शेषः । *यत्र स्थानित्वमिति* । पठ्यतीत्यत्र यथा ॥ ११ ॥

यदागमपरिभाषयापवादसंगतिं सूचयन्निर्दिश्यमानपरिभाषामवतारयति—*नन्वेवमिति* । *स्यादिति* । नन्वङ्गोद्देश्यत्वेनाटो विधानेन, यदागमपरिभाषया यमुद्दिश्येत्यर्थतयाऽङ्गत्वातिदेशेऽपि स्थात्वस्यानतिदेशात्कथं पूर्वसवर्णापत्तिरितिचेन्न कार्यप्रयोजकानामुद्देश्यतावच्छेदकीभूतधर्मसमानाधिकरणयावद्धर्माणां कार्यार्थतयाऽतिदेशेन स्थात्वस्यातिदेशात् । अन्यथा प्राणिदापयतीत्यादावादन्तोद्देशेन जाते पुकि दात्वस्यानतिदेशाद्घुसंज्ञानापत्त्या तदसङ्गतिः स्पष्टैव । न चैवमपि सिजन्तस्याङ्गस्याडागमेन स्थात्वातिदेशः, लावस्थायामेवाडविधानात् ।

यत्तु "त्रिचतुरोः स्त्रियाम्" इत्यत्रेव 'श्रुतानुमितयोः' इति न्यायेन उदः परयोः स्थास्तम्भोरवयवस्य निर्दिश्यमानस्य पूर्वसवर्ण इत्यर्थेन निर्दिश्यमानपरिभाषास्वीकारेऽपि तथैव दोष इति, तन्न "प्रधानाप्रधानयोः" इतिन्यायेन पञ्चम्यन्तार्थेन तदन्वयात् ।

**यमर्थः, षष्ठ्यन्तं निर्दिश्यमानमुच्चार्य्यमाणमुच्चार्य्यमाणसजातीयमेव निर्दिश्यमानावयवरूपमेव वा स्थानेन स्थाननिरूपितसम्बन्धेन युज्यते न तु प्रतीयमानमित्यर्थस्तेनेदं सिद्धम्। न च "अस्य च्वौ" (५-४-३२) इत्यादौ दीर्घाणामादेशानापत्तिस्तेषां निर्दिश्यमानत्वाभावादिति वाच्यम्? जातिपक्षे दोषाभावात्। किञ्च "न भूसुधियोः" (६-४-८५) इति निषेधेन ग्रहणकशा-**

भैरवी।

णपरिभाषया तदन्तपरम्। निर्दिश्यमानमित्यस्य चाध्याहारः निर्दिश्यमानपदं व्याचष्टे—*उच्चार्य्यमाणेति*। नन्वेवमपि यस्य प्रयोगस्थस्यादेश इष्टस्तस्य नोच्चार्य्यमाणत्वमत आह—*सजातीयेति*। आनुपूर्वीकृतमत्र साजात्यं विवक्षितम्।

नन्वेवमपि सुपद उदस्थादित्यादिसिद्धावपि यत्रावयवस्यैवादेश इष्यते तत्रातिस्य इत्यादौ निर्दिश्यमानपरिभाषाप्रवृत्तिर्न स्यादत आह—*निर्दिश्यमानावयवरूपमेवेति*। निर्दिश्यमानसजातीयावयवरूपमेवेत्यर्थः। "पादः पत्" इत्यादौ तु व्यपदेशिवद्भावो विवक्षितः। स्थानेन इत्यस्य व्याख्या—स्थाननिरूपितसम्बन्धेन, स च सम्बन्धो निवर्त्त्यनिवर्त्तकभावः। *जातिपक्ष इति*। अत्वजातेः स्थानित्वविवक्षया सा जातिर्यत्र यत्र वर्त्तते तद्द्वारकङ्कार्य्यमतो दीर्घस्यापि भविष्यतीति भावः। इदं निर्दिश्यमानपरिभाषाप्रवृत्तिमभ्युपेत्य।

वस्तुत एतादृशस्थले निर्दिश्यमानपरिभाषा न प्रवर्त्तत इत्याशयेनाह—*किञ्चेति*। यत्तु "न भूसुधियोः" इत्यस्य ज्ञापकत्वोपपादनमयुक्तम्। निर्दिश्यमानपरिभाषाबाधिकाया "अलोऽन्त्य" परिभाषायाः प्रवृत्त्या दीर्घाणामप्यादेशसम्भवादिति। तन्न। अनया च स्वस्वनिमित्तसन्निधापितानाम् "अलोऽन्त्यस्य" इत्यादीनां समावेश एवेत्युत्तरग्रन्थविरोधात्। "अलोऽन्त्य" परिभाषाया एतद्बाधकत्वे तुल्यन्यायेन "आदेः परस्य" इत्यपि बाधिका स्यात्तथाच "उदस्थात्" इत्यत्रानया दोषवारणपरभाष्यविरोधः स्पष्ट एव।

तत्वप्रकाशिका।

यदितु लुप्तषष्ठ्यन्तसकारप्रश्लेषेण "उदः परस्य" स्थास्तम्भसम्बन्धिसकारस्येत्यर्थेन प्रकृतेऽटा व्यवधानान्न दोष इति, तर्हि त्रितामित्यस्योपलक्षणमिति बोध्यम्।

*तदन्तपरमिति*। वस्तुतस्तु षष्ठ्यन्तस्यादेशासम्भवात्तत्सूत्रे लक्षणया षष्ठीपदं षष्ठीप्रकृतिपरम्। 'षष्ठ्यतं स्थानेन युज्यते यतः षष्ठ्युच्चारिता' इति भाष्यात्। भाष्येऽन्तशब्दः समीपवर्तिप्रकृतिवचन इति भावः। यतः सेत्यनयोरध्याहारेण यतः षष्ठी सा स्थानेन स्थानानुयोगिकसम्बन्धेन युज्यते इति तात्पर्यम्, प्रत्ययग्रहणपरिभाषया तदन्तत्वं तस्य च समीपवर्तिप्रकृतिवचनपरत्वमित्यादिकल्पने गौरवात्। *विवक्षित इति*। यद्यप्यतिस्य इत्यादौ 'अन्त्यबाधेऽन्त्यसदेशस्य' इत्येव सिद्धं तथाप्यतिवयं विश्वौहः विदुषी इत्याद्यर्थं द्वितीयार्थस्यावश्यकत्वम्। *न प्रतीयमानमिति*। शास्त्रान्तरसहकारेण बोध्यम् नेत्यर्थः। तथाच—षष्ठीप्रकृतिजन्यप्राथमिकोपस्थितिविषयताश्रयत्वं निर्दिश्यमानत्वमिति फलितम्। उपस्थितौ प्राथमिकत्वं, शास्त्रान्तरासहकृतत्वं बोध्यम्। आनुपूर्वीकृतं साजात्यन्तु न युक्तं वृक्षस्तत्रेत्यत्र निर्दिश्यमानपरिभाषया दोषवारणपरभाष्यासङ्गतेः। बिन्दुद्वयात्मकस्य विसर्गस्य विसर्जनीयपदवृत्त्यानुपूर्वीमद्भावेन परिभाषाया अप्रवृत्तेः।

ननु शालीभवतीत्यादौ "अस्य च्वौ" इत्यनेनेत्वं न स्यात् "अणुदित्" शास्त्रसहकारेणैवाऽऽकारस्योपस्थितिविषयत्वेन निर्दिश्यमानत्वाभावादित्याशङ्कते—*नचास्य च्वाविति*। *तद्द्वारकमिति*। जातेः स्वतोऽनिर्दिश्यमानत्वेऽपि नान्तरीयकतया तत्तात्पर्येणोच्चरितव्यक्तिद्वारकं तदस्तीतिभावः। *न प्रवर्तत इति*। "अणुदित्" सूत्रबाधकतयेति शेषः।

स्वगृहीतानां निर्दिश्यमानकार्य्यबोधनान्न दोषः । इयङुवङोर्ङित्वं त्विवर्णोव-र्णान्तधातुश्नुभ्रुवामित्यर्थेन धात्वादीनामपि निर्दिष्टत्वादन्त्यादेशत्वाय । रीङ्रिङोर्ङित्वं तु स्पष्टार्थमेव । एतेनेदं ङित्वं वर्णग्रहणे निर्दिश्यमानपरि-

भैरवी ।

ननु निर्दिश्यमानपरिभाषयैव सिद्धे इयङुवङोर्ङित्वं व्यर्थमत आह—*इयङुवङोरिति* । *इत्यर्थे* । इत्याद्यर्थं । आदिना "स्त्रियाः" इत्यस्य संग्रहः । तस्य हि स्त्रीशब्दान्तं यदङ्गं तदवयवस्य निर्दिश्यमानस्य सर्वस्येत्यर्थः स्यात्तथा च समुदायादेशत्वापत्तिरितीयङो ङित्वं, यदित्वेतच्छास्त्रीया यात्मान्तबोधकभिन्नसंज्ञा या च परिभाषा तत्सहकारेण षष्ठीप्रकृतिबो-ध्यत्वन्निर्दिश्यमानत्वमिति विभाव्यते तदा "अचिश्नु" इति सूत्रविषयेऽपीयङो ङित्वं सफ-लम् । परिभाषापदं तन्मध्यपतित इति परिभाषापरम् । अत एव साकचूकस्यापि कादेशस्य सिद्धिः । *स्पष्टार्थमिति* । ऋत इत्युपादानेन ऋकारस्यैव निर्दिश्यमानतया ङित्वाभावेऽपीष्टसिद्धेः ।

यत्तु व्यक्तौ पदार्थे गुणानाञ्च भेदकत्वे गुणान्तरयुक्तानामनिर्दिश्यमानत्वेनैतयोर्ङित्वं सप्रयोजनमिति तद्भ्रमसात् । गुणान्तरयुक्तत्वेऽपि सूत्रोच्चारितशब्दसजातीयत्वात् 'सुपाद' इत्यत्र पादशब्द इवैषा वक्तुं शक्या । न हि व्यक्तिभेदमात्रेण साजात्यस्य हानिः सम्भवति । अन्यथा क्वापि साजात्यन्न स्यादित्याशयेन स्पष्टार्थत्वकथनात् ।

*एतेनेति* । वक्ष्यमाणदोषेणेत्यर्थः । *इदङ्ङित्वम्* । रीङ्रिङोर्ङित्वम् । निर्दिश्यमानप-

तत्वप्रकाशिका ।

*न दोषः* । व्यक्तिपक्षेऽपीतिभावः । एवञ्च "अणुदित्" सूत्रातिरिक्तः शास्त्रान्तरो ग्राह्यः ।

ननु प्रभवति सुष्ठुध्यायति वा यत्कुलन्तदतिक्रान्तौ "अतिप्रभुवौ, अतिसुधियौ" इत्यत्र प्राप्तस्य यणो निषेधेन सूत्रञ्चरितार्थम्, 'गतिकारकेतर' इति निषेधान्न यण् इति तु न शङ्क्यम् । पूर्वपदेनोत्तरपदस्य समासस्य चाक्षेपेण धातुभूतोत्तरपदकसमास एव तत्प्रवृत्तेः । अत एव परमसुध्यौ परमसुल्वाविति सिध्यति ।

किञ्चाभवति यत्तदाभु क्विपि नपुंसकह्रस्वे अः आभु ययोस्तावाभुवावित्यत्र चारितार्थ्यम्, गतिकारकेतरस्य तु न विषयः, अन्तादिवद्भावेन गतिपूर्वकत्वादितिचेत्तर्हि दीर्घोच्चा-रणं ज्ञापकम्, निषेधेनेत्यस्यनिर्देशेनेत्यर्थ इति केचित् । न च दीर्घं अच्वपदीयनिर्दिश्य-मानत्वाभावान्न ह्रस्व इति वाच्यम् ? सिद्धान्तभूतेन जातिपक्षेण दीर्घस्यापि निर्दि-श्यमानत्वात् ।

यत्तु प्रभूसुधीशब्दयोर्नपुंसकह्रस्वत्वे तच्चारितार्थ्यमिति तन्न, नुमा यणो बाधात् । न च पुंवद्भावपक्षे नुमोऽप्रवृत्तिरिति वाच्यम्, ? तत्र ह्रस्वत्वस्याप्यप्रवृत्तेः, क्लीबत्वविशिष्टार्थ-वाचकस्य पुंविशिष्टार्थवाचकरूपातिदेशे क्लीबत्वरूपार्थनिवृत्तेः ।

अन्येतु आभाति यत्तदाभम्, आभुमुययोस्तौ, आभ्वावित्यत्र गुणे पूर्वान्तवद्भावेन नपुंसकह्रस्वे "नभूसुधियोः" इत्यत्र दीर्घनिर्देशे यण्निषेधो न, भुशब्दस्य भोस्थानिकत्वेन स्थानिवद्भावेन भूशब्दत्वालाभात् । सूत्रे दीर्घनिर्देशाभावे भुत्वस्य स्वाश्रयत्वेन यणः प्रति-षेधो दुर्वार एव । नचाभाशब्दस्य नपुंसकह्रस्वे ततो गुणे 'लक्ष्ये लक्षण' इतिन्यायात्पुनर्ह्रस्वो न स्यादिति वाच्यम् ? तल्लक्ष्यत्वाभावात् । अत एव काण्डे कुड्ये इत्यत्र पूर्वान्तवद्भा-वेन ह्रस्वत्वमाशङ्क्य सत्वप्रधानस्य ह्रस्व इत्याश्रणेन भाष्यकृत्कृतसमाधानं सङ्गच्छते । एत-ञ्चात्रार्थे "अतो लोप" इत्यादौ तपरकरणं ज्ञापकम् । अन्यथा दीर्घाकारस्य निर्दिश्यमानत्वा-भावेन तद्व्यावृत्त्यर्थं तपकरणं व्यर्थमेव स्यादिति प्राहुः ।

*ङित्वं व्यर्थमिति* । तद्धि इवर्णोवर्णान्तधातोरित्यर्थेऽन्त्यादेशत्वाय, यदि वर्णग्रहणे एषा

भाषाया अप्रवृत्तिज्ञापकमित्यपास्तम् । "हयवरट्" सूत्रस्थेनायोगवाहाना-मुपदेशेऽलोऽन्त्यविधिः प्रयोजनम्, वृत्तस्तत्र, नैतदस्ति प्रयोजनं निर्दिश्य-मानस्येत्येव सिद्धम्" इति भाष्येण विरोधात् । अनया परिभाषया "येन विधिः" ( १-१-७२ ) इति सूत्रबोधिततदन्तस्य स्थानित्वाभावबोधनं 'यदा-गमाः' ( प० ११ ) इति लब्धस्य च । तेन सुपद उदस्थादित्या-दिसिद्धिः

भैरवी।

रिभाषाया अप्रवृत्तौ त्वनेकाल्त्वाद्गीङादिः समुदायादेशः स्यादिति ङित्वं सफलमित्याशयः । तं दोषमेवाह-*हयवरडिति* । *उपदेशे* । यस्मिन् प्रत्याहारे उपदेशे प्रयोजनं तत्र उपदेश इति अविशेषेणेतिपक्षे । *विरोधादिति*। विसर्जनीयान्तस्य पदस्येत्यर्थेन पदसंज्ञकस्य समु-दायस्यादेशप्रसक्त्याऽलोऽन्त्यपरिभाषायाः सञ्चारः क्रियते । यद्ययोगवाहानामुपदेशो न स्यात्तदा विसर्जनीयस्याल्त्वविरहेणाऽलोऽन्त्यपरिभाषायाः प्रवृत्तिर्न स्यादित्याशयेनोपदे-शस्य प्रयोजनमुक्त्वा निर्दिश्यमानपरिभाषया खण्डितम् । त्वद्रीत्या तु तत्रापि वर्णग्रहणेन निर्दिश्यमानपरिभाषोपन्यासविरोधः स्यादिति भावः । न च निर्दिश्यमानपरिभाषा यस्या-नुपूर्व्या सूत्रे उपादानं तत्र प्रवर्त्तते "विसर्जनीयस्य स" इति सूत्रे तु न तथोपादानमिति कथं निर्दिश्यमानपरिभाषायाः प्रवृत्तिरिति वाच्यम् ? तद्भाष्यप्रामाण्येन रूढ्या स्वरूपस्य बोध-नमेव यत्रत्यानुपूर्व्या तत्रापि तस्याः परिभाषायाः प्रवृत्तिःस्वीकारात् ।

एवञ्च वर्णग्रहणेऽप्येषा प्रवर्त्तते । अत एव कारीषगन्ध्येय इत्यत्र "आपत्यस्य" इति य-लोपः सिध्यति । ष्यङः प्रत्ययस्य तु न निर्दिश्यमानत्वम् । यकारमात्रस्य तु वर्णत्वाद्भव-दुक्तरीत्या परिभाषाप्रवृत्तिर्न स्यात् ।

तत्त्वप्रकाशिका ।

प्रवर्तेत तदानयैव सिद्धे ङित्त्वविधानं व्यर्थं स्यात् । एवं च ङित्त्वेन वर्णग्रहणेऽप्रवृत्तिकल्पनायां मालाभवर्तीत्यादावित्वे सिद्धे ग्रहणकशास्त्रगृहीतानां निर्दिश्यमानकार्यबोधनं व्यर्थमिति तात्पर्यम् ।

*स्पष्टार्थमिति* । नन्वङ्गस्यापि धात्वादीनामिव निर्दिश्यमानत्वादन्त्यादेशत्वाय ङित्व-मिति चेन्न । यत्षष्ठीप्रकृतिबोधस्य स्थानेन सम्बन्धः प्राप्तः, तत्षष्ठीबोधस्य निर्दिश्यमान-स्यैव स्थानसम्बन्ध इति परिभाषया बोधनेनाङ्गस्य तथात्वाभावात् । अन्यथा "विसर्ज-नीयस्य स" इत्यादौ सकारवत्पदस्यापि निर्दिश्यमानत्वेन पदस्यादेशवारणायायोगवाहा-नाम् 'अल्षु' पाठस्यावश्यकत्वात् 'नैतदस्ति प्रयोजनं निर्दिश्यमानस्येत्येव सिद्धमिति' भा-ष्यं विरुद्धं स्यात् ।

मम तु पदस्येतिषष्ठीप्रकृतिबोधस्य सर्वत्र निर्दिश्यमानस्यैव सत्वेन तत्र प्रकृतपरिभाषया अप्रवृत्त्योक्तं भाष्यं युक्तमेव । अत एव 'जराया जरस्' इत्यादावङ्गस्य निर्दिश्यमानत्वमा-दाय नातिप्रसङ्ग इति दिक् । एवञ्चेयङुवङोर्ङित्वमपि स्पष्टार्थमेव ।

*स्यादिति भाव इति* । केचित्तु विसर्गस्याल्त्वेऽपि वर्णत्वाभावान्न भाष्यविरोध इति वदन्ति । *सुपद इत्याद्यसिद्धिरिति* । इदं न युक्तम्, शास्त्रान्तरासहकृतस्य षष्ठीप्रकृतिज-न्यप्राथमिकोपस्थितिविषयस्य विवक्षितत्वेन सुपद् इत्यत्र दोषाभावात् । एवं सति शास्त्रा-न्तरपदेन "स्वंरूपं" "तिङस्त्रीणि त्रीणि" "अणुदित्" "स्थानिवत्" तन्मध्यपतित" "लिङ्ग-विशिष्ट" इत्यादिशास्त्रातिरिक्तं विवक्षितम् । आद्ये तत्तच्छास्त्रारम्भः द्वितीये "रिच" तृतीये "न भूसुधियोः" इति सूत्रम्, चतुर्थे 'सन्तस्य प्रतिषेधः' इति वार्तिकम्, पञ्चमे "किमः कः" षष्ठे

अनया च स्वस्वनिमित्तसन्निधापितानां "अलोऽन्तस्य" ( १-१-५२ )

भैरवी ।

नन्वस्या यदागमन्यायेन यत्र विशिष्टस्य स्थानित्वप्रसक्तिस्तत्रैव प्रवृत्त्यापत्तौ 'सुपद' इत्याद्यसिद्धिरत आह—*अनयेति* । निर्दिश्यमानभिन्नसामान्यं व्यावर्त्यत्वेन विवक्षितमिति भावः ।

यत्तु "अलोऽन्त्य"परिभाषा अस्याः परिभाषाया बाधिकेति तन्मतखण्डनायाह—*अनया चेति* । सदेति शेषः । "त्यदादीनामेरनेकाच" इत्यादौ यथा, आदिपदेन "आदेः

तत्वप्रकाशिका।

महदात्वे लिङ्गविशिष्टाग्रहणज्ञापनपरं भाष्यं प्रमाणम् । एवञ्च तत्तदतिरिक्तत्वनिवेशे गौरवमत आह-*अनयेति* । युक्तमवतरणम् । एवं यत्पदघटितशास्त्रप्रयोज्यषष्ठीप्रकृतिजन्योपस्थितिविषयताश्रयत्वं निर्दिश्यमानत्वं बोध्यम् । यन्मध्यपतितेत्यत्र तन्मध्येति पाठः कार्यः ।

यद्वा येन विधिर्यदागमेत्यन्यतरशास्त्रप्रयोज्येत्यादि लक्षणम् । एवं च तन्मध्येति विपर्यासो न भवतीत्यभिप्रायः ।

केचित्तु षष्ठीप्रकृतिशक्यत्वम् तत्त्वम् , येन विधिः यदागमेति शास्त्रं लक्षणाग्राहकम् इति तद्बोधितानां षष्ठीप्रकृतिशक्यत्वाभावान्नोदस्थात्परमजरसावित्यादावतिप्रसङ्ग इति वदन्ति ।

अन्येतु लिङ्गविशिष्टपरिभाषाया अपि लक्षणाग्राहकत्वेन देवीमञ्चतीति देवद्र्यङ् इत्यत्र-देवीशब्दस्य षष्ठीप्रकृतिशक्यत्वाभावेनास्य टेरद्र्यादेशानापत्तिरतः षष्ठीप्रकृतिजन्यप्राथमिकोपस्थितिविषयो यस्तत्समभिव्याहृतो यः स्त्रीप्रत्ययातिरिक्तस्तद्घटितत्वे सति षष्ठीप्रकृतिजन्यप्रतीतिविषयत्वं तत्त्वम् । सत्यन्तविशेषणं ग्राहकसूत्रबोधितस्य "तन्मध्य" इतिपरिभाषाबोधितस्य "स्थानिवत्" सूत्रबोधितस्य लिङ्गविशिष्टपरिभाषाबोधितस्य निर्दिश्यमानत्वलाभाय । षष्ठीप्रकृतिजन्योपस्थितिविषयः जराशब्दस्तत्समभिव्याहृतो निरादिस्तद्घटितत्वमुदासीने रामशब्दादौ सत्वात्तत्र निर्दिश्यमानत्ववारणाय विशेष्यदलम् । अस्य स्त्री ई, याः जरसावीजरसावित्येतदर्थं स्त्रीप्रत्ययातिरिक्त इत्यत्र स्त्रीप्रत्ययः स्वप्रकृतिको ग्राह्यः ।

नव्यास्तु जरायाः जरा ते जराजरसावित्यादौ षष्ठीप्रकृतिजन्यप्राथमिकोपस्थितिविषयो यः पूर्वजराशब्दस्तत्समभिव्याहृत उत्तरजरासकारस्तद्घटितत्वमुत्तरजराशब्दे नास्तीति जरसादेशानापत्तिरतः षष्ठीप्रकृतिविशिष्टाघटितत्वे सति षष्ठीप्रकृतिजन्यप्रतीतिविषयत्वं निर्दिश्यमानत्वम् । वै० स्वजन्यप्राथमिकोपस्थितिविषयताश्रयावधिकपूर्वत्व स्वजन्यशाब्दबोधीयविषयतानाश्रयत्व स्वजन्यप्राथमिकोपस्थितिविषयताश्रयविशिष्टत्वैतत्त्रितयसम्बन्धेन । वैशिष्ट्यघटकवै० स्वसमभिव्याहृतत्व स्वोद्देश्यकागमत्वोभयसम्बन्धेन । एवञ्चोत्तरजराजकारस्य स्वावधिकपूर्वत्वाभावान्निर्दिश्यमानत्वमक्षतम् । ईजरसावित्यत्रेकारस्य स्वावधिकपूर्वत्वान्न विशिष्टे तत्त्वम् । देवद्र्यङित्यत्रेकारस्य स्वावधिकपूर्वत्वाभावान्न दोषः । त्रितामित्यत्र तकारस्य यद्यपि स्वावधिकपूर्वत्वं नास्ति, तथापि स्वोद्देश्यकागमाश्रयत्वान्न त्रयादेशः ।

एवञ्च यदागमपरिभाषा नावश्यिका, अपिबन्निर्जरसावित्यत्रापि समुदायमादाय न दोषः । पूर्ववर्णघटितत्वात् । प्रतिपिञ्चतीत्यादौ नुमः स्वोद्देश्यकागमत्वेऽपि स्वसमभिव्याहृतत्वाभावात्पत्वं सिद्धम् । स्वजन्यशाब्दबोधीयविषयतानाश्रयत्वस्य निवेशात् स्नात्वाकालकीकृत्येत्यत्र पूर्वक्त्वाशब्दस्य ल्यब्विधायकस्य क्त्वान्तसमासावयवनिर्दिश्यमानस्येत्यर्थेन शाब्दबोधीयविषयताश्रयत्वाभावान्निर्दिश्यमानत्वाभावेन न ल्यप् ।

एतेन स्नात्वाकालक इत्यत्र निर्दिश्यमानत्वात् क्त्वो ल्यबापत्तिः, मयूरव्यंसकादिगणे पाठेनात्र तदभाव कल्पने तु स्नात्वाकालकीकृत्येत्यत्र पुर्वस्य क्त्वो ल्यबापत्तिर्दुर्वारैव । अत्र तु निपातनेन न तदभावकल्पनं विशिष्टस्य तत्र पाठाभावेन तन्निमित्तकल्पयोऽनिवार्यत्वात्

भैरवी।

परस्य" इत्यस्य बहुवचनेनानेकालित्यस्य च परिग्रहः। एवकारव्यवच्छेद्यं स्पष्टयति—*न

तत्वप्रकाशिका।

इत्यपास्तम्। अनञ्पर्युदासादव्ययपूर्वस्यैव क्त्वो ल्यब्विधानात्। विशेषाश्रयणे मानाभावेन निपातनादेव तदभावाच्च। अत एवामुष्यायणपुत्र इत्यादौ न सुपो लुक्।

यत्तु चकारेण समासान्तरे घटकतया प्रवेशो न, अत एव 'परमो मयूरव्यंसक'इति वाक्यमेव भवति। एवं च स्नात्वाकालकीकृत्येति रूपमेवासाध्विति तन्न, तस्यासार्वत्रिकत्वादत एव प्रत्ययमात्रग्रहणेत्यादिप्रयोगोऽपि सङ्गच्छते। सजुः सजुर्भ्यामित्यादावपि "ससजुषोरुः" इत्यस्य सजुष्शब्दान्तस्य पदस्य रुरित्यर्थेन सजुष्शब्दत्वावच्छिन्नायाः शाब्दीविषयताया उभयत्र सत्वेनोभयत्र निर्दिश्यमानत्वान्न व्यभिचारः। एवं जरसोजरसावित्यादावलुकि चोहनीयम्। जराजरसावित्यादिस्थले पूर्वस्मिन् शाब्दबोधीयविषयताया अभावेन न जरसापत्तिः। अत एव "पादः पत्" इतिसूत्रे भाष्ये पाद उपधाया ह्रस्वत्वं वक्तव्यम्, न वक्तव्यम्, निर्दिश्यमानस्येत्येव सिद्धमित्युक्तम्, अन्यथा ह्रस्वे सुपात्पद इति रूपं भविष्यति पाच्छब्दान्तं यदङ्गं तदवयवोपधाया ह्रस्व इत्यर्थात्, अन्यत्र सुपत्पद इति फलभेदस्य सत्त्वाद्वार्त्तिकप्रत्याख्यानासम्भवेन तदसङ्गतं स्यात्।

ननु पदद्वित्वस्थले ऽनस्तमितावयवभेदस्य सर्वसम्मतत्वेनोत्तरस्यापि शाब्दबोधीयविषयताश्रयत्वेन समुदायस्य तद्घटितत्वान्निर्दिश्यमानत्वानापत्तिः न च स्थानिवद्भावेन समुदायस्यापि निर्दिश्यमानत्वं, नचानस्तमितावयवकत्वेन भागद्वयस्य पदत्वेन समासग्रहणकृतनियमाक्रान्तत्वेन समुदायाद्विभक्त्यनुत्पत्तौ जराजरसावितिरूपासम्भवः परमादिना ऽन्वयाभावेन सामर्थ्यात्समासाप्राप्तेश्च। यत्किञ्चिन्निरूपितव्याप्यताया एव वीप्सापदार्थतया वीप्सितस्य व्यापकेऽन्वयनियमात्, अतिशयिता जराअतिजरेतिविग्रहेणात्यर्थातिशयं प्रति वीप्सितत्वात्तत्रान्वयेनातिजराजरसावितिप्रयोगस्य सम्भवादिति वाच्यम्। कारकविभक्तेर्बलवत्तेन अध्याहृतोच्चारणक्रियानिरूपितकर्मत्वस्योपस्थितस्य द्वे इत्यस्य सम्भवेन आष्टमिकद्वित्वस्यापि स्थानेद्वित्वाभावेन स्थानिवत्त्वाप्रवृत्तेरितिचेन्न, इष्टापत्तेः। अत एव त्रेरयङ् जराया अमुङ् इति प्रक्रियालाघवाय न कृत इति मूलकृता उक्तम्।

अन्यथा पदद्वित्वस्य स्थानेद्वित्वत्वेन यथास्थितन्यासे स्थानिवत्त्वेन समुदायस्य, अयङमुङन्यासेऽन्त्यस्यादेश इति फलभेदस्य सत्वेन प्रक्रियालाघवोक्तिरसङ्गता स्यात्। अत एव "किमः क" इत्यत्र ककारोच्चारणमकच्सहितस्याप्यादेशार्थमश्वचनं साकच्कार्थमित्यादिभाष्यमपि सङ्गच्छते। अन्यथा स्थानेद्वित्वत्वेन समुदायस्यादेशार्थं तदावश्यकत्वेन तद्भाष्यमसङ्गतं स्यात्। अत एव "पादः पद्" इति सूत्रस्थोक्तं भाष्यमपि सङ्गच्छते।

एतेन स्थानिवत्त्वेन समुदायस्यैवादेशः, साकच्कार्थमिति पदद्वित्वस्याप्युपलक्षणम्, फलस्य अन्यथासिद्धिमात्रप्रतिपादनपरं "पादः पत्" इति सूत्रस्थं भाष्यमितिपरास्तम्। अनेकत्रानेकाप्रामाणिकक्लिष्टकल्पनाकल्पने गौरवाच्च। उपस्थितौ प्राथमिकत्वनिवेशेन तत्तच्छास्त्रसहकारेणोपस्थितिविषयताश्रयः यद्वा शाब्दबोधीयविषयताश्रयः निर्जरेत्यादि, तस्योदासीनवर्णाघटितत्वेऽपि न निर्दिश्यमानत्वम्, निर्जरादीनां ततच्छास्त्रसहकारेण तद्विषयाभावात्।

एतेन प्राथमिकाघटितं तैर्थिकानां लक्षणं चन्द्रग्रहणप्रयासवद्विफलप्रायमित्याकलयन्तु सुधिय इति दिक्।

ननु साकच्कानपहारकादेशविषयेऽयं न्यायः मा प्रवर्तताम् तदपहारके तु प्रवर्तत एव। अत एव भिन्धकीत्यत्राकचि कृते निर्दिश्यमानपरिभाषया धित्वन्न प्राप्नोतीति भाष्यं सङ्-

इत्यादीनां समावेश एव, न बाध्यबाधकभावो विरोधाभावात् । नाप्येतयो- रङ्गाङ्गिभाव उभयोरपि परार्थत्वेन तदयोगात् । "अनेकाल् शित्" (१-१-५५) इति सूत्रे सर्वश्चैतत्परिभाषाबोधित एव गृह्यते ।

यत्तु "आदेः परस्य" (१-१-५४) "अलोऽन्त्यस्य" (१-१-५२) इत्येतावेवतद्बाधकाविति तन्न । "उदःस्थात्" इति सूत्रविषयेऽस्याः, "पादः पत्" (६-४-१३०) इति सूत्रे भाष्ये सञ्चारितत्वात् । नाप्येतयोरियं बा- धिका । एतयोर्निर्विषयत्वप्रसङ्गादिति "तिविंशतेः" (६-४-१४२) इति सूत्रे कैयटः । अकज्विषये तु नायं न्यायः स्थानिवद्भावेनेव तन्मध्यपतित-

भैरवी

बाध्यबाधकेति* । बाध्यबाधकभावे हि परत्वं बीजन्तच्च न सम्भवति विरोधाभावात् । क्वचिन्निष्फलत्वेऽप्यस्याः प्रवृत्तिः स्यात् । क्वचित्तु ताभिः साध्यानां फलानामेतदेकवाक्यतया सिद्धिरिति भावः । नन्वेवमङ्गाङ्गिभावः स्यात्तथाचैकस्या अप्रवृत्तावियमपि न प्रवर्त्ततेत्यत आह—*नापीति* । *परार्थत्वेनेति* । विध्युपकारकत्वेनेत्यर्थः, 'गुणानाञ्च परार्थत्वात्' इति न्यायात् । समावेशफलन्तु "अस्थिदधि" इत्यत्र "पत्युर्नो यज्ञे" इत्यत्र "अन्तरुपसर्गेभ्य" इत्यादौ च बोध्यम् । *एतद् परिभाषाबोधित एवेति* । तेन निर्जरसावित्यादेः सिद्धिः ।

कौस्तुभोहितामुक्तिमपनुदति—*यत्त्विति* । एतद्बाधकावित्यस्य परत्वादिति शेषः । भाष्ये "अनेकाल्" इति सूत्रविहितसर्वादेशेन समावेशस्य कथनात्तत्रास्याश्चारितार्थ्यम् "आ- देः परस्य" इत्यस्य "अलोऽन्त्यस्य" इत्यस्य च "तास्यनुदात्त" इत्यत्र "संयोगान्तस्य लो- पः" इत्यत्र च चारितार्थ्यमित्यभिमानः । तदुक्तिन्निरस्यति—*उदःस्थादितीति* । एवं तत्रैव भाष्ये "अलोऽन्त्यस्य" इति सूत्रविषये "तिविंशतः" इत्यत्र सञ्चारितत्वादित्यपि बोध्यम् । एवमुक्तरीत्या सर्वाभिः स्वस्वविषये समावेशेन सर्वलक्ष्यसिद्धौ बाधकल्पनमन्याय्यमित्यपि बोध्यम् । *एतयोः* । पूर्वोक्तसूत्रयोः । *इयम्* । निर्दिश्यमानपरिभाषा । *बाधिकेति* । सू- त्रोच्चारिताच्छब्दात् प्रथमं स्वस्वरूपोपस्थितिस्तत आद्यन्तयोः परामर्श इति, अन्तरङ्गा एषा, तयोर्बाधिकेति तद्भावः । *निर्विषयत्वेति* । "उदः स्थास्तम्भोः" इति सूत्रविषये "उदस्था- त्" इत्यत्रादेरित्यस्य, "समः सुटि" इति सूत्रविषये "अलोऽन्त्यस्य" इत्यस्य च समावेशस्य तत्र तत्राकारे प्रदर्शनेन तत्तद्विषयताकत्वमपि तयोरिति तत्तद्विषयताकत्वविशिष्टयोश्चारिता- र्थ्याभावप्रसङ्गादित्यर्थः । तयोरियं यतो न बाधिकाऽत एव उदस्थादित्यत्र सोमसुतावित्यत्र च पूर्वसवर्णाभावस्य "ओः सुपि" इति यणादेशाभावस्य च सिद्धिः । अत्र आद्यस्य "आदेः परस्य" इति परिभाषया सिद्धिरुक्तैव, द्वितीये तु सुनोतेः क्विपि तु कितद्विशिष्टस्य ओरित्यनेन ग्रहणेन यणापत्तिः "अलोत्यस्य" निर्दिश्यमानस्येत्यर्थंतु नान्त्यस्य निर्दिश्यमानत्वमिति बो- ध्यम् । *कैयट इति* । तत्रहि तिशब्दान्त्यस्य लोपः कुतो नेति शङ्कायां निर्दिश्यमानपरि- भाषया समुदायस्यैव लोपसमाधानेन हि सा तयोर्बाधिकेतिप्रतिपाद्यान्तस्य "यस्येति च" इतिलोपे सिद्धे तिग्रहणस्य वैयर्थ्यमिति तिग्रहणसामर्थ्यात्समुदायनिवृत्तिरिति तेनोक्तम् ।

नन्वेवमकज्विषयेऽप्यस्याः प्रवृत्तौ साकच्कस्य कार्य्यन्न स्यादत आह—*अकज्विषय इति* । तत्रैतन्न्यायाप्रवृत्तौ बीजमाह—*स्थानीत्यादि* । एवञ्च स्थानिवद्भावे सति यथा- ऽऽदेशे न निर्दिश्यमानभिन्नत्वबुद्धिस्तथा तन्मध्यपतितन्यायस्थलेऽपि तत्वबुद्धिरेव, गङ्गां यमुनाञ्च प्रविष्टा नद्यो यथा गङ्गायमुनाग्रहणेन गृह्यन्ते तद्वदिति भावः

ननु शेखरेऽकच्सहितस्यापीत्यस्य व्याख्यानावसरे यद्यपि निर्दिश्यमानपरिभाषया न प्रा- प्नोतीति शङ्कितं तेनैतद्विरुध्यत इति चेन्न । तत्रत्यपूर्वपक्षसमाधानयोः प्राच्यानुसारित्वात् ।

न्यायेन तद्‌बुद्ध्यैव कार्य्यजननात्। इयं चावयवषष्ठीविषयेऽपि। अतएव "तदोः सः सौ" (७-२-१०६) इति सत्वम् अतिस्य इत्यत्र उपसर्गतकारस्य न निर्दिश्यमानयुष्मदाद्यवयवमपर्य्यन्तस्यैव यूयादयो न त्वतियूयमित्यादौ सोपसर्गावयवमपर्य्यन्तस्येति बोध्यम्। "पादः पत्" (६-४-१३०) इति सूत्रे "षष्ठीस्थाने" (१-१-४९) इति सूत्रे च भाष्ये स्पष्टैषा॥ १२॥

भैरवी।

अत एव तत्रावृत्त्याश्रयणेनादेश इति कैयट इति कैयटपदोपादानमरुचिबोधकमुपात्तम्। एवं यदि अरुचि कृते निर्दिश्यमानपरिभाषाप्रवृत्तिस्तदा 'इमअ'इत्येव सिद्धे कद्वयोपादानसामर्थ्यात् सर्वादेशः, तत्र च निर्दिश्यमानपरिभाषाया अप्रवृत्तिस्वीकारेणापि समाधानं बोध्यम्। एवम्भिन्धकीत्यत्रारुचि कृते निर्दिश्यमानपरिभापया धित्वन्न प्राप्नोतीति भाष्यमपि परिभाषाप्रवृत्तिमभ्युपेत्य पूर्वपक्ष्युक्तिरिति कल्पनया निर्वाह इति।

वस्तुतस्तु "कुतिहोः" "क्वाति"इत्युत्तरार्थक्मि इत्यावश्यकमित्यकज्विषये निर्दिश्यमानपरिभाषा न प्रवर्त्तते इति सामान्यतो न नियमः। इह साकच्कस्यादेशस्तु ह्वेः प्राक्किमूशब्दस्य पाठेन 'किमअ'इतिन्यासेन 'अनन्त्यविकार' इति परिभाषाप्रवृत्याऽकारयोः पररूपेण च भविष्यति। एवं सति "किंसर्वनामबहुभ्य" इत्यत्र किंशब्दोपादानमपि न कार्य्यमतो लाघवमपीति बोध्यम्। अस्याः परिभाषायाः "षष्ठीस्थाने योगा" इति सूत्रमूलकत्वस्य प्राक्कथनेन यत्र स्थानषष्ठी निर्दिष्टा तत्रैवास्याः प्रवृत्तिर्नान्यत्रेति "तदोःसःसौ" इत्यादौ कथं प्रवृत्तिरत आह—। *इयञ्चेति*। चो ह्यर्थे लक्ष्यानुसारिव्याख्यानादिति शेषः। तदेव दर्शयति—*अत एवेति*। अवयवषष्ठीविषयेऽपि प्रवृत्तिस्वीकारादेवेत्यर्थः। *अतिस इति*। अतिशयितः स इति कर्मधारयः, त्यदाद्यन्तानामवयवयोस्तदोरित्यर्थे उपसर्गावयवस्य तस्य सकारः स्यादिति भावः। एवमतियूयमित्यादावपि सोपसर्गावयवस्यापि युष्मदाद्यन्ताङ्गावयवमपर्य्यन्तस्येत्यर्थेन प्राप्तिर्बोध्या।

अन्येतु निर्दिश्यमानपरिभाषाया यदुदस्थात्सुपद इत्यत्र प्रयोजनमुपात्तन्तद्न्यथासिद्धम्। "उदःस्थास्तम्भोः" इति सूत्रे स्थाशब्दात् प्राक् सकारस्य प्रश्लेषेण स्थास्तम्भोरिति षष्ठ्यर्थस्यावयवत्वस्य सकारविशेषणत्वेन स्थास्तम्भोरवयवो य उदः परः सकारस्तस्य पूर्वसवर्ण इत्यर्थाश्रयणादुदस्थादित्यत्र न प्राप्तिरिति सुपद इत्यपि अङ्गसंज्ञानिमित्तप्रत्ययपरस्य पाच्छब्दस्येत्यर्थेन सिद्धम्। नचैवमपि कौमुगन्ध्या भवतात प्रणम्य कारयामासेति प्रयोजनानि सम्भाव्यन्ते कौमुदगन्ध्येत्यत्र "गोत्रे यावणिञावनार्षौ तद्न्तयोर्गुरूपोत्तमयोः" इत्यर्थेन ष्यङो ङकारस्य यङश्चाविप्यत्र चरितार्थतया ताङ्न्यायेन गोत्रप्र-

तत्वप्रकाशिका।

च्छते। एवं च न "किमः कः" सूत्रस्थशेखरविरोधोऽत आह—*एवम्भिन्धकीति*। *पूर्वपक्ष्युक्तिरिति*। यद्वा नैतत्कल्पनस्य प्रयोजनम्। "अन्तात्यन्त" इति सूत्रेऽत्यन्तग्रहणात् स्वघटकावधिकपूर्वत्व स्वघटकावधिकोत्तरत्व स्वपर्याप्तोद्देश्यतानिरूपितविधेयताश्रयत्वैतत्त्रितयसम्बन्धेन स्वविशिष्टघटितसमुदायस्य तन्मध्यपतितत्वस्वीकारेण प्रकृते तिङन्तोद्देश्यत्वेनाकचो विधानात्तिङन्तस्य तन्मध्यपतितत्वेऽपि हकिंशब्दस्य तदभावान्नाष्ये त्वदुक्तार्थे न ज्ञापकम्। अत एव जनं रातीति निष्पन्नजनराशब्दस्य न जरसादेशः, नकारस्य जराशब्दोद्देश्यत्वेन विधानाभावात्।

नच गर्भिणीस्थगर्भः गर्भिणीग्रहणेन, गङ्गास्थो घटो गङ्गाग्रहणेन, गृह्यत इति लौकिकदृष्टान्तविरोध इति वाच्यम्? एतदर्थं तत्सत्ताधीनसत्ताकत्वरूपान्यादृशतन्मध्यपतितत्वस्य स्वीकारात्। *किम इत्यावश्यकमिति*। तत्रापि 'उतिहोः' 'वातीति'न्यासे तु 'इम' इत्यनेनैव

भैरवी।

त्ययान्तस्य ष्यङादेशोऽन्यथा स्यात्। एवन्तुह्यन्तं यदङ्गन्तस्य तातङित्यर्थे समुदायादेशत्वा- पत्तिरेवं प्रणम्येत्यत्रापि समासेऽनञ्पूर्वे क्त्वान्तं यदङ्गन्तस्य ल्यबित्यर्थेन समुदायादेशत्वं ल्यपः स्यात्। एवङ्कारयामासेत्यत्र आमादौ प्रत्यये परे ते यस्माद्विधीयन्ते तदादेर्ण्यन्तस्ये- त्यर्थेन विशिष्टस्यायादेशः प्राप्नोतीति वाच्यम्। "अणिञोः"इत्यत्र गुरूपोत्तमयोरवयवौ या- वणिञौ तयोः ष्यङित्यर्थाश्रयणेन तातङो ङित्करणेन समासेऽनञ्पूर्वे इत्यत्रापि पूर्वग्रहणम- कृत्वाऽनञः परस्य क्त्वः समासावयवस्य ल्यबित्यर्थाश्रयणेन येन नाव्यवधानन्यायेन धातु- मात्रव्यवधानेऽपि प्रवृत्त्या दोषाभावेन आमन्तादौ प्रत्यये परे यत्तदादि तदवयवस्य णेरित्य- र्थाश्रयणेन समुदायादेशत्वस्य व्यावृत्तिसम्भवादित्याहुः।

अत्रेदमवधेयम्—उदस्थादित्यस्य सकारप्रश्लेषेण यत्साधनं तत् "पादः पत्" इति सूत्रस्थभाष्यविरुद्धम्। तत्र हि 'अवश्यमेषा परिभाषा कर्त्तव्या निर्दिश्यमानस्यादेशा भव- न्ति' इत्युपक्रम्य "उदस्थात्" इत्यत्र पूर्वसवर्णादेशव्यावृत्तेः प्रदर्शनात्। यदि सकारस्य प्रश्लेषस्तदाऽदूसाहित्यं यत्र तत्र प्राप्तेरभावेन भाष्यविरोधः स्पष्ट एव।

किञ्च सकारस्य प्रश्लेषेऽप्युदस्थशब्दावयवसकारस्य पूर्वसवर्णापत्तिः। अत्र हि व्युद- शब्दविजन्तस्थाशब्दयोः समासे विशिष्टाद्राख्यानार्थके णिचि टिलोपे च कृतेऽविशिष्टावयव- सकारे स्थाशब्दावयवत्वस्य प्रक्रियाज्ञानवतां बुद्धिसम्भवात्। स्थाशब्दस्यैव कार्यित्वे तु प्रकृते न स्थाशब्दः। अक्तपरिमाणग्रहणेनैकदेशविकृतन्यायानवसरात्। नापि स्थानिवद्भावेन व्युदस्थाशब्दस्य स्थाने हि व्युदस्थशब्दादेशो न तु स्थाशब्दस्य स्थशब्द इति। न च व्युदशब्दस्य पृथक्करणेन स्थाशब्दाण्णिचि तस्यैव स्थाने स्थाशब्दादेश इति वाच्यम्? उपसर्गसमानाकारस्य पूर्वपदस्य पृथक्कृतिर्हि संग्रामेति विशिष्टपाठेन कल्प्यते। यच्चात्र। पूर्वपदं व्युदिति तन्नोपसर्गसमानाकारमिति स्पष्टमेवेति निश्चयात्।

यदपि 'सुपद' इत्यस्यान्यथासिद्धिकल्पनं पूर्वोक्तन्यायेन तदपि न, निरुतन्दुरुतमित्यस्य सिद्ध्येऽङ्गाधिकारस्यावश्यकत्वेनाङ्गसंज्ञयाऽऽक्षिप्तप्रत्ययस्य नित्यसम्बन्धित्वेन प्रत्यय- स्याङ्गविशेषणत्वमेवोचितमिति पाच्छब्दान्तं यदङ्गम्भन्तस्य प्रत्ययपरकस्यादेश इत्यर्थस्यैव न्याय्यत्वात्।

यदपि कौमुदगन्ध्याशब्दस्यान्यथासिद्धेर्वैयधिकरण्येन सम्बन्धकल्पनया कल्पनं तदपि स्थूलं सम्भवति सामानाधिकरण्ये वैयधिकरण्येनान्वयस्य गौरवपराहतत्वात्।

किञ्च वैयधिकरण्येन सम्बन्धे दाक्षीपुत्रीत्यत्रापि ष्यङादेशः स्यादतः सामानाधिकरण्येन सम्बन्ध एव दीक्षितैरादृतः।

यदपि "समासेऽनञ्पूर्वे" इति सूत्रे पूर्वग्रहणमकृत्वाऽनञः परस्य क्त्व इत्यर्थाश्रयणेन प्रणम्येत्यस्य समाधानं तत्स्थवीयः, तस्मिन् सूत्रे पूर्वग्रहणाभावे प्रशब्दशमीदार्विन्धित्वा-

तत्वप्रकाशिका-

सिद्धौ नावश्यकत्वमित्यपि बोध्यम्। *इत्याहुरिति* परमजरसौ जराजरसावित्यादौ समु- दायस्य पूर्वजरा शब्दस्य वा जरसापत्तिरजादिविभक्तेः जराशब्दस्य विशेषणत्वेन वारणीया। "विभाषा सपूर्वस्य" इत्यस्य विद्यमानवयवपूर्वकपतिशब्दान्तप्रातिपदिकस्य नकारादेश इत्यर्थेनालोऽन्त्यपरिभाषयाऽन्त्यस्यैवेति वृषलपतिपत्नीत्यादौ न दोषः। व्याघ्रपात्पदः वि- श्ववाडुह इत्यादौ भपदाक्षिप्ताजादिसर्वनामस्थानस्य निर्दिश्यमानविशेषणत्वेन न दोषः। स्नात्वाकालकीकृत्येत्यत्र निपातनेन। एवं च निर्दिश्यमानपरिभाषा मास्तु प्रणिदापयती- त्याद्यर्थं यदागमपरिभाषास्तु। अपिबदित्यत्र परिभाषाया अनित्यत्वान्न दोष इत्यभिप्रायः। *दर्शनादिति*। किञ्च त्रितामित्यत्र यदागमपरिभाषया विशिष्टस्य त्रिशब्दत्वेन त्रयादेशा-

ननु चेतेत्यादौ ह्रस्वस्यैकारस्य प्रमाणत आन्तर्यादिकारोऽपि स्याद्-

भैरवी ।

शब्दयोरेकार्थीभावविवक्षायां समासे प्रशमीदार्विनूध्याग्निजुहोतीत्यत्र ल्यबनापत्तेः ।

न च पूर्वग्रहणसत्वेऽपि कथमिह प्राप्तिर्यावताऽव्ययस्य क्त्वान्तेन यत्र समासस्तत्रैव ल्यप इष्टत्वादिति वाच्यम्? कृदूग्रहणपरिभाषया शमीदार्विन्धित्वा शब्दस्यापि क्त्वान्तत्वात् ।

यदपि कारयामासेत्यस्यामादौ प्रत्यये यत्र तदादितदवयवस्य णेरित्यर्थेन "स्यतासी" इव तदुपस्थितस्य तदादेरित्यस्य विधित्वेनान्वयात् 'प्रत्ययग्रहणे चापञ्चम्या' इति निषेधाण्ण्यन्तस्येत्यर्थासम्भवप्रदर्शनं तदपि न विचारसहम् । तत्र लुलुटोर्निमित्तत्वेनोपादाना-त्तेन तदन्तविधौ निमित्तत्वानुपपत्त्या "उत्तमैकाभ्याम्" इति निर्देशेन च यत्र यस्य प्रत्ययस्य निमित्तत्वेनाश्रयणन्तेन तदन्तविध्यभावस्य आश्रयणेऽपि निमित्तत्वानाक्रान्तप्रत्ययग्रहणेन तदन्तविध्यभावे मानाभावात् । एवञ्चामादौ प्रत्यये णिर्यस्माद्विधीयते तदादेर्ण्यन्तस्यायादेश इत्यर्थेन किमत्रधिकमिति णिमात्रस्यायादेशसिद्धये निर्दिश्यमानपरिभाषाया आवश्यकत्वात् ।

किञ्च तस्यै इत्यत्र स्यादि कृते आपश्च ह्रस्वे ङेग्रहणेन स्यैशब्दस्य ग्रहणात् स्मैशब्दादेशः स्यादिति निर्दिश्यमानपरिभाषाया आवश्यकत्वम् । अपि च क्रियास्तां क्रियास्तम् क्रियास्त इत्यत्र परत्वादन्तरङ्गत्वाद्वा यासुटि कृते तामादयो भवन्ति । एते च निर्दिश्यमानपरिभाषाभावे सयासुट्कस्य स्युः । परस्मैपदेषु इत्यस्य विषयसप्तम्याश्रयणेन "आद्युदात्तश्च" इति सूत्रभाष्यरीत्या लावस्थायां यासुटः प्राप्त्यान्तरङ्गत्वं बोध्यम् । न च निर्दिश्यमानपरिभाषास्वीकारेऽपि कथमिहादेशः, यासुटा व्यवधानेन धातोः परत्वाभावादिति वाच्यम्? धातोर्विहितानान्तसादीनामित्यर्थाश्रयणात् ।

अपि चानितिस्र अतिचतस्र इत्यत्र त्रिचतुरन्तस्य तिसृचतसृशब्दादेशवारणाय स्वीकार्या । न च परिभाषाभावे समुदायस्य तिस्राद्यादेशे कथमन्यपदार्थप्रतीतिर्वाचकाभावादिति वाच्यम्? सामान्यशब्दस्यापि प्रकरणाद्यपेक्षस्य विशेषावसायहेतुत्वस्य दर्शनात् ॥ १२॥

स्थान्यादेशानां प्रक्रमात् स्मृतामन्यामपि परिभाषां वक्तुं भूमिकामारचयति—*नन्वि-

तत्वप्रकाशिका ।

पत्तिः, नचेकारं प्रश्लिष्यैकारान्तस्य त्रयादेशविधानेन नुग्विशिष्टे इकारान्तत्वस्य वर्णमात्रवृत्तिधर्मत्वेनाल्विधित्वेन च यदागमपरिभाषायाः स्थानिवद्भावस्य चाप्रवृत्तेर्नदोष इति वाच्यम् । प्रश्लेषस्यासम्भवात् । अत एव 'स्त्रन्तस्य प्रतिषेध' इति वार्तिकमपि सङ्गच्छते । अन्यथाऽल्विधित्वेन स्थानिवद्भावाप्राप्तौ तद्वैयर्थ्यं स्पष्टमेव । मन्यां निर्दिश्यमानपरिभाषायां विशिष्टे तदभावान्न दोष इति बोध्यम् । एवं सखिदित्यत्रानङापत्तिर्बोध्या ।

यत्तु आमीति न्यासे रामाणामित्यादौ परत्वाद्दीर्घं नुट् तु ह्रस्वग्रहणसामर्थ्यात् भूतपूर्वगतेरवगमेन, तिसृणामित्यत्र "षट्चतुर्भ्यश्च" इति सूत्रे त्रेरनुवृत्त्या सिद्धम्, नच नृणामित्यत्र चारितार्थ्यम्, तावन्मात्रप्रयोजनकत्वे नृनद्याप इत्येव ब्रूयादिति भाष्यात् ह्रस्वेकारान्तकोरान्तेभ्य आचारक्विपोऽनभिधानेन त्रितां सखिदित्यादिरूपासम्भवः । अन्यथा त्रितां नृतामित्यत्र ह्रस्वग्रहणसत्वे नुटोऽप्राप्तिस्तदभावे तु स्थानिवत्त्वेन त्रिवृद्ध्या त्रिन्नां नृन्नामिति फलभेदस्य सत्त्वेन ह्रस्वग्रहणसामर्थ्यात्तदवगतिरसङ्गता स्यादिति तन्न, सूत्रद्वयस्य नद्याबन्तचतुःशब्दसाहचर्येण झलन्ते प्रवृत्तेरनभ्युपगमेन नृतां त्रितामित्यत्र नुटोऽप्राप्तेः ॥ १२ ॥

स्थान्यादेशानां प्रक्रमात्स्थानिनियामिकाः परिभाषा उक्त्वा इदानीमनन्तरवक्तव्यत्वरूपावसरसङ्गत्याऽऽदेशनियामिकां परिभाषां वक्तुं भूमिकां रचयति—*नन्वित्ति* ।

त आह—

**यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यम्बलीयः॥ १३ ॥**

अनेकविधं स्थानार्थगुणप्रमाणकृतम् । अत्र मानम्-"षष्ठीस्थाने" (१-१-४९) इत्यत एकदेशानुवृत्त्या स्थाने ग्रहणेऽनुवर्त्तमाने पुनः "स्थानेऽन्तरतमः" (१-१-५०) इति सूत्रे स्थानेग्रहणमेव। तद्धि तृतीयया विपरिणम्य वाक्यभेदेन स्थानिनः प्रसङ्गे जायमानः सति सम्भवे स्थानत एवान्तरतम इत्यर्थकम् । तमब्ग्रहणमेवानेकविधान्तर्यसत्तागमकम् । स्थानतः स्थानेनेत्यर्थः। तत्र स्थानत आन्तर्य्यम् "इको यणचि" (६-१-७७) इत्यादौ प्रसिद्धमेव। अर्थतः "पद्दन्न" (६-१-६३) इत्यादौ। स्थान्यर्थाभिधानसमर्थस्यैवादेशतेति सिद्धान्तात् यदर्थाभिधानसमर्थो यः स तस्यादेश इति तत्समानार्थतत्समानवर्णपादादीनां ते "तृज्वत्क्रोष्टुः"

भैरवी।

ति* । *अकारोऽपीति* अपिना स्थानकृतान्तर्याश्रयणपक्षे प्राप्तस्यैकारस्य परिग्रहः । *यत्रानेकविधेत्यादि* । *यत्र* लक्ष्ये । *आन्तर्यम्* सादृश्यम् । स्थानिभिः सहादेशानामिति शेषः । अस्य वचनस्य निर्मूलत्वशङ्कां वारयति—*अत्र मानमिति* ॥ *स्थाने ग्रहणे* प्रसङ्गवाचिनीति शेषः । *तृतीयया विपरिणमय्येति* । ध्वनितेनेत्यस्य शेषः । *तमब्ग्रहणमिति* । यदि स्थानकृतमेवान्तर्य्यं सुप्रसिद्धन्तदा तमब्ग्रहणवैयर्थ्यं स्पष्टमेव । *पादादीनामिति* ।

यद्यपि तस्मिन् सूत्रे स्थानिनो नोपात्तास्तथाप्यर्थवत एव स्थान्यादेशभावस्य विश्रान्तेरेवं कल्पना कार्येति भावः । पदादिनामनादेशत्वसिद्धान्ताभिप्रायेणाह—*तृज्वदिति* ।

नच स्थानार्थगुणप्रमाणकृतमिति परिगणने "उरण्रपरः" इति सूत्रेण जातस्याणो रपरत्वं

तत्वप्रकाशिका।

*प्रमाणतः*। कालकृतात । *आन्तर्यात्* । सादृश्यात् । *परिग्रह इति*। विनिगमनाविरहादुभयोः पर्यायापत्तिरिति भावः । *स्थानार्थगुणेति । एतेन वर्णत्वादिधर्माणां व्यावृत्तिः सूचिता । अत एव "स्थानेन्तरतम" इति चरितार्थम् । अन्यथा वणत्वधर्मेण साधर्म्यादिकारस्य स्थाने घकारादीनामपि प्राप्तौ व्यावर्त्यालाभेन तद्वैयर्थ्यं स्यात् । बाह्यप्रयत्नानां साक्षाद्वर्णवृत्तित्वाभावेऽपि, औपचारिकं गुणत्वं बोध्यम् । *इति शेष इति* । अयम्भावः—अन्तरतम् इत्येको योगः, स्थाने द्वितीयः, तत्र प्रसङ्गार्थकस्थानेग्रहणानुवृत्त्या पूर्वेणैव सिद्धे द्वितीययोगस्तात्वादिस्थानपरो नियमार्थश्च । द्वितीये स्थानेऽन्तरतम इत्यनयोरनुवृत्त्या योऽर्थो भवति तं दर्शयति—*सति सम्भव इति* । सम्भवाभावे तु पूर्वेणेवेष्टसिद्धिरिति भावः । वाग्घरिरित्यादौ यथा ।

नन्वेक एव योगोऽस्तु, अनुवृत्तस्थानेपदं प्रसङ्गार्थपरमत्रत्यन्तात्वादिपरमस्तु । योगविभागेनानेकविधसादृश्यसत्ताश्रयणे किं बीजमित्यत आह—*तमप्ग्रहणमिति* ।

अयम्भावः—वाक्यभेदाभावे प्रसङ्गे सति स्थानेन सदृश आदेश इत्यर्थकान्तर इत्येतादतैवेष्टसिद्धौ तद्व्यर्थं सदनेकविधान्तर्यसत्ताश्रयणे गमकम् । एवञ्च वाक्यभेदोऽपि सिद्धः । अन्यथा तदाश्रयणमेव व्यर्थं स्यात् । नच सति तमपि लाकृतिरित्यत्र लकारो भवत्यन्यथा बकारोऽपि स्यादिति वाच्यम् ? अन्तरग्रहणसामर्थ्येनातिशयार्थलाभात् । अन्यथा तत्स्थान इत्येव ब्रूयात् । तदाह—*यदि स्थानकृतमेवेति* । *एवङ्कल्पना कार्येतीति* । सप्तम्य-

( ६-१७-९५ ) इति च । गुणतो वाग्घरिरित्यादौ । प्रमाणतो "अदसो-ऽसेः" ( ८-२-८० ) इत्यादौ । "स्थानेऽन्तरतम" ( सूत्रे भाष्ये १-१-५० )

भैरवी ।

विधीयत इति पक्षे ऋवर्णस्य वृद्धिप्रसङ्गे सर्व एवादेशाः प्राप्नुवन्तीतिदोषपरिहाराय भाष्ये अनान्तर्य्यमेवान्तर्य्यमेतयोरित्याश्रितं तद्विरुध्यत इति वाच्यम् । गुणशब्दस्योक्तत्रितयातिरिक्तधर्मपरत्वात् । बाह्यप्रयत्नस्य वर्णवृत्तित्वेऽपि गुणस्य यथोपकार इतरव्यावृत्तिरूपोऽस्ति तथैतेषामपीति गुणसादृश्याद् गुणत्वेन व्यवहारः । न चैवं ह्रस्वत्वादीनामपि गुणग्रहणेन सिद्धे ग्रहणे पृथक् प्रमाणग्रहणवैय्यर्थ्यमिति वाच्यम् ? ब्राह्मणवसिष्ठन्यायेन तथोपादानात् । *आदसोऽसेरिति* । अत्र प्रमाणत आन्तरतम्यमादाय व्यवस्था मूल एव ह्रस्वत्वप्रकाशिका ।

न्तपाठे सादृश्यानुयोगिनि स्थानिनि आदेश इत्यर्थे उपस्थितत्वादादेशप्रतियोगिकं सादृश्यं वक्तव्यम् । सादृश्यञ्च प्रतियोगिवृत्तिधर्मवत्त्वम् । धर्मऽतिशयश्चान्यूनानतिरिक्तवृत्तित्वरूपो बोध्यः । अत एव लाकृतिरित्यत्र न वकारः । तस्य दन्तोष्ठस्थानजन्यत्वेन लृकारे न्यूनधर्मवत्त्वेनानुयोगिताया अभावात् किन्तु लकार एव । एवञ्च शसाद्यव्यवहितपूर्वस्य पदादय इत्यर्थक"पद्दन्" इति सूत्रेण पदादिप्रतियोगिकधर्मानुयोगिनः पूर्वस्यादेशविधानेन पाद्दन्तादावेव तादृशधर्मानुयोगितायाः सत्वेन त एव स्थानित्वेन आक्षिप्ताः नतु चरणादयः । एवञ्चादेशः स्वविशिष्टनिष्ठस्थानितानिरूपकः आदेशत्वादित्यनुमानं फलितम् । वै० स्ववृत्तिसादृश्यवन्निष्ठभेदप्रतियोगितानवच्छेदकानुपूर्वीमत्त्वसम्बन्धेन । तथाच-पकारादिघटितपुंस्त्वविशिष्टचरणादिबोधकत्वरूपसादृश्यवान् पादशब्दस्तन्निष्ठभेदप्रतियोगितानवच्छेदकानुपूर्वीशादशब्दत्ववत्त्वसम्बन्धेन पच्छब्दविशिष्टः पादशब्द ।एव नतु चरणादिस्तत्र पकारादेरभावात् । नापि पच्छब्दस्तस्य भेदप्रतियोगितानवच्छेदकत्वाभावात् । एतदेवाभिप्रेत्याह–मूले *तत्समानार्थतत्समानवर्णंति* ।

नन्वेवं सुध्युपास्य इत्यादौ यण् न स्यात् यण्वृत्तिसादृश्यवन्निष्ठभेदप्रतियोगितानवच्छेदकधर्मस्यैकारादावभावात् । मूत्रन्तु तादृशस्थानजन्यत्वसमानाधिकरणमात्राद्व्यन्यूनकालिकत्वरूपधर्मंण सादृश्यवति ह्रस्वेकारे चरितार्थमतः प्रथमान्तपाठ एव युक्तः । एवञ्च "पद्दन्"इति सूत्रं नादेशविधायकं किन्तु प्रयोगनियमार्थमत आह—*तृज्वत्क्रोष्टुरिति* । आदेशः स्वविशिष्टधर्मप्रयोज्यसादृश्यप्रतियोगिनिष्ठस्थानितानिरूपकः आदेशत्वात् । वै० स्वनिष्ठत्व स्वेतरानिष्ठत्वोभयसम्बन्धेन । इति प्रथमान्तेऽनुमानम् । केचित्तु सप्तम्यन्ते आदेशविशिष्टधर्मवति स्थानिनि आदेशो भवति । धर्मं वै० स्ववृत्तित्व स्वघटितदलभिन्नदलीयवृत्तित्व स्वघटितदलभिन्नदलीयस्वस्थानित्वेनाभिमतस्थानीतरस्थान्यवृत्तित्वैतत्त्रितयसम्बन्धेन । वाग्घरिरित्यत्र घकारविशिष्टनादमहाप्राणप्रयत्नवत्त्ववत् खकारविशिष्टमहाप्राणवत्वधर्मस्यापि हकार सत्वात् खकारापत्तिर्दुर्वारा इत्यतः सप्तम्यन्तपाठो दुष्टः । किन्तु प्रथमान्त एव युक्तः । तत्र स्ववृत्तित्व स्वस्थानिकादेशवृत्तित्व स्वस्थानिकादेशत्वेनाभिमतेतरयावदादेशावृत्तित्वैतत्त्रितयसम्बन्धेन स्थानिविशिष्टधर्मवानादेशो भवतीत्यर्थाद् , ह्रस्वस्य दीर्घस्य चेकारस्य स्थाने तालुस्थानजन्यत्वरूपधर्मविशिष्टयकारादिरूपादेशसिद्धिः । वाग्घरिरित्यादौ नादमहाप्राणप्रयत्नवत्वधर्मवतो 'घकारादेरेव सिद्धिरिति न क्वापि दोषः । *तृज्वदिति* । नन्वत्र स्थान्यादेशभावविरहादिदमुदाहरणमयुक्तमिति चेन्न । रूपातिदेशस्य स्थान्यादेशभावे विश्रान्तेः क्रोष्टुरित्यस्यानुकरणत्वेऽपि प्रकृतिवदतिदेशात्षष्ठ्यां तृज्वद्भावसिद्धत्वेन तृज्वदित्यस्य मत्वन्तत्वेन क्रोष्टुशब्दस्य स्थाने तृज्घटित आदेशो भवतीत्यर्थाच्चानुपपत्तिविरहात । यदि तु पद्दन्नितिवदिदमपि प्रयोगनियमार्थं तदा "इको यणचि" इत्युदाहरणम् । तत्रानुमानिक-

स्पष्टैषा ॥ १३ ॥

ननु प्रोढवानित्यत्र "प्रादूहोढ" ( ६-१-८९३-वा० ) इति । वृद्धि स्यादत आह—

## अर्थवद्ग्रहणे नानर्थकस्य ॥ १४ ॥

विशिष्टरूपोपादाने उपस्थितार्थस्य शब्दम्प्रति विशेषणतयान्वयसम्भवे

भैरवी

व्यञ्जनयोरित्यादिना प्रदर्शिता ॥ १३ ॥

अर्थकृतान्तरतम्यस्य प्रतिपादनात् तत्प्रसङ्गेनार्थवत्परिभाषाप्युपथिता तां वक्तुमुपक्रमते—*नन्विति* । परिभाषायां मानमाह—*विशिष्टेति* । अर्थबोधकतावच्छेदकानुपूर्वीविशिष्टेत्यर्थः । *विशेषणतयेति* । वाचकतासम्बन्धेनोपस्थिततदर्थविशिष्टस्योपात्तशब्दस्य तत्र तत्र ग्रहणमिति भावः।

तत्वप्रकाशिका ।

स्थान्यादेशभावकल्पे दधात्यादौग्घटितस्य स्थाने कदाचिन्मध्वित्यादियणघटितोऽपि प्रसज्येतेत्यर्थत आन्तर्याद्ध्यित्येवादेशो भवतीति वदन्ति ॥ १३ ॥

*प्रतिपादनादिति* । यद्वागमपरिभाषाव्याख्यानकाले अर्थवद्दाशब्दस्य घुसंज्ञेत्यर्थस्योपक्रमाच्चेति शेषः। *तत्प्रसङ्गेनेति* । सप्रसङ्गसङ्गत्येति शेषः । मूले—*अर्थवद्ग्रहणइति* । सम्भवत्यर्थवत्ग्रहणे नानर्थकस्य ग्रहणमित्यर्थः। *आनुपूर्वीविशिष्टेत्यर्थ इति*। साक्षादानुपूर्व्यवच्छिन्नमुख्यविशेष्यताप्रयोजकत्वरूपेत्यर्थः । नच तत्पदप्रयोज्यशाब्दबोधीयविशेष्यतानिरूपितप्रकारता ऽसमानाधिकरणविशेष्यताया मुख्यविशेष्यताशब्देन बोधनेन जराशब्दादौ तदभावेन परिभाषायाऽप्रवृत्याऽजंरातीत्यर्थकाजराशब्दादावपि जरसादेशापत्तिः । नचात्रसाक्षान्मुख्येति निवेशे मानाभावः, अर्थवत्सूत्रस्थार्थवत्पदस्यैव मानत्वात्। अन्यथा ऽधातुपदस्य परम्परयाऽऽनुपूर्व्यवच्छिन्नविषयताप्रयोजकत्वेन परिभाषयैव सिद्धेस्तद्वैयर्थ्यं स्पष्टमेव । अत एव यच्छतीति सिध्यति। अन्यथा परिभाषाप्रवृत्त्या "छे च" इति तुकोऽप्रवृत्तिः स्यादितिवाच्यम् आनुपूर्व्या साक्षादवच्छिन्ना प्राथमिकोपस्थितीया या मुख्यविशेष्यता तत्प्रयोज्यत्वस्य ग्रहणेनादोषात् । लक्षणाग्रहात्प्राक् तथात्वस्य सुस्थत्वात् । *तत्रग्रहणमितिभावः इति* । अयमाशयः—पदस्य शब्दे अर्थे चोभयत्र शक्तिः, "घटमानय" "घटमुच्चारय" इत्युभयत्र प्रयोग दर्शनात्। उभयोरुपस्थितावेकांशस्य त्यागः कार्यः, उत तयोः विशेषणविशेष्यभाव इति विप्रतिपत्तौ, विशेषणतयाऽन्वयसम्भवे त्यागस्य निर्मूलत्वाद्विशेषणतयैवा(१)न्वयः । तथाच क्वचिदर्थप्रकारको बोधः क्वचिच्च शब्दप्रकारकः। अत्र शास्त्रेऽर्थे कार्यस्य बाधाच्छब्द एव विशेष्यः, अर्थस्तु प्रकार इत्येतन्मूलैषा परिभाषा सिद्धेति भावः ।

---

( १ ) विशेषणतयैव अन्वय इति । ननु अर्थस्य शब्दम्प्रति वाचकतासम्बन्धेन विशेषणत्वाङ्गीकारे प्रोढवानित्यादौ वृद्धिर्दुर्वारा वाचकतावच्छेदकानुपूर्वीसत्वे वाचकतानास्तीति वक्तुमशक्यत्वेन तेन सम्बन्धेन वहनकर्मीभूतवाचकोढशब्दसत्वात् । न च स्वविषयकबोधजनकतासम्बन्धेन शब्दे अर्थविशेषणत्वाङ्गीकारेण न दोष इति वाच्यम् ? जनकतायाःस्वरूपयोग्यतारूपाया ग्रहणे प्रोढवानित्यत्र वृद्धेर्दुर्वारत्वात् । फलोपधायकतारूपाया ग्रहणे तु यत्र प्रौढपदादुद्बुद्धसंस्काराद्यभावेन शाब्दबोधाभावस्तत्र वृद्ध्यभावप्रसङ्गादिति चेन्मैवम् । स्वविषयकबोधतात्पर्येणोच्चरितत्वसम्बन्धेन शब्दम्प्रत्यर्थस्य विशेषणत्वस्वीकारेणादोषादित्यन्यत्र विस्तरः ।

**त्यागे मानाभावोऽस्या मूलम् । अत्रार्थः कल्पितान्वयव्यतिरेककल्पितः, शास्त्रीयोऽपि गृह्यत इति "संख्यायाः" ( ५-१-२२ ) इति सूत्रे भाष्ये स्पष्टम् । इयं वर्णग्रहणेषु नेति "लस्य" ( ३-४-७७ ) इत्यत्र भाष्ये स्पष्टम् । अत एवैषा विशिष्टरूपोपादानविषयेति वृद्धाः । एतन्मूलकमेव "येन विधिः" ( १-१-७२ ) इत्यत्र भाष्ये पठ्यते-"अलैवानार्थकेन तदन्तविधिः" इति ।**

भैरवी ।

ननु लौकिकार्थवत्त्वं वाक्यस्यैव नतूढादिशब्दानामिति कथमूढवच्छब्देऽतिप्रसङ्गवारणमत आह—*अत्रार्थ इति* । *कल्पित इति* । कल्पितौ यावन्वयव्यतिरेकौ ताभ्यां कल्पित इत्यर्थः । कल्पितेत्यस्य शास्त्रवासनया कल्पित इत्यर्थः । शास्त्रीयोऽपीत्यपिना लौकिकस्य संग्रहः । यदुक्तं विशिष्टरूपोपादानविषयेति तस्य फलमाह—*इयमिति* । तेनोपेन्द्र इत्यत्र "आद्गुण" इत्यस्य प्रवृत्तिसिद्धिः । अन्यथोपगवेहागच्छेत्यादावेव स्यादिति भावः । *लस्येत्यत्र भाष्य इति* । तत्र हि लादेशे सर्वप्रसङ्गोऽविशेषादित्यनेन लुनातीत्यादावुद्भावितस्य अतिप्रसङ्गस्यानया परिहारं कृत्वा अनेन प्रकारेण खण्डनं कृतम् । *अत* *एव* । वर्णग्रहणेऽप्रवृत्तेरेव । उक्तार्थेऽन्यदपि प्रमाणमाह–*एतन्मूलकेति* । वर्णग्रह-

तत्वप्रकाशिका ।

नन्वर्थे शब्दे च शक्तिरेका उत भिन्ना, नाद्यः क्वचिदर्थस्य क्वचिच्छब्दस्येति नियमाप्रसक्तेः, यत्प्रकारकं यद्विशेष्यकं शक्तिज्ञानं तत्प्रकारकतद्विशेष्यकबोधस्य नियमेन पुनरुक्तदोषापातात् । नाप्यन्त्यः एकशक्तिनिरूपकार्थविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति अपरशक्तिनिरूपकार्थविषयकतात्पर्यज्ञानस्य प्रतिबन्धकत्वादुभयार्थविषयकबोधाप्रसक्तेरिति चेन्न । उभयांशे एका खण्डशः शक्तिरिति स्वीकारात् । तथाच धातुस्थल इवेहापि बोध इति भावः ।

तत्र क्व खण्डशः क्व भिन्ना क्व च विशिष्टा शक्तिरिति चेत्, यत्र बोधः भिन्नः, तन्निरूपिता विषयता च भिन्ना तत्र भिन्ना शक्तिः । यथा हर्यादिपदे । यत्र नानाधर्मावच्छिन्ना विषयता एका तत्र विशिष्टा । गोशब्दे यथा । यत्र प्रत्येकधर्मावच्छिन्ना विषयता नाना बोधश्चैकस्तत्र खण्डशः शक्तिः ।

केचित्तु अर्थविशिष्टे शब्दे शक्तिः, अर्थस्य लक्षणया बोधः । अपरेऽर्थे शक्तिः शब्दे लक्षणा इति वदन्ति । उभयमपि लक्षणाकल्पनेन गौरवग्रस्तमिति बोध्यम् ।

ननु वाक्यस्फोटवादिनाम्मते विशिष्टे एव शक्तिरिति विशिष्टस्यैवार्थवाचकत्वन्नावयवस्येति प्रौढम्पश्येति विशिष्ट एवार्थबोधकः न केवलम् ऊढशब्द ऊढवच्छब्दो वेत्यत आह—*लौकिकार्थवत्त्वमिति* । *शास्त्रवासनया कल्पितेति* । शब्दानां नित्यत्वेऽपि यथा शास्त्रप्रक्रियानिर्वाहाय "इको यणचि" इत्यादाविकोऽचि परे यण् इत्यर्थस्तथेहापि प्रौढम्पश्य प्रौढमानयेत्यादावावापोद्वापाभ्यां कल्पितो योऽर्थः प्रशब्दस्य प्रकृष्टार्थवाचकत्वमुढशब्दस्य वहनकर्मत्वमर्थस्तमादाय शास्त्रप्रवृत्तिरिति भावः ।

ननु यत्रान्वयव्यतिरेकेणापि अर्थज्ञानं न भवति, यथाऽत्यन्तस्वार्थिके कादौ, तत्र कथं प्रवृत्तिः स्यादत आह—*शास्त्रीयोऽपीति* । प्रत्यय इति संज्ञाकरणेन शास्त्रप्रामाण्यादगत्या सोऽपि गृह्यत इति भावः । *विशिष्टरूपोपादाने एवेति* । आनुपूर्वीमद्बोधकपदोपादान इत्यर्थः ।

नन्वानुपूर्वीमतो वाचकम् इति षष्ठीतत्पुरुषः, उत कर्मधारयः आनुपूर्वीमांश्चासौ बोधक इति, नाद्यः "एकाचो बशो भष्" इति सूत्रे एकाच्पदस्यानुपूर्वीमद्दुहादिशब्दानां बोधकत्वेन तत्राप्येतस्याः प्रवृत्तौ गर्दभादौ दभोऽनर्थकत्वाद्भष्भावो न स्यात्, नाप्यन्त्यः "वृद्धिर्यस्य" इति सूत्रे वृद्धिपदस्यानुपूर्वीमत्त्वादकारादेर्बोधकत्वाच्च तत्रैतत्प्रवृत्तौ शालीयादौ वृद्धेराकारस्यान-

किञ्च "स्वं रूपम्" ( १-१-६८ ) इति शास्त्रे स्वशब्देनात्मीयत्वाच्चि-नार्थो गृह्यते रूपशब्देन स्वरूपम् । एवं च तदुभयं शब्दस्य संज्ञीति तदर्थः । तत्रार्थो न विशेष्यस्तत्र शास्त्रीयकार्यासम्भवात्, किन्तु शब्दविशेषणम् । एवं चार्थविशिष्टः शब्दः संज्ञीति फलितम् । तेनैषा परिभाषा सिद्धेति भाष्ये स्पष्टम् ॥ १४ ॥

नन्वेवमपि महद्भूतश्चन्द्रमा इत्यत्र "आन्महतः" (६-३-४६) इत्यात्त्वा पत्तिरत आह—

## गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः ॥ १५ ॥

गुणादागतो गौणः । यथा गोशब्दस्य जाड्यादिगुणनिमित्तोऽर्थो वाही-

भैरवी ।

णेऽप्रवृत्तिमूलकमेवेत्यर्थः । यदि सर्वत्रैतस्याः प्रवृत्तिस्तदाऽलोऽनर्थकेनेति विशेषणोपादानं विफलमिति भावः । "तस्मादित्युत्तरस्य" इत्यादौ कृतयणादेशोऽपि वर्णग्रहणेऽस्या अप्रवृत्तौ-साधकः ।

सूत्रकारमते परिभाषायां साधकान्तरमाह-*किञ्चेति* । *एवञ्च* । अर्थस्य विशेषणत्वे च । *तदुभयम्* । शब्दार्थोभयम् । *तत्र* । उपस्थितयोस्तयोः । *शास्त्रीयेति* । शास्त्रबोध्य-मित्यर्थः । यथा "अग्नेर्ढक्" इति ढक्तदर्थादङ्गाराद्वहि सम्भवति । अधिकमन्यत्रोक्तम् ॥१४॥

अर्थत आन्तर्यस्य उक्तत्वात्तद्घटकतयार्थोपस्थितौ तत्प्रसङ्गेनाह—*नन्विति* । *एवम्* । उपस्थितार्थविशिष्टशब्दस्य ग्रहणेनानर्थकवारणेऽपि । *महद्भूत इति* । अमहति महत्वस्यारोपेणात्र महच्छब्दः प्रवर्त्तत इत्ययङ्गौणः, भूतशब्दः कर्तृक्तान्त इति सामाना-धिकरण्यम् ।

वाक्यार्थबोधे पदार्थबोधस्य कारणत्वात् तस्मिन् पदशक्तिज्ञानस्य कारणत्वात् तत्सौकर्य्या-याह—*गुणादागत इति* । "तत आगतः" इत्यण् गुणो ह्यत्रारोपितं प्रवृत्तिनिमित्तं तस्मादा-गतस्तज्ज्ञानजन्यशाब्दबोधविशेष्यः । एवञ्च गोगतजाड्यादिगुणज्ञासदृशजाड्यादिगुणज्ञानहेतु-

तत्वप्रकाशिका ।

र्थकत्वेन वृद्धसंज्ञानापत्तेः । सूत्रन्तु अशब्दाद्वापि तस्य पदान्तरेण समासे विशिष्टस्य वृद्धसंज्ञ-या चरितार्थम् । इति चेन्न, अनुपूर्व्यवच्छिन्नविषयताप्रयोजकत्वस्य विशिष्टरूपत्वेन प्रकृते ए-काच्पदस्यैकविशिष्टाच्घटितत्वावच्छिन्नविषयताप्रयोजकत्वेन तत्त्वाभावात् ।

नन्वेवमपि सङ्केतसम्बन्धेन वृद्धिपदत्वावच्छिन्ने वृद्धिपदस्य शक्तेः स्वीकारेण वृद्धिपदत्वस्य च जात्यखण्डोपाधिव्यतिरिक्तस्य सप्रकारत्वेनैव भानमितिनियमाद् वृद्धिपदत्वेनैवावच्छेद-कत्वं तच्चानुपूर्वीरूपमिति वृद्धिपदे तत्वसम्भवात्पुनस्तथैव दोष इति चेन्न । आनुपूर्व्या साक्षा-दवच्छिन्नायाः विषयतायाः ग्रहणेन प्रकृते परम्परयावच्छेदकत्वात् । ननु "गोतोणित्" इत्या-देः "सकृदुच्चरितः शब्दः सकृदर्थं गमयति" इति न्यायेनैकार्थोपस्थापकगोशब्दे प्रवृत्तिर्नस्यात्त-दर्थमावृत्तौ तु गौरवमत आह—*किञ्चेति* । एवञ्च सूत्रसिद्धैवेषा ॥ १४ ॥

*तत्प्रसङ्गेनेति* । सप्रसङ्गसङ्गत्येति भावः । अर्थत्वपरिभाषाघटकार्थः गौणः मुख्यो वा गृ-ह्यत इत्याशङ्कायां तदुपपादकतयोपोद्घातसङ्गत्याऽऽह—*नन्विति* । इत्यपि कश्चित् । गौणत्वं चात्र स्वशक्यार्थनिष्ठगुणसजातीयगुणसत्ताप्रयोज्यारोपविषयीभूतत्वम् । गौर्वाहीक इत्यत्र ब-लीवर्दादिरूपार्थस्य वाहीकेऽन्वयतात्पर्यानुपपत्तौ गोत्वस्य साधारणधर्माश्रयत्वेन वाहीके आ-रोपो भवति । एवञ्चारोपितगोत्ववान् वाहीक इति बोधो भवति तदेतदाह—*"तत आ-गत" इत्यादि* । गुणसत्ता वास्तविकी, आरोपिता तत्रारोपिता । संज्ञादावित्याह—

कः। अप्रसिद्धश्च संज्ञादिरपि तद्गुणारोपादेव बुध्यते। मुखमिव प्रधानत्वान्मुख्यः प्रथम इत्यर्थः। गौणे ह्यर्थे शब्दः प्रयुज्यमानो मुख्यार्थारोपेण प्रवर्त्तते। एवं चाप्रसिद्धत्वं गौणलाक्षणिकत्वं चात्र गौणत्वम्। तेन प्रियत्रयाणामित्यादौ त्रयादेशो भवत्येव। तत्र त्रिशब्दार्थस्येतरविशेषणत्वेऽप्युक्तरूपगौणत्वाभावात्।

किञ्चायं न्यायो न प्रातिपदिककार्य्ये, किन्तूपात्तं विशिष्यार्थोपस्थाप-

भैरवी।

कारोपविषयगोत्वरूपप्रवृत्तिनिमित्तजन्यशाब्दबोधविशेष्य इति फलितम्। *अप्रसिद्धश्चेति*। एतेनाभिव्यक्त(१) पदार्थ इति न्यायसंग्रहः। *संज्ञादिरित्यस्य*–संज्ञा आदिः प्रथमा यस्येत्यर्थः। बोध्यबोधकभावरूपषष्ठ्यर्थे बहुव्रीहिः। *तद्गुणारोपात्*। प्रसिद्धार्थसम्बन्धिगुणारोपहेतुकतद्धर्मारोपात्। *संज्ञादिरपि*। इत्यपिना अनुकरणशब्दसंग्रहः। अत एव "युष्मद्युपपदे" इत्यादौ "त्वमावेकवचने" इत्यादि न भवति। तद्गुणेत्यत्र तच्छब्दो यदीयगुणारोपस्तद्वाचकशब्दस्य बोधकस्तद्वाच्यसम्बन्धित्वार्थकषष्ठ्यन्तेन समासः। तथाच यः शब्दः संज्ञात्वेन विनियुज्यते तस्य शब्दार्थस्य या वाच्यो लोके प्रसिद्धार्थस्तद्वृत्तिगुणारोपस्य प्रकृतेऽपि निमित्तत्वेन गुणादागत इत्यवयवार्थसद्भावो ध्वनितः। मुखमिवेत्यनेन यत् सादृश्यमुक्तं तत्र हेतुमाह—*प्रधानत्वादिति*। प्रधानत्वञ्च वाच्यातिरिक्तार्थानपेक्षप्रवृत्तिकत्वरूपम्। *मुख्य*। इत्यत्र शाखादित्वाद्यप्रत्ययः। परिभाषाघटकनिष्कृष्टगौणत्वमाह—*एवञ्चेति*। *तेन*। एतादृशस्य गौणत्वस्याश्रयणेन। *उक्तरूपेति*। द्विविधेत्यर्थः। परिभाषायामेतादृशस्यैव गौणपदार्थस्य ग्रहणमित्यत्र मानन्तु सर्वादिसूत्रे 'संज्ञोपसर्जनप्रतिषेधो' वार्तिककृता य उक्तः स एव, सामान्यतो गौणपदार्थस्य ग्रहणे परिभाषयैव, उपसर्जनव्यावृत्तौ संज्ञोपसर्जनप्रतिषेधवार्तिकवैयर्थ्यं स्पष्टमेव। *गौणलाक्षणिकत्वम्*। इत्यस्य गौणः सन् लाक्षणिक इत्यर्थः। तेन शुद्धलाक्षणिकस्य व्यावृत्तिः, उक्तस्य गौणपदार्थस्य ग्रहणादेवाग्नायी देवताऽस्याग्नेय इत्यत्र "अग्निकलिभ्याम्" इतिलिङ्गविशिष्टपरिभाषया ढक्सिद्धिः। अत्र स्त्रियां पुम्शब्दस्य प्रवृत्तौ पुम्सम्बन्धो निमित्तन्न तु तदीयगुणारोपः।

सिद्धान्तरीत्यापि न तस्य प्रतिषेधस्य परिभाषया गतार्थतेति सूचयितुं सिद्धान्तार्थमाह—*किञ्चेति*। *उपात्तमिति*। शब्देन उपात्तमित्यर्थः। *विशेष्येत्यादि*। विशेषधर्मप्रकारकोपस्थितिजनकमिति यावत्। *विशिष्टरूपम्*। इत्यस्य पूर्वोक्त एवार्थः। अर्थवत्परिभाषामूल-

तत्वप्रकाशिका—

*प्रसिद्धार्थसम्बन्धीति*। *शुद्धलाक्षणिकस्येति*। सादृश्येतरसम्बन्धमूलकलाक्षणिकस्येत्यर्थः। तेनामहाब्राह्मणः इत्यत्रारोपितमहत्वस्य भानेऽपि सादृश्येतरसम्बन्धमूलकत्वादात्वसिद्धिः। एतेन गुणप्रयोज्यलक्षणाविषयत्वमिति परिष्कुर्वन्तः प्रयुक्ताः। महत्त्वगुणप्रयोज्याया एव लक्षणायास्तत्र सत्वात्। अत एव तत्र न गुणप्रयोज्येत्यपि तदुक्तिरपास्ता। अत एव।

"भेदाविमौ च सादृश्यात्सम्बन्धान्तरतस्तथा।
गौणौ शुद्धौ च विज्ञेयौ"

इत्युक्त्वा तात्कर्म्यान् यथा अतक्षा तक्षा इति शुद्धोदाहरणं वदन्त्यालङ्कारिकाः। अन्यथा गुणप्रयोज्यारोपविषयत्वादत्रापि गौणीलक्षणा स्यात्। *पूर्वोक्त एवेति*। साक्षादानुपू-

(१) अभिव्यक्तेति। अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः।
शास्त्रार्थस्तेषु कर्तव्यः शब्देषु न तदुक्तिषु॥

कं विशिष्टरूपं यत्र तादृशपदकार्य्य एव । परिनिष्ठितस्य पदान्तरसम्बन्धे हि गौर्वाहिक इत्यादौ गौणत्वप्रतीतिर्न तु प्रातिपदिकसंस्कारवेलायामित्य-न्तरङ्गत्वाज्ज्ञातसंस्कारबाधायोगः प्रातिपदिककार्ये प्रवृत्त्यभावे बीजम् । श्व-शुरसदृशस्यापत्यमित्यर्थके श्वाशुरिरित्यादौ "अत इञः" सिद्धये उपा-त्तमित्यादि । न च प्रातिपदिकपदं तादृशमिति वाच्यम् । तेन हि प्रातिपदि-कपदवत्त्वेनोपस्थितिरिति तस्य विशिष्यार्थोपस्थापकत्वाभावात् । निपातपदं तु चादित्वेनैव चादीनामुपस्थापकमिति तदुद्देश्यककार्य्यविधायके "ओत्"

भैरवी ।

कत्वादस्या अपि विशिष्टरूपोपादानविषय एव प्रवृत्तिरिति भावः । *विशिष्यार्थोपस्थापकत्व-ञ्च* । साक्षात्संज्ञाद्वारकपरम्परया वा विवक्षितम् । *विशिष्टरूप* । इत्यस्य स्वस्वरूपातिरिक्त-तत्तद्धर्मावच्छिन्नशक्ततावच्छेदकं विलक्षणं रूपमित्यर्थः फलितः । संज्ञाद्वारकपरम्परानिवेशात् "ओत्"सूत्रस्थेन गोभवदित्यत्रानया प्रगृह्यसंज्ञाव्यावृत्तिपरभाष्येण न विरोधः । निपातेत्यानु-पूर्व्यास्तथात्वात् । प्रातिपदिकमितिपदन्तु स्वस्वरूपप्रवृत्तिनिमित्तकमिति श्वाशुरिरित्यत्र "अत इञ्" सिद्धे राजश्वशुराद्यच न भवति तस्य तथात्वात् । यदुक्तं प्रातिपदिककार्य्येऽयं न्यायो नेति तद्बीजमाह—*परिनिष्ठितस्येत्यादिना* । स्वार्थं परिपूर्णम् अर्थान्तरमाकाङ्क्षत इति न्यायात् । हेः यत इत्यर्थः । *प्रातिपदिकसंस्कारेति* । सुप्सन्निधानसाध्यसाधुत्वरूपसं-स्कारकाल इत्यर्थः । *अन्तरङ्गत्वात्* । पूर्वकालप्राप्तत्वात् । उत्तरकालिकप्रतीतिविषयगौण-त्वज्ञानप्रयोज्यप्रवृत्तिकबहिरङ्गो गौणमुख्यन्यायादिति शेषः ।

नन्वस्य न्यायस्यार्थवद्ग्रहणपरिभाषासाध्यत्वेन यत्र विशिष्टं रूपं पदकार्य्यं प्रयोजकन्तत्र प्रवृत्तिरित्यस्य अर्थाल्लाभेन पदकार्य्य इत्येव सिद्धेऽधिकविशेषणोपादानमनर्थकमत आह—*श्वशुरेति* । *तादृशम्* । विशिष्यार्थोपस्थापकम् । प्रातिपदिकेतिपदं स्वस्वरूपारिक्ततत्त-द्धर्मावच्छिन्नशक्ततावच्छेदकधर्मविशिष्टन्नेत्याशयेनाह—*तेन हीति* । "ओत्" सूत्रस्थभा-ष्यविरोधमुपपादयति—*निपातपदमिति* । *चादित्वेन* । इत्यस्य परम्परयेत्यादिः । एतेन संज्ञाशब्दानां स्वस्वरूपमेव प्रवृत्तिनिमित्तमिति नियमेऽपि न विरोध इति ध्वनितम् । एवञ्च "ओत" इति सूत्रे यदत इति तन्न विशिष्टं रूपं प्रातिपदिकादिति यद्यपि विशिष्टं रूपं तथापि नोक्तविशिष्यार्थोपस्थापकमदन्तप्रातिपदिकादिति तु नोपात्तमिति भावः ।

यदि चोपात्तं विशिष्यार्थोपस्थापकमित्यस्यैव स्वरूपातिरिक्ततत्तद्धर्मावच्छिन्नशक्ततावच्छेदकं यत्रोपात्तन्तत्रेत्यर्थ आश्रीयते, तदा विशिष्टं रूपमिति स्वरूपकीर्त्तनमिति बोध्यम् । प्रातिपदिकपदान्निपातपदे वैलक्षण्यप्रयोजकं त्विदम्, प्रातिपदिकसंज्ञाप्रदर्शकसूत्रे संज्ञितावच्छेदकस्य तत्तद्धर्मस्यानुपादानम्, निपातसम्प्रदर्शकसूत्रे तु "चादयः" इत्यस्योपादानमिति । *गो-

तत्वप्रकाशिका ।

त्र्यवच्छिन्नविषयताप्रयोजकत्वरूप इत्यर्थः । *पदकार्ये एवेति* । पदकार्यत्वञ्च—सुबनिमि-त्तकत्वे सति स्त्रीत्वानिमित्तकत्वम् । "गोतो णित्" "त्रेस्त्रयः" इत्यादीनां विभक्तिनिमि-त्तकत्वेन "जानपद" इत्यादीनां स्त्रीत्वनिमित्तकत्वेन पदकार्यत्वाभावाद्गौणेऽपि प्रवृत्तिः ।

यत्तु पदोद्देश्यकत्वं तत्, तन्न तद्धितविधावनुपस्थितेः, तेषां सुबन्तात्प्रवृत्तावपि तदनुद्दे-श्यकत्वात् । नापि पदसम्बन्धित्वं णित्वस्यापि तथात्वात् । त्वद्भूत इत्यादौ त्वाद्यादेशानाप-त्तेश्च । नापि प्रत्ययानिमित्तकत्वं "हरितादिभ्योऽञः" इत्यस्यापि तथात्वेन तत्रैतस्या प्रवृत्तौ गौणेऽपि तेभ्यः फगापत्तेः । *चादय इत्यस्योपादानमिति* ।

अयम्भावः—प्रातिपदिकसंज्ञाप्रदर्शकसूत्रे संज्ञितावच्छेदकस्य तत्तद्धर्मस्यानुपादानेन सङ्कु-

(१-१-१५) इत्यादावेतत्प्रवृत्त्या गोऽभवदित्यादौ दोषो न। अग्नीषोमौ माणवकावित्यत्र प्रसिद्धदेवताद्वन्द्ववाच्यग्नीषोमपदस्य तत्सदृशपरत्वेऽन्तरङ्गत्वादीत्वषत्वे भवत एव। सदृशलाक्षणिकाग्निसोमपदयोर्द्वन्द्वे तन्नामकौ वित्यर्थके च नेत्वषत्वे। आद्ये गौणलाक्षणिकत्वादन्त्येऽप्रसिद्धत्वात्। अतएवाग्निसोमौ माणवकावित्यत्र गौणमुख्यन्यायेन षत्ववारणपरं "अग्नेः स्तुत्स्तोमसोमाः" (८-३-८२) इति सूत्रस्थं भाष्यं संगच्छते। गां पाठयेत्यादौ मुख्यगोपदार्थस्य पाठनकर्मत्वासम्भवेन विभक्त्युत्पत्तिवेलायां प्रयोक्तृभिर्गौणार्थत्वस्य प्रतीतावप्यपदस्याप्रयोगेण बोद्धृभिः सर्वत्र पदस्यैव गौणार्थकत्वस्य

भैरवी।

भवदिति*। अत्र गोशब्दोऽगवि गोगतगुणसजातीयगुणज्ञानजन्यगोत्वारोपेण वर्ततेऽतएव च्विप्रत्ययः। यत्र तु योगीश्वरशापादिना मुख्यगोरूपताप्राप्तिस्तत्र च्विप्रत्ययो नेष्यत इति तात्पर्य्यम्। *दोषो नेति*। प्रगृह्यसंज्ञाप्रयोज्यप्रकृतिभावरूपो दोषो नेत्यर्थः। गौणमुख्यन्यायस्वीकारे लक्ष्यासिद्धिरूपं दोषं परिहरति-*अग्नीषोमाविति*। *प्रसिद्धदेवतावाची*। इत्यनेन गौणत्वशङ्कानवबोधो ध्वनितः। *आद्ये*। सदृशलाक्षणिकयोर्द्वन्द्वे। *अन्त्ये*। तन्नामकयोर्द्वन्द्वे। उक्तार्थे भाष्यमुपष्टम्भकमाह-*अत एवेति। उक्ताभिप्रायकत्वादेवेत्यर्थः। उक्तन्यायस्याव्यापकत्वशङ्कावारणार्थायाह-*गाम्पाठयेत्यादाविति*। *प्रयोक्तृभिरित्यादि*। एतेन प्रातिपदिकप्रकृतिकसुबन्तस्यैव गौणत्वग्रहो यद्यपि बोद्धस्तथापि न क्षतिरिति बोधितम्।

ननु 'औतोम्शसोः" इतिसूत्रे विशिष्टरूपोपादानाभावेन न विशिष्यार्थोपस्थापकत्वमिति गोशब्दस्य गौणत्वेऽपि स्यादेवात्वमिति पदस्यैव गौणार्थकत्वमिति यद्गाम्पाठयेत्यस्य प्रयोगस्योपपत्तये व्युत्पाद्यते तत्किमर्थमिति चेन्न। अचिनवमसुनवमित्यत्रात्वम्प्राप्नोतीत्याशङ्क्य गोत इति वक्तव्यमिति वार्त्तिककृतोक्तन्तन्मतरीत्या निरुक्तविशिष्यार्थोपस्थापकरूपोपादानस्य सत्वादेवं व्युत्पादनस्यावश्यकत्वात्। यदि च शसा साहचर्य्यादिह सुपेवाम्गृह्यते तेन नोक्तदोष इति यथाश्रुतं सूत्रमेवास्त्विति विभाव्यते तदा पदकार्य्येऽप्ययन्न्यायो न प्रातिपदि-

तत्वप्रकाशिका।

तसम्बन्धेन प्रातिपदिकपदवति प्रातिपदिकपदस्य शक्तेः स्वीकारेण, अस्य च न्यायस्य साक्षादानुपूर्व्यवच्छिन्नमुख्यविशेष्यताप्रयोजकपदे एव प्रवृत्त्या प्रातिपदिकपदे तथात्वाभावेन परिभाषा न प्रवर्तते। या प्रातिपदिकपदवन्निष्ठमुख्यविशेष्यता तस्या आनुपूर्व्याः साक्षादवच्छिन्नत्वाभावात्। या च साक्षादवच्छिन्ना प्रातिपदिकशब्दत्वरूपानुपूर्वी, तस्या तन्निष्ठविशेष्यतानिरूपितप्रकारतासामानाधिकरण्येन मुख्यविशेष्यत्वाभावात्। निपातसंज्ञाविधायकसूत्रे "चादयः" इत्यस्यानुवृत्तेः संज्ञितावच्छेदकस्य तत्तद्धर्मस्योपादानेन निपातपदवत्त्वोपलक्षितचाद्यन्यतमत्वावच्छिन्ने शक्तेः स्वीकारेण चादित्वरूपानुपूर्व्या साक्षादवच्छिन्नायास्तत्प्रयोज्यमुख्यविशेष्यतायाः सत्वान्नौत्सूत्रस्थभाष्यविरोधः।

वस्तुतस्तु ओत्सूत्रस्थभाष्यन्त्वेकदेश्युक्तिः, "च्व्यन्तस्य प्रतिषेधो वक्तव्यः" इति वर्तिकमारम्भणीयमेव। चादौ च्विरव्ययमित्यस्य पाठेन च्व्यन्तस्यानुपूर्व्यवच्छिन्नत्वाभावात्, प्रकृतावारोपेण वर्तमानादेव च्विविधानेन तस्य गौणमुख्यार्थयोरसम्भवाच्च। तदाह—*यत्र तु योगीश्वरशापादिनेति*।

ननु पदत्वस्य सुबन्तत्वेनात्वाभावेऽपि सत्वेन प्रयोक्तुर्गौणार्थत्वग्रहे कथमात्वमत आह-*बोद्धृभिरिति*। यदा श्रोतुः गौणार्थकत्वग्रहसम्भवस्तदैव गौणमुख्यन्यायप्रवृत्तिरिति कल्प-

ग्रहेणात्वं त्वं सम्पद्यते अमहान् महान्भूतस्त्वद्भवतीत्यादिभाष्यप्रयोगे त्वाद्यादेशदीर्घादिनां करणेन चास्य न्यायस्य पदकार्य्यविषयत्वमेवोचितम्। अन्यथा वाक्यसंस्कारपक्षे तेषु तदनापत्तिः।

किञ्च शुक्लामित्युक्ते कर्मनिर्दिष्टं, कर्तृक्रिये चानिर्दिष्टे इत्याद्युक्त्वा इहेदानीं गामभ्याज कृष्णां देवदत्तेत्यादौ सर्वं निर्दिष्टं गामेव कर्म देवदत्त एव कर्त्ता अभ्याजैव क्रियेत्यर्थकेनार्थवत्सूत्रस्थभाष्येण कारकादिमात्रप्रयोगे योग्यसर्वक्रियाध्याहारे प्रसक्ते नियमार्थः क्रियावाचकादिप्रयोगः इत्येतत्तात्पर्यकेण सामान्यतः क्रियाजन्यफलाश्रयत्वमात्रविवक्षायां द्वितीयादीनां साधुत्वान्वाख्यानमित्यर्थलाभेन पाठनक्रियान्वयकाले पदस्यैव गौणार्थत्वप्रतीतिः प्रयोक्तुरपि। एवमेतन्मूलकः "अभिव्यक्तपदार्था ये" इति श्लोकोऽपि पदकार्य्यविषयकः। ध्वनितं चेदं सर्वादीनि' (१-१-२७) इति सूत्रे संज्ञाभू-

भैरवी।

ककार्य इति नियमस्यात्र व्यभिचार इति कस्यचित् कथनं यत्तन्न युक्तमिति सूचयितुमेवं व्युत्पादनमिति बोध्यम्। बोद्धः पदस्यैव गौणार्थकत्वग्रह इति नियमे भाष्यमप्युपष्टम्भकमाह—*अत्त्वन्तमित्यादिना*। आदिना यद्भवतीत्यस्य परिग्रहः। *अन्यथा*। पदकार्य्यविषयकत्वमेवेति नियमाभावे। *तेषु*। गाम्पाठयेत्यादिषु। *तदनापत्तिः*। आत्वाद्यनापत्तिः। इदं प्रयोक्तॄणान्तदा गौणार्थकत्वप्रतीतिमभ्युपेत्य।

वस्तुतः सापि नेत्याशयेनाह—*किञ्चेति*। इत्यादीत्यत्रादिना देवदत्त इत्युक्ते कर्त्ता निर्दिष्टः कर्मक्रिये अनिर्दिष्टे अभ्याजेत्युक्ते क्रिया निर्दिष्टा कर्तृकर्मणी अनिर्दिष्टे इत्यस्य परिग्रहः। *गामेव कर्म*। गामिति शब्दावाच्यमेव कर्म एवमग्रेऽपि बोध्यम्। *सामान्यतः*। क्रियात्वरूपसामान्यधर्मेण। *मात्रशब्देनाविशेषधर्मव्यावृत्तिः*। *साधुत्वेति*। अस्य कर्मणि द्वितीयेत्यादिसूत्रेणेत्यादिः। विशेषक्रियान्वये आह—*पाठनेति*। *गौणार्थत्वप्रतीतिरिति*। न च "कर्मणि च" इतिसमासनिषेधोऽत्र स्यादिति वाच्यम्? "शेषे विभाषा" इति विकल्पविधानेन "उभयप्राप्तौ" इति नियमाप्रवृत्तिपक्षेऽत्र समासस्यासत्वात् एतावता प्रबन्धेन गौणमुख्यन्यायस्य पदकार्य्यविषयत्वमेवेति व्यवस्थाप्याभिव्यक्तेतिन्यायान्तरन्तस्य प्रातिपदिककार्य्येऽपि प्रवृत्तिरिति केषाञ्चिन्मतन्तन्न युक्तमित्याह—*एवमिति*। *एवम्*। उक्तन्यायवत् श्लोकोऽपीत्यत्र श्लोकपदोपादानेन तस्य कल्पितत्वं सूचितम्। उक्तन्यायस्य पदकार्य्यविषयत्वमेवेत्यत्र मानान्तरमप्याह—*ध्वनितमिति*। ध्वनितमपीत्यर्थः। यदि प्रातिपदिककार्य्येऽपि न्यायस्य प्रवृत्तिः स्यात्तदा न्यायेनैव सिद्धे उक्तत्रितयासङ्गतिः स्यात्।

यत्तु प्रातिपदिककार्य्येपूक्तन्यायाप्रवृत्तिस्वीकारे युष्मदस्मदोः स्वरूपमात्राश्रयकार्य्याणामुपसर्जनतायामिव संज्ञायामपि प्रवृत्त्यापत्तिरेवम् "त्रेस्त्रयः" इत्यादेरपि तथेति तन्न "प्रत्ययोत्तरपदयोश्च" इतिसूत्रभाष्ये त्रिचतुर्युष्मदस्मद्ग्रहणेष्वर्थग्रहणं शब्दविशेषणमिति वार्त्तिकव्याख्यानावसरे उपस्थितार्थविशिष्टस्यैव प्रियतिसा अतित्वमित्याद्युदाहरणघटकतया प्रदर्शनेन

तत्वप्रकाशिका।

नेन प्रयोक्तुः पूर्वं गौणार्थकत्वग्रहेऽपि बोद्धुस्तथाभावान्न दोष इति भावः।

नन्वेवं कल्पने किं बीजमित्याह-*बोद्धुः पदस्यैव गौणार्थकत्वग्रह इति*। अत्र केचिदियं परिभाषा प्रत्याख्यानकल्पे नोपयुज्यते तत्कल्पे महत्पदेन महत्वसमवायिन उपस्थितौ शक्त्या सैवार्थपदेन ग्रहीतुमुचितोऽन्यथा घटमानयेत्युक्तौ स्वसमानकालीनपटत्ववत्तेन घटत्व-

तानां प्रतिषेधमारभता वार्त्तिककृता "पूर्वपर" इति (१-१-३४) सूत्रेऽसंज्ञयामिति वदता सूत्रकृताऽन्वर्थसंज्ञया तत्प्रत्याख्यानं कुर्वता भाष्यकृता च अर्थाश्रय एतदेवं भवति शब्दाश्रये च वृद्ध्यात्त्वे इति भोत्सूत्रस्थभाष्यस्य लौकिकार्थवत्त्वयोग्यपदाश्रय एष न्यायस्तद्रहितशब्दाश्रये च ते इत्यर्थः । "गोतः" (७-१-९०) इति यथाश्रुतसूत्रे विशिष्टरूपोपादानसत्त्वेनोक्तरीत्यैव तस्य भाष्यस्य व्याख्येयत्वादित्यलम् ॥ १५ ॥

अर्थवद्ग्रहणेन ( पा० १४ ) इत्यस्यापवादमाह—

## अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति ॥ १६ ॥

भैरवी ।

तादृशार्थविशिष्टानामेव उद्देश्यत्वकल्पनात् । यच्च प्रातिपदिककार्य्ये गौणमुख्यन्यायाप्रवृत्तौ सर्वनामसंज्ञासूत्रीयशेखरे संज्ञाशब्दव्यावृत्त्यर्थमभिव्यक्तेति न्यायमूलकं प्रसिद्धेरित्युक्तं तद्विरोध इति तन्न । सर्वनामेत्यन्वर्थसंज्ञाबलेनैवाभिव्यक्तेति न्यायमूलकं यत्प्रसिद्धार्थकत्वमन्यत्र दृष्टं तस्य लाभ इत्यर्थो न तु परिभाषामूलमित्यर्थोऽभिप्रेतः । अभिव्यक्तेति न्यायमूलकमित्यत्रोष्ट्रमुखमित्यत्रेव समास इत्यविरोधात् ।

नन्वस्य न्यायस्य, पदकार्य्य एव चेत् प्रवृत्तिस्तदा गोभवदित्यत्रानेन न्यायेन प्रगृह्यसंज्ञावारणपरभाष्यविरोधः प्रगृह्यसंज्ञायाः पदकार्य्यत्वाभावादिति चेन्न । निपातस्य तत्रोद्देश्यत्वात् तस्य पदत्वसम्भवात् नहि पदत्वेन यत्रोद्देश्यता तत्रेति निवेशोऽस्ति ।

ननु तथापि गौणमुख्यन्यायप्रदर्शनोत्तरङ्गौर्वाहीकः गाम्पाठयेत्यत्र गौणमुख्यन्यायेन वृद्ध्यात्वे न प्राप्नुत इति शङ्कायां अर्थाश्रये एतदेवम्भवतीत्यादिना प्रकारान्तरेण वारणङ्कृतन्न तु पदकार्य्यत्वाभावेन वृद्ध्यात्वविषये गौणमुख्यन्यायाप्रवृत्तिप्रदर्शनेन इत्येषा कल्पना भाष्यकारानभिप्रेतेत्यत आह—*अर्थाश्रयेति* । वास्तविकमर्थवत्त्वं वाक्यस्यैव न तु पदस्येत्याशयेनेह योग्यतानिवेशः । *तद्रहितेति* । सामानाधिकरण्यसम्बन्धेन लौकिकार्थवत्त्वविशिष्टपदत्वरहितेत्यर्थः ।

ननु तस्य भाष्यस्यार्थरहितवर्णमात्राश्रये इति योग्यार्थो झटिति प्रतीयते स एव कुतो नेत्यत आह—*गोत इतीति* । *यथाश्रुतेति* । गकारविवक्षायामसत्याम् ।

यत् तु प्रातिपदिककार्य्यं युष्मदाद्यादेशे त्रयादेशे च कर्त्तव्येऽभिव्यक्तेति न्यायस्य संज्ञाव्यावृत्तयेऽवश्यमाश्रयणान्नाभिव्यक्तेति न्यायस्य गौणमुख्यन्यायेन गतार्थतेति तन्न । गौणमुख्येतिन्यायादस्य, पृथक्त्वकल्पने न्यायान्तराश्रयणस्य गौरवपराहतत्वात् युष्मदादेशविषये दोषाभावस्य पूर्वमुपपादितत्वात् ॥ १५ ॥

तत्वप्रकाशिका ।

स्यापि पटे सत्वात तमानयित्वा कृती स्यात् । तथाच-समवायेन महत्वविशिष्ट इत्याद्यर्थे महद्भूत इत्यादौ नास्य प्रवृत्तिः, समवायेन महत्वस्य तत्रासत्वात् । नवा महत्वसमवाय आरोपयितुं शक्यते । शक्यतावच्छेदके लक्षणास्वीकारेण महत्त्वस्य शक्यतावच्छेदकत्वेऽपि समवायस्य तदभावात् । आरम्भपक्षे य एवार्थो वक्तृतात्पर्यविशेष्यः स एवात्मीयपदेन गृह्यत इति आत्मीयार्थवाचकत्वम्महद्भूत इत्यत्राप्यक्षतमित्यस्ति परिभाषोपयोगः । अत एव किञ्चेत्याद्युक्त्वाऽऽरम्भपक्ष एवास्या उल्लेखः कृत इत्याहुस्तन्मन्दम्, अनयापि शक्योपस्थितार्थो ग्राह्यः । प्राथमिकोपस्थितत्वात् विशेषाभावाच्चेत्युभयकल्प एषोपयुज्यते ॥१५॥

"येन विधिः" (१-१-७२) इत्यत्र भाष्ये वचनरूपेण पठितैषा। तेन राज्ञा साम्नेत्यादावल्लोपो, दण्डी वाग्मी इत्यादौ "इन्हन्" (६-४-१२) इति नियमः, सुपयाः सुस्रोता इत्यादौ "अत्वसन्तस्य" (६-४-१४) इति दीर्घः, सुशर्म्मा सुप्रथिमेत्यादौ "मनः" (४-१-११) इति ङीब्निषेधश्च सिद्धः।

अन्ये तु परिवेविषीध्वमित्यत्र ढत्वव्यावृत्तये क्रियमाणात् "इणः षीध्वम्" (८-३-७८) इत्यत्राङ्गग्रहणादर्थवत्परिभाषाऽनित्या तन्मूलकमिदमित्याहुः। "विभाषेटः" (८-३-७९) इत्यत्रानर्थकस्यैव षीध्वमः सम्भवादत्रापि तस्यैव ग्रहणमिति भ्रमवारणायाङ्गादिति परे॥ १६॥

भैरवी।

अर्थवत्परिभाषामूलकत्वाद्गौणमुख्यन्यायं व्युत्पाद्यार्थवत्परिभाषयैव प्राप्तातिप्रसङ्गस्य वारणाय परिभाषान्तरमाह—*अर्थवदित्यादिना*। इयञ्चापूर्वपरिभाषेति परमतखण्डनावसरे व्यक्तीभविष्यति। ।। परिभाषाघटकतृतीयान्तद्वयन्तदन्तविधिबोधकसूत्रघटकं यत्तृतीयान्तं येनेति तस्य विशेषणमित्यभिप्रेतमतोऽत्राऽनर्थकेन चेत्यनन्तरं विशेषणेनेति शेषो बोध्यः। *वचनरूपेण*। वार्त्तिकत्वेन। एतेनास्याः परिभाषाया अपूर्वत्वं ध्वनितम्। *तेन*। विशेषणबोधकान्नादिशब्दानान्तत्तत्सूत्रघटकानान्द्विविधविशेषणबोधकत्वेन परिभाषापठितक्रमेणोदाहरणमाह-*राज्ञेत्यादिना*। *अल्लोपः*। "अल्लोपोऽनः" इत्यल्लोपः। सर्वेषाम्प्रथमान्तानां सिद्ध इत्यत्रान्वयः। दण्डी वाग्मीत्यादावादिपदग्राह्ये दण्डिनौ वाग्मिनौ इत्यादौ नियमः सिद्ध इत्यत्रान्वयः दण्डी वाग्मीत्यत्र तु "सौ च" इति दीर्घः। *सुस्रोता इति*। आगमसन्निधाने तद्विशिष्टस्यैवार्थवत्ताया भाष्यसम्मतत्वादिहानर्थकत्वम्। लोके यथाङ्गाधिक्येऽधिकाङ्गविशिष्टस्यैव देवदत्तग्रहणेन ग्रहणन्दृश्यते तथेह विशिष्टस्यैव वाचकतासम्बन्धेन अर्थवैशिष्ट्यमिति भावः।

प्राचां मतमाह—*अन्येत्वित्यादिना*। *परिवेविषीध्वमित्यत्र*। परिपूर्वकाद्विषधातोर्विधौ लिङ् सीयुटः सस्य लोपः। *ढत्वेति*। षीध्वन्निमित्तकेत्यादिः। *तन्मूलकम्*। अर्थवत्परिभाषाऽनित्यत्वमूलकम्। आहुरित्यनेन सूचितामरुचिम्प्रकटयति-*"विभाषेटः" इत्यादिना। *अत्रापि*। पूर्वसूत्रेऽपि। *तस्यैव*। अनर्थकस्यैव। अर्थाधिकारस्य न्याय्यत्वादिति प्राप्तिभ्रमबीजमिह द्रष्टव्यम्। *इति पर इति*। एतेनानिनस्मन्ग्रहणानीति परिभाषाया वाचनिकत्वं दृढीकृतम्।

यत्तु "कार्मस्ताच्छील्य" इति ब्राह्मोजातावितिच टिलोपनिपातनमस्या ज्ञापकम्। एतत्परिभाषाभावे तयोरवयवस्यानोऽनर्थकतया "अन्" इति प्रकृतिभावाप्राप्त्या "नस्तद्धिते" इति टिलोपेनैव सिद्धे कार्म इत्यादिनिपातनानर्थक्यमिति। तन्न। इनाद्यंशे तस्य ज्ञापकत्वासम्भवात्। नचार्थवत्परिभाषाया अनित्यत्वमेव ज्ञाप्यतान्तावतैव सर्वत्रेष्टसिद्धिरिति वाच्यम्? तस्या अनित्यत्वेऽपि एष्वेव तस्या अप्रवृत्तिरित्यर्थबोधनायैतस्या आवश्यकत्वात्। "व्याख्यातव्यनाम्नः" "अन्तर्बहिर्भ्याञ्चलोम्नः" "स्थाम्नमोऽकार" इत्यादिनिर्देशानां विशेषापेक्षत्वेन सौत्रत्वेनापि वोपपत्तिरिति बोध्यम्। न चार्थवद्ग्रहणपरिभाषानुरोधात् "विभाषेटः" इति

तत्वप्रकाशिका।

*वारणायेति*। अपवादसङ्गत्येतिशेषः। *विशेषणेनेति*। यद्वा प्रकृत्यादित्वादर्थवताऽनर्थकेनेत्यभेदे तृतीया। प्रयोज्यकर्तृत्वेन वा तृतीयेति बोध्यम्। *अङ्गग्रहणादिति*। नन्वसूधातोः कर्मव्यतिहारे व्यतिषीध्वमित्यत्रार्थवतः षीध्वमसम्भवात्तत्र षत्वव्यावृत्तयेऽङ्गादितीतिचेन्न, "उपसर्गप्रादुर्भ्याम्" इति विहितषत्वस्यासिद्धत्वेन तदभावात्। *भ्रमवारणायेति*।

ननु "उश्च" ( १-२-१२ ) इत्यत्र "लिङ्सिचौ" ( १-२-११ ) इत्यत आत्मनेपदेष्वित्येव संबध्येतानन्तरत्वादत आह—

**एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः ॥१७॥**

वा शब्द एवार्थे । परस्परान्वितार्थकपदानां सहैवानुवृत्तिनिवृत्तीत्यर्थः । एककार्य्यनियुक्तानां बहूनां लोके तथैव दर्शनादिति भावः ।

यत्त्वत्र ज्ञापकं "नेड्वशि" (७-२-८) इत्यत इडित्यनुवर्त्तमाने "आर्धधातुकस्येट्" (६-२-३५) इत्यत्र पुनरिड्ग्रहणं तद्धि नेत्यस्यासम्बन्धार्थमिति, तन्न । "दीधीवेवीटाम्" (१-१-६) इति सूत्रे भाष्ये तत्रत्येड्ग्रहणप्रत्याख्यानायेड्ग्रहणेऽनुवर्त्तमाने पुनरिड्ग्रहणस्येटो गुणरूपविकाराभावार्थकत्वस्योक्तत्वेन तद्विरोधात् । नञो निवृत्तिस्तु क्वचिदेकदेशोऽप्यनुवर्त्तते इति न्यायेन सिद्धा ।

वस्तुतस्तु "दीधीवेवीटाम्" ( १-१-६ ) इति सूत्रस्थभाष्यमेकदेश्युक्तिः "आर्द्धधातुकस्य" ( ७-२-३५ ) इति सूत्रस्थेड्ग्रहणस्य "नेड्वशि" ( ७-२-८ ) इति सूत्रे भाष्ये प्रत्याख्यानात् । तत्करणेन गुरुतरयत्नमाश्रि-

भैरवी ।

सूत्रे पौर्व्वशब्दासम्बन्ध एवास्त्विड्ग्रहणं ज्ञापकमेव भविष्यतीति वाच्यम् ? परत्र वक्ष्यमाणस्यैकयोगनिर्दिष्टानामिति न्यायस्य जागरूकतया पौर्व्वशब्दासम्बन्धस्य वक्तुमशक्यत्वात् ॥ १६ ॥

अतएव ताम्परिभाषामवतारयति-*ननु उश्चेत्यादिना* । *अनन्तरत्वात्*। अव्यवहितत्वात्। एकस्मिन् योगे कार्य्यं इत्यर्थो वाभिप्रेतः न तु योगशब्दः सूत्रपरः "चिण्भावकर्मणोः" इति सूत्रे पुनश्चिण्ग्रहणात् । तद्धि "चिण्तेपद" इत्यतोऽनुवृत्तचिण्ग्रहणस्य "न रुध" इति सूत्रे नकारसम्बन्धितया प्रतीतत्वेन नकारस्यानुवृत्तेश्चिणोऽपि सम्बन्धाभावः स्यादतः क्रियते । अत्रैवकार एव प्रयोक्तव्ये वाशब्दद्वयमलङ्काराय। परिभाषायाः फलितार्थमाह-*परस्परान्वितार्थेति*। अत्र परस्परान्वितेतिकथनेनान्वितयोरेकसूत्रनिर्दिष्टयोः सहानुवृत्त्याद्यभावेऽपि क्षत्यभावः सूचितः । अतएव परिभाषायां योगपदस्य कार्य्यपरत्वमेवेति युक्तम् । परिभाषाया लोकसिद्धत्वमाह-*एकेति* । अस्याः ज्ञापकसिद्धत्ववादिमतङ्खण्डयति-*यत्त्विति । तत्रत्य इति* । "दीधीवेवीटाम्" इति सूत्रस्येत्यर्थः । विकारस्य इष्टत्वादाह-*गुणरूपेणेति। तद्विरोधादिति* । यदि नञोऽसम्बन्धार्थमेव "आर्द्धधातुक" इति सूत्रस्थमिड्ग्रहणं स्यात् । तदेड्ग्रहणेऽनुवर्त्तमान इत्युक्तिर्विरुद्धा स्यात् । नञो निवृत्तिबोधकतया "आर्द्धधातुक" इति सूत्रस्थेड्ग्रहणस्य चारितार्थ्यसम्भवादिति भावः ।

नन्वियं परिभाषा यदि लोकसिद्धा तदानयैव नञ्सम्बन्धस्य तत्रावश्यकत्वेनेड्ग्रहणेऽनुवर्त्तमाने पुनरिड्ग्रहणङ्गुणाभावार्थमिति कथनं विरुध्येतेत्यत आह-*नञो निवृत्तिस्त्विति* ।

ज्ञापकत्ववादिमतं सर्वथा भाष्यविरुद्धमिति बोधयितुमाह-*वस्तुतस्त्विति* । तत्करणेन*। "आर्द्धधातुक" इतिसूत्रे इट्शब्दस्य करणेन । *गुरुतरयत्नमिति*। तत्रेड्ग्रहणस्य करणम्पुनस्त-

तत्वप्रकाशिका ।

वस्तुतस्तत्तत्र पौर्व्वमोऽर्थवत्वासम्भवात्तत्रार्थवत्परिभाषाबाधेऽप्यत्र बाधे मानाभावाज्ज्ञापकमेव ॥ १६ ॥

*एकयोगनिर्दिष्टेति* । अत्र ज्ञापकम् । "हनः सिच्" इत्यत्र सिज्ग्रहणम् । अन्यथा

त्यैतत्प्रत्याख्यानस्यायुक्तत्वात् ॥ १७ ॥

नन्वलुगधिकारः प्रागनङ उत्तरपदाधिकारः प्रागङ्गाधिकारादित्यनुपपन्नमेकयोगनिर्दिष्टत्वात् । तथा "दामहायनान्ताच्च" ( ४-१-२७ ) इत्यादौ "संख्याव्ययादेः" ( ४-१-२६ ) इत्यतः सङ्ख्यादेरित्यनुवर्त्ततेऽव्ययादेरिति निवृत्तमिति चानुपपन्नमत आह—

## क्वचिदेकदेशोऽप्यनुवर्त्तते ॥ १८ ॥

एकत्रार्थे योगः सम्बन्धस्तेन निर्दिष्टयोः समुदायाभिधायिद्वन्द्वनिर्दिष्टयोरित्यर्थ इति "पत्तान्निः" ( ५-२-२५ ) इति सूत्रे कैयटः । तावन्मात्रांशे स्वरितत्वप्रतिज्ञाबलाल्लभ्यमिदम् । स्पष्टा चेयं "दामहायनान्ताच्च"

भैरवी ।

स्य नियमार्थत्वस्य स्वकरणम् । तदुत्तरं सामर्थ्यादिटो "वतो वा" इति दीर्घस्य इट्स्थानिकस्य स्वीकरणमपि च अचेतादित्यादौ सवर्णदीर्घस्य "सिज्लोप एकादेश" इति वचनसामर्थ्यात् प्रवृत्तिस्वीकरणमित्यादिसाधकगुरुतरयत्नमित्यर्थः । *एतत्प्रत्याख्यानस्य* । "दीधीवेवीटाम्" इति सूत्रस्थेड्ग्रहणप्रत्याख्यानस्य ।

यत्तु अस्यां परिभाषायां "हनः सिज्" इति सूत्रस्थसिज्ग्रहणस्य ज्ञापकत्वमिति । तन्न । लोकन्यायसिद्धपरिभाषया "लिङ्सिचौ" इति सूत्रस्थसिज्ग्रहणस्यासम्बन्धे प्राप्ते सिज्ग्रहणस्यावश्यकत्वात् ॥ १७ ॥

पूर्वोक्ता परिभाषा न सर्वत्रेष्टसाधिकेति परिभाषान्तरमवतारयति-*नन्विति । एकयोगेति परिभाषायामपिशब्द एवार्थकः । एवञ्च पूर्वपरिभाषया अविरोधात् नैवात्र प्रवृत्तिरित्यतो लक्ष्यनुरोधाद् व्यवस्था स्वीकार्य्या । परिभाषाघटकैकदेशपदोपादानस्वारस्यसिद्धं कैयटप्रदर्शितम्परिभाषार्थमाह-*एकत्रार्थ इति । द्वन्द्वनिर्दिष्टयोरिति*। यथा "सङ्ख्याव्ययादेः" इत्यत्र अव्ययपदम् । कैय्यट इत्यभिधानमरुचिबोधनाय, सा च यदि द्वन्द्वनिर्देशस्थल एवास्याः प्रवृत्तिस्तदा अलुगधिकारः प्रागानङ इति प्रागुक्तव्यवस्थाया असङ्गतिरेव ।

किञ्च "औतोम्शसोः" इति सूत्रेऽनेन न्यायेन "वा सुपि" इति सूत्रस्थासुब्ग्रहणसम्बन्धकथनपरभाष्यविरोधश्चेति । परिभाषार्थस्तु पूर्वपरिभाषाघटकयोगपदवदिहापि योगपदार्थपरम् । एकदेशपदञ्च समुदायावयवैकशब्दपरमिति । परिभाषायां साधकमाह-*तावन्मात्रेति* । तथाचोभयोः परिभाषयोः समासासमासयोः प्रवृतिः, अस्या असमासेऽपि प्रवृत्तिस्वीकारादेव "आर्द्धधातुक" इति सूत्रस्थेड्ग्रहणप्रत्याख्यानपरभाष्यस्योपपत्तिः ।

न च यदि प्रकृतपरिभाषायाः प्रवृत्तिर्न स्यात् तदा नकारसम्बन्ध्येड्ग्रहणस्य "आर्द्धधातुक" इति सूत्रे सम्बन्धः स्यात् । तथा च विध्यप्रसिद्धिरिति वाच्यम् ? विध्यनुमानेन विकल्पस्यैव फलत्वात् । तथाहि-वलाद्यार्द्धधातुकम् इडागमि इडभावादिति न्यायो बोध्यः । स्वबोधकवाक्योद्देश्यत्वमिह हेतुतावच्छेदकसम्बन्धः । न चैवम् "आर्द्धधातुक" इति सूत्रे वेत्येव पठनीयन्नेडित्यनुवृत्त्या विकल्पस्य सिद्धत्वादिति वाच्यम् ? अत्र वाशब्दस्योच्चारणेन "नेड्वशि" इत्यस्य नियमार्थत्वकल्पनेन गौरवस्य स्पष्टत्वात् । "नेड्वशि" इति तु वक्तुमशक्यम् । सर्वत्र विकल्पापत्तेः ।

तत्वप्रकाशिका ।

"लिङ्सिच" इत्यतः सिच्पदानुवृत्त्यैव सिद्धे किं तेन ॥ १७ ॥

*अवतारयतीति* । अपवादसङ्गत्येति शेषः ॥ १८ ॥

( ४-१-२७ ) इति सूत्रे "औतोऽम्शसोः" ( ६-१-९३ ) इति सूत्रे च भाष्ये पूर्वा च ॥ १८ ॥

ननु "त्यदादीनामः" ( ७-२-१०२ ) इत्यादिनेममित्यादावनुनासिकः स्यादत आह—

**भाव्यमानेन सवर्णानां ग्रहणं न ॥ १९ ॥**

"अणुदित्" ( १-१-६९ ) सूत्रेऽप्रत्ययः इत्यनेन सामर्थ्यात्सूत्रप्राप्तं जातिपक्षेण प्राप्तं गुणाभेदकत्वेन च प्राप्तं नेत्यर्थः। अत एवाणुदित्सूत्रे प्रत्ययादेशागमेषु सवर्णग्रहणाभावं प्रकारान्तरेणोक्त्वैवं तर्हि सिद्धे यदप्रत्यय इति प्र-

भैरवी।

यत्तु अस्यां परिभाषायां ज्ञापकम् "तस्मादित्युत्तरस्य" इति सूत्रे निर्दिष्टपदस्य पुनरुच्चारणमिति शब्दस्योच्चारणम्। अन्यथा निर्दिष्टपदवदिति शब्दमपि न कुर्य्यादिति। तन्न। ज्ञापकस्वभावविरोधात् ज्ञापकस्य ह्ययं स्वभावः यद्वचनं ज्ञाप्यन्तस्य वचनस्याभावे यज्ज्ञापकत्वेनाभिमतन्तत्साध्यस्य प्रयोजनस्य अन्यथासिद्धिर्वचने ज्ञापिते तस्य वचनस्यान्यत्र फलन्तद्वचनसहायेन ज्ञापकस्य स्वविषये चारितार्थ्यमिति। न चेह तथा सम्भवतीति स्पष्टमेव। अत्रायं विवेकः परस्परान्वितार्थकेति प्रागुपादानाद्यत्र तादृशार्थसम्बद्धस्यैव पदसमूहस्योत्तरत्र सम्बन्धविवक्षा तत्रार्थाधिकार इति व्यवहारः, यत्र शब्दाधिकारस्यैव विवक्षा तत्र यावच्छब्दमात्रे स्वरितत्वप्रतिज्ञा, तावन्मात्रस्योत्तरत्र सम्बन्ध इति ॥ १८ ॥

पूर्वपरिभाषाव्याख्यानावसरे गुरुतरयत्नस्योक्तत्वात् तन्मध्ये ऽग्रहीदित्यत्र दीर्घसाधनकयत्नस्याप्युपस्थितत्वात्। तत्र यथा "ग्रहोऽलिटि" इति दीर्घस्य उपस्थितिस्तथाग्रहणकशास्त्रबलादन्यत्रापीट् प्राप्नोतीति तद्वारणाय इडिडेवेतिनियमार्थम् "आर्द्धधातुक" इतिसूत्रे इड्ग्रहणमावश्यकमितीड्ग्रहणप्रत्याख्यानविरोधः, एवं त्यदादीनाम" इत्यादौ दीर्घोऽपि प्राप्नोतीतिशङ्कामपाकर्तुं परिभाषामवतारयति—*नन्विति*। *अनुनासिकः स्यादिति*। दीर्घापत्तिस्तु नोक्ता ग्रहणकशास्त्रेण दीर्घस्योपस्थितत्वेऽपि मकारादत्यन्तविसदृशत्वादिति भावः। नेयं भाव्यमानपरिभाषा ज्ञापकसाध्या, नाप्यपूर्वा वाचनिकी, किन्तु सौत्राप्रत्ययपदेन बोध्येत्याह—*अणुदित्सूत्र इत्यादिना*। नन्वप्रत्यय इत्यनेन सवर्णग्राहकत्वाभावलाभेऽपि आदेशादौ कथं तदभावलाभ इत्यत आह—*सामर्थ्यादिति*। सामर्थ्यञ्चाग्रे स्फुटम्। *सूत्रेण*। अणुदित्सूत्रेण। इदं व्यक्तिः पदार्थ इति पक्षे। जातिपक्षे त्वाह—*जातिपक्ष इति*। व्यक्तिपक्ष एव प्रकारान्तरेण प्राप्तं सवर्णग्रहणं विधीयमानविषये वारयति—*गुणाभेदकत्वेनेति*। अस्य बोध्यत इति शेषः। अप्रत्ययग्रहणेन सामर्थ्यात्सिद्धस्यैव बोधितस्य वचनस्य सर्वनिषेधकत्वादेव। *प्रकारान्तरेणेति*। "ईहल्यघोः" इतिदीर्घनिर्देशेन "ॠतो वा" इति दीर्घविधानेन प्रत्ययांशेऽनभिधानेनेत्यर्थः। यदुक्तं पूर्वत्र सामर्थ्यादिति तस्य उपपादनं क्त्वान्तेन द्रष्टव्यम्। तज्ज्ञापयति बोधयति एवं कथनेन सिद्धैव परिभाषा एकदेशानुमत्याऽप्रत्ययग्रहणेन

तत्वप्रकाशिका।

*शङ्कामपाकर्तुमिति*। उपपादकत्वसङ्गत्येति भावः। *इममिति*। प्रथमोपस्थितिकत्वादिमाविति तु नोक्तम्। तत्र सत्यप्यनुनासिकेऽकारे वृद्ध्या शुद्धौकारस्य सम्भवात्, "अमोऽनुनासिको नह्रौ" इत्यत्र नह्रावित्यैचोऽप्युपलक्षणमित्युक्त्यैचोऽनुनासिकत्वाभावाच्च। नापीमइत्युक्तम्, अत्रापि गुणेन शुद्धस्यैव सम्भवात् परस्याधिक्येन तद्गुणकस्यैव सम्भवाच्च। *भाव्यमानेनेति*। भाव्यमानबोधकेनेत्यर्थः।

तिषेधं शास्ति तज्ज्ञापयति भवत्येषा परिभाषा "भाव्यमानेन सवर्णानां ग्रहण न" इति ।

किञ्च 'ज्याद् ईयस' इत्येवान्तर्य्यतो दीर्घे सिद्धे "ज्यादादीयसः"

भैरवी ।

बोध्यते इत्यभिहितम् । प्रत्ययशब्दस्य च प्रत्ययसंज्ञकपरत्वमेवेति च ध्वनितम् ।

तथाहि-अणुदित्सूत्रे भाष्ये "अप्रत्यय इति किमर्थम्"? "सनाशंसभिक्ष उः" अल्पमिदमुच्यते, अप्रत्ययादेशटित्किन्मित इति वक्तव्यम् "आदेशोदाहरणम्" "इदम इश्" इत्याद्युक्तम् । एतदुपक्रमभाष्ये प्रत्ययांशे प्रकारान्तरोपन्यासकाले प्रत्ययपदस्य योगार्थप्रदर्शनेन कृत्रिमाकृत्रिमन्यायस्वारस्येन च प्रत्ययपदस्य प्रत्ययसंज्ञकपरत्वमेवोचितम् । तत्रैव भाष्ये 'भाव्यमानेन' इति वचनं गृहीत्वाऽप्रत्ययपदस्य वैयर्थ्योपपादनं कृतम् । तेन प्राचीनपठितत्वमस्मिन् वचन इति च ध्वनितम् ।

अस्या ज्ञापकसिद्धत्वमपि "ज्यादात्" इति सूत्रादस्तीति तमेव ज्ञापकमाह-*किञ्चेति* । तदुक्तं भाष्ये—"किमर्थं ज्यादादित्युच्यते न ज्याद् इत्येवोच्यताम् । का रूपसिद्धिः, आन्तर्य्यतो दीर्घस्य दीर्घो भविष्यति, एवं तर्हि इदमेव ज्ञापयति भवत्येषा परिभाषा भाव्यमानेन सवर्णानां ग्रहणन्न" इति । अत्रान्तर्य्यतो दीर्घस्य दीर्घो भविष्यतीति कथनं यदि व्यक्तिपक्षे-"अणुदित्"सूत्रेण तदा तस्मिन् सूत्रेऽप्रत्ययपदस्य सत्वेऽपि तादृशोपपादनेन प्रत्ययपदस्य प्रत्ययसंज्ञकपरत्वमेवेत्याशयेन । जातिः पदार्थ इति पक्षेण चेत्तथापि अप्रत्ययः इत्यस्य तदाऽणुदित्सूत्रेऽण्ग्रहणस्य अनावश्यकतया तस्य प्रत्याख्यानेन उदिदंशे उदित्करणसामर्थ्येन तत्राप्रत्ययस्येत्यस्य सम्बन्धाभावेन प्रतियोगिसमर्पकं प्रत्ययपदं प्रत्ययसंज्ञकपरमेवेति बोध्यम् । इदं ज्ञापकं सामान्यापेक्षम्, तेनास्याः परिभाषायाः सर्वेण प्रकारेण प्राप्तस्य सवर्णग्रहणस्य बाधकत्वम् ।

तत्वप्रकाशिका ।

नन्वनया सवर्णग्रहणे निषिद्धे, उच्चारितव्यक्तेरेव ग्रहणं भविष्यति । न तु तद्व्यतिरिक्तस्य धर्मान्तरयुक्तस्य वा, एवञ्चोदात्तानुदात्तादिधर्मवतां विधानं न स्यादिति चेन्न सवर्णानां ग्रहणं नेत्यस्य स्वावृत्तिर्योऽसौ स्वरत्वव्याप्यधर्मेतरः पाणिनीयसंकेतविषयतावच्छेदकधर्मस्तद्वतां ग्रहणं नेत्यर्थात् । स्वावृत्तिधर्मे पाणिनीयसङ्केतेतिविशेषणेन तत्पुरुषीयत्वतत्कालिकत्व तद्व्यक्तित्वेत्यादिधर्ममादाय न दोषस्तेषां पाणिनीयसङ्केतविषयतावच्छेदकत्वाभावात् । यणादिपदेन वकारादीनां ग्रहणं च सिध्यति वत्वादीनामपि तादृशधर्माभावात् । "ऊकालोऽज्" इत्यनेन ह्रस्वादिसंज्ञाविधानात्, "मुखनासिक" इति सूत्रेणानुनासिकसंज्ञाविधानात्तेषां तादृशधर्मत्वेन तद्वतां व्यावृत्ताविममित्यादौ नानुनासिकः । भवितेत्यादौ च न दीर्घेकार इति बोध्यम् । 'सर्वेभ्य' इत्यादावनुदात्तत्वादिधर्मसिद्धये स्वरत्वव्याप्येतरत्वेति विशेषणम् ।

अन्येतु स्वतादात्म्य स्वनिष्ठशक्तिनिरूपकतावच्छेदसमुदायघटकत्वान्यतरसम्बन्धेन स्वविशिष्टावृत्तिर्योऽसौ तद्व्यक्तित्व तत्पुरुषीयत्व स्वरत्वव्याप्योदात्तत्वादिधर्मेतरः श्रावणप्रत्यक्षविषयतावच्छेदको धर्मस्तद्वतां ग्रहणं नेत्यर्थः । यणाद्यर्थमन्यतरसम्बन्धेन वैशिष्ट्यम् । स्वतादात्म्यमादाय यणादावव्याप्तिवारणाय स्वविशिष्टनिरूपितवृत्तित्वसामान्याभाववतो धर्मस्य ग्रहणमिति वदन्ति । *प्रत्ययांशेऽनभिधानेनेति* । अर्थविषयकबोधजनकत्वं शक्त्यधीनं, शक्तिश्च लोकाधीना, लोके तत्तदर्थतात्पर्येण दीर्घोकारादीनां प्रयोगाभावेनानभिधानं तेषां बोध्यम् ।

*ज्ञापकमिति*। ननु ज्ञापितेऽपि स्वांशे चारितार्थ्याभावः "बहोर्लोप" इत्यतोऽनुवृत्तेन लोपेनैव ज्ययानिति रूपे सिद्धे ह्रस्वाकारविधानसामर्थ्यात्पररूपं बाधित्वा सवर्णदीर्घेण रूपसिद्धेरिति चेन्न, लोपे सत्यकृत्सार्वधातुकयोरित्यस्य प्रवृत्त्या ज्यायानितिरूपं ह्रस्वाकारविधाने ज्ययानिति फलभेदेन विधानसामर्थ्याभावात् । नच लोपेऽप्यकृद्वृत्तपरिभाषया "अकृत्सार्व"इत्यस्या-

(६-४-१६०) इति दीर्घोच्चारणमस्या ज्ञापकम्। "अणुदित्"सूत्रे "ज्यादात्" इति सूत्रे च भाष्ये स्पष्टैषा। "चोः कुः" (८-२-३०) इत्यादौ भाव्यमानेनापि सवर्णग्रहणम्। विधेये उदित्करणसामर्थ्यात्। एतदेवा(१)भिप्रेत्य-'भाव्यमानोऽणुसवर्णान्न गृह्णाति'इति नव्याः पठन्ति ॥ १९ ॥

नन्वेवं "अदसोऽसेः" ( ८-२-८० ) इत्यादिना अमू इत्यादौ दीर्घविधानं न स्यादत आह—

## भाव्यमानोऽप्युकारः सवर्णान् गृह्णाति ॥ २० ॥

"दिव उत्" ( ६-१-१३१ ) "ऋत उत्" ( ६-१-१११ ) इति तपरक-

भैरवी

यत्तु गुणाभेदकत्वेन प्राप्तस्य सवर्णग्रहणस्य नानेन निषेध इति तन्न। 'भाव्यमानत्वावच्छेदेन सवर्णग्राहकत्वाभावस्य भाष्यतात्पर्यविषयत्वात् तेनेदम्' इत्यादिभाष्योक्तस्थलवत् "मातुपधाया"चइत्यादावपि प्रवृत्तिरते एव घटवदित्यादौ नानुनासिकः। ज्ञापकस्य सामान्यापेक्षत्वाभिप्रायेणैवाह-*अणुदिदित्यादि*। सामान्यापेक्षत्वे प्राप्तातिप्रसङ्गं वारयति-*"चोः कुः" इत्यादिना*। *एतन्मूलकमेव*। उदित्करणसामर्थ्यमूलकमेव। एतेन वास्तविको नैतादृशः पाठ इति ध्वनितम् ॥ १९ ॥

*एवम्*। भाव्यमानत्वावच्छेदेन सवर्णग्राहकत्वाभावस्य भाष्यतात्पर्यविषयत्वे। *भाव्यमानोऽप्युकार इत्यादि*। अस्यां ज्ञापकमाह-*"दिव उत्" इति*।

न चास्य स्वविषये चारितार्थ्याभावेन कथं ज्ञापकत्वन्तपरत्वाभावेऽप्यर्द्धमात्रिकस्य वकारस्य किञ्चित् सादृश्यादेकमात्रिक एवोकारो द्युभ्यां द्युयानमित्यादौ भविष्यतीति वाच्यम्? "च्छ्वोः शूड्" इति सूत्रे क्ङिद्ग्रहणाननुवृत्तिपक्षे द्युयानमित्यादौ चरितार्थस्य ह्रस्वोकारादेशस्याक्षद्यूरित्यादौ क्विपि चरितार्थं "च्छ्वोः शूड्" इत्यनेन द्युभ्यामित्यत्र परत्वाद्बाधके दीर्घोकारादेशे कृतेऽपि "दिव" इत्यनेन दीर्घस्य दीर्घ एव स्यात्। तपरत्वसत्वे तु दीर्घस्याप्यूटः "पुनः प्रसङ्गविज्ञान" न्यायेन ह्रस्वादेश इति चारितार्थ्यसम्भवात्। नचोडादेशस्यापवादशङ्का अक्षद्युवावित्यादौ चारितार्थ्यसम्भवात्। नहि तत्र उत्वं प्राप्नोति दिव्धातोः सानुबन्धकत्वात् सा च परिभाषा प्रत्ययाप्रत्ययग्रहणेऽपि प्रवर्त्तते इत्यस्य वक्ष्यमाणत्वात्।

नन्वेवमपि "सकृद्गति" न्यायस्य प्रवृत्तिपक्षे द्युभ्यामित्यत्र ह्रस्वो न स्यात्।

किञ्च "च्छ्वोः"इति सूत्रे क्ङिद्ग्रहणम्"अनुनासिकस्य"इति सूत्रादवश्यमनुवर्त्तनीयम्। अन्यथा द्युभ्यामित्यादौ"उडिदम्"इति सूत्रेण विभक्तेरूठः परत्वादुदात्तत्वं स्यात्। नच"उपधाग्रहणं

तत्वप्रकाशिका।

प्रवृत्त्या विधानसामर्थ्येनैवेष्टसिद्धौ पुनश्चारितार्थ्यासम्भव इति वाच्यम्? भाव्यमानपरिभाषाज्ञापनोत्तरमेवाङ्गवृत्तपरिभाषायां ज्ञापकमित्याशयात्। अङ्गवृत्तपरिभाषाज्ञापनोत्तरं भाव्यमानपरिभाषाज्ञापकत्वे तु दीर्घग्रहणस्य स्पष्टार्थतया ज्ञापकत्वासम्भवात् "ईहल्यघोः" इत्यत्रत्यदीर्घोच्चारणस्य ज्ञापकत्वं बोध्यम्।

वस्तुतस्तु, अप्रत्ययग्रहणस्यापि ज्ञापकत्वं बोध्यम्, स्वांशे चारितार्थ्यन्तु भाव्यमानत्वस्य षष्ठ्यन्तपदप्रयोज्योद्देश्यतानिरूपितविधेयताश्रयत्वरूपस्य स्वीकारेण पञ्चम्यन्तपदप्रयोज्योद्देश्यतानिरूपितविधेयताश्रयस्य प्रत्ययस्य भाव्यमानत्वाभावेन बोध्यम् ॥ १९ ॥

अपवादसङ्गत्या परिभाषान्तरमवतारयति—*नन्वेवमिति*। *दीर्घविधानंनेति*। भाव्यमानपरिभाषया सवर्णाग्रहणादिति शेषः। *परत्वादुदात्तत्वं स्यात्*। "अश्व" इति सूत्रे छग्रहणा-

( १ ) क्वचित्पुस्तके 'एतन्मूलकमेव' अयमपि पाठो दृश्यते।

रणमस्या ज्ञापकम्। "तित्स्वरितम्" (६-१-१८५) इति सूत्रे भाष्ये स्पष्टैषा ॥ २० ॥

भैरवी।

कर्त्तव्यम्" इति वार्त्तिकात् "दिवो झल्" इति सूत्रेण वा तन्निरासो भविष्यतीति वाच्यम्? द्यौरित्यत्रदोषतादवस्थ्यात्। तथाहि-दिवशब्दस्य प्रातिपदिकस्वरेणान्तोदात्तत्वेऽन्तरङ्गे कृते-ततो वकारस्य स्रंसनधर्मिणोऽनुदात्ते ऊडादेशे तस्य स्थाने "दिव औत्" इत्यौकारादेशे तस्य स्थाने सावपि पदमिति पक्षे दीर्घस्योकारस्य दीर्घ ऊकारः स्यात। तत इकारस्य यणि कृते "उदात्तस्वरितयोर्यणः" इति स्वरितत्वं स्यादित्योकारः स्वरितो न श्रूयेत, यदि त्वेवं प्रक्रियायां "दिव औत्" इति सूत्रस्य वैयर्थ्यमिति ब्रूषे तदा सकृद्गतिन्यायेनैवोडादेशेन बाधितः ऊकारादेशो न भविष्यतीतिकल्पना सम्भवति। पुनः प्रसङ्गविज्ञानपक्षे तु दोषः। एवञ्च्ङ्ग्रहणानुवृत्तौ तु अव्युत्पन्ने दिवशब्देऊडादेशस्य प्राप्त्यभावेन द्यौरित्यत्र "दिवऔत्" इत्यौकारादेशेनोकारादेशस्य "दिव उत्" इतिसूत्रविहितस्य बाधः द्युभ्यामित्यादौ त्वान्तरतम्याभावाद्दीर्घ ऊकारादेशो न भविष्यतीति तपरकरणचारितार्थ्यन्दुर्वचमित्यरुचेराह—*ऋत उदिति*।

नच पूर्ववदधुनाप्याकारस्य स्थाने दीर्घ ऊकारः स्यादिति वाच्यम्? "दिव उत्" इतिवक्तव्ये औकारादेशविधानसामर्थ्यात्। न च लाघवाभावः, प्रक्रियायां लाघवात् अपवादत्वाद्वौकारस्यौकारादेशाप्रवृत्तेः। अस्यादेशस्य ऋकाराकारोभयस्थानिकत्वेनान्तरतम्यात् प्राप्तदीर्घव्यावर्त्तकत्वेन तपरत्वस्य चारितार्थ्यम्। *तित्स्वरितमिति सूत्रे इति*। तत्र हि-"तितिप्रत्ययग्रहणं कर्त्तव्यम्। इह मा भूत् "ऋत इद्धातोः," न कर्त्तव्यम्। नैष तकारः किन्तर्हि दकारः। एवन्तर्हि दीर्घस्य ऋकारस्य सवर्णग्रहणेनान्तरतम्याद्दीर्घः स्यादित्याशङ्क्य भाव्यमानेन सवर्णानाङ्ग्रहणन्नेति समाधाय यद्येषा परिभाषा स्वीक्रियते तदाऽमू अमूभ्यामित्यादौ दीर्घो न प्राप्नोति "अदसोऽसेः" इत्यनेनोकारस्य भाव्यमानत्वात्" इत्याशङ्क्य संज्ञापिकया भाव्यमानोऽप्युकार इति परिभाषया समाधानङ्कृतम्।

तत्वप्रकाशिका।

करणकृतं लाघवमप्यस्ति। *चारितार्थ्यन्दुर्वचमिति,*। द्युयानमित्यत्र "दिव उत्" इत्यस्य चारितार्थ्येनाक्षद्यूरित्यत्रोठश्चारितार्थ्यन क्यजन्ताद्दिवशब्दात् क्विपि द्युभ्यामित्यत्रोभयोः प्राप्तयोः परत्वादाङ्गत्वाच्चोठि कृतेऽपि पुनः प्रसङ्गविज्ञानन्यायेन द्विमात्रिकस्याप्येकमात्रिक एवादेशो यथा स्यादित्यस्ति चारितार्थ्यसम्भवः। नवाल्लोपस्य स्थानिवत्वेनोठ्न स्यात्, क्वौ विधिं प्रति तन्निषेधात्। अल्लोपस्य स्थानिवत्वेन पदत्वाभावात् "दिव उत्" इत्यस्याप्राप्तिस्तु न, ऊट्स्थानिभूतावः पूर्वत्वेन दृष्टत्वभावेन स्थानिवत्त्वाप्रवृत्तेः। एवञ्च "ऋत उत्" इति ज्ञापकान्तरमिति केचित्।

वस्तुतस्तु एतादृग्द्युभ्यामित्यस्यानभिधानाच्चारितार्थ्यं दुर्वचमेव। *ऋत उदिति*। आन्तरतम्यादृकाराकारयोः स्थाने प्राप्तदीर्घव्यावृत्त्याऽत्रत्यं तपरं चरितार्थम्। नच पितूराज्यमित्यादौ "ढूलोप" इति दीर्घबाधनार्थं तच्चरितार्थमिति वाच्यम्? "स पितूरश्मयो यथा" इति रामायणप्रयोगविरोधात् "उरण्रपर" इति सूत्रेऽण्ग्रहणाभावे 'ऊरपर' इति भाष्यविरोधात्। बाहिरङ्गत्वेन "ढूलोप" इति दीर्घस्यासिद्धत्वाच्च।

नन्वेवमुरुपधाया गुह इत्येव सिद्धे "ऊदुपधाया गोह" इति दीर्घोच्चारणं विकृतनिर्देशश्च व्यर्थ इति चेन्न। अन्त्ये तक्रकौण्डिन्यन्यायेन गुणोत्तरं चारितार्थ्यन उत्वेन गुणं बाधित्वा उकारादेशे गूहतीत्याद्यसिद्धेः। "क्किति च" इति निषेधेन गुणाप्राप्तियोग्ये जुगुहतुरित्यादावुकारादेशस्य चारितार्थ्यात्तक्रन्यायाविषयस्तु न फलाभावेन तदर्थमनारम्भात् निषेधेनापि तत्प्रा-

भैरवी।

ननु भाव्यमानोऽप्युकारः सवर्णान् गृह्णातीति परिभाषयाऽमू इत्यादिसिद्धिः फलमित्यसङ्गतन्तत्र हि ह्रस्वदीर्घयोः समाहारद्वन्द्वेन दीर्घस्यापि निर्देशादिति परिभाषां विनापि सिद्धत्वादिति चेन्न। ह्रस्वदीर्घयोः समाहारद्वन्द्वे ह्रस्वस्य घिसंज्ञकत्वेन पूर्वनिपाते कृते "ह्रस्वो नपुंसके" इति ह्रस्वे सवर्णदीर्घे च प्राप्ते शब्दान्तरप्राप्त्यानित्ययोर्द्वयोः परत्वान्नपुंसकह्रस्वत्वे सति दीर्घं 'लक्ष्ये लक्षणस्य' इति न्यायेन पुनर्ह्रस्वाप्राप्तया रूपासिद्धेः।

यत्तु "समुद्राभ्राद्घः" इति निर्देशेन पूर्वनिपातप्रकरणस्यानित्यत्वाद्दीर्घस्य पूर्वनिपाते कृते "अग्निर्यद्दुग्धन्तद्दहति" इतिन्यायेन ह्रस्वोरस्य ह्रस्वाभावे सवर्णदीर्घं ततो नपुंसकह्रस्वत्वे न रूपसिद्धिरिति तन्न। पर्जन्यवल्लक्षणन्यायेन सुप्रसिद्धेन ह्रस्वस्य परप्रवेशेऽप्यादौ पूर्ववत् प्रवृत्तेः। यदपि "दिव उत्" इत्यत्र तपरकरणं यथाश्रुतरूपविवक्षया "हल" इति दीर्घव्यावर्त्तकत्वेन चरितार्थमिति तदपि न। अदिति यथाश्रुतरूपविवक्षया पन्थानावित्यत्र "सर्वनामस्थाने चासम्बुद्धौ" इति दीर्घानापत्तेः सम्प्रसारणजातत्वाभावेन "दिव उद्" इतिनिष्पन्नोकारस्य दीर्घाप्राप्तेश्च।

यत्तु भाव्यमानोऽप्युकार इति परिभाषास्वीकारे "सनाशंसभिक्ष उः" "तनादिकृञ्भ्य उः" इत्याभ्यामपि दीर्घापत्तिरिति तत्तुच्छम्। "अणुदित्" सूत्रभाष्येऽप्रत्यय इति किमर्थम्? "सनाशंसभिक्षउः" इत्यनेन प्रत्ययस्याप्रत्ययस्य ग्रहणव्यावर्त्यत्वेन प्रदर्शनात्। प्रत्ययविषयेऽनया सवर्णग्रहणाप्रवर्त्तनात्। न च तद्भाष्यस्याणादिप्रत्ययाकारादेर्दीर्घग्राहकत्वबोधकतयाऽप्युपपत्तिः। "शनाशंस" इत्यादिविहितोकारविषये तु 'भाव्यमानोप्युकारः' इति परिभाषाया भत्रन्मतसिद्धायाः प्रत्ययग्रहणेनैकदेशानुमत्या बोधिता "भाव्यमानेन सवर्णानाङ्ग्रहणन्न" इति परिभाषा तद्बाधकत्वाद्दीर्घः स्यादेवेति वाच्यम्। "ऊदुपधाया गोहः" इति सूत्रे ऊरुपधाया गोह इति वक्तव्ये ऊदितिदीर्घनिर्देशेन "भाव्यमानोप्युकार" इति परिभाषाया अनित्यत्वस्य कल्पनात् "अणुदित्" सूत्रस्थभाष्यस्य यथाश्रुतार्थग्राहकतयाप्युपपत्तेरुपलक्षणत्वकल्पनाया अन्याय्यत्वाच्च॥ २०॥

तत्वप्रकाशिका।

स्रियोग्यतानपायात्। अत एव सम्बुद्धौ न लोप इति निषेधेन रुत्वस्य चारितार्थ्येऽपि 'अपवादो रुर्नलोपं बाधिष्यत' इति भाष्यं सङ्गच्छते। न च वैयर्थ्यं, गुणबाधेन कृतार्थत्वात्। न च तावन्मात्रप्रयोजनकत्वे "दीधीवेवी" इत्यनन्तरं पाठेनैव सिद्धाविहपाठकरणं व्यर्थमेवेतिवाच्यम्? लाघवाभावात् पाठस्याशोकवनिकन्यायेन चरितार्थत्वाच्च।

किञ्च गोह्यमित्यादौ हलादावपि गुणनिषेधापत्तेः। आद्ये गुहेर्हेतुमण्ण्यन्ताच्चङि द्वित्वबाधकह्रस्वाद्ण्यन्तरङ्गत्वेन गुणे उत्वे च "णौ चङि" इति ह्रस्वनिवृत्त्या चारितार्थ्यात्। अत एव "ऊदुपधायाः" इतिसूत्रे उऊ इतिप्रश्लेषेण गोह इति विकृतनिर्देशो भाष्ये प्रत्याख्यातः। अजुगूहदित्यर्थं प्रश्लेषस्यावश्यकत्वात्। न चोत्वदृष्ट्या "णौ चङि" इति ह्रस्वस्य बहिरङ्गतयाऽसिद्धत्वेन बाधाभाव इति वाच्यम्? ऊदितिदीर्घोच्चारणसामर्थ्येनोक्तभाष्यबलेन बहिरङ्गस्याप्युपधात्वनिमित्तकह्रस्वस्य बाधकल्पनादिति केचित्।

अन्येतु बाधकल्पनापेक्षया परिभाषाभावकल्पनमेव लघु। "अदस" इति सूत्रे उ इति समाहारद्वन्द्वेनामू इत्यादीनां सिद्धिः, फलान्तरानुपलब्धेश्च। न च समाहारद्वन्द्वेऽन्तरङ्गत्वात्पूर्वं ह्रस्वे ततो दीर्घे उइति रूपासिद्धिः "ह्रस्वो नपुंसके" इति सूत्रे प्रातिपदिकग्रहणसामर्थ्यादेतद्विहितह्रस्वविषये 'लक्ष्ये लक्षणस्य' इति न्यायाप्रवृत्तेः। समाहारद्वन्द्वे मानन्तु "अदसोमात्" इतिसूत्रम्। न चेकारे चरितार्थम्, ऊकारसंग्राहकमादितिगुरुनिर्देशासङ्गत्यापत्तेः। न च परिभाषाभावे 'भाव्यमानेन' इति निषेधात् स्थान्यनुरूपोदात्तादिविधानं न स्यादितिवाच्यम्? स्वरातिरिक्ते तत्प्रवृत्तेः॥ २०॥

ननु गवे हितं गोहितमित्यादौ प्रत्ययलक्षणेनावाद्यादेशापत्तिरत आह—

## वर्णाश्रये नास्ति प्रत्ययलक्षणम् ॥ २१ ॥

भैरवी ।

वर्णस्य ज्ञापकत्वप्रसङ्गादन्यामपि वर्णविषये प्रवृत्तियोग्यां परिभाषामवतारयति-*नन्विति* । न च गवेहितमित्यत्र "न लुमता" इति निषेधेनैवावादेशस्य वारणे सिद्धे नैतत्परिभाषाप्रयोजनमिति वाच्यम् ? सुदृषत्प्रासाद इत्यत्र "अत्वसन्तस्य" इति दीर्घस्य "सोर्मनसो" इति स्वरस्य च व्यावृत्त्यर्थं सूत्रस्यावश्यकत्वेन वक्ष्यमाणरीत्या सूत्रनीयमसिद्धाया एतत्परिभाषाया अपि तत्प्रयोजनस्योक्तत्वात् । 'वर्णाश्रय' इत्यस्य, विधौ कार्ये इति शेषः । वर्णाश्रय इति बहुव्रीहिः ।

तत्वप्रकाशिका ।

*परिभाषामवतारयति* । अवसरसङ्गत्येतिशेषः । *तत्प्रयोजनस्योक्तत्वादिति* । चिन्त्यमिदम्, "न लुमता" लुप्तेऽङ्गाधिकारः प्रतिनिर्दिश्यते किं तर्हि योऽसौ लुमता लुप्यते तस्मिन्यदङ्गन्तस्य कार्यन्न भवतीति "न लुमता"इति सूत्रशेषभाष्यात्, "युवोरनाकौ" इति सूत्रे चाङ्गस्य युवोरनाकौ भवतो यत्र तत्रस्थयोरितिसूत्रार्थं निर्णीते नन्दनदधि, कारकदध्रीत्यत्र दोषे एवं तर्हि नवा परं निमित्तं संज्ञा च प्रत्ययलक्षणेनेति भाष्यप्रतीकमुपादाय नहीह विभक्तिः प्रत्ययान्तरं वा निमित्तत्वेनोपात्तमितिप्रत्ययलक्षणमनाकयोर्नास्तीति "न लुमताङ्गस्य" इतिप्रत्ययलक्षणप्रतिषेधस्यायमविषयः केवलमङ्गस्य युवोरनाकौ भवत इत्युच्यते, तर्हि अस्ति प्रत्ययलक्षणेनाङ्गसंज्ञा न हि तस्यां विधीयमानायां "न लुमताङ्गस्य" इति निषेधः प्रवर्तते । लब्धाङ्गसंज्ञकस्य कार्यान्तरे विधातव्ये स निषेधः प्रवर्तते । नचाङ्गसंज्ञाङ्गस्य कार्यमितिप्रतिषेधाभाव इति सिद्धान्तिकैयटोक्तेश्च। लुप्तप्रत्यये परतो यः पूर्वस्तत्प्रकृतिभूतो लब्धाङ्गसंज्ञकस्तदुद्देश्यकं यत्कार्यमाङ्गमनाङ्गं वा तन्नेत्यर्थस्य सर्वसम्मतत्वेनावादेशस्य च लब्धाङ्गसंज्ञाकोद्देश्यकत्वाभावेन तत्र सूत्राप्रवृत्तेः ।

नच शब्दानित्यत्ववारणायैज्घटितशब्दप्रयोगेऽवादिघटितः साधुरित्यर्थंनावादेशस्य तदस्तीति वाच्यम् ? गोधनमित्यादावबादेशवारणाय निमित्तस्यैच्येवान्वयेन साक्षाल्लब्धाङ्गसंज्ञकोद्देश्यकत्वाभावात् । उत्क्रामेत्याद्यर्थं साक्षात्पदनिवेशस्यावश्यकत्वाच्च । अत्र साक्षाल्लुप्तप्रत्ययाव्यवहितपूर्वत्वनिष्ठप्रकारतानिरूपितविशेष्यताऽङ्गपर्याप्तधर्मावच्छिन्ना यत्र तत्र "नलुमता" इत्यस्य प्रवृत्तिस्वीकारान्निमित्तस्य निर्दिश्यमानेऽन्वयेऽपि निर्जरधनमित्यादौ न प्रत्ययलक्षणेन जरसाद्यादेशापत्तिः, अङ्गविशेषितनिर्दिश्यमाननिष्ठविशेष्यताया अङ्गपर्याप्तधर्मावच्छिन्नत्वेन"नलुमता" इतिनिषेधस्य प्रवृत्तेः। अन्यथा "क्रमः परस्मैपदेषु" इति दीर्घो न स्यात्।

न च तदर्थमजव्यवहितपूर्वत्वविशिष्टस्यैजन्तस्यार्थबोधनायोच्चारणप्रसङ्गेऽयाद्यन्तः साधुरित्येवोच्यतामिति वाच्यम् ? "गोरग्वचनं स्वरसिद्ध्यर्थम्" इतिवार्तिकक्लृप्तसिद्धान्तितागागमपक्षे विशिष्टस्यैवार्थवत्त्वेन केवलस्यैजन्तस्यार्थबोधकत्वाभावेनावादेशानापत्त्या भाष्यविरोधापत्तेः ।

नचैवमपि "अन्तरङ्गानपि विधीन् बहिरङ्गो लुक् बाधते' इति न्यायेनेत्संज्ञालोपाभ्यां प्रागेव ङे इत्यस्य लुकि प्रत्ययलक्षणेन ङेबुद्धावपि अच्परत्वाभावादवादेशो न स्यादिति वाच्यम् ? इत्संज्ञादिविषये तदप्रवृत्तेः । अत एव 'क्विलुगुपधा" इतिवार्तिके लुकि न स्थानिवदित्यस्य पञ्चेन्द्र इत्युदाहरणं भास्योक्तं सङ्गच्छते । अन्यथा इत्संज्ञालोपाभ्यां प्रागेव लुक्क्वितलुकीति लुप्तस्य डीषः अजादेशत्वाभावेन स्थानिवत्त्वाप्राप्तौ तद्वैयर्थ्यं स्पष्टमेव । *कार्य इति* । कर्तव्य इत्यर्थः । *बहुव्रीहिरिति* । वर्णः वर्णत्वव्याप्यधर्मावच्छिन्नः आश्रयो निमित्तं यस्ये-

वर्णप्राधान्यविषयमेतत् । तत्त्वं च "प्रत्ययलोपे" (१-१-६२) इति सूत्रे "स्थानिवत्" (१-१-५६) इत्यनुवृत्त्यैव सिद्धे प्रत्ययलक्षणग्रहणं प्रत्यय(१)स्येतराविशेषणत्वरूपं यत्र प्राधान्यं तत्रैव प्रवृत्त्यर्थमित्येतत्सिद्धम् । वर्णप्रा(२)धान्यं च वर्णस्येतराविशेषणत्वरूपं प्रत्ययनिरूपितविशेष्यतारूपं

भैरवी ।

ननु निमित्तत्वघटितनिमित्ततावच्छेदकत्वेन यत्र वर्णस्य आश्रयणं तत्राप्यनया प्रत्ययलक्षणनिषेधः स्यात् । तथा चातृणेडित्यस्यासिद्धिरत आह—*वर्णप्राधान्येति* । एवञ्च यस्मिन्विधौ वर्णप्राधान्याश्रयकविधित्वं तस्मिन् कर्त्तव्येऽयं निषेधः प्रवर्त्तते । यत्र त्वप्राधान्येनाश्रयणं तत्र नायन्निषेध इत्यत्र प्रमाणमाह—*तत्त्वञ्चेति* । इत्येतत्सिद्धमित्यत्रास्यान्वयः। इत्येतत्सिद्धमित्यस्यानेनैतेन सिद्धमित्यर्थः। पुनर्नोक्तार्थस्य सूत्रसिद्धत्वमेवेति बोधितम् । तत्त्वमित्यस्य वर्णप्राधान्याश्रयकविधिप्रवृत्तिविषयाधिकरणकाभावप्रतियोगित्वम् "प्रत्ययलोप" इति शास्त्रार्थनिष्ठमित्यर्थः। *स्थानिवदित्यनुवृत्त्यैवेति* । "प्रत्ययलोप" इति सूत्रे प्रत्ययलक्षणग्रहणमपनीय स्थानिवद्ग्रहणमनुवर्त्त्य प्रत्ययस्य लोपे स्थानिवत्कार्यं भवतीति वाच्यम् ? स्थानिवत्पदे च सप्तम्यन्ताद्वतिरिह विवक्षितो न तु पञ्चम्यन्तात् । तेन हरिकृतमित्यादौ नाऽभावो न । *इतराविशेषणत्वम्* । इतरनिरूपिताभेदसम्बन्धावच्छिन्नविशेषणत्वाभावः। *यत्र*। यस्मिन्विधौ, तत्रैवेत्यस्य कार्ये इति शेषः । *प्रवृत्त्यर्थम्* । "प्रत्ययलोप" इत्यस्य प्रवृत्त्यर्थम् । तेन चित्रायां जाता चित्रेत्यत्र "टिड्ढाणञ्" इति ङीपः प्रवृत्तिर्न । तत्र हि—अनुपसर्जनमण्योऽकारस्यादित्यर्थाश्रयणेन वर्णनिरूपिताऽभेदसम्बन्धावच्छिन्नविशेषणता प्रत्ययस्य स्फुटैव । चित्रेत्यत्र "सन्धिवेला" इति जातार्थेऽण् तस्य "चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसङ्ख्यानम्" इति लुक् ।

ननु यत्र वर्णस्य प्राधान्यं तत्रैव 'वर्णाश्रय' इति परिभाषायाः प्रवृत्तिरिति स्वीकारे गवेहितमित्यादाववादेशस्य वारणेऽपि चित्रेत्यत्र प्रत्ययलक्षणं स्यात्, नहि ङीब्विधौ वर्णस्यात

तत्त्वप्रकाशिका ।

ति । सच प्रत्यासत्त्या लुप्तप्रत्ययवृत्तिः(३) । तेन गवाः राजन्वित्यादौ रुत्वे कर्त्तव्ये पदत्वाय प्रत्ययलक्षणं भवत्येव । *अतृणेडित्यस्यासिद्धिरिति* । इम्विधौ हलादौ पितीति विशेषणतया वर्णाश्रयणात् । *इत्यत्र प्रमाणमाह*। नैतद्युक्तम्, तत्त्वं चेत्यनेन परिभाषायामेव प्रमाणमुक्तम् । वर्णप्राधान्यविषयकत्वं तु वार्त्तिककारमते सूत्रस्यालिङ्व्यर्थत्वकल्पनयैव । अन्यथाऽप्राधान्येऽप्यनया निषेधे सूत्रं निर्विषयमेव स्यात् । तत्त्वं चेत्यस्य वर्णाश्रये प्रत्ययलक्षणाप्रवृत्तिमत्त्वञ्चेत्यर्थः । *प्रत्ययस्येतराविशेषणत्वमिति* ।' अवयव(४)निष्ठविशेष्यतानि-

---

( १ ) **प्रत्ययस्येतराविशेषणत्वरूपमिति** । अवयवत्वसम्बन्धावच्छिन्नप्रकारताभिन्नप्रत्ययत्वव्याप्यधर्मावच्छिन्नविषयताश्रयत्वम्'तत्त्वम् । तेन 'गोहितम्' चित्रायां जाता चित्रा इत्यादौ न कुत्रापि दोषः ।

( २ ) **वर्णप्राधान्यञ्चेति** । प्रत्ययत्वव्याप्यधर्मावच्छिन्नविशेष्यतानिरूपितप्रकारताना-श्रयत्वम् । तेन मित्रशीरतृणेट् इत्यादौ कुत्रापि न दोष इति दिक् ।

( ३ ) **लुप्तप्रत्ययवृत्तिरिति** । लुप्तप्रत्ययवृत्तिर्या वर्णत्वव्याप्यधर्मावच्छिन्ना विषयता तन्निरूपके कार्ये कर्तव्ये प्रत्ययलक्षणं न भवतीत्यर्थः पर्यवसन्नः ।

( ४ ) **अवयवेति** । तेन वारीत्यादौ सुबन्तसमुदाये सुपो विशेषणत्वेऽपि स्वावयवेऽविशेषणत्वेनोक्तप्राधान्येन प्रत्ययलक्षणासिद्धिः ।

**च । तेन गोहितमित्यादावत्वादिर्न 'चित्रायां जाता चित्रा, इत्यादावणोऽकारस्तदन्तान्ङीविति ङीप् च न' । इयमल्विधौ स्थानिवत्त्वाप्राप्तावपि प्रत्ययलक्षणविधेर्निषेधिकेति स्पष्टं भाष्ये ॥ २१ ॥**

भैरवी ।

…र्णस्य प्राधान्यं प्रातिपदिकविशेषणत्वात् आह-*वर्णप्राधान्यञ्चेति* । चस्त्वर्थे । *इतराविशेषणत्वमिति* । इदङ्गोहितम् , रैकुलमित्यादावत्वादेशत्वादिव्यावृत्यर्थम् । प्रत्ययनिरूपितेत्यादि* । इदञ्चित्रेत्यादौ ङीपोऽप्रवृत्त्यर्थम् ।

ननु भाष्यकारमते स्थानिवत्सूत्रेणैव सिद्धे "प्रत्ययलोप" इति सूत्रन्नियमार्थन्तेन 'वर्णाश्रये प्रत्ययलोप' इत्यस्य प्राप्तिरेव नेतीयं परिभाषा व्यर्थाऽत आह-*इयमिति* । अल्विधाविति विशेष्यतया विशेषणतया वा यत्राऽलाश्रयणं तत्रानल्विधावित्यस्य प्रवृत्तेः । एवञ्च यन्मते "प्रत्ययलोप" इति सूत्रं विधायकं तन्मतेऽस्याः परिभाषायाः प्रयोजनम् । *स्पष्टम्भाष्ये* । "प्रत्ययलोप" इति सूत्रे भाष्ये । तत्र हि-"प्रत्ययलोप" इति सूत्रस्य प्रयोजनं वार्तिककृता प्रदर्शितम् 'प्रयोजनमपृक्तशिलोपे नुमभावौ गुणवृद्धी दीर्घत्वे मडाट्श्नमिविधय' इति । अपृक्तलोपे नुम्, गोमान्यवमान् । शिलोपे नुम्, अग्नेत्रीणि ताला पिण्डानाम्, अत्र "शेश्छन्दसि" इति शेर्लुक् अपृक्तलोपे अभावौ, हे अनडुन्, सन्नडुन् । गुणः, अधोक् अलेट् । वृद्धिः, न्यमार्ट् । दीर्घत्वम्, अग्नेत्रीण्याजिनां त्रीपधस्था ताला पिण्डानाम् । इम् अतृणेट् । अडाटौ अधोक् अलेट् रौवयः औनः । श्नम् अभीनोऽत्र अङ्गीनोऽत्रेत्येतानि प्रयोजनानि । यद्यप्यल्विध्यर्थमिदं सूत्रन्तथाप्यारब्धे सूत्रे एतान्यपि प्रयोजनानीति भावः । अल्विधौ प्रयोजनमतृणेट् । अत्र हि "तृणहइम्" इति "हलादौ पिति सार्वधातुके" इम् विध्यर्थमिदं सूत्रमितिवार्त्तिकमतेऽपि "प्रत्ययलोप" इत्यत्र स्थानवदित्यस्यानुवृत्त्यैव सिद्धे प्रत्ययलक्षणग्रहणात् प्रत्ययासाधारणधर्मावच्छिन्ननिमित्तके विधौ प्रत्ययलक्षणङ्कार्य्यं यथा स्यादित्यर्थस्य सत्वेन सुदृपत्प्रासाद इत्यत्र "अत्वसन्तस्य" इति दीर्घः "सोर्मनसी" इति स्वरश्च न । अस्त्वस्याः प्रत्ययाप्रत्ययसाधारणत्वम् । एवङ्गोहितमित्यत्रापि प्रत्ययलक्षणस्य न प्राप्तिरत्त्वस्य उभयसाधारणत्वात्, भवति प्रत्ययलक्षणेन कार्य्यम् अतृणेट् अचकात् अचका इत्यादौ सार्वधातुकत्वतिप्त्वसिप्त्वधर्मावच्छिन्ननिमित्तकमेते धर्माः प्रत्ययासाधारणाः । एवञ्च यत्र वर्णस्य प्रधान्यन्तत्र वर्णवृत्तिधर्मस्य प्रत्ययाप्रत्ययसाधारणत्वेन तत्र प्रत्ययलक्षणन्न भवतीति 'वर्णाश्रये नास्ति प्रत्ययलक्षणम्'इति परिभाषा सिद्धैव । भाष्यकारमते तु यद्यत् "प्रत्ययलोप"इति सूत्रस्य प्रयोजनन्तत्स्थानिवद्भावेन सिद्धमिति "प्रत्ययलोप" इति सम्पूर्णसूत्रन्नियमार्थम् । तथाहि-यत्र राजपुरुष इत्यादौ समासावयवस्य ङसो लुक् तत्र प्रत्ययलक्षणेन "यचि भम्" इति भसंज्ञया नलोपाप्रवृत्तिः प्रयोजनमिति सम्भाव्यते, तच्च न "नङि सम्बुद्ध्योः"इति ङौ प्रतिषेधाल्लिङ्गात् । अन्यथा भसंज्ञया परमे व्योमन्नित्यादिसिद्धौ तद्वैयर्थ्यं स्पष्टमेव ।'नलुमता"इति प्रतिषेधाच्च । आशीरित्यत्र हलादौ किति विधीयमानमित्वमपि न प्रयोजनमाशासः क्वावितिवचनेन तस्य सिद्धत्वात् । न च मित्रशीरिति तस्य प्रयोजनं भविष्यति नह्येतत् स्थानिवद्भावेन सिद्ध्यत्यल्विधित्वादिति वाच्यम्? "शास" इति सूत्रे हल्ग्रहणाकरणात् । नचैवमजादौ प्राप्तिरिति वाच्यम् । शास इदिति पृथक् सूत्रं कार्य्यन्ततोऽङिति तच्च नियमार्थम् अजादौ चेदङ्येवेति नियमेन तद्वारणात, आशासः क्वाविति वचनं तु

तत्वप्रकाशिका ।

**रूपितप्रकारतानाश्रयत्वम् । *वर्णस्येतेरेति* । अवयविनिष्ठविशेष्यतेत्यादिरर्थः । तेनाच्पदार्थस्यैचि विशेषणत्वेऽपि न प्राधान्यत्वक्षतिरिति गोहितं रैकुलमिति सिद्धम् । *प्रत्ययनिरूपितेति* । स्वावयविनिष्ठप्रकारतानिरूपितविशेष्यत्वम् । तेन चित्रेति सिद्धम् ॥ २१ ॥**

ननु "अतः कृकमि" ( ८-३-४६ ) इत्यत्र कमिग्रहणेन सिद्धे कंसग्रहणं व्यर्थमत आह—

## उणादयोऽव्युत्पन्नानि प्रातिपदिकानि ॥ २२ ॥

इदमेवास्या ज्ञापकमिति कैयटादयः। कंसेस्तु न कंसोऽनभिधानात्। "प्रत्ययस्य लुक्" ( १-१-६१ ) इत्यादौ भाष्ये स्पष्टा। एवं "ण्वुल्तृचौ" ( ३-१-१३३ ) इत्यादौ भाष्ये व्युत्पन्नानीत्यपि। इदं शाकटायनादिरीत्या।

भैरवी।

शासोरेवात्रग्रहणे विध्यर्थम्। अन्यथा क्वावेवेतिनियमार्थन्तेनाशास्त इत्यत्र न। न च गोमान्यवमान्, अचकात् अचकाः अनड्वान् अनड्वन्निति प्रयोजनम् "भोभगो" इति सूत्रभाष्योक्तरीत्याऽल्वृत्तिधर्मावच्छिन्नाश्रयकविधित्वान्न स्थानिवद्भावेन सिद्धिरिति वाच्यम्। आदेशविधावुपात्तो यत्राल्त्वपर्य्याप्त्यवच्छेदकधर्मस्तत्पर्याप्तावच्छेदकताकोद्देश्यताको यो विधिस्तत्रानल्विधावित्यस्य प्रवृत्तेः "हल्ङ्याब्भ्य" इति सूत्रे तु सुतिस्यभेदविशिष्टहल्त्वमुद्देश्यतावच्छेदकन्तच्च नाल्त्वमिति स्पष्टमेव। एवमेव शिलोपेऽप्यग्नीत्रीत इत्यादौ बोध्यम्। न चैवमप्यतृणेडित्यस्यासिद्धिरिति वाच्यम्? तत्र हलीत्यस्यासम्बन्धात्। चैवन्तृणहानीत्यत्रेम् प्राप्नोति "तृणह" इति सूत्रे "नाभ्यस्तस्य" इति सूत्रादचि नेत्यस्य सम्बन्धात्। न चाग्निचिदित्यत्र स्थानितावच्छेदको धर्मोऽनुबन्धलोपे कृते वकारमात्रवृत्तीति वाच्यम्? तत्राप्युपात्तस्य विरल्पर्याप्त्यनवच्छेदकत्वात्। उद्देश्यतावच्छेदकधर्मे उपात्तत्वविशेषणदाने चाग्रहीदित्यस्य साधनावसरे "विशिष्टं ह्येषऽनलमाश्रयते इटन्नाम" इति भाष्यमेव मानम्। न चोद्देश्यतावच्छेदके उपात्तत्वविशेषणे प्राचीनोक्तासाधारण्यनिवेशात्को विशेष इति वाच्यम्? स्थानिवत्सूत्रस्थानितावच्छेदकधर्मस्योपस्थितत्वेन तस्मिन्नुपात्तत्वविशेषणापेक्षयाऽसाधारण्यनिवेशेऽनुपस्थितकल्पनायाङ्गौरवस्य स्पष्टत्वात्। अधिकमन्यत्रोहनीयम् ॥ २१ ॥

पूर्वपरिभाषाप्रयोजननिरूपणावसरे गोहितत्युक्तन्तत्र गोशब्दस्य उक्तत्वात् प्रसङ्गेनोणादिसामान्यस्याप्युपस्थिततत्वात् तद्विषये विशेषं वक्तुमवतारयति-*नन्वत इति। कमिग्रहणेनेति*। "क्विब्वचिदेवयोः" इति सूत्रेऽप्रत्ययग्रहणेन "धातुग्रहणे तदादिविधि"रिति परिभाषाया ज्ञापितत्वादिति भावः। अव्युत्पन्नानि*। प्रकृतिप्रत्ययभागकल्पनाद्वारकशब्दसंस्काररहितानि। *इदमेव*। कंसग्रहणमेव। एतेन "अर्थवदधातुः" इतिसूत्रमव्युत्पन्नानि प्रातिपदिकानीत्यत्र ज्ञापकमित्युक्तन्तत्परास्तम्। बहुपटव इत्यर्थन्तस्यावश्यकत्वाच्च।

ननु कंसग्रहणस्य ज्ञापकत्वम् दुरुपपादम् कंसेरपि तस्य सिद्धेरत आह-*कंसस्त्विति। नर्कंसः*। नर्कंसशब्दः। यत्र भाष्ये एषोक्ता तदाह-*प्रत्ययस्येति*। आदिना "आयनेयी" इति सूत्रपरिग्रहः। "प्रत्ययस्य लुक्" इतिसूत्रभाष्ये हि प्रत्ययग्रहणाभावे "कंसीयपरशव्ययोः" इतिसूत्रे प्रकृतिनिवृत्त्यर्थमवश्यं छयतोरिति वाच्यम्। अन्यथा कंसावयवस्य परशव्यावयवोकारस्य लुक्स्यादित्यभिधायानयापरिहृतम्।

अन्ये तु कमिप्रकृतिकाऽजन्तानभिधाने प्रमाणाभावान्न कमिग्रहणेनैषा ज्ञाप्यते किन्तु भाष्यकारपठितैवेत्याहुः। सर्पिषा याजुषेत्यादौ षत्वादिकार्य्यन्तु कारुवाय्यादिशब्दानां व्याकरणान्तरीयरीत्या ज्ञातसाधुकानामस्मिन्नपि व्याकरणे साधुत्वाभ्यनुज्ञानार्थमारब्धे "उणादयो बहुलम्" इतिसूत्रे बहुग्रहणेन साधनीयम्। "अयामन्त" इति सूत्रेऽप्येतद्व्याकरणानुपात्तानामनुवादो व्याकरणान्तररीत्या। *ण्वुल्तृचाविति*। तत्र हि-तृचश्चकाराभावे मात्रादिशब्दे दीर्घापादनं कृत्वा तत्प्रसङ्गेन व्युत्पत्तिर्दर्शिता। वस्तुतो नायम्भाष्यकारीयसिद्धान्त इत्याह-*इदमिति*। इदम् व्युत्पन्नानीति। शाकटायनादीत्यादिना नैरुक्तसंग्रहः। *शब्देन्दुशेखर

पाणिनेस्त्वव्युत्पत्तिपक्ष एवेति शब्देन्दुशेखरे निरूपितम्। "आयनेयी" (७-१-२) इति सूत्रे भाष्ये स्फुटमेतत्॥ २२॥

ननु देवदत्तश्चिकीर्षतीत्यादौ देवादेः सन्नन्तत्वप्रयुक्तधातुत्वाद्यापत्तिरत आह—

**प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्॥२३॥**

"यस्मात्प्रत्ययविधिः" (१-४-१३) इति सूत्रे 'यस्मात्प्रत्ययविधिस्तदादि प्रत्यय' इति योगो विभज्यते। गृह्यमाण उपतिष्ठत इति शेषः। तेन तदाद्यन्तांशः सिद्धः तदन्तांशस्तु "येन विधिः" (१-१-७२) इत्यनेन सिद्धः। स च शब्दरूपं विशेष्यमादाय विशेष्यान्तरासत्त्वे।

यत्तु प्रत्ययेन स्वप्रकृत्यवयवकसमुदायाक्षेपात्तद्विशेषणत्वेन तदन्तवि-

भैरवी।

इति*। "उणादयो बहुलम्" इति सूत्रे इत्यर्थः। अव्युत्पन्नानीति पक्षे पाणिनीयसिद्धान्तभूते "उणादय" इति सूत्रस्य व्याकरणान्तरे ये उणादिप्रत्ययान्ताव्युत्पदितास्ते बहुलं वर्त्तमाने भूते वा साधवो भवन्ति। *एतत्*। उणादीनामव्युत्पन्नत्वम्, तत्र हि–शङ्कुः कण्ठः इत्यादौ इनाद्यादेशमाशङ्क्य प्रातिपदिकविज्ञानाच्च भगवतः पाणिनेः सिद्धमित्युक्तम्॥ २२॥

प्रत्ययप्रसङ्गादाह–*नन्विति*। परिभाषायां मूलमाह–*यस्मात्प्रत्ययविधीति*। *शेष इति*। तेन प्रत्यये गृह्यमाणे यस्मात्प्रत्ययविधिस्तदादीत्युपतिष्ठत इति वाक्यार्थः सम्पन्नः।*तदाद्यन्तांश इति*। तदादेरित्यन्तः समुदायस्य घटकोयोऽवयवस्स निरुक्तरीत्या सिद्धः।

ननु यत्र न प्रक्रान्तं विशेष्यङ्कथन्तत्र तदन्तविधिरत आह–*सचेति*। शब्दानुशासनप्रस्तावादेतल्लाभः। प्राचामुक्तिन्निरस्यति–*यत्त्विति*। स्वप्रकृत्यवयवेति*। स्वम्प्रत्ययः प्रकृतिश्चंताववयवौ यस्य तस्येत्यर्थः। आक्षेपे बीजन्तु प्रत्ययस्य प्रकृत्यव्यवहितोत्तरत्वनियमेन

तत्वप्रकाशिका।

*प्रत्ययप्रसङ्गादिति*। सप्रसङ्गसङ्गत्येतिशेषः। देवद(१)त्तश्चिकीर्षतीत्या*दाविति*। आदिना देवदत्तो गार्ग्य इत्यस्य परिग्रहः। *धातुत्वाद्यापत्तिरिति*। एवञ्च सुब्लुगापत्तिः, विशिष्टाल्लुङाद्युत्पत्या विशिष्टस्याडापत्तिः,"सन्यङोः" इतिद्वित्वस्य दे इत्यत्र प्रवृत्त्यापत्तिर्बोध्या। *शब्दरूपमिति*। तदादिशब्दरूपमित्यर्थः। *विशेष्यान्तरासत्व इति*। यत्र तु विशेष्यं प्रक्रान्तं तत्र तद्विशेष्यकमेव श्रुतत्वात्, न तदादिविशेष्यकमिति भावः।

नचोभयतदन्तविधिरस्त्वितिवाच्यम्? तथा सति यञन्ततदादितदन्तप्रातिपदिकात्फगित्यर्थं "यञिञोश्च" इत्यनेन परमगार्ग्येतिविशिष्टात् फकि "किति च" इत्यादिवृद्धौ पारमगार्ग्यायण इत्यनिष्टापत्तेः। नचैवं "वनोरच" इत्यत्रोभयतदन्तविध्यभावेऽतिधीवरीति न स्यात्, "नित्यं समास" इत्यत्रानुत्तरपदग्रहणेन क्वचिदुभयतदन्तविधेर्ज्ञापनेनादोषात्। अन्यथा परमसर्पिः कुण्डिकेत्यस्येसन्ततदाद्यभावात्षत्वाप्राप्तौ तद्व्यर्थं स्यात्। तेनहे बहुश्रेयसि इति सिद्ध-

(१) देवदत्तश्चिकीर्षतीति। धातुत्वे "सुपो" इति सुलोपः स्यात्॥ ननु प्रातिपदिकावयवसुप्साहचर्येण धात्ववयवोऽपि सुप् संज्ञाप्रयोजक एव गृह्यत इति प्रकृते धातुसञ्ज्ञाप्रयोजकत्वाभावान्नलुग्, इति चेन्न। पदसंज्ञाप्रयोजकत्वस्य तत्रापि सत्वात्॥ नच वृत्तिप्रयोजकत्वेन साहचर्यम्॥ देवदत्तोगार्ग्य इत्यत्र 'देवदत्तो गार्ग्य' इति समुदायस्यापि ताद्धितान्तत्वेन प्रातिपदिकत्वात्तदवयवस्य सुपो वृत्यप्रयोजकस्यापि सम्भवेन साहचर्यस्यासम्भवात्॥

धिरिति तन्न। इयानित्यादौ तस्य तादृशसमुदायेन व्यभिचारेणाक्षेपासम्भवात्। यत्र प्रत्ययो निमित्तत्वेनाश्रीयते, तत्र तदादेरित्यन्तांशमात्रोपस्थितिरिति "अङ्गस्य" ( ६-४-१ ) इति सूत्रे भाष्यकैयटयोः। एवं यत्रापि पञ्चम्यन्तात्परः प्रत्ययः आश्रीयते तत्रापि तदादीत्यन्तांशोपस्थितिः, परन्तु तत्र पञ्चम्यन्तता। अत एव "एङ्ह्रस्वात्" ( ६-१-६९ ) इति सूत्रे एङन्तादित्यर्थलाभः। अस्याः परिभाषायाः प्रयोजनान्तरं "येन विधिः" (१-१-७२) इत्यत्र भाष्ये उक्तम्। परमगार्ग्यायण इति परमगार्ग्यस्यापत्यमिति विग्रहेऽपि गार्ग्यशब्दादेव प्रत्ययो न विशिष्टात्। निष्कृष्य तावन्मात्रेण एकार्थी-

भैरवी।

प्रत्ययज्ञानस्य तादृशसमुदायाक्षेपकत्वमित्यभिमानः। अभिमानन्निरस्यति-*इयानित्यादाविति*। व्यभिचारश्चात्र सत्तायाम्बोध्यः। *तस्य*। श्रूयमाणप्रत्ययस्य। *समुदायेनेति*। सहेतिशेषः, एवञ्चाक्षेपोऽनुमानम्, स च-कालः,स्वप्रकृत्यवयवकसमुदायवान्, प्रत्ययावयवत्वात्, इतिरीत्या न्यायप्रयोगे सति स्वीकार्य्यः। कालिकसम्बन्धो व्याप्यव्यापकभावनियामको वक्तव्यः। एवञ्चेयानित्याद्यधिकरणकालान्तर्भावेन व्यभिचारः स्फुटः।

ननु तदन्तस्य चेत्यनेनांशद्वयस्य सर्वत्रोपस्थितिर्वाच्या चशब्दोपादानात्। एवञ्च "सुपि च" इत्यादौ सुप्चरमावयवको यस्मात्सुब्विधिस्तदाद्यवयवको यः समुदायस्तत्परकस्तत्सुब्निमित्तकाङ्गसंज्ञकोऽप्रसिद्ध इत्यत आह-*यत्र प्रत्यय इति*। मात्रपदेन तदन्तांशानुपस्थितिस्तत्र कल्पनीयेति बोधितम्। अत एव "स्त्रीपुंसाभ्याम्" इति निर्देशसङ्गतिः। एवम् "अतो भिस ऐस्" इत्यादावप्यकारान्तादङ्गात् परस्य भिसन्तस्यासम्भवः इति तत्रापि तदादेरित्यंशमात्रोपस्थितिरित्याह-*एवमिति*। एवञ्चोभयत्रोपस्थितस्य तदादेरित्यस्य विशेष्यत्वं, प्रकृतन्तु तस्य विशेषणमिति भवति तदन्तविधिः। एतावानंशो यद्यप्युभयत्रोपस्थितस्तथापि पूर्वापेक्षया यो विशेषस्तमाह-*परन्त्विति। अतएव*। पञ्चम्यन्तस्य तदादेरित्यस्योपस्थितिसत्त्वादेव। एतेन विशेष्यस्य सुलभत्वमुक्तम्। एवमेकदेशमात्रस्योपस्थितिर्यत्रोक्तप्रकारद्वयन्तत्रैव, यत्र तु केवलप्रत्ययस्यैव शास्त्रे कार्य्यित्वेनोपादानं यथा "कृत्तद्धितसमासाश्च" "बहुगणवतुडतिसङ्ख्या" "डतरडतमौ" सर्वादिषु पठितौ तत्रोभयांशोपस्थितिरभवति एतदेव ध्वनयति-*अस्या इति*। देवदत्तश्चिकीर्षतीत्यत्र प्रयोजनस्योक्तत्वादाह-*प्रयोजनान्तरमिति*। न विशिष्टात्*। न परमगार्ग्येतिसमुदायात्।

ननु "यञिञोश्च" इति सूत्रे प्रातिपदिकादित्यस्य पञ्चम्यन्तस्य सम्बन्धाद्वक्ष्यमाणाया: "प्र-

तत्वप्रकाशिका।

म्। *तादृशसमुदायाक्षेपकत्वमिति*। एवञ्च 'प्रत्ययः स्वप्रकृत्यवयवकसमुदायविशिष्टः, प्रत्ययत्वात्' इत्यनुमानगम्येयमितिभावः। *व्यभिचार इति*। यद्यपि प्रत्ययः स्वप्रकृत्यवयवकसमुदायत्वेनोपलक्षित इत्युक्तौ नास्ति व्यभिचारस्तथाप्येतन्मते आक्षिप्तपदार्थस्य शाब्दबोधे भानाभावेन स्वोक्तकल्पस्यैव युक्तत्वमिति बोध्यम्। *यत्रोक्तप्रकारद्वयमिति*। अयम्भावः- यत्र पञ्चम्यन्तात्परः प्रत्ययः आश्रीयते तत्र "प्रत्ययग्रहणे चापञ्चम्या" इति तदन्तविधिनिषेधात्तदाद्यंशमात्रमुपतिष्ठते। परन्तु तत्र पञ्चम्यन्तता। यत्र तु प्रत्ययः सप्तम्यन्तत्वेनोपादीयते तत्र कस्मात्पर इत्यवध्याकाङ्क्षायां पूर्वत्वेनाभिमतस्य पञ्चम्यन्ततयोपस्थित्या तत्रापि प्रत्ययस्य पञ्चम्यन्तात्परत्वेन प्रत्ययग्रहण इति तदादिविधिनिषेधः। *एङन्तादिति*। अङ्गाक्षेपस्यासम्भवात्तदादिविशेष्यकतदन्तविधिरितिभावः। एङ्साहचर्यात् ह्रस्वान्ततदादेः सम्बुद्ध्यवयवाघटितस्य ग्रहणेन हे कतरदित्यत्र रान्तस्य तदादित्वाद्धकारलोपाशङ्का नेति बोध्यम्।

भावाभावेऽपि वृत्तिर्भवत्येव। अत्र चेदं भाष्यमेव मानमित्यन्यत्र विस्तरः।

भैरवी।

त्यग्रहणे चापञ्चम्या" इति परिभाषाया विषयतासत्वात् कथमिहांशद्वयोपस्थितिरिति चेन्न "यञिञोः" इति पञ्चम्यर्थे षष्ठी प्रातिपदिकादिति च तस्य समानाधिकरणं विशेषणमिति निषेधस्याप्राप्तेः, तत्र हि पञ्चम्यन्तं प्रत्ययस्य वैयधिकरण्येन विशेषणन्तत्रैव निषेधवार्त्तिकस्य प्रवृत्तेः। एतच्च तस्य निषेधवाक्यस्य व्याख्यानेन स्फुटीभविष्यति।

ननु परमगार्ग्यस्यापत्यमिति विग्रहे विशिष्टार्थस्यापत्यार्थेन सबन्धो न तु केवलगार्ग्यशब्दार्थस्येति कथमत्र समुदायात् प्राप्तिरत आह—*निष्कृष्येति*। अत्र निष्कृष्यैकार्थीभावाभावेऽपि वृत्तिप्रवृत्तौ इदम्भाष्यमेवेत्यत्रैवकारोऽप्यर्थः। तेन "अनुपसर्जनात्" इति सूत्रे कुम्भकार्या अपत्यमित्यर्थे कारीशब्दादपि ठगापत्तिरितिशङ्कापरभाष्यमपि मानमित्यस्य लाभः, एतदेवाह—*अन्यत्रेति*।

यत्तु परमगार्ग्यस्यापत्यमितिविग्रहे गार्ग्यशब्दात् फक्प्रत्ययेऽपत्यार्थे परमशब्दार्थो विशेषणमिति तन्न। एवं सति परमगार्ग्यस्यापत्येन योगाभावाद्विशिष्टात् प्राप्त्यभावेन परिभा-

तत्वप्रकाशिका।

*विशिष्टार्थस्यापत्यार्थेन सम्बन्ध इति*

अयम्भावः—वृत्तिघटकपदार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकपदस्य वृत्त्यघटकपदार्थनिष्ठप्रकारतानिरूपितविशेष्यत्वाप्रयोजकत्वं यत्र तत्रैव वृत्तिरितिनियमस्य ऋद्धस्य राज्ञः पुरुष इत्यत्र वृत्तिवारणायावश्यं वक्तव्यतया प्रकृते गार्ग्यफगित्यनयोर्या तद्धितरूपा वृत्तिस्तद्घटकफगर्थनिरूपितप्रकारताप्रयोजकस्य गार्ग्येत्यस्य तद्वृत्त्यघटकपरमपदार्थनिष्ठप्रकारतानिरूपितविशेष्यताप्रयोजकत्वेन तद्धितरूपा वृत्तिर्न स्यादतो विशिष्टार्थस्यापत्यार्थेन सन्बन्ध आवश्यकः। तदाह—*नतु केवलगार्ग्यशब्दार्थस्येति*। *समुदायात्*। गार्ग्यशब्दात्। *निष्कृष्येति*। अयमाशयः—यादृशयोः पदयोः वृत्तिश्चिकीर्षिता तद्वृत्तित्वेन सम्भाव्यमानैकार्थीभावानाश्रयीभूतपदार्थनिष्ठप्रकारतानिरूपितविशेष्यत्वाप्रयोजकं यत्र वृत्तिघटकपदन्तत्र वृत्तिर्भवतीतिनियमस्याभ्युपगमेन ऋद्धस्य राज्ञः पुरुष इत्यत्र ऋद्धस्य राजपुरुषयोः या वृत्तिस्तद्वृत्तित्वेन सम्भाव्यमानैकार्थीभावानाश्रयीभूतत्वेन न तत्र वृत्तिः। परमगार्ग्यायण इत्यत्र नु परमशब्दस्य गार्ग्यफगित्यनयोर्वृत्तित्वेन सम्भाव्यमानैकार्थीभावाश्रयीभूतत्वेन तन्निरूपितविशेष्यताश्रयत्वेऽपि गार्ग्या शब्दाद्वृत्तिर्भवत्येव। पर्याप्त्या समुदाये एकार्थीभावसत्वेऽपि, अपर्याप्त्यागार्ग्यशब्देऽपि तस्य सत्वाद्वृत्तिः भवतीति भावः।

नन्वेवंराजपुरुषयोस्समासेऽपर्याप्त्या पुरुषनिष्ठमेकार्थीभावमाश्रित्य तस्मादिञि राजपौरुषिरिति स्यात् नचेष्टापत्तिः, "समासप्रत्ययविधौ प्रतिषेधः" इतिवार्तिकस्य सौत्रनाडिरितिफलकानपरभाष्यस्यापर्याप्त्येकार्थीभावमादाय दोषसत्वेन विरोधापत्तेः,

नच भाष्यप्रयोगविषयत्वस्वीकारान्न दोष इति वाच्यम्। अनुपसर्जनादितिसूत्रस्थस्य, कुम्भकारेयोप्यापद्येत इति भाष्यस्यासङ्गत्यापत्तेरितिचेन्न यत्र प्रत्ययान्तत्वव्याप्यधर्मावच्छिन्नोद्देश्यताकः प्रत्ययो भवति तत्रापर्याप्त्यैकार्थीभावमादायवृत्तिर्भवतीति नियमेनादोषात्। नचैवमपि राजपुरुषिघटकपुरुषिघटकपुरुषिशब्दात्फका भवितव्यम्। नच प्रत्ययत्वव्याप्येत्यत्र प्रत्ययस्य प्रातिपदिकपर्याप्तानुपूर्व्यवच्छिन्नोद्देश्यताकस्य ग्रहणेन न दोषः। कुम्भकारेयोप्यापद्येतेतिभाष्यस्यासङ्गतेरितिवाच्यम्। आनुपूर्व्यवच्छिन्नोद्देश्यताकप्रत्ययवृत्तिप्रत्ययत्वव्याप्यधर्मावच्छिन्नोद्देश्यताकप्रत्ययविधिविषये तथानियमात्। एवञ्च न क्वापि दोषलेश इति बोध्यम्।

ननु प्रत्ययस्य प्रत्ययत्वव्याप्यधर्मावच्छिन्नग्रहणेऽपि प्रकृते सन्त्वस्य धातावपि सत्वेन

प्रत्ययमात्रग्रहणे एषा न तु प्रत्ययाप्रत्ययग्रहण इति "उगितश्च" (४-१-६) इति सूत्रे भाष्ये । इयमङ्गसंज्ञासूत्रे भाष्ये स्पष्टा ॥ २३ ॥

"येन विधिः" ( १-१-७२ ) इति सूत्रे भाष्य एतद्धटकतदन्तांशस्यापवादः पठ्यते—

## प्रत्ययग्रहणे चापञ्चम्याः ॥ २४ ॥

यत्र पञ्चम्यन्तात्परः प्रत्ययः कार्यान्तरविधानाय परिगृह्यते, तत्र तदन्तविधिर्नेत्यर्थः । यथा "रदाभ्यां निष्ठातो नः" ( ८-२-४२ ) इत्यत्र । तेन दृषत्तीर्णेत्यादौ धातुतकारस्य न नत्वम् । तदन्तेत्यंशानुपस्थितावपि तदा-

भैरवी ।

पाप्रयोजनकथनपरभाष्यस्यासङ्गतेः । *प्रत्ययमात्रग्रहण इति* । यत्रोच्चारितं पदम्प्रत्ययभिन्नस्याबोधकन्तत्र । *भाष्ये इति* । यत्र हि विशेषणविशेष्यभावे कामचारादुगितः प्रातिपदिकादुगिदन्तात् प्रातिपदिकादित्यर्थयोः सम्भवादुभयमवलम्ब्य लक्ष्याणि प्रसाध्योभयथापि निर्यत्रमतीनिर्गोमतीति न सिध्यतीत्याशङ्क्योगित्वस्य प्रत्ययाप्रत्ययसाधारणत्वेन समाहितम् ॥ २३ ॥

उक्तपरिभाषापवादत्वादाह-*येनेति* । "प्रत्ययग्रहणे चापञ्चम्या" इति वार्त्तिकम् । अत्रापञ्चम्या इत्यसमर्थसमासः प्रत्ययः पर इति शेषः । एवञ्च प्रत्ययग्रहणे तदन्तस्यग्रहणम्भवति प्रत्ययः पञ्चम्यन्तात्परो न गृह्यते चेदित्यर्थस्तत् फलितमाह-*यत्रेति* । परिगृह्यते* । अनूद्यते । अनेन तदन्तांशमात्रस्य निषेधादपवादत्वव्यवहारः । *न नत्वमिति* । रेफदान्तात् परं निष्ठान्तमित्यर्थेन धात्ववयवतकारस्य नत्वापत्तिरिति भावः । एकदेशस्यैवायन्निषेध इत्यर्थस्य स्पष्टप्रतिपत्तये आह-*तदन्त इत्यादि* । न च "रदाभ्याम्" इत्यस्य निष्ठाविशेषणत्वे चरितम्मुदितमित्यत्र नत्वापत्तिः, निष्ठातकारस्य विशेषणत्वे पञ्चम्यन्तात् परस्य प्रत्ययस्य ग्रहणाभावेन तदन्तांशोपस्थितिः स्यादेवेति वाच्यम् । संयोगादेरित्युत्तरसूत्राद्धातोरित्यस्यापकर्षेण तस्य निष्ठाविशेषणतया तदन्तांशानुपस्थितेः सिद्धौ रदाभ्यामिति तदवयवतकारस्य निर्दिश्यमानविशेषणमिति तत्राप्राप्तेः । यदि तु निर्दिश्यमानत्वं कार्यविधायकशास्त्रघटकशब्दजन्यप्राथमिकशक्तिग्रहविशेष्यतावच्छेदकानुपूर्व्यवच्छिन्नत्वमित्युच्यते तदाऽनया परिभाषया रदाभ्यामित्यस्य निष्ठाविशेषणत्वेऽपि न चारितादौ दोषः । नचैवं निर्दिश्यमानपरिभाषयैव दृषत्तीर्णमित्यादौ धातुतकारस्य व्यावृत्तौ सिद्धायां "रदाभ्याम्"इति सूत्रन्नैतस्याः परिभाषायाः प्रयोजनमिति वाच्यम्। "स्यतासी लृलुटोः" इत्याद्यर्थमियमारब्धव्या । तथा-च-अनयापि रदाभ्यामित्यत्र निर्वाह इत्याशयात् । *तदंशानुपस्थिताविति । यत्र तदन्तस्येत्यंशस्यानुपस्थितिः तत्र प्रत्ययग्रहणे यस्मात्प्रत्ययविधिस्तदादेरित्यंशानुपस्थितावित्यर्थः ।

एतेन यत्र "सनाद्यन्तशब्देन प्रत्ययस्योपादानं तत्रापि तदन्तस्येत्यंशस्यानुपस्थितावपि "यस्मात्प्रत्ययविधिस्तदादेः"रित्यंशस्य षष्ठ्यन्तस्योपस्थितिरस्त्येवेति बोधितम् । तेन वासुदेववाचकात् अशब्दात् "तत्र साधुः" इति यति "यस्येतिच"इति लोपे प्रत्ययमात्रस्य यशब्दस्य व्यपदेशिवद्भावेन तद्धितान्तत्वात् प्रातिपदिकत्वे सुपि षष्ठ्यन्तगोशब्दस्य तेन समासे गोय इति प्रयोगे "वान्तो यि प्रत्यये" इत्यवादेशाभावः । एवं हृदयस्य यः हृदय इत्यत्र "यस्य" इति लोपाभावो हृदयस्य हृदादेशाभावश्च फलंसिध्यति । एतत्परिभाषाविषये प्रयोजनमाह—तदे-

तत्वप्रकाशिका ।

प्रत्ययत्वव्याप्यत्वाभावेन दोषतादावस्थ्यमत आह-*प्रत्यमात्रग्रहण इति*। एवञ्च "सनाद्यन्त" इत्यत्रत्यसन्त्वस्य प्रत्ययमात्र सत्वेन न दोषः। धातुमात्रवृत्तेस्तु न ग्रहणम् क्यजादीन-

दीत्यंशस्योपस्थितौ रेफदान्तात्परस्य निष्ठातस्येत्यर्थ इति न दोषस्तदंशानुपस्थितौ मानाभावात् । तदन्तांशोपस्थितौ तूभयोरेकविषयत्वमेव स्यादिति

भैरवी ।

सांश इति । उभयोर्द्वयोरंशयोरेकविषयत्वमेवेति* । तथा चांशयोः समानकालोपस्थितिकत्वरूपसमनियतत्त्वापत्तिरित्यनेन 'प्रत्ययग्रहण' इति परिभाषाविषये प्रयोजनं स्फुटमभिहितम् । यद्येकविषयत्वं तदा यत्र तदन्तत्वं तत्रैव तदादित्वमपि ग्राह्यं "रदाभ्याम्" इत्यस्य पंचम्यन्तस्य प्रत्ययविशेषणस्य सत्त्वादुभयोरप्यंशयोरनुपस्थितौ यत्र प्रयोगे रदाभ्यां परा निष्ठास्ति तत्र निष्ठावयव तकारस्य पूर्वस्य दश्च नत्वमित्यर्थेन दृशच्छब्दावयवदकारस्य तत्प्रयोगघटकस्य नत्वापत्तिः । धातुतकारस्यांशद्वयानुपस्थितौ नत्वापत्तिस्तु नास्तीत्याशयेनेह दृषत्तोर्णेत्यादौ दोषः स्यादित्येवाभिहितम् । नतूभयोरुपस्थितिकाले यथा धातुतकारस्य नत्वापत्तिरुक्ता तथाधुनाऽप्युक्तम् । किं चोभयोः समनियतत्त्वे "सनाद्यन्ता धातवः" इति सूत्रे स्वत एत्रान्तपदस्य सत्त्वेन प्रत्ययग्रहणपरिभाषाघटकस्य तदन्तस्येत्यंशस्य फलाभावादनुपस्थितौ तदादेरित्यस्यापि अनुपस्थितिः स्यात् । एवञ्च देवदत्तश्चिकीर्षतीत्यत्र समुदायस्य धातुत्वापत्तिरूपदोषानुद्धारोऽस्त्येवेति बोध्यम् ।

तत्त्वप्रकाशिका ।

नामग्रहणापत्तेः "भूवादयः" इत्यनेनैव सिद्धेः सूत्रवैयर्थ्यापत्तेश्च ।

ननु प्रतिषिषतीत्यत्रज्झनेतिदीर्घमाशङ्क्योत्तरस्तु प्रत्ययो नेति समाधानपरशेखरेण सन्त्वस्य प्रत्ययमात्रे वृत्तित्वाभाव इति चेन्न । प्रतिषिषेति भाष्योदाहरणेनोत्तरत्रापि तत्सत्वात । प्रतिषिषतीत्यत्र तु अज्झनेत्यत्र हन्साहचर्येण धातुपाठपठितस्यैवाजन्तस्य ग्रहणेन न दोष इति बोध्यम् । एवञ्च प्रत्ययत्वव्याप्यधर्मावच्छिन्नपदप्रयोज्य प्रत्ययमात्रवृत्ति बोधोपस्थितीया या विषयता तदाश्रयं शास्त्रं तदादितदन्तस्य बोधजनकम्भवतीति प्राचीनाः । नव्यास्तु स्वाभाववत्व स्वाश्रयनिष्ठोद्देश्यतानिरूपितविधेयताश्रयभिन्नत्वैतदुभयसम्बन्धेन स्वविशिष्टवृत्तित्व स्वसमानाधिकरणोत्वोभयसम्बन्धेन प्रत्ययत्वविशिष्टधर्मावच्छिन्नविषयताप्रयोजकपदघटितशास्त्रे तदादितदन्तस्य ग्रहणं भवतीत्यर्थं स्वीकृत्य निखिलं दोषं वारयन्ति ॥ २३ ॥

*एतद्घटकतदन्तांशस्येति* । प्रत्ययग्रहणपरिभाषाघटकतदादिविशेष्यकतदन्तांशस्येत्यर्थः । तेन "पाद्यञश्चाब्बाच्यः" इत्यत्र प्रातिपदिकविशेष्यकतदन्तविधौ यञन्तादित्यर्थः ।

ननु प्रत्यासत्त्या पञ्चम्यन्तनिर्दिष्टप्रत्ययाद्यत्र प्रत्ययविधिस्तत्र स नेत्यर्थो वाच्यः "समासप्रत्ययविधौ" इति तु सौत्रस्य निषेध इति नानेनास्य गतार्थतेति चेन्न । "ञितश्चतत्प्रत्ययात्" इत्यस्य विकारावयवविहितप्रत्ययादञित्यर्थापत्योष्ट्रविकारादुष्ट्रकादञि वुञ एवाङ्गसंज्ञायां वृद्धिस्वरापत्तेः । तदेतद्ध्वनयन्नाह—*यत्रेति । कार्यान्तरविधानायेति* । पञ्चम्यन्तात्परः प्रत्ययः यत्र प्रत्ययविधानाय गृह्यते तत्र तदन्तविधिर्नेति भावः । फलितार्थकथनमिदम् प्रत्ययसंज्ञाविधानात्प्राक्प्रत्ययत्वज्ञानाभावात्प्रत्ययग्रहणपरिभाषाया अप्रवृत्या तत्रैतस्याः स्वतोऽप्रवृत्तेः ।

केचित्तु "किमेत्तिङव्यय" इत्यस्य किंशब्दात्परो यो घस्तदन्तादामुप्रत्यय इत्यर्थं किन्तरामित्यस्य तद्धितान्तत्वेनार्थवत्वात्प्रातिपदिकत्वं सिध्यति । अन्यथा तरामित्यस्य तद्धितान्तत्वे ऽपि अर्थवत्त्वाभावात्तन्न स्यादितिभाव इत्याहुः, तन्न । "किमेत्तिङव्यय" इत्यत्र प्रातिपदिकविशेष्यकतदन्तविधेर्निराबाधत्वात् । *मुदितमित्यत्र नत्वापत्तिरिति* । नच निर्दिश्यमानपरिभाषया न दोषः, तकारविशेषणतया समाधानपरभाष्यप्रामाण्येन तस्या अत्राप्रवृत्तेः 'निष्ठान' इत्येव सिद्धेस्तकारोच्चारणसामर्थ्याच्च । इतशब्दस्य पुनर्निष्ठासंज्ञायां भाष्याविरोधस्तु न शङ्क्यः, स्वजन्यद्वितीयोपस्थितिविषयत्वाभाववत्त्वे सति षष्ठीप्रकृतिजन्यप्राथमिकोपस्थितिविषयताश्रयत्वरूपस्य तस्य स्वीकारात् । *नैतस्याः परिभाषायाः प्रयोजन-

दृषत्तीर्णेत्यादौ दोषः स्यादेव । "स्यतासी लृलुटोः" ( ३-१-३३ ) इत्यादौ लृलुटोः परयोरित्यर्थे नियमेनावधिसाकाङ्क्षत्वेनोपस्थितधातोरित्यस्यावधित्वेनान्वयान्न तदन्तविधिः । "हल्ङ्याब्भ्यः" ( ६-१-६८ ) इत्यादौ तु न दोषस्तत्र कस्मादिति नियतावध्याकाङ्क्षाया अभावेन पञ्चम्यन्तस्य प्रत्ययविशेषणत्वाभावात् । अङ्गसंज्ञासूत्रे तु तदादेः प्रत्यये पर इत्यर्थे पञ्चम्यन्तस्य विशेषणत्वं स्पष्टमेव । अत एव "उत्तमैकाभ्याम्" ( ५-४-९९ ) इत्यादिनिर्देशाः सङ्गच्छन्ते ॥ २४ ॥

नन्वेवं कुमारी ब्राह्मणिरूपेत्यादौ "घरूप" (६-३-४३) इति ह्रस्वापत्तिर्भैरवा ।

यत्तु "सुप्तिङन्तम्" इति पदसंज्ञायामपि दोषः स्यादिति तन्न । तत्र यस्मात्प्रत्ययविधिरित्यस्यानुवृत्त्या निर्वाहात् ।

ननु "स्यतासी"इति सूत्रे प्रत्ययविशेषणबोधकपञ्चम्यन्तानुपादानेनांशद्वयोरुपस्थितौ दोषः स्यादत आह-*स्यतासीति । अवधिसाकांक्षत्वेन* । परत्वस्यावधित्वनिरूपकतया नियमेनावधिसाकांक्षत्वेन उपस्थितेति धातोरित्यधिकारे तस्य पाठेनेत्यादिः । *न तदन्तविधिः । न प्रत्ययग्रहण परिभाषाप्रवृत्तिः । यद्यपि धातोरिति स्यातासी विशेषणमत एव तयोरार्द्धधातुकत्वसिद्धिस्तथाप्युपस्थितत्वात् तदेवावधित्वेन कल्प्यत इति भावः ।

नन्वेवं ङ्यापोरपि प्रत्ययत्वात् ताभ्यां प्रातिपदिकादित्यस्याक्षेपे तस्य ङ्याब्विशेषणत्वेन तदन्तांशानुपस्थितौ ङ्यन्तादाबन्तादित्यर्थालाभोऽत आह-*ङ्याब्भ्य इत्यादाविति । अभावेनेति* । आक्षिप्तस्यार्थस्य शाब्दबोधे भाने मानाभावेन नियतावध्याकाङ्क्षाया अभावेनेत्यर्थः । एवञ्चोपस्थितस्य तदादेरित्यस्य विशेष्यत्वं ङ्याप्शब्दश्च तद्विशेषणमिति भवति तदन्तविधिः।

नन्वेवमङ्गसंज्ञासूत्रे सामान्यतः प्रत्यय इत्यस्योपादानेन तदन्तविधौ प्रत्ययपूर्वभागस्यैवाङ्गत्वमित्यस्य कथं लाभ इत्यत आह—*अङ्गसंज्ञासूत्र इति* । एवञ्चोपस्थिततदादेरित्यस्यैवावधित्वेनान्वयान्न तदन्तांशोपस्थितिः । *अत एव* । तदादेरित्यस्यावधित्वेनान्वयात् तदन्तांशानुपस्थितेरेव । अन्यथाऽङ्गत्वं प्रकृतिमात्रस्य न स्यादितिनिर्देशासङ्गतिः स्पष्टैव २४॥

*नन्वेवम्* । प्रत्ययग्रहणपरिभाषास्वीकारे । *कुमारीति* । पृथक्पदमेतत् । न च रूपबाद्यंशे तदन्तविधावपि नात्र ह्रस्वत्वस्य प्राप्तिः, उत्तरपदशब्दस्य समासचरमावयवे रूढतया ब्राह्मणिरूपेति समुदायस्योत्तरपदत्वाभावादिति वाच्यम् ? समानाधिकरणसमासे दोषदानाय तादृशसमाससमानार्थकवाक्यस्त्वोपादानात् । दोषस्तु कुमारब्राह्मणिरूपेत्यत्र बोध्यः । अत्र हि कुमारीशब्दस्य पुंवद्भावं बाधित्वा "पुंवद्भावाद्ध्रस्वत्वं विप्रतिषेधेन"इतिवार्त्तिकबलात्पुंवत्वबाधकं ह्रस्वत्वं स्यात् । तथा च-कुमारिब्राह्मणिरूपेति स्यादित्यत्र तात्पर्यम् । घेत्यंशे संज्ञाविधाविति निषेधात् तदन्तविध्यभावेन दोषो नोक्तः ।

तत्वप्रकाशिका ।

मिति* । नच "निष्ठायां त" इति सप्तमीतत्पुरुषे न निर्दिश्यमानपरिभाषाप्रवृत्तिरिति वाच्यम् ? सप्तमीतियोगविभागस्य भाष्येऽदृष्टत्वेन, "सह सुपा" इत्यस्यागतिकगतिकत्वेन, समासस्याप्राप्तेः । नचाचारक्विबन्तादनुनासिकत्वविशिष्टाद्धातोः क्तप्रत्यये दृपत्त इत्यस्योपलक्षणमिति वाच्यम् । तस्यानभिधानात् । अनन्त्यविकारपरिभाषाया न विषयः, देवर्त्त् इत्यत्रानन्त्यविकाराभावात् ॥ २४ ॥

अपवादसङ्गत्याऽह—*नन्वेवमिति* । कुमारीशब्दस्य भाषितपुंस्कत्वेन पुंवद्भावप्राप्त्या बहुव्रीहिकर्मधारयोरभावात्, नदीतरेत्यत्र ह्रस्वव्यावृत्त्यर्थं समानाधिकरणे उत्तरपदे ह्रस्वविधानेन षष्ठीतत्पुरुषस्याप्यविषयत्वादाह—*पृथक्पदमिति । कुमारब्राह्मणिरूपेति* । वयोवा-

रत आह—

## उत्तरपदाधिकारे प्रत्ययग्रहणे न तदन्तग्रहणम् ॥ २५ ॥

"हृदयस्य हृल्लेखयदण्लासेषु"(६-३-५०) इत्यत्र लेखग्रहणात् । तत्रलेखेति न घञन्तमनभिधानात् । इयं च "हृदयस्य" इति सूत्रे एव भाष्ये स्पष्टा ॥ २५ ॥

भैरवी ।

नन्वत्र घादिषु परेष्विति ज्ञाने कस्मादित्याकाङ्क्षायां यस्माद्विधिरित्यस्योपस्थितया यस्माद्विधिस्तदादेः परो यो घादिरित्यर्थे पञ्चम्यन्तात् परस्य प्रत्ययस्याश्रयणेन "प्रत्ययग्रहणे चाप ञ्चम्या" इत्येव सिद्धेऽस्या वैयर्थ्यमिति चेन्न । शब्दस्वरूपं विशेष्यमादाय प्राप्ततदन्तविधेस्तथा निषेधोऽपि उत्तरपदस्य विशेष्यत्वाद्यस्तदन्तविधिः प्राप्तस्तन्निषेधार्थमस्यावश्यकत्वात् । द्विविधतदन्तविधिनिषेधकत्वन्तु तस्या वक्तुमशक्यम्, "येन नाप्राप्तन्यायेन" पूर्वप्रतिपादिततदन्तविधेरेव तया निषेधात् । प्रकृतपरिभाषायां ज्ञापकमाह—*"हृदस्य" इति* । अन्यथाऽणैव सिद्धे लेखग्रहणन्न कुर्यात् ।

ननु लेखग्रहणं यत्र घञन्तेन समास्तदर्थमस्तु इत्यत आह—*तत्रेति* । तत्र उक्तसूत्रे गृह्यत इति शेषः । अनभिधाने मानमाह-*इयञ्चेति* । तत्र हि-लेखग्रहणस्य उक्तरीत्या ज्ञापकत्वमुपपादितम् । यदि च हृल्लेखशब्दावयवो लेखशब्दो घञन्तः स्यात् । तदा ज्ञापकपरभाष्यविरोधः स्पष्ट एव ।

ननु अयन्निषेधो यद्युत्तरपदाधिकारपठितप्रत्ययत्वावच्छेदेन कल्प्यते तदा "घरूप"इतिसूत्र एव ङीग्रहणेन तदन्तग्रहणं न स्यात् । एवम् "इको ह्रस्वो ङ्यो गालवस्य" "ङ्यापोः संज्ञाछन्दसोः" खित्यनव्ययस्य" इत्यादावपि निषेधापत्तिरिति चेन्न । ज्ञापकस्य सजातीयापेक्षत्वेन निमित्तत्वेनेष्टस्य प्रत्ययस्य यत्र ग्रहणं तत्र उपात्तस्य प्रत्ययस्य उत्तरपदविशेषणत्वं न इत्येव कल्प्यते। ङ्यः ङ्यापोरित्यनयोर्न निमित्तत्वम् । षष्ठ्यन्तशब्देनोपादानात् । "खिति"इति सूत्रे यद्यपि सप्तम्यन्तपदबोध्यं तत्त्वं,तथापि तन्न उपात्तम्, किन्तु बहुव्रीहिबोध्यमित्यदोषात् । उपात्तत्वञ्च प्रत्ययशब्दशक्यतानच्छेदकं यद्रूपं तेन रूपेण गृहीतत्वम् । अत एव "रात्रेः कृति" "विष्वग्देवयोश्चटेरद्र्यञ्चतावप्रत्यये" अनयोर्न निषेधस्य विषयता । "श्येनतिलस्य पाते ञे" "उपसर्गस्य घञ्यमनुष्ये" तनिपुकौ" एतेषु सप्तम्यन्तशब्दबोध्यत्वं यद्यपि अस्ति, तथापि न निषेधः उत्तरपदविशेषणत्वस्य सामर्थ्येन कल्पनादिति दिक् ॥ २५ ॥

तत्त्वप्रकाशिका ।

चीनां पाक्षिकजातिकार्यत्वात् पुंवद्भावस्य "जातेश्च" इति निषेधेन कुमारीब्राह्मणिरूपेत्यपि बोध्यम् । *शब्दस्वरूपं विशेष्यमादाय* इति । सामान्यतः यत्किञ्चित्पदविशेष्यकतदन्तविधेस्तु न निषेधकस्तथा सति "तिङ्ङतिङ" इत्यत्रापि पदविशेष्यकतदन्तविधेर्निषेधेन देवदत्ता भवतीत्यत्र तिङन्तस्य निघातानापत्तेः । *न कुर्यादिति* । नच तदन्तविधिना परमलेखशब्दे हृदादेशार्थं तदिति वाच्यम् ? ज्ञापकपरभाष्यप्रामाण्येन तस्यानभिधानात् । "गिलेऽगिलस्य" इत्यनेनैव तदन्तविधिना "तिमिंगिलगिल" इत्यस्य सिद्धेः" गिलगिले च" इति वचनेनः"प्रातिपदिकग्रहणे उत्तरपदाधिकारे न तदन्तविधिः" इति परिभाषाज्ञापनेन फलभेदाभावाच्च ।

नच तिमेः गिलस्य च यो गिलस्स तिमिंगिलगिल इत्यत्रोत्तरपदत्वाभावेन तदर्थं तदिति वाच्यम् ? एतादृशशब्देऽन्तरङ्गत्वात्पूर्वमेव मुम्सिद्धेः ।

यत्तु गिलान्ते चेत् गिलगिले एव इति नियमेन चरितार्थत्वम् । अत एव तिमिक्षिप्रगिल इत्यत्र मुम् न इति वदन्ति तन्न विधेर्बलीयस्त्वात् । *उपात्तस्य प्रत्ययस्येति । श्रावणप्रत्य-

नन्वेवं परमकारीषगन्धीपुत्र इत्यत्रेवातिकारीषगन्ध्यापुत्र इत्यत्र "ष्यङः सम्प्रसारणं पुत्रपत्योः" ( ६-१-१३ ) इति स्यादत आह—

## स्त्रीप्रत्यये चानुपसर्जने न ॥ २९ ॥

विषयसप्तमीयम् । यः स्त्रीप्रत्ययः स्त्रियं प्राधान्येनाह तत्र तदादिनियमो

भैरवी ।

प्रत्ययप्रसङ्गादाह—*नन्वेवमिति । एवं प्रत्ययग्रहणपरिभाषासत्वे उक्तस्थलेष्वेव तदन्तांशनिषेधस्वीकारे इति वा । न च प्रत्ययग्रहण इति परिभाषासत्वात् कथं परमकारीषगन्धीपुत्र इत्यत्र सम्प्रसारणप्राप्तिरिति दृष्टान्तासङ्गतिरिति वाच्यम् ? भाष्ये प्रथमतः स्त्रीप्रत्ययेन'इत्येव पठितमतः तेन प्रत्ययग्रहण इति परिभाषाया निषेधे परमकारीषगन्धीपुत्र इत्यत्र यथा भवति तथाऽतिकारीषगन्ध्यापुत्र इत्यत्रापि स्यादित्यर्थात् ।

यद्वा इवशब्दो भिन्नक्रमः अतिकारीषगन्ध्यापुत्रशब्दानन्तरं द्रष्टव्यः, एवञ्चातिकारीषगन्ध्यापुत्रशब्दघटकपूर्वपदसम्बन्धयभावप्रतियोगि "ष्यङः सम्प्रसारणं पुत्रपत्योः"इतिसूत्रविहितं सम्प्रसारणं यथा भवति तथा परमकारीषगन्धीपुत्रइत्यत्रापि स्यादित्यर्थः।*स्त्रीप्रत्यये चानुपसर्जनेन* । अत्र स्त्रीप्रत्यय इत्यस्य गृह्यमाण इति शेषः, अनुपसर्जने न इति विषयसप्तमी। एवञ्च स्त्रीप्रत्यये गृह्यमाणेऽनुपसर्जनस्त्रीप्रत्ययविषये तदादिनियमो नेत्यर्थस्तत्फलितार्थमाह—*य स्त्रीप्रत्यय इत्यादिना*।तदादिनियमो नेत्यस्य तद्वारेरित्यंशस्य तत्रानुपस्थितिरित्यर्थः। अतिप्रसङ्गशङ्का-

तत्त्वप्रकाशिका ।

क्षविषयतावच्छेदकधर्मावच्छिन्नविषयताप्रयोजकस्य प्रत्ययस्येत्यर्थः । नचैवं"एकतद्धिते च" इत्यत्राप्रवृत्यापत्तिः, "सर्वनाम्नो वृत्तिमात्र" इति भाष्येष्टया तस्य गतार्थत्वात् । एवञ्चोत्तरपदाधिकारे सप्तम्यन्ते निरुक्तप्रत्ययग्रहणे उत्तरपदविशेष्यकतदन्तविधिर्नेति फलितः । तथा च न क्वापि दोषलेशः ।

केचित्तु "एकतद्धिते च" इत्येतदर्थं कृद्भिन्नविषयताप्रयोजकपदघटिते शास्त्रे तदन्तविधिर्नेति परिभाषार्थस्य सत्वेन "सुपिच" इत्यादावप्यनेनैव तदन्तविधिनिषेधेन "प्रत्ययग्रहणे चापञ्चम्या" इति परिभाषा न कर्तव्या । न च "स्यतासी लृलुटोः" इत्यत्र कृदन्तत्वेन निषेधो न स्यादिति वाच्यम् ? कृदतिङ्" इत्यस्य तिङ्स्थानितावच्छेदकधर्मवद्भिन्नाः कृत्संज्ञकाः भवन्तीत्यर्थेन लृलुटोः कृत्संज्ञाया अभावात् । दृषत्तीर्ण इत्यत्र निष्ठान्ततदाद्यवयवस्य निष्ठातकारस्य नत्वमित्यर्थेन न दोष इति वदन्ति ॥ २९ ॥

*प्रत्ययप्रसङ्गादिति* । अपवादसङ्गत्येति शेषः । *स्यादित्यर्थ इति* । केचित्तु इवेन नित्यसमासस्य विधानाद्भिन्नक्रमस्यासम्भवेन विभक्त "यस्मात्प्रत्यय" इति सूत्रेऽस्त्रीत्यनुवर्त्य स्त्रीप्रत्ययभिन्ने प्रत्ययग्रहणे तदादेरुपस्थित्या यथाश्रुतमेवावतरणमुपवर्ण्य परिभाषयाऽनुपसर्जनेनिषेधं नियमयन्ति । *स्त्रीप्रत्यये चानुपसर्जने नेति* । अनुपसर्जनविषयकस्त्रीप्रत्ययबोधकपदघटिते शास्त्रे तदादेरुपस्थितिर्न भवतीति परिभाषार्थः । अयमत्राशयः—ष्यङ इत्यादिशास्त्रमावर्तनीयम् । तत्राद्येऽनुपसर्जनविषयिका स्वरितत्वप्रतिज्ञा कर्तव्या । द्वितीयमुपसर्जनविषयकम् । तत्रानया परिभाषया प्रथमे तदादिविधेर्निषेधेन परमकारीषगन्धीपुत्र इत्यत्र सम्प्रसारणं भवति । अतिकारीषगन्ध्यापुत्र इत्यत्र तूपसर्जनत्वात्प्रथमस्याप्राप्तिः । द्वितीयस्यापि तदादेरुपस्थित्या ष्यङन्ततदादित्वाभावेनाप्राप्तिः ।

न च द्वितीयं वाक्यमनर्थकमुदाहरणाभावादितिवाच्यम् ? कम्बुकन्तकारीषगन्ध्याशब्दस्य पुत्रशब्देन समासे तदुदाहरणत्वात् । एतेन "ष्यङः सम्प्रसारणम्" इत्यत्रानुपसर्जनस्येति न्यस्य सर्वेष्टसिद्धौ न्यर्थमित्यपास्तम् ।

न । यस्त्वप्राधान्येनाह तत्र तदादिनियमो ऽस्त्येवेत्यर्थः । प्रत्यासत्त्या यस्य समुदायस्य स्त्रीप्रत्ययान्तत्वमानेयं तदर्थं प्रत्यनुपसर्जनत्वमेवैतत्परिभाषाप्रवृत्तौ निमित्तम् ।

तेनातिराजकुमारिरित्यादौ राजकुमारीशब्दार्थस्यातिशब्दार्थं प्रत्युपसर्जनत्वेऽपि तदर्थं प्रत्यनुपसर्जनत्वात्तदादिनियमाभावेन ह्रस्वसिद्धिः । अत एवात्र परिभाषायां न शास्त्रीयमुपसर्जनत्वमसम्भवात् । अस्याः "प्रत्ययग्र-

भैरवी ।

वारणायाह—*प्रत्यासत्त्येति । तेन* । निरुक्तार्थस्य प्रत्यासत्त्याश्रयणेन । *ह्रस्वसिद्धिरिति* । राजकुमारीशब्दस्य स्त्रीप्रत्ययान्ततया तदन्तं यत् प्रातिपदिकमतिराजकुमारीति तस्य ह्रस्वत्वसिद्धिरित्यर्थः । *अत एव* । प्रत्यासत्त्या पूर्वोक्तार्थाश्रयणादेव । *शास्त्रीयम्* । प्रथमानिर्दिष्टमित्यादिशास्त्रबोध्यम् । *असम्भवात्* । स्त्रीप्रत्ययमात्रनिष्ठस्य तस्यासम्भवात् । अस्याः परिभाषाया यत्र प्रवृत्तिरिष्टा तादृशं स्थलमाह—*अस्या इति* । उत्सर्गसमानधर्मकत्वस्य

तत्त्वप्रकाशिका ।

उपसर्जनत्वञ्चात्र, स्वापर्याप्तशक्तिप्रयोज्यविशेष्यतानिरूपितप्रकारताप्रयोजकत्वम् । ष्यङन्तेऽपर्याप्ता या शक्तिस्तत्प्रयोज्या विशेष्यता तद्धितार्थे तन्निरूपितायाः प्रकारतायाः ष्यङि सत्त्वेन कन्लुबन्ते उपसर्जनत्वं निराबाधम् ।

यत्तु स्वान्तपर्याप्तेत्यादि वदन्ति तन्न युक्तम् । पौर्वशाल इत्यत्रोपसर्जनत्वेन सर्वनामत्वाभावात्पुंवद्भावाभावमाशङ्क्य मात्रग्रहणसामर्थ्यात् भूतपूर्वगत्याश्रयणपरभाष्यविरोधापत्तेः ।

यद्वा 'स्त्रीप्रत्यये अनुपसर्जन' इत्युपतिष्ठते तदादेश्चोपस्थितिर्नेत्यर्थः । अत एव चकारग्रहणं सङ्गच्छते । एवञ्चावृत्तिम्विनैवानुपसर्जनीभूतष्यङन्तपूर्वपदस्य सम्प्रसारणमित्यर्थेनोपसर्जनेऽप्रत्तिरनुपसर्जने प्रवृत्तिश्च सेत्स्यति । नचास्मिन्कल्पे कन्लुबन्ते उपसर्जनत्वात्सम्प्रसारणं न स्यादिति वाच्यम्, इष्टापत्तेः । स्वान्ततदाद्यवधिकपूर्वपदप्रयोज्यविशेष्यतानिरूपितप्रकारताप्रयोजकत्वरूपोपसर्जनत्वस्वीकाराद्वा । कन्लुबन्ते पूर्वपदप्रयोज्यविशेष्यताया अभावान्नोपसर्जनत्वम् । अतिकारीषगन्ध्येत्यत्र पूर्वपदभूतातिशब्दप्रयोज्यविशेष्यतायाः सत्त्वादुपसर्जनत्वम् । अत एव "तदोः सस्सौ" इत्यत्रत्यानन्त्यग्रहणं प्रत्याख्याय द्व इति स्यात् स्व इति चेष्यते इति भाष्यं सङ्गच्छते । अन्यथोपसर्जनत्वात्त्यदादित्वाभावेन तदुक्तिरसङ्गता स्यात् । अत एवानुपसर्जनादित्यस्य तदन्तविधेर्ज्ञापकत्वं सङ्गच्छते । अन्यथाऽऽचारक्विबन्तप्रकृतिककर्तृक्विबन्ते कुरुचरशब्दे तस्य चारितार्थ्यं तदसङ्गतं स्यात् ।

वस्तुतस्तु यत्किञ्चित्प्रकृतिककर्तृक्विपोऽनभिधानेनोक्तोपसर्जनत्वे मानाभावात्पूर्वकल्प एव युक्तः । अत एव "आरगुदीचाम्" इत्यत्राकारोच्चारणमन्यत्रापि विधानार्थमिति भाष्यं सङ्गच्छते । अन्यथाचष्टणिजन्तप्रकृतिककर्तृक्विबन्ते चरितार्थेन तदुक्तिरसङ्गता स्यात् । *प्रवृत्तौ निमित्तमिति* । नन्वेवमतिबहुश्रेयसिरत्यर्धपिप्पलिरत्यर्धखट्व इत्यादौ ह्रस्वानापत्तिः यस्य बहुश्रेयसी अर्धपिप्पली अर्धखट्वेत्यस्य स्त्रीप्रत्ययान्तत्वमानेयमस्ति तस्य स्त्रीप्रत्ययान्ततदादित्वाभावात् । न च प्रातिपदिकविशेष्यकतदन्तविधिना स्त्रीप्रत्ययान्ततदादितदन्तप्रातिपदिकेत्यर्थेन तत्सिद्धिरिति वाच्यम् । अनयैवातिराजकुमारिरित्यत्रापि निर्वाहे प्रत्यासत्त्येत्यादिमूलमसङ्गतं स्यादिति चेन्नार्धशब्देन षष्ठीतत्पुरुषे प्राधान्यात्तत्र तदार्थशानुपस्थितेः। ईयसन्तावयवेकारस्य ह्रस्वो नेत्यर्थक—"ईयसोबहुव्रीहेर्न" इति वार्तिकेन—"अतिबहुश्रेयसी" इति दीर्घस्यैवेष्टत्वात् । *ह्रस्वसिद्धिरिति* । लौकिकोपसर्जनत्वसमानाधिकरणशास्त्रीयोपसर्जनस्त्रीप्रत्ययान्तस्य ह्रस्वविधायक "गोस्त्रियोः" इत्यनेन ह्रस्वसिद्धि-

हणे" ( पृ० २३ ) इत्यस्यापवादत्वात्तदेकवाक्यतापन्नत्वाच्चात्रापि ग्रहणप-
दसम्बन्धेन स्त्रीप्रत्ययसामान्यग्रहणे तद्विशेष च प्रवृत्तिर्न तु स्त्रीप्रत्ययात्स्त्रीप्र-
त्ययग्रहणे । ध्वनितञ्चेदम् "अर्थवत्" (१-२-४५) सूत्रे भाष्ये । इयञ्च वा-
चनिक्येव ष्यङः ( ६-१-१३ ) इति सूत्रे भाष्ये स्पष्टा ॥ २६ ॥

भैरवी ।

न्याय्यत्वादिति भावः ।

ननु उत्सर्गसमानधर्मकत्वं ञ्नमादौ व्यभिचरितमत आह—*तदेकेति । वाक्यैकवाक्यता अत्र बोध्या । ग्रहणपदसम्बन्धेनेत्यनेन स्त्रीप्रत्ययमात्रस्य येन केनापि रूपेण ग्रहण इति बोधितम् । स्त्रीप्रत्ययसामान्यग्रहणे "गोस्त्रियोरुपसर्जनस्य" इत्यत्र, विशेषग्रहणे "ष्यङः सम्प्रसारणम्" इत्यत्र, न तु स्त्रीप्रत्ययात्स्त्रीप्रत्ययग्रहणे, यत्रोभयबोधकस्य शब्दस्य उपादानं तत्र, तेन पुरुषोऽस्ति ते युवते इत्यत्र तिशब्दान्तवाक्यस्य तद्धितान्तत्वप्रयुक्तप्रातिपदिकत्वञ्च, यदिसमासग्रहणकृतनियमेनैतद्व्यावृत्तिरित्युच्यते, तदापि भक्त्या परमगतिरित्यत्र "कर्त्तृकरणेकृता बहुलम्" इति समाससंज्ञाभावः फलं सिध्यति । एतेन प्रत्ययान्तपर्युदासाप्राप्त्या भिक्षाः भिक्षा भिक्षा आम् इत्यत्र एकशेषो न स्यादित्युक्तेरपि सङ्गतिः। *ध्वनितञ्चेदमिति"। स्त्रीप्रत्ययात्स्त्री प्रत्ययग्रहणे स्त्रीप्रत्यये चानुपसर्जने न"इति परिभाषाया अप्रवृत्तिरित्येतद् ध्वनितम्। तत्रहि–समुदायस्यार्थवतो देवदत्त शुकामभ्याज दण्डेनेत्यस्य प्रातिपदिकत्वमाशङ्क्य समासग्रहणस्य नियमार्थत्वेन तेन नियमेन वारितम्। यदि स्त्रीप्रत्ययात्स्त्रीप्रत्ययेऽप्येषा परिभाषा प्रवर्त्तेत तदा राजकुमारीति समुदायस्यानया प्रत्ययान्तत्वेन प्रत्ययान्तपर्युदासस्य प्राप्त्या समासग्रहणस्य तत्र प्रातिपदिकसंज्ञाविधायकत्वेन चारितार्थ्यसम्भवेन नियमार्थत्वकथनविरोध इति तेन ध्वनितमित्यर्थः। *भाष्ये स्पष्टेति* । तत्र हि मुख्यदृष्टान्तेन गौणेऽतिप्रसङ्गमाशङ्क्य अनया स उद्धृतः। अत्रेदमवधेयम्–परमकारीषगन्धीपुत्र इत्यत्र सम्प्रसारणप्रवृत्तिस्वीकारे भाष्यविरोधसम्भावना भवति । तथाहि–"सम्प्रसारणाच्च" इति सूत्रेण पूर्वरूपस्य "शकहूर्थम्" इत्यत्र प्राप्तिमाशङ्क्य "सम्प्रसारणपूर्वत्वे समानाङ्गग्रहणं कर्त्तव्यम्' इत्युक्त्या परिहारः कृतः । तस्य यदि सम्प्रसारणाचोरङ्गस्थत्वमित्यर्थस्तदा सुध्युपास्येत्यादौ समासादुत्पन्नसुनिमित्तकाङ्गसंज्ञाविशिष्टसमुदायावयवतया सम्प्रसारणस्य इकारस्य च स्थाने पूर्वरूपापत्तिरस्त्येव । यदि च प्रत्यासत्त्या सम्प्रसारणनिमित्तप्रत्ययनिमित्तकैकाङ्गावयवत्वं विवक्षितमित्युच्यते, तदा परमकारीषगन्धीपुत्र इत्यत्र सम्प्रसारणनिमित्तकाङ्गसंज्ञाया अप्रसिद्ध्या पूर्वरूपानापत्तिरिति केचित् । तत्र 'सम्प्रसारणपूर्वत्वे समानाङ्गग्रहणं कर्त्तव्यम्' इति वार्त्तिकेऽङ्गशब्दस्य सम्प्रसारणनिमित्ताव्यवहितपूर्ववर्त्तिसमुदायपरतया परमकारीषगन्ध्याशब्दस्य पुत्रशब्दाव्यवहितपूर्ववर्त्तित्वेन तदवयवसम्प्रसारणस्याचश्च तादृशसमुदायावयवतया पूर्वरूपस्य सिद्धेः ।

अन्ये तु "स्त्रीप्रत्यये चानुपसर्जनेन" इति परिभाषा न स्वीकार्य्या "ष्यङः सम्प्रसारणम्" इति सूत्रेऽनुपसर्जनस्येति वाच्यम्, तावतैवातिकारीषगन्ध्यापुत्रा इत्यात्रातिप्रसङ्गस्याभावः सिध्यति । उपसर्जनत्वञ्चात्र लौकिकमेव । एवञ्च प्रत्ययग्रहणपरिभाषालब्धस्य ष्यङन्तस्य

तत्त्वप्रकाशिका-

रित्यर्थः । गौरीपुत्र उमापुत्र इत्यत्र शास्त्रीयोपसर्जनत्वसत्त्वेऽपि लौकिकोपसर्जनत्वाभावान्न ह्रस्वः । *असम्भवादिति* । नचास्य स्त्री ई याः निष्क्रान्ता निरिरित्यादौ तत्सम्भवः । अत एव "स्त्रीभ्यो ढक्" इति न ढक् निरिरित्यस्य स्त्रीप्रत्ययान्ततदादित्वाभावादिति, वाच्यम् । प्रकृतिविशिष्टप्रत्यये ऽसम्भवादित्यर्थात् ।

वस्तुतस्तु अत्रोपसर्जनत्वं शास्त्रीयमेव बोध्यम् । स्त्रीप्रत्ययपदेन स्त्रीप्रत्ययान्तस्य ग्रहण-

भैरवी।

यत्रानुपसर्जनत्वं तत्र परमकारीषगन्धीपुत्र इत्यत्रैव भविष्यति। न च प्रत्ययग्रहणपरिभाषालब्धस्य ष्यङन्तस्य नपूर्वपदत्वं किन्तु परमकारीषगन्ध्याशब्दनिष्ठम्, तच्च न ष्यङन्तमिति कथमिह सम्प्रसारणसिद्धिरिति वाच्यम्। अनुपसर्जनष्यङन्तान्तस्य पूर्वपदस्य ग्रहणेनादोषात्। न च परमा कारीषगन्ध्या यस्येति बहुव्रीहौ विनापीति वचनेन परमशब्दस्य लोपेऽवशिष्टस्य कारीषगन्ध्याशब्दस्य पुत्रशब्देन समासे ष्यङन्तस्य कारीषगन्ध्याशब्दस्य उपसर्जनत्वेन कारीषगन्धीपुत्र इति न स्यादिति वाच्यम्। "ष्यङ" इति सूत्रेऽनुपसर्जनेत्यस्य पाठे सर्वत्रैव ष्यङन्तार्थस्य पुत्रपतिशब्दार्थविशेषणतया उपसर्जनत्वेन तादृशस्य ष्यङन्तस्येष्टस्थलेऽप्रसिद्ध्याऽसम्भवापत्तिः। अत उत्तरपदार्थभिन्नार्थविशेषणतापन्नार्थबोधकस्य ष्यङन्तस्यानुपर्जनपदेन ग्रहणेन पूर्वोक्तस्थले 'यः शिष्यते' इति न्यायेन ष्यङन्तस्य बहुव्रीह्यर्थप्रतिपादकतया तस्य निरुक्तानुपसर्जनत्वेन दोषाभावात्।

न च "स्त्रीप्रत्यय" इति परिभाषाया अनङ्गीकारे परममालायामित्यत्र याडनापत्तिरिति वाच्यम्। तत्र आबन्तमाबन्तञ्च यदङ्गमित्यर्थस्य स्वीकारात्। न च "गोस्त्रियोः" इति सूत्रे उपसर्जनत्वस्य शास्त्रीयस्याङ्गीकारादतिराजकुमारिरित्यत्र शास्त्रीयोपसर्जनत्वसत्वेऽपि स्त्रीप्रत्ययान्तत्वाभावेन कुमारीशब्दस्य तत्समासे शास्त्रीयोपसर्जनत्वाभावेन च ह्रस्वत्वानापत्तिरिति वाच्यम्। स्त्रीप्रत्ययान्तं स्त्रीप्रत्ययान्तान्तञ्च यदुपसर्जनमित्यर्थस्य स्वीकारात्, "तस्य च" इति वार्त्तिकस्वरसात्पुनस्तस्य प्रातिपदिकविशेषणतया प्रत्ययग्रहणपरिभाषालब्धस्त्रीप्रत्ययान्तस्योपसर्जनपदार्थविशेषणतया स्त्रीप्रत्ययान्तान्तं यदुपसर्जनं स्त्रीप्रत्ययान्तञ्च यदुपसर्जनं तदन्तं यत्प्रातिपदिकं तस्य ह्रस्व इत्यर्थाश्रयणात्। नचैवमाबन्तान्तमित्यर्थस्वीकारेऽतिखट्वायेत्यत्र याडापत्तिरिति वाच्यम्। तस्याबन्तस्य लाक्षणिकत्वात् वर्णग्रहणेऽपि लक्षणप्रतिपदोक्तपरिभाषा प्रवृत्तिः "ओत्" सूत्रस्थभाष्यसम्मतत्वात्। न च निशायै इत्यत्र चरितार्थस्य "याडाप" इति सूत्रस्य लाक्षणिकत्वात् खट्वायै इत्यत्रापि अप्रवृत्त्यापत्तिरिति वाच्यम्। यस्य स्वरूपस्य लक्षणप्रवृत्तिं विना नोपलब्धिस्तस्यैव लाक्षणिकस्य परिभाषाविषयत्वात्। खट्वा इत्याकारूपन्तु सवर्णदीर्घप्रवृत्तिपूर्वकालेऽप्युपलभ्यत इति न परिभाषाया विषयः, पूर्वोक्ततदन्तविधिस्वीकारादेवार्द्धखट्वायामित्यत्र याट्सिद्धिः। न च "स्त्रीभ्यो ढक्" इति सूत्रे दरदोऽपत्यन्दारद इत्यत्र ढगभावाय स्वरितत्वप्रतिज्ञया स्त्र्यधिकारविहितटाबाद्यन्तानामेव ग्रहणम्। एवंच परमगाङ्गेय इत्यत्र विशिष्टस्य स्त्रीप्रत्ययान्तत्वविरहाड्ढङ्न स्यात्। द्वितीयतदन्तविधिस्तु समासप्रत्ययविधौ प्रतिषेध" इति निषेधाद् दुर्लभ इति वाच्यम्। विशिष्टेनैकार्थीभावेऽवयवेनापि तस्यैव सत्वेन परमगार्ग्यायण इत्यत्रैवावयवाड्ढकि तत्सिद्धेः

वस्तुतस्तु "स्त्रीभ्यो ढक्" इत्यत्रार्थग्रहणमेव। अतएव "पितृष्वसृभ्यां ढकि लोपविधानं सङ्गच्छते। दरदादिस्त्र्यर्थकानान्तु शिवादौ पाठात्तेभ्योऽण् बोध्यः।

एतेनावयवाड्ढकः प्रवृत्तौ परमगाङ्गेयसिद्धावपि पारमगाङ्गेयासिद्धिरिति यो दोषः परिभाषाया अस्वीकारे सम्भाव्यते, सोऽपि वारितो भवतीत्येवं रीत्या स्त्रीप्रत्यये चानुपसर्जनेनेतिपरिभाषाया अभावेऽपीष्टसिद्धिः कार्य्येत्याहुः।

अपरे तु "ष्यङ" इति सूत्रेऽनुपसर्जनस्येत्यस्य कथनेन बहुषु स्थलेषु पूर्वोक्तरीत्याऽनेक-

तत्त्वप्रकाशिका।

म्। अतिकारीषगन्ध्यापुत्र इत्यत्र शास्त्रीयोपसर्जनसत्वात्तदादिनियमविधिः। अत एवार्धखट्वेत्यादिस्थलेऽर्धाचासौ खट्वेति कर्मधारयसमासं स्वीकृत्यैकदेशिसमासं प्रत्याख्यातवान्भाष्यकारः। अन्यथाऽऽरम्भप्रत्याख्यानयोः फलभेदः स्पष्ट एव।

नचात्र शास्त्रीयोपसर्जनग्रहणे परिभाषा व्यर्था, "ष्यङः" इति सूत्रे 'अनुपसर्जने' इति

नन्वेवं "तरप्तमपौ घः" ( १-१-२१ ) इत्यादिना तरबन्तादेः संज्ञा स्यादत आह—

## संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति ॥ २७ ॥

भैरवी ।

तदन्तविधिस्वीकारापेक्षया "स्त्रीप्रत्यये चानुपसर्जनेन" इति परिभाषा भाष्यकृता प्रतिपादितेति वदन्ति ॥ २६ ॥

प्रत्ययप्रसङ्गादाह—*नन्वेवमित्यादि* । एवमित्यस्यापीति शेषः । *तरबन्तादेरिति* । न च "उत्तरपदाधिकारे प्रत्ययग्रहणे न तदन्तग्रहणम्" इत्यस्यैवं सति वैयर्थ्यमिति वाच्यम् ? रूपकल्पग्रहणेन तदन्तस्याग्रहणस्य बोधनेन चारितार्थ्यसम्भवात्। तेन निषेधेनैव सिद्धिरित्याशयेनाह-तरबन्तादेरित्यत्रादिपदोपादानङ्कृतम् । तेन "क्तक्तवतू निष्ठा" इत्यस्य सङ्ग्रहः । *संज्ञाविधाविति* । विधिशब्दे भावे किः संज्ञाया विधिरिति कर्मषष्ठ्यन्तेन समासः । तेन "निष्ठाचद्व्यचः" इत्यादौ तदन्तस्य ग्रहणं भवत्येव ।

ननु अनया तरबन्तादेर्घसंज्ञाभावेऽपि "घरूप" इति सूत्रे संज्ञानुवादेन विधानात् तदन्तस्य ग्रहणं दुर्वारमिति चेन्न । एतन्निषेधसामर्थ्यात् । प्रदेशेष्वपि तदन्तविध्यभावस्य कल्पनात् । न चात्र सामर्थ्यस्य हेतुत्वकल्पनमसङ्गतम् लेखग्रहणज्ञापितेन "उत्तरपदाधिकार" इति पूर्वोक्तवचनेन तदन्तविध्यभावस्य सिद्धत्वादिति वाच्यम् ? "रात्रेः कृति विभाषा" इति सूत्रस्य रात्रिमटो रात्र्यट इत्युदाहरणस्य सर्वसम्मतस्य सिद्धये तस्य वचनस्यानित्यत्वस्य कल्पनात्। रात्रिशब्दात् कृतोऽसम्भवेन"रात्रेः कृति विभाषा" इति सूत्रारम्भ एव तस्यानित्यत्वे मानम् । न चाचारक्विबन्तरात्रिशब्दात् कृतः सम्भवः, । "अभिव्यक्तेति" न्यायेन तत्र रात्रिशब्दस्य मुमभावात् ।

यद्वा ज्ञापकस्य सजातीयाऽपेक्षत्वादुत्तरपदाधिकार इति वचनस्थप्रत्ययपदस्य प्रत्ययसंज्ञाशक्यतावच्छेदकरूपावच्छिन्नबोधकशब्दपरतया तेन वचनेन तदन्तविध्यभावो वक्तुमशक्यः । यत्र तादृशरूपेणोपादानन्तत्रैव तस्य वचनस्य प्रवृत्तिकल्पनात्। "घरूप" इति सूत्रे घशब्देनोपादानं तच्च न प्रत्ययसंज्ञाशक्यतावच्छेदकम्, यच्च प्रत्ययसंज्ञाशक्यतावच्छेदकं तेन रूपेणोपादानाभावः। अत्रापि कल्पनायां "रात्रेःकृति" इति सूत्रस्य तादृशोदाहरणपरं भाष्यमेव मानम् । न चैतत्सामर्थ्यात् प्रदेशेषु तदन्तविध्यभावकल्पनेऽनेनैवेदूदेदन्तन्द्विवचनान्तं प्रगृह्यमित्यर्थासम्भवेन तस्य पक्षस्य "संज्ञाविधौ" इतिवचनेनासम्भवाभिधानमफलमिति वाच्यम् । संज्ञाविधावितिवचनस्य पुरःस्फूर्तिकतया तेनैव तत्पक्षासम्भवस्तत्रोक्त इति कल्पनस्य सम्भवात्। निषेधद्वयाज्ञानेन तु तत्र पक्षद्वयाशङ्का कृता ।

तत्त्वप्रकाशिका ।

न्यासेन "गोस्त्रियोः" इति सूत्रे 'स्त्र्यन्तस्य'इति न्यासेन च तदन्तविधिद्वयस्वीकारेण च सिद्धेरिति वाच्यम् । अतिबहुश्रेयसीत्यादौ ह्रस्वाद्यापत्तेः ॥ २६ ॥

*प्रसङ्गादिति* । अपवादसङ्गत्येति शेषः । *तरबन्तादेरिति* । तथाच—गौरीब्राह्मणितरेत्यत्र "घरूप" इति ह्रस्वः स्यात्, ब्राह्मणितरेत्यत्र च न स्यादितिभावः । *सिद्धत्वादिति* । "प्रत्ययग्रहणे चापञ्चम्या" इत्यनेन तदादिविशेष्यकतदन्तविध्यभावस्य चेति शेषः ।

ननु आचारक्विबन्तादशब्दाण्णुलि निष्पन्नाकशब्दे मुमर्थे चरितार्थमिति कथमनित्यत्वे मानमत आह—*यद्वेति प्रत्ययसंज्ञाशक्यतावच्छेदकेत्यादि* । श्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नविषयताप्रयोजकप्रत्ययबोधकपदमात्रपरतयेति भावः । *कल्पनस्य सम्भवात् * । इदूदेदन्तं यद्द्विवचनं तदन्तमित्यर्थेन कुमार्यगारमित्यादौ दोषाभावाच्च ।

"सुप्तिङन्तम्" ( १-४-१४ ) इत्यन्तग्रहणमस्या ज्ञापकम् । न च प्रत्ययोः पदसंज्ञायामपि प्रत्ययग्रहणपरिभाषया तदन्तग्रहणसम्भवाज्ज्ञापितेऽपि फलाभाव इति वाच्यम् । पदसंज्ञायाः "स्वादिषु" ( १-४-१७ ) इति

भैरवी ।

न च "संज्ञाविधा" इति परिभाषाभावे तरबन्तस्य घसंज्ञायां प्रदेशे तरबन्तोपस्थितौ पुनस्तस्य उत्तरपदविशेषणत्वेन तरबन्तान्ते उत्तरपदे इत्यर्थः स्यात् । तथा च—कुमारीपरमब्राह्मणितरेत्यत्रापि ह्रस्वत्वस्य प्राप्तिः, परिभाषासत्त्वे तु न प्राप्तिरिति निषेधसामर्थ्यादित्यनुपपन्नमिति वाच्यम् । अन्तग्रहणस्य तत्र ज्ञापकतापरभाष्यप्रामाण्येन कुमारीपरमब्राह्मणितरेत्यत्र ह्रस्वाभावनिश्चये तत्र उत्तरपदग्रहणस्य विशेषणताया एव कल्पनात् ।

न च पूर्वनिपातविधायक "निष्ठा" इति सूत्रे स्वरविधायक "निष्ठाचद्व्यज" इति सूत्रे च तदन्तग्रहणदर्शनेन प्रदेशेषु न तदन्तस्य ग्रहणमित्यनुपपन्नमिति वाच्यम् ? तत्र सामर्थ्यात् तदन्तविधिसम्भवात् । यदि तु लेखग्रहणबलेन प्रत्ययसंज्ञाशक्यतावच्छेदकानुपूर्व्यवच्छिन्नस्य यत्र उपादानं तत्र न तदन्तग्रहणमिति पूर्वोक्तः प्रकार एवाद्रियते तदा तु नानुपपत्तिरिति ध्येयम् ।

अन्तशब्दस्य "सुप्तिङन्तम्" इति सूत्रस्थस्य ज्ञापकत्वन्न सम्भवतीत्याशयेनाशङ्क्य निराचष्टे—*नचेत्यादिना* । प्रत्यययोः* । सुप्तिङोः । *फलाभावः* । चारितार्थ्याभावः ।

तत्त्वप्रकाशिका ।

नच "क्तक्तवतूनिष्ठा" इति सूत्रे तदन्तविधिनिषेधाय सार्थिका, प्रदेशे "रदाभ्याम्" इत्यत्र "प्रत्ययग्रहणे चापञ्चम्या" इति निषेधादितिवाच्यम् । निष्ठासंज्ञाकाले क्तक्तवतोः प्रत्ययत्वाभावेन प्रत्ययग्रहणपरिभाषाया अप्रवृत्त्या तदनुपयोगात् ।

नच "षः प्रत्ययस्य" इत्यत्र तदन्ताग्रहणायावश्यकम् इति वाच्यम् ? साक्षात्संज्ञानिष्ठविधेयतानिरूपितोद्देश्यताप्रयोजकं प्रत्ययमात्रवृत्तिविषयताप्रयोजकं पदं तदादिशब्दस्वरूपं विशेष्यमादाय तदन्तोपस्थापकं न भवतीति परिभाषाया अर्थनात्र प्रत्ययस्य साक्षादुद्देश्यताप्रयोजकत्वाभावेन निषेधाप्रवृत्तेः । अत एव "अर्थवत्" इति सूत्रे प्रत्ययान्ते पर्युदासः सिद्धः ।

नचैवं "कृदतिङ्" इत्यत्र कृत्संज्ञानिष्ठविधेयतया साक्षान्निरूपितोद्देश्यताया तिङि अभावान्निषेधस्याप्रवृत्तेस्तदन्तविधौ तिङन्तस्य पर्युदासेऽपि तिङः कृत्संज्ञायान्तस्मिन्भवत्यस्य "ह्रस्वस्य पिति" इति तुगापत्तिरितिवाच्यम् ? संज्ञानिष्ठविधेयतया साक्षान्निरूपितप्रत्ययनिष्ठोद्देश्यताप्रयोजकपदघटितशास्त्रे तदन्तविधिर्नेत्यर्थस्य विवक्षितत्वात् ।। "षः प्रत्ययस्य" इत्यत्र तु प्रत्ययपदस्य सूत्रघटकष्फादिबोधकत्वेन प्रत्ययबोधकत्वाभावात्प्रत्ययग्रहणपरिभाषाया अप्रवृत्त्या न तदन्तविधिः । एतेन षण्णामित्यत्र षस्येत्वापत्तिरिति प्रत्युक्तम् । "सामन्त्रितम्" इत्यादौ चामन्त्रितेतिमहासंज्ञाविधानात्तदन्तविधिः । "बहुगणवतुडति" इत्यत्रापि संख्येतिमहासंज्ञाकरणात्तदन्तविधिः । "तद्धितश्चासर्वविभक्तिः" इत्यत्रासर्वविभक्ति विशेष्यमादाय तदन्तविधिः । "कृन्मेजन्त" इत्यत्राव्ययेति महासंज्ञया ।

केचित्तु 'प्रयोजनं सर्वनामाव्यय' इति वार्तिकबलाच्छब्दस्वरूपं विशेष्यमादाय तदन्त विधिं वदन्ति ।

*ज्ञापकमिति* । नचान्तग्रहणसत्त्वे तदादिविशेष्यकतदन्तविध्यन्तरे च सुबन्ततदाद्यन्तस्य पदसंज्ञा तदभावे सुबन्तस्यैवेति फलभेद इति वाच्यम् ? विशेष्यान्तरासत्त्वे तेन तदादिविशेष्यकतदन्तविधिविधानेनात्र विशेष्यान्तरस्यान्तपदस्य सत्त्वेन तदन्तविधेरसम्भवात् ।

यद्वा लाघवात्कर्मधारयाश्रयणेन सुबन्ततदाद्यभिन्नान्तस्य पदसंज्ञाविधानेन तदन्तविधा-

विषये प्रकृतिनिष्ठतया पदग्रहणस्य प्रत्ययमात्रग्रहणत्वाभावात् । "सुप्तिङन्तम्" ( १-४-१४ ) इति सूत्रे भाष्ये स्पष्टा ॥ २७ ॥

नन्ववतप्तेनकुलस्थितमित्यादौ नकुलस्थितशब्दस्य क्तान्तत्वाभावात्समासो न स्यादत आह—

## कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम् ॥ २८ ॥

अस्याश्च कर्मणि क्तान्ते उत्तरपदेऽनन्तरो गतिः प्रकृतिस्वर इत्यर्थके "गतिरनन्तरः" (६-२-४९) इति सूत्रेऽनन्तरग्रहणं ज्ञापकम् । तद्धि अभ्युद्धृतमित्यादावतिव्याप्तिवारणार्थम् । प्रत्ययग्रहणपरिभाषयोद्धृतस्य क्तान्तत्वाभावादेवाप्राप्तौ तद्व्यर्थं सदस्या ज्ञापकम् ।

न चाभ्युद्धृतमित्यादौ परत्वात् "गतिर्गतौ" ( ८-१-७० ) इत्यनेनाभेर्निघात एवेति वाच्यम् ? पादादिस्थत्वेन पदात्परत्वाभावेन च तदप्राप्तेः । अनन्तरग्रहणे कृते तु तत्सामर्थ्याद्धृत्याक्षिप्तधातुनिरूपितमेवानन्तर्यं गृह्यते इति न दोषः ।

भैरवी ।

।*प्रत्ययमात्रेति* । एतेन प्रत्ययग्रहणपरिभाषाप्रवृत्त्यनवसरो ध्वनितः ॥ २७ ॥

प्रत्ययस्य प्रसङ्गादेवाह—*नन्ववतप्त इत्यादि* । *समासो न स्यादिति* । "क्तेनाहोरात्र"इति सूत्रात् क्तेनेत्यस्यानुवृत्तौ "क्षेप" इति सूत्रेण विहितः समासो न स्यादित्यर्थः । *अस्याश्चेति* । ज्ञापकमित्यत्रास्यान्वयः । *तदप्राप्ताविति* । अत्र ह्येवं स्वरप्राप्तिक्रमः उच्छब्दहृतशब्दयोः समासे "कुगती" इति सूत्रेण कृते, समासस्वरस्यादौ प्राप्तिस्ततोऽव्ययपूर्वपदप्रकृतिस्वरस्य ततो "गतिकारकोपपदात्" इत्यस्य ततः "स्थाथघक्त" इत्यस्य तां "गतिरनन्तर', इति बाधत इत्याद्युदात्त उद्धृतशब्दः ।

ज्ञापकत्वविघटनं खण्डयति—*नचेति* । परत्वादित्यस्य "गतिरनन्तर" इत्यपेक्षये त्यादिः । तथा च स्वविषये चारितार्थ्याभाव इति भावः । बाधकत्वेनाभिप्रेतस्याप्राप्तिमुपपादयति—*पादादिस्थेत्यादिना* । पदात्परत्वाभावेन चेति* । अत्र चकारो वार्थे स चाऽनास्थायां द्रष्टव्यः । तेन "पदात्" इति सूत्रस्थेन अथ "पदात्" इत्यधिकारः आकुतः "प्राक् सुपि कुत्सनात्" इति भाष्येण न विरोधः ।

न च "गतिर्गतौ" इति सूत्रे "अभ्युद्धरति" इत्यत्र "यत् क्रियायुक्ता" इति वचनादभेरुद्धरतिं प्रति योगो न धातुवाच्यार्थं प्रतीत्यतिव्याप्तिनाशङ्कोद्यो द्योतकत्वाभिप्रायेण समाधानं कृतं भाष्यकृता तेनास्य विरोध इति वाच्यम् ? तस्य भाष्यस्यापादादिस्थत्वप्रयोगविषयकत्वादस्य तु पादादिस्थत्वप्रयोगाभिप्रायकत्वात् ।

तत्त्वप्रकाशिका ।

वपि न फलभेदः । *न सम्भवतीति* । स्वांशे चारितार्थ्याभावादितिभावः ।

अन्येतु अनेकत्रानेकक्लिष्टकल्पनापेक्षया परिभाषा एव न कर्तव्या । परौ तरप्तमपौ घ इति न्यस्य कस्मात्परावित्यवध्याकाङ्क्षायां प्रकृतेः, परावित्यर्थे "प्रत्ययग्रहणे चापञ्चम्या" इति निषेधात्तदन्तविधेरप्राप्तिः । यत्र घस्तत्र तरप्तमपावुपतिष्ठेते इत्यर्थेन वाऽदोषः । "घरूप" इत्यादौ "उत्तरपदाधिकार" इति निषेधः । "तिङ्शित" इत्यादौ सार्वधातुकोद्देश्यककार्याणामङ्गाधिकारे पाठसामर्थ्यान्न दोषः ॥ २७ ॥

न चाभ्युद्धृतमित्यादावभिना समासेऽनन्तरस्योदः पूर्वपदत्वाभावेऽपि स्वरार्थं तदिति वाच्यम्। "कारकाद्दत्त" इति (६-२-१४८) सूत्रे कारकादिति योगं विभज्य गतिग्रहणमनुवर्त्य कारकादेव परं गतिपूर्वपदं क्तान्तमन्तोदात्तमिति नियमेन थाथादिस्वराप्राप्त्या कृत्स्वरेणोद उदात्तत्वसिद्धेः। तस्मादनन्तरग्रहणं व्यवहितनिवृत्त्यर्थमेवेति ज्ञापकमेव।

यत्र गतिकारकसमभिव्याहृतं कृदन्तं तत्र कृद्ग्रहणे तद्विशिष्टस्यैव ग्रहणमपिशब्दात्तदसमभिव्याहृतस्य केवलस्यापीतितदर्थः। अन्यथा अनया कृद्ग्रहणविषये परत्वात् प्रत्ययग्रहणपरिभाषाया बाध एव स्यादित्यपि ग्रहणम्।

भैरवी

नन्वनन्तरग्रहणस्यान्यार्थत्वमपि सम्भाव्येत इति कथं तस्य ज्ञापकत्वमित्याशयेन शङ्कते—न चेति*। *अभिना समास इति*। आद्युदात्तोद्धृतशब्दस्येति शेषः। *स्वरार्थन्तदिति*। अनन्तरग्रहणमित्यर्थः।

अयम्भावः—"बहुव्रीहौ प्रकृत्या" इति सूत्रात् पूर्वपदग्रहणानुवृत्तौ कर्मक्तान्तोत्तरपदे प्रत्यासत्त्या तत्समासावयवः पूर्वपदं प्रकृत्येति पर्य्यवसितोऽर्थोऽनन्तरग्रहणाभावे स्यात्। तथा चैतत्समासे उदस्तत्वाभावेन स न स्यात्। किन्तु पूर्वोक्तरीत्या थाथादिस्वरस्य सति शिष्टत्वादुद्धृतशब्दस्यान्तोदात्तत्वमेव स्यादिति। *उदात्तत्वसिद्धेरिति*। "गतिकारकोपपदात्" इत्यनेनाद्युदात्तसिद्धिरित्यर्थः। न च "प्रत्ययग्रहणे चापञ्चम्या" इति निषेधात् कथमत्र तदन्तविधिरिति वाच्यम्। कारकात् परत्वस्य उत्तरपदविशेषणतया पञ्चम्यन्तात् परस्य प्रत्ययस्येहाश्रयणाभावात्।

अन्ये तु ज्ञापकत्वासम्भववादिमते परिभाषाया अभावेनोद्धृतस्य क्तान्तत्वाभावेनान्तोदात्ताप्राप्त्याऽनन्तरग्रहणस्य तद्बाधकत्वासम्भवादनन्तरग्रहणं ज्ञापकमेव भविष्यतीति शङ्कासमाधानयोरसङ्गतिः।

न चेयम्परिभाषा प्राचीनपठितैव तत्र लिङ्गप्रदर्शनमात्रमेतदित्येनामादायैवान्तोदात्तत्वस्य प्राप्तिरिति वाच्यम्? एवं सति सिद्धपरिभाषयैव उद्धृतशब्दस्य क्तान्तत्वेन "गतिः" इति सूत्रेणाभेः स्वरप्राप्त्या तद्वारणायैवानन्तरग्रहणस्यावश्यकत्वेन ज्ञापकत्वकथनासङ्गतिप्रसङ्गात्। यदि त्वनन्तरग्रहणं पूर्वाचार्य्यपठिता परिभाषा इहाप्याश्रीयते इत्यर्थकमेवास्त्विति ब्रूषे तथाप्यनन्तरग्रहणं ज्ञापयतीति भाष्याक्षरस्वारस्य भङ्गोऽस्त्येवेति आशङ्किरे।

अत्राहुः—परिभाषायां ज्ञापितायां स्वविषये चारितार्थ्यं सति ज्ञापकत्वं सुदृढम्भवति ज्ञापकस्वभावात्। तथात्वत्र नास्ति अनन्तरग्रहणस्यान्यार्थकत्वस्यापि सम्भवादितिशङ्काभिप्रायः। उत्तराशयस्तु कारकात्परत्वाभावेन थाथादिस्वराप्राप्त्या कृदुत्तरपदप्रकृतिस्वरेणैव भवदभिप्रेतस्य स्वरस्यानन्तरग्रहणसाध्यस्य सिद्धावनन्तरग्रहणमनन्तरस्येष्टस्वरो भवतीत्यर्थस्य स्पष्टप्रतिपत्त्यर्थमेवेत्याहुः।

केचित्तु ज्ञापयतीत्यस्य स्वरशास्त्रे तत्प्रवृत्तिमित्यादौ पूरणेनैकदेशद्वारा सा परिभाषेहाप्याश्रीयत इत्येवाथ इत्याहुः।

परिभाषार्थमाह—*यत्रेत्यादिना*। *तदसमभिव्याहृतेति*। "समासे ऽनञ्पूर्वे क्त्वो ल्यप्" इति सूत्रेऽकृत्वेत्यादौ, ल्यबादेशवारणायानञ्पूर्वग्रहणं कृतं, तच्च तदसमभिव्याहृतस्य ग्रहण इव चरितार्थमिति तत्करणमत्रार्थे मानम्। *अन्यथा*। अपिशब्दाभावे। *परत्वादिति*। न च कृद्ग्रहणे सर्वत्रैव प्रत्ययग्रहणपरिभाषाप्राप्त्याऽस्या अचारितार्थ्येन परत्वादित्युक्तिरसङ्गतेति वाच्यम्? व्यावक्रोशीत्यादौ "स्त्रीप्रत्यये चानुपसर्जनेन" इत्यनया प्रत्ययग्रहणपरिभाषानिषेधाद्गतिविशिष्टस्य णिजन्तत्वबुद्धिसम्पादकतयाऽस्याश्चारितार्थ्यात्।

अतएव साङ्कूटिनमिति 'गतिकारकोपपदानाम्' ( प० ७५ ) इति 'कृद्ग्रहण' इति च परिभाषाभ्यां कृदन्तेन समासे कृते विशिष्टादेवाणि सिध्यति, न तु सङ्कोटिनमितीति "पुंयोगात् (४-१-४८) इति सूत्रे भाष्योक्तं सङ्गच्छते। अन्यथा तत्र केवलं कूटिन्नित्येतस्यापीनुणनन्तत्वात्ततोऽणि पाक्षिकदोषो दुर्वार एव स्यात्। स्पष्टं चेदं सर्वं "समासेऽनञ्पूर्वे" ( ७-१-३७ ) इति सूत्रे भाष्यकैयटयोः। "गतिरनन्तरः" ( ६-२-४९ ) इत्यत्र तु गतेः पूर्वपदस्य क्तान्त उत्तरपदे परे कार्य्यविधानात्तत्समवधानेऽपि केवलस्य क्तान्तत्वेन ग्रहणं बोध्यम्। इयं च कृत्सामान्यग्रहणे कृद्विशेषग्रहणे च, न तु कृद्कृद्ग्रहण इति "अनुपसर्जनात्" (४-१-१४) इति सूत्रे भाष्ये स्पष्टम् ॥२८॥

## पदाङ्गाधिकारे तस्य च तदन्तस्य ॥ २९ ॥

पदमङ्गं विशेष्यं विशेषणेन च तदन्तविधिः। "येनविधिः" (१-१-७२)

भैरवी।

*अत एव*। अपिशब्दघटितपरिभाषासत्वादेव। अपिशब्दाभावे केवलस्य कूटिन्नित्यस्य कृदन्तत्वमनया परिभाषया न स्यात्। एवञ्च "गतिकारकोपपदानाम्" इति वचनस्य प्रवृत्तिर्न स्यात्। यदि परिभाषैव न स्यात्। तदा सङ्कूटिन्नित्यस्येणुनन्तत्वन्न स्यात् इति तादृशसमुदायादण्प्रत्ययो न स्यात् इति भावः।

न चानन्तरग्रहणेन कृद्ग्रहणे तदादिनियमो नेत्येव ज्ञाप्यं तावतैव विशिष्टादण्भविष्यतीति वाच्यम्? अधिकस्यान्यादृशस्यापि ग्रहणापत्त्या परमसङ्कूटिन् शब्दादप्यण् स्यात्, स्तोकात्परममुक्त इत्यादौ समासापत्तेश्च। *अन्यथा*। गतिकारकसमभिव्याहृतङ्कृदन्तं यत्र तत्र तद्विशिष्टस्यैव ग्रहणमिति नियमाभावे। "पुंयोगात्" इति सूत्रभाष्ये हि—साङ्कूटिनमित्यस्य "कृद्ग्रहणे गतिकारक" इति परिभाषाफलत्वमुक्तम्।

ननु गतिकारकसमभिव्याहारे तद्विशिष्टस्यैव कृद्ग्रहणेन ग्रहणमिति नियमश्चेद् "गतिरनन्तर" इति सूत्रेणोद्धृतशब्दस्य स्वरसिद्धिर्न स्यात्, उद्धृतशब्दस्य क्तप्रत्ययान्तत्वेनाग्रहणात्, पुरोहितमित्यादौ कारकसमभिव्याहारेऽपि दोषश्चेत्यत आह—*गतिरनन्तर इति*। एवञ्च तत्र सूत्रारम्भसामर्थ्यात् पूर्वोक्तनियमस्य त्याग इति भावः। *इयञ्च*। परिभाषा च, प्रवर्त्तत इति शेषः। *कृत्सामान्यग्रहण इति*। तेन विष्णुसुकृतमित्यत्र "कर्त्तृकरणेकृता बहुलम्" इति सूत्रेण विष्णुनेतितृतीयान्तस्य सुकृतशब्देन समासो "गतिकारकोपपदात्" इति कृदुत्तरपदप्रकृतिस्वरेण मध्योदात्तत्वञ्च सिध्यति। *कृद्विशेषग्रहण इति*। एतत्फलं साङ्कूटिनमित्युक्तमेव। *न तु कृदकृद्ग्रहण इति*। तेन बहुसुरागिणी नगरीत्यत्र "इनः स्त्रियाम्" इति कप्प्रत्ययो न, पुष्पसुहारीत्यादौ णिनीति पूर्वपदाद्युदात्तत्वन्न। तत्र हि—"काश्यपकौशिकाभ्याम्" "कलापिवैशम्पायनान्तेवासिभ्यश्च" इत्यादिविहितणिनेस्तद्धितस्यापि ग्रहणात्। *भाष्य इति*। तत्र हि—प्रधानेन तदन्तविधिः प्रयोजनङ्कौम्भकारेयसिद्धिः। अन्यथा प्रत्ययग्रहणपरिभाषया कारीशब्दादेव ठक्स्यादिति कथितेऽनया विशिष्टात्संघातात् प्रत्ययोत्पत्तिशङ्कायामेवमुक्तम। "टिड्ढ" इति सूत्रे अण्शब्दस्य कृदकृद्बोधकत्वेन ङीप् प्रत्ययः केवलात्कारशब्दादपीति भावः॥ २८॥

तदन्तविधिप्रसङ्गादाह—*पदाङ्गाधिकार इति*। विशेष्यविशेषणभावविशेषे तात्पर्य्यग्राहकत्वमस्यास्तेन पदाधिकारेऽङ्गाधिकारे यच्छास्त्रं पठ्यते तत्र पदाङ्गशब्दबोध्यस्य विशेष्यत्वं सिध्यति। तादृशतात्पर्य्यग्राहकत्वादेवाह—*येन विधीत्यादि। पदाधिकारे प्रयोजनं-

इत्यस्यायं प्रपञ्चः। तेनेष्टकचितं पक्वेष्टकचितमित्यादौ "इष्टकेषीकामालानां चित" ( ६-३-६५ ) इति ह्रस्वो महान् परममहान् परमातिमहानित्यादौ "सान्तमहतः" (६-४-१०) इति दीर्घश्च सिद्धः।

अत एव तदुत्तरपदस्येति पाठोऽयुक्त इति भाष्ये स्पष्टम्। अत्र पदशब्देनोत्तरपदाधिकारः केवलपदाधिकारश्च। "पादस्य पदाज्याति" (६-३-५२) इत्यत्र न तदन्तग्रहणं लक्ष्यानुरोधादिति सर्वं "येन विधिः" (१-१-७२) इत्यत्र भाष्ये स्पष्टम्॥ २९॥

नन्वेवमस्यापत्यमित्यादावदन्तप्रातिपदिकाभावादिञ् न स्यादत आह—

## व्यपदेशिवदेकस्मिन्॥ ३०॥

निमित्तसद्भावाद्विशिष्टोऽपदेशो मुख्यो व्यवहारो यस्यास्ति स व्यपदेशी। यस्तु व्यपदेशहेत्वभावादविद्यमानव्यपदेशोऽसहायः स तेन तुल्यं

भैरवी।

पक्वेष्टकचितमित्यङ्गाधिकारप्रयोजनं परमातिमहानितिविवेकः।

अत्र कस्यचित्पाठः पदाङ्गाधिकारे तस्य च तदुत्तरपदस्य चेति सोऽयुक्त इत्याह--*अत एवेति*। परमातिमहानित्यत्र दीर्घस्य प्रवृत्तेरेव। *अत्र*। उक्तपरिभाषायाम्। उत्तरपदाधिकारे पक्वेष्टकचितमित्युक्तमेवोत्तरपदशब्देन पूर्वपदस्याक्षेपेण तस्य विशेष्यत्वमिष्टकादीनां विशेषणत्वमिति ह्रस्वस्य सिद्धिः, केवलपदाधिकारे प्रयोजनं परमानडुद्भ्यामित्यादि बोध्यम्। उत्तरपदाधिकारे सर्वत्र तदन्तविधिश्चेदतिप्रसङ्गः प्राप्नोतीति शङ्कां वारयति--*पादस्येति*। *सर्वमिति*। आदितो यदुक्तं तत्सर्वमित्यर्थः॥ २९॥

*एवम्*। विशेष्यसन्निधाने सर्वत्र तदन्तस्य ग्रहणमिति स्वीकारे। *व्यपदेशिवत्*। एतस्याः परिभाषाया अर्थस्तु मुख्यो व्यवहार इत्याद्येव। तत्र मुख्यत्वे बीजमाह—*निमित्तसद्भावादिति*। यत्र निमित्तस्य सद्भावात्तादृशो व्यवहारो जायते स एव मुख्य इति भावः। *असहाय इति*। यथाऽदन्तात् प्रातिपदिकादिति व्यवहारो दक्षशब्दे मुख्यः। अदन्त इति व्यवहारे हि स्वाव्यवहितोत्तरत्वसम्बन्धेन किञ्चिद्विशिष्टत्वे सति स्वाव्यवहितपूर्वत्वसम्बन्धावच्छिन्नप्रतियोगिताकयत्किञ्चिद्वर्णाभाववत्वमकारनिष्ठन्निमित्तमिति तच्च निमित्तं केवलाकारे नास्ति स्वाव्यवहितोत्तरत्वसम्बन्धेन किञ्चिद्विशिष्टत्वरूपविशेषणाभावादिति भा-

तत्त्वप्रकाशिका।

पदाङ्गाधिकार इति परिभाषाघटकस्येत्येतदुपपादकत्वादुपोद्घात सङ्गत्याह--*नन्वेवमिति*। *इञ् न स्यादिति*। अत इत्यस्योभयाधिकारबहिर्भूतत्वादिति भावः।

ननु "येन विधिः" इति सूत्रे "स्वंरूपम्" इत्यतः स्वशब्दस्यानुवृत्त्या, तत्प्रत्याख्याने तस्य चेतिपाठेन च "येन विधिः" इत्यनेनैवोपपत्तौ कथमिञ् न स्यादितीति चेन्न। इयायेत्याद्यर्थं परिभाषाया आवश्यकत्वेन तयैवेष्टसिद्धौ "येन" इति सूत्रे स्वशब्दानुवृत्तिस्तस्य चेति पाठो न कर्तव्य इत्याशयात्। यदि तु रोणीत्यादौ व्यपदेशिवद्भावप्रतिषेधात्, रौण इत्यादिसिद्ध्यर्थं तदनुवृत्तिरावश्यकीति चेत्तर्हि इयायेत्यस्योपलक्षणमिति बोध्यम्।

*विशेषणाभावादिति*। अयमाशयः--स्वोच्चारणक्षणवृत्तित्व, स्वघटकोच्चारणक्षणप्रागभावाधिकरणक्षणवृत्तित्व स्वघटकोच्चारणाधिकरणक्षणसमानाधिकरणक्षणवृत्तित्वैतत्त्रितयसम्बन्धेन समुदायविशिष्टत्वरूपान्त्यत्वलक्षणघटकद्वितीयसम्बन्धाभावादकारे तदारोप्यते। एवमादित्वम्-स्वघटकत्व स्वघटकोच्चारणध्वंसाधिकरणक्षणवृत्तित्वाभाववत्व, स्वघटकोच्चारण-

**वर्त्तते कार्य्यं प्रतीत्येकस्मिन्नसहायेऽपि तत्कार्य्यं कर्त्तव्यमित्यर्थः। तेनाकारस्याप्यदन्तत्वान्न क्षतिः। एकस्मिन्नित्युक्तेः सभासन्नयन आकारस्य नादित्वं दरिद्राधाताविकारस्य नान्तत्वम्। अन्यथा सभासन्नयने भव इत्यर्थे "वृद्धाच्छः" (२-१-१४) दरिद्रातेरिवर्णान्तलक्षणोऽश्च स्यात्। अत एव हरिष्वित्यादौ सोः पदत्वं न। लोकेऽपि बहुपुत्रसत्त्वे नैकस्मिन् ज्येष्ठत्वकनिष्ठत्वादिव्यवहारोऽयं मे ज्येष्ठः कनिष्ठो मध्यम इति किन्त्वेकपुत्रसत्त्व एव। अनेन चाशास्त्रीयस्याप्यतिदेशः। अत एव इयायेत्यादावेकाच्त्वनिबन्धनद्वित्वसिद्धिः। अत एव भवतीत्यादौ भू इत्यस्याङ्गत्वम्, इयानित्यादौ कार्य्यकालपक्षे तद्धितान्तत्वनिबन्धनप्रातिपदिकत्वं च सिध्यति।**

**अन्यथा यस्माद्विहितस्तदादित्वाभावान्न स्यात्।**

भैरवी।

वः। *तेन*। व्यपदेशिवदेकस्मिन्निति परिभाषाङ्गीकारेण। *अकारस्य*। वासुदेववाचकस्याकारस्य। *नादित्वमिति*। अत्र स्वाव्यवहितोत्तरत्वसम्बन्धावच्छिन्नप्रतियोगिताकयत्किञ्चित्प्रतियोगिताकाभाववत्वमादित्वव्यपदेशे निमित्तम् स चाभावः सभासन्नयनावयवाकारे नास्ति तादृशसम्शब्दवैशिष्ट्यस्य सद्भावादिति न मुख्यादित्वमसहायत्वाभावेनेयं परिभाषा तु न प्रवर्त्तत इति। एवं दरिद्राशब्दावयवाकारेऽपि बोध्यम्। अत्रोक्तस्य विशेष्यस्याभावादिति भावः। *अन्यथा*। असहाय इत्येतदर्थकस्यैकस्मिन्नित्यस्याभावे। *अत एव*। एकस्मिन्नित्यस्य सत्वादेव। व्यपदेशिवदेकस्मिन्निति वचनं लौकिकमिति ध्वनयितुमाह—*लोकेऽपीत्यादि। *एकपुत्रसत्व एवेति*। एतेन तत्रापि असहायत्व एव तादृशो व्यवहार इत्यस्य दृढीकरणम्। अत्र एकपुत्रत्व एवेत्यत्र बहुव्रीहिस्त्वः। व्यपदेशिवदित्यस्य लौकिकत्वस्वीकारात् फलान्तरमपि सिध्यतीत्याशयेनाह—*अनेनेति*। अशास्त्रीयस्यापीत्यपिना शास्त्रीयपरिग्रहः। तेन "अचो यत्" इत्यादावाच् इत्यादेरजन्त इत्यर्थो यद्यपि शास्त्रबोध्यस्तथाप्यनेन न्यायेन केवलेऽतिदेशो भवति। *अत एव*। अशास्त्रीयस्य अतिदेशादेव।

तत्त्वप्रकाशिका।

प्रागभावाधिकरणक्षणवृत्तित्वैतत्त्रितयसम्बन्धेन समुदायविशिष्टत्वम्। एतच्चाद्यन्तवदितिसूत्रमारभतः सूत्रकृतोऽभिमतम्। अत एव सत्यन्यस्मिन्यस्मात्पूर्वो नास्ति स आदिः, सत्यन्यस्मिन्यस्मात्परो नास्ति तदन्त्यमित्युक्तं भाष्ये। अत्र यस्मादित्यस्य यत्समुदायादित्यर्थः। पूर्व इत्यस्य तत्समुदायघटकीभूताद् आदित्वेनाभिमतवर्णात्पूर्व इत्यर्थः। अत एव घटपटावित्यत्र पकारात्पूर्वमकारस्य सत्वेऽपि नादित्वव्याघातः। एवमन्त्यत्वलक्षणेऽपि बोध्यम्।

वार्तिककारस्तु, अनयोर्लक्षणे पूर्वोत्तरत्वेऽनिवेश्य सूत्रं प्रत्याचख्यौ। भाष्यकारस्तु धुगित्यादौ घटकत्वातिदेशार्थमिमाम्परिभाषामारभन् अनयैव दोषान् निराचकार। आदित्वान्त्यत्वलक्षणे वार्तिककृदभिमतं ऽङ्गीकृतवान्। एवं चादित्वान्त्यत्वघटकत्वघटितत्वेतिधर्मचतुष्टयम् भाष्यप्रामाण्यादनयाऽतिदिश्यते। घटकत्वञ्च स्वसमानाधिकरणाभावाप्रतियोगित्व स्वाभावाधिकरणवृत्तित्व एतदुभयसम्बन्धेन स्वविशिष्टत्वम्। एवं घटितत्वं स्वाभावाधिकरणावृत्तित्व स्वसमाधिकरणाभावप्रतियोगित्वैतदुभयसम्बन्धेन स्वविशिष्टत्वम् बोध्यम्। उभयत्र विषयितासम्बन्धेन ज्ञानरूपमधिकरणं बोध्यम्।

एतेन धुगित्यादौ घटकत्वं लोकतस्सिद्धं व्यर्थेयम्परिभाषा इति वदन्तः प्रत्युक्ताः, द्वितीयसम्बन्धाभावेन परिभाषां विना घटकत्वाभावात्। *असहाय इति*। अतिदिदिक्षितधर्मवद्घटत्वं अतिदिदिक्षितधर्मवदघटितत्वं अतिदिक्षितधर्मवदसमभिव्याहृतत्वं असहायत्वम्।

यत्तु योऽर्थवांस्तत्र अर्थस्य त्यागोपादानाभ्यामेकाज्व्यपदेशो यथेयाये-त्यादावर्थवतो धातोरयं वर्णरूप एकोऽजिति कैयटस्तन्न। तस्यैकपदा ऋगित्यत्र भाष्योक्तरित्या मुख्यव्यवहारसत्त्वात्। एकपदा ऋगित्यत्रार्थेन युक्तो व्यपदेश इति भाष्य उक्तम्। ऋक्त्वादेरर्थशब्दोभयवृत्तित्वेन तस्याः शब्द-मात्ररूपं पदमेकोऽवयव इत्यर्थः इति तदाशयः। तस्मादेकस्मिंस्तत्तद्धर्मा-रोपेण युगपद्यथा ज्येष्ठत्वादिव्यवहारो यथा च शिलापुत्रकस्य शरीरमित्या-दावेकस्मिन्नारोपितानेकावस्थाभिः समुदायरूपत्वाद्यारोपेण एतस्य शरी-रमित्यादिव्यवहारः तथा अत्रैकाच्त्वादिव्यवहारोपपत्तिरिति लोकन्या-यसिद्धेयम्।

न चासहाय एवैतत् प्रवृत्तौ भवतीत्यत्र भू इत्यस्याङ्गत्वानापत्तिः सस-हायत्वादिति वाच्यम्? शपमादायाङ्गत्वे कार्ये यस्माद्विहिनस्तदादित्वे तस्य ससहायत्वाभावाल्लोके विजातीयकन्यादिसत्त्वेऽप्येकपुत्रस्य तस्मिन्ने-वायमेव ज्येष्ठ इत्यादिव्यवहारवत्।

भैरवी

"आद्यन्तवत्" सूत्रस्थकैयटोक्तमनुवदति—*यत्त्विति*। शब्दार्थसमुदायस्यान्यपदा-र्थत्वं शब्दमात्रस्य तदवयवत्वमित्येकाज्व्यपदेशो युक्त एवेति भावः॥ मुख्यव्यवहारसत्त्वादि-त्यनेन तथोपपादने गौणत्वानापत्त्या लोकदृष्टान्तविरोध इति भावः। अर्थमाश्रित्य यो व्य-वहारः स मुख्य इत्यत्र भाष्यसम्मतिमाह—*एकपदेति*। युक्तपदोपादानेन व्यपदेशिवदि-त्यस्य मुख्यव्यवहारतुल्य एव प्रवृत्तेर्भाष्यसम्मतत्वेनार्थमादाय व्यपदेशिवद्भावोपपादनमयु-क्तमिति सूचितम्। यथा व्यपदेशिवद्भावस्य प्रयोजनमुक्तन्न तथा आह—*तस्मादिति*। वयः कृतावस्थानां प्राणिधर्मत्वादाह—*आरोपितेति*। अनेकावस्थाविशिष्टः शिलापुत्रकप-दव्यवहार्य्य, एकावस्थाविशिष्टः शरीरपदजव्यवहारविषयः। *कार्य्ये*। कर्तुमिष्टे। *तदा-दित्व इति*। तदादित्वव्यवहार इत्यर्थः। *विजातीयकन्येति*। लोके कन्यायाः पुत्रवैजात्यं प्रसिद्धमेव, शास्त्रेऽस्मिन् वैजात्यन्तु तत्तत्कार्य्यविधायकशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तसमु-दायघटकत्वाभाववत्वेन, तेन विजातीयप्रकृतिसहायसत्त्वेन हरिषु करोषीत्यादौ प्रत्ययमात्रस्य पदत्वं स्यादिति निरस्तम्। भवतीत्यादौ शपमादायाङ्गत्वे चिकीर्षिते यस्माच्छब्विधिस्त-दादित्वस्य शप्परत्वविशिष्टस्य उद्देश्यतावच्छेदकतया तस्य मुख्यत्वाभावेन व्यपदेशिवद्भा-वः प्रवर्त्तते। असहायत्वञ्च सजातीयद्वितीयरहितत्वम्। सजातीयत्वमत्र तत्तदुद्देश्यतावच्छेद-

तत्त्वप्रकाशिका।

अनेनेति। अयम्भावः—दीक्षितैः परिभाषायाः शास्त्रीयकार्ये एव प्रवृत्तिरित्यभिप्रेत्य प्रत्यय-पर्युदासाभावे हरिष्वित्यादौ प्रत्ययस्य प्रातिपदिकत्वेन सुबन्तत्वात्पदत्वे षत्वनिषेधापत्ति-मुपपाद्य व्यपदेशिवद्भावेन प्रत्ययान्तपर्युदासमाशङ्क्य तत्र तदादिपदोपस्थितया तस्य चाशा-स्त्रीयत्वेन, परिभाषाया अप्रवृत्तिरुक्ता। तत्र शास्त्रीयत्वं शास्त्रकार्यसङ्केतविषयतावच्छेद-कधर्मघटितधर्मवत्वरूपमभिप्रेतम्। अत एवेयायेत्यादावेकाच्त्वनिबन्धनद्वित्वसिद्धिः। अन्य-थैकाच्त्वस्य शास्त्रकारीयसङ्केतविषयताश्रयत्वाभावात्तन्न स्यात्।

नवीनास्तु शास्त्रीयलक्षणे घटितत्वनिवेशे मानाभावाद्गौरवादस्या अशास्त्रीयकार्येऽपि प्रवृत्तौ बाधकाभावादयुक्तन्तदिति मन्यन्ते। हरिष्वित्यादौ प्रत्यये प्रत्ययान्तत्वातिदेशस्त्व-सहायत्वाभावान्न। *त्यागोपादानेति*। *ज्येष्ठत्वेत्यादि*। स्वजन्यत्व स्वजन्योत्पत्त्युत्त-

न चैवं "निजौ चत्वार एकाच" इति भाष्यासङ्गतिरिकारस्यासहायत्वाभावेन तत्र एकाच्त्वानुपपादनादिति वाच्यम् ? एकस्मिन्नित्यस्यापर्य्यालोचनया तत्प्रवृत्तेः। अर्थवता व्यपदेशिवद्भाव इत्यत्रार्थवत्पदेनाप्यसहायत्वमुपलक्ष्यते। अर्थबोधकेन शब्देन व्यपदेशिसदृशो भावः कार्यं लभ्यते इति तदर्थः। प्रायोऽसहाय एवार्थवत्त्वात् कुरुत इत्यादौ तशब्दाकारोऽचामन्त्य

भैरवी।

कावच्छिन्नघटकत्वेन विवक्षितम्। *न चैवमिति*। असहाय एवैतत्परिभाषाप्रवृत्तिस्वीकार इत्यर्थः। *तत्र*। इकारे। अनुपपादनादित्यस्यानया परिभाषयेत्यादिः। *तत्प्रवृत्तेः*। उक्तभाष्यप्रवृत्तेः। एतेनास्य भाष्यस्य एकदेश्युक्तित्वं दृढीकृतम्।

नन्वर्थवता व्यपदेशिवद्भाव इति भगवदुक्तेरर्थस्य त्यागोपादानाभ्यामेव व्यपदेशिवद्भावप्रयोजनं कैयटोक्तरीत्यैवोचितमिति तत्खण्डनमनुचितमत आह—*अर्थवतेति*। *पदेनापीति*। अत्रापिशब्दः। सूत्रस्थैकशब्दसमुच्चायकः। अर्थवतेत्यत्र षष्ठ्यर्थे मतुप् षष्ठ्यर्थश्च सम्बन्धः स च वाच्यवाचकभाव एव।

एवञ्च यत् फलितं तदाह—*अर्थबोधकेनेति*। व्यपदेशिवद्भाव इत्यत्र तृतीयान्ताद्वतिना सादृश्यलाभादाह—*व्यपदेशिसदृश इति*। भावपदं कार्यपरम्। *तदर्थः*। उक्तभाष्याक्षरार्थः। असहायत्वस्य उपलक्ष्यत्वे मानमाह—*प्राय इति*। टित आत्मनेपदानामवयवाकारेऽप्यसहायत्वन्निरुक्तमस्त्येवेति तस्य टिसंज्ञायामेत्वसिद्धिरित्याह—*कुरुत इत्यादावि-

तत्त्वप्रकाशिका।

रकालावृत्ति—उत्पत्तिकालिकत्व स्वजन्योत्पत्तिप्राक्कालिकोत्पत्तिकत्वैतत्त्रितयसम्बन्धेन पितृविशिष्टत्वं ज्येष्ठत्वम्। यत्र देवदत्तस्य त्रयः पुत्राः सन्ति तत्र कनिष्ठे सम्बन्धद्वयाभावान्न ज्येष्ठत्वं मध्यमे कनिष्ठस्यापेक्षया प्राक्कालिकोत्पत्तिकत्वेऽपि ज्येष्ठापेक्षयोत्तरकालवृत्त्युत्पत्तिकत्वान्न ज्येष्ठत्वं किन्त्वेतज्ज्येष्ठ एव। यत्र त्वेक एव पुत्रस्तत्र व्यपदेशिवद्भावादेतदुपपद्यते नैवमेकःदा ऋगित्यादौ तत्रार्थत्यागोपादानाभ्यमुख्यव्यवहारस्य विद्यमानत्वात्।

*असहायत्वमिति*। केचित्तु उक्तासहायत्वलक्षणस्वीकारे सभासन्नयने वृद्धिभिन्नप्रातिपदिकत्वस्य व्यपदेशिवद्भावेनाभावाय एकपदशक्यतावच्छेदकधर्मस्यादेशो भवतीति निवेशे साम्नो लोम्नो इत्यादावीदन्तद्विवचनत्वस्यातिदेशेनाप्राप्तिरतः एकपदशक्यतावच्छेदकत्वे सति अतिदिश्यमानघटकपरमाप्रधानविशेषणीभूतधर्मवत्त्वम् असहायत्वम् वक्तव्यम्। इरित्यादावतिदिश्यमानादन्तत्वघटकपरमाप्रधानविशेषणीभूतस्यात्त्वस्याशब्दे सत्वाद्भवति व्यपदेशिवद्भावः। धुगित्यादौ धात्ववयवैकाच्त्वघटकीभूतस्य धातुत्वस्य सत्वात्, इयायेत्यादावेकाच्त्वघटकीभूतैकत्वस्य सत्वात् अतिदेशो भवति। हरिषु घटकसुभागे न सुबन्तत्वादित्वारोपः तस्य एकपदशक्यतावच्छेदकत्वाभावात्। अत एव रामशब्देन जराशब्दत्वस्यारोपः अतिदिश्यमानधर्मघटकयत्किञ्चिद्धर्मस्यासत्वात्। यद्यपि जकारोत्तरवर्तिअत्वादिरूपधर्मघटकीभूतः। अत्वेरत्वरूपधर्मोऽस्ति, तथापि तस्य मुख्यधर्मत्वाभावात परिचायकमात्रं केवलन्तदिति वदन्ति।

अन्येतु अनया घटकत्वघटितत्वे एवादितिदिश्येते। अत एवासहायत्वेन रामशब्दे न जरात्वारोपः। न च स्वमुखप्रविष्टधर्मस्यैव स्वस्मिन्नारोपो भवति नैवं जराशब्दत्वादेः, अकारान्तत्वादेस्तु भवत्यारोपः स्वस्याकारस्य मुखे प्रविष्टत्वादिति वाच्यम् ? लोकव्यवहारविरोधापत्तेः। एकस्मिन्पुत्रे ज्येष्ठत्वादेरनतिदेशात्, उकारमात्रे जव्यवहितपूर्वत्वारोपाद्यणापत्तेः, भूधुगित्यादौ दुहशब्दस्य भष्भावानापत्तेश्चातिदिश्यमानधर्मवद्भूधात्ववयवसमभिव्याहृतत्वेनासहायत्वाभावात्।

नच घटकत्वघटितत्वमात्रातिदेशे एकस्मिन् ज्येष्ठत्वादिव्यवहारानुपपत्तिस्तवापीति

इति व्यवहारे, स आदिर्यस्येति व्यवहारे, असहाय एवेति तत्र व्यपदेशिवद्भावेन टिसंज्ञासिद्धिरिति अन्यत्र विस्तरः ॥ ३० ॥

ननु गर्गादिभ्यो विहितो यञ् तदन्तविधिना परमगर्गादिभ्योऽपि स्यादत आह—

**ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति ॥ ३१ ॥**

इयं च "समासप्रत्ययविधौ प्रतिषेधः" "उगिद्वर्णग्रहणवर्जम्" इति वार्त्ति-

भैरवी ।

ति* । यदुक्तम् प्राय इति तदभिप्रायस्तु क्वचिदेकवर्णेऽपि ससहाय एवार्थवत्त्वम् । यथाऽधीत इत्यादौ । *अन्यत्र* । उद्योतादौ ॥ ३० ॥

तदन्तविधिप्रसङ्गात् "अत इति सूत्रस्य प्रागुक्तत्वात् तस्य तद्धितविधायकतया "गर्गादिभ्य" इत्यप्युपस्थितमतस्तत्र शङ्कते-*नन्विति* । *ग्रहणवतेत्यादिना* । अत्र यस्य प्रातिपदिकस्य सूत्रे ग्रहणमुपादानं तेन तदन्तविधिर्नास्तीत्यर्थकरणे "अस्मायामेधास्रजो विनिः" इति सूत्रे समाघटकादस्योपात्तस्य प्रातिपदिकत्वात्तदन्तविध्यभावापत्तौ यशस्वीत्यादिरूपासिद्धिरतः प्रातिपदिकत्वव्याप्यधर्मवत्त्वेनोपादानं यस्य प्रातिपदिकस्य तेन तदन्तविधिर्नास्तीत्यर्थः कार्य्यः । अस्त्वत्र प्रातिपदिकाप्रातिपदिकसाधारणमिति भवति तेन तदन्तविधिः ।

नन्वेवं "जराया जरसन्यतरस्याम्" इत्यादौ तदन्तविधिर्न स्यादत आह—*इयञ्चेति* ।

तत्त्वप्रकाशिका-

वाच्यम् ? स्वघटकत्व स्वघटकोत्पत्युत्तरकालिकोत्पत्तिकत्वाभाववत्त्वोभयसम्बन्धेन स्वपुत्रसमुदायविशिष्टत्वरूपज्येष्ठत्वव्यवहारस्य स्वघटकत्व स्वघटकोत्पत्तिपूर्वकालिकोत्पत्तिकत्वाभाववत्त्वोभयसम्बन्धेन स्वपुत्रसमुदायविशिष्टत्वरूपकनिष्ठत्वव्यवहारस्य घटकत्वातिदेशेनैवोपपत्तेः ॥ ३० ॥

*नन्विति* । पदाङ्गेतिपरिभाषाघटकतस्येत्यस्योपपादिकामुक्त्वातदन्तेत्यंशस्यातिव्याप्तिवारकत्वेनोपपादिकामवसरसङ्गत्याह इत्यपि कश्चित । *परमगर्गादिभ्योऽपीति* । अपिना केवलस्यापि ग्रहणम् ।

नच 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इति व्यपदेशिवद्भावाभावात् "ग्रेन" इति सूत्रेऽपि तस्येत्यंशाभावत्कथं केवलस्येति वाच्यम् ? प्रतिषेधस्य सूत्रगृहीतान्तादिशब्दविषयकत्वाद् इत्याशयात् । *प्रातिपदिकत्वव्याप्येत्यादि* । "ह्यचः" इत्यादौ ह्यच्त्वस्य प्रातिपदिकत्वव्याप्यत्वाभावेन निषेधाप्रवृत्त्या तदन्तविधावनेकाक्ष्वपि प्रवृत्तेः ग्रहणवत्प्रातिपदिकत्वं प्रत्ययोगिद्वर्णग्रहणान्यतमभिन्नत्वे सति प्रातिपदिकवृत्तिविषयताप्रयोजकत्वम् बोध्यम् । तेन "यञिञोश्च" "उगितश्च" "अत इञ्" इत्यादौ निषेधाप्रवृत्तिः ।

केचित्तु "संख्याया अतिशदन्ताया" इत्यादौ संख्यात्वस्य प्रत्ययाप्रत्ययसाधारणत्वेन प्राप्ततदन्तविधिवारणाय प्रत्ययपदं प्रत्ययमात्रपरम् । अन्यथा "बहुगणवतुडति" इत्यत्र "संज्ञाविधौ" इति निषेधेन डतिमात्रस्य संज्ञायामपि प्रदेशेषु संख्याया इत्यादिषु प्रातिपदिकविशेषणत्वेन तदन्तविधौ संख्यान्तादित्यर्थे केवलस्यापि डतेः संज्ञायाश्चारितार्थ्यात् पञ्चक इतिवत् प्रियपञ्चक इत्यपि स्यात् ।

मम तु मात्रपदनिवेशेन प्रदेशे 'ग्रहणवता' इति निषेधात्तदन्तविध्यभावेन नोक्तदोषः । इदानीं केवलस्य संज्ञायाः वैयर्थ्यात्संज्ञाविधाविति बाधित्वा तदन्तस्य संज्ञेत्यन्यदेतत् । अत एव स्त्रीप्रत्ययेषु ग्रहणवतेति निषेधाप्रवृत्तौ अनुपसर्जनादित्यस्य ज्ञापकत्वं भाष्यशेखरोक्तं सङ्गच्छते । अन्यथा "टिड्ढ" इत्यत्र टित्त्वस्य प्रत्ययाप्रत्ययसाधारणत्वेनैतन्निषेधाप्रवृत्त्या

कस्थप्रत्ययांशानुवादः। अत एवायं प्रत्ययविधिविषय एव। अत एव "येन विधिः" (१-१-७२) इति सूत्रभाष्ये प्रत्ययविधिभिन्ने "अप्तृन्" (६-४-११) इत्यादौ गृह्यमाणप्रातिपदिकेनापि तदन्तविधिप्रतिपादनं स्वसा परमस्वसेत्याद्युदाहरणं च सङ्गच्छते। अत एव च तदन्तविधिसूत्रे भाष्ये समासेत्यादिनिषेधस्य कथनवदस्य न कथनम्। सोऽपि निषेधो विशिष्य तत्तद्रूपेण गृहीतप्रातिपदिकसूत्र एव। ध्वनितं चेदम् "असमासे निष्कादिभ्यः" (५-१-२०) इति सूत्रे भाष्ये। अत्र च ज्ञापकं "सपूर्वाच्च" (५-२-८७) इति सूत्रम्

भैरवी।

*अतएव*। प्रत्ययविधौ यः प्रतिषेधो वार्तिककृतोक्तस्तदनुवादकत्वादेव। *अयम्*। ग्रहणवतेत्येद्वचनबोध्यः प्रतिषेधः। *अत एव*। उक्तार्थत्वादेव। *इत्युदाहरणमिति*। "अप्तृन्" इति सूत्रे यद्यपि स्वसृशब्दस्य प्रातिपदिकत्वव्याप्यानुपूर्व्यवच्छिन्नस्य उपादानमस्ति, तथापि तस्य सूत्रस्य प्रत्ययविधायकत्वाभावेन तदन्तविधिः।

न च स्वसृशब्दनिष्ठानुपूर्वी न प्रातिपदिकत्वव्याप्या तस्याः प्रातिपदिकानुकरणे स्वसृ इत्याद्येत्यत्रापि सत्त्वादिति वाच्यम्। एवं सति प्रातिपदिकत्वव्याप्यधर्माप्रसिद्धिरतः प्रातिपदिकत्वव्याप्यत्वं प्रातिपदिकत्वाभाववान्योऽनुकरणातिरिक्तस्तद्वृत्तित्वरूपन्निर्वाच्यमिति भवत्यत्र तदन्तविधिः।

नन्वेतस्मिन् उदाहरणे "सर्वनामस्थाने चासम्बुद्धौ" इत्यनेनैव दीर्घस्य सिद्धत्वादन्यथासिद्धोदाहरणदानादेतद्भाष्यमेकदेशयुक्तमत उक्तार्थे साधकान्तरमाह—*अत एवेति*। अस्य वचनस्य प्रत्यविधिविषयत्वादेव—*निषेधकथनवदिति*।

ननु तत्रत्यनिषेधकथनमुपलक्षणमस्त्विति चेत् स्वसा परमस्वसेत्यपि तर्ह्युपलक्षणमिति परमस्वसारावित्यादौ दीर्घानापत्तिरूपदोषोऽस्त्येवेति गृहाण।

ननु वार्त्तिकस्थप्रत्ययांशानुवादत्वन्तदा भवेद्यदि वार्त्तिकस्यास्य वचनस्य समानविषयत्वं स्यात् तदेव तु कथमत आह—*सोऽपीति*। विशिष्येत्यस्यैव व्याख्यानम्—*तत्तदिति*। तत् तदित्यस्य प्रातिपदिकत्वव्याप्येत्यर्थः। गृहीतं प्रातिपदिकं यस्मिन् तादृशे सूत्रे इत्यर्थे बहुव्रीहिघटितः कर्मधारयः। गृहीतपदस्य नित्यसापेक्षत्वेन समासः। एतेन समानविषयत्वं प्रदर्शितम्। "अत इञ्" इत्यादौ तदन्तविधिरप्यनयैव रीत्या निर्बाध इति "उगिद्वर्णग्रहणवर्जम्" इत्यपि नापूर्वमिति बोध्यम्।

ननु तत्र वार्त्तिके प्रातिपदिकपदाभावात्कथमस्य समानविषयत्वमत आह—*ध्वनितमिति*। तत्र ह्यसमासग्रहणं किमर्थम् परमनैष्किकः, नैतदस्ति प्रयोजनम् निष्कशब्दात् प्रत्ययो विधीयते तत्र कः प्रसङ्गो यत्परमनिष्कशब्दात् प्राप्नोति, तदन्तविधिना प्राप्नोति, ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते, निष्कादिष्वसमासग्रहणं ज्ञापकं पूर्वत्र तदन्ताप्रतिषेधस्य, पूर्वत्रेति तेन कृष्णतिलशब्दाच्चतुर्थ्यन्तात् तद्धितार्थे "खलयवमाष" इत्यनेन यत् प्रत्ययः सिद्धो भवति किमस्य ज्ञापने प्रयोजनमिति प्रश्ने "प्राग्वतेष्ठञ्" इत्यत्र तदन्तविधिः

तत्त्वप्रकाशिका।

तदन्तविधिना बहुकुरुचरेत्यादौ प्राप्तङीब्वारणायाऽनुपसर्जनादित्यस्यावश्यकत्वेन तस्य ज्ञापकत्वं भाष्योक्तमसङ्गतं स्यात्। एतेन मानाभावान्मात्रेति न निवेश्यमिति वदन्तः प्रत्युक्ताः। "अस्मायामेधा" इत्यत्रासन्तादित्यर्थस्तु "अनिनस्मन्" इति परिभाषयाऽस्त्वादौ वर्णत्वातिदेशेन वर्णग्रहणत्वान्निषेधाप्रवृत्तेः। अत एवानूकारः असूकार इत्यादि भाष्यप्रयोगाः सङ्गच्छन्ते। अन्यथाऽनसित्यादिसमुदायाद्वर्णात्कार इति कारप्रत्ययोऽनुपपन्नः स्यात्।

अन्यथा "पूर्वादिनिः" (५-२-८६) इत्यत्र तदन्तविधिनैव सिद्धे किं तेन ॥३१॥

नन्वेवं "सूत्रान्तात् ठक्" (४-२-६०) "दशान्ताड्डः" (५-२-४५) "एकगोपूर्वात्" (५-२-११८) इत्यादेः केवलसूत्रशब्ददशन्शब्दैकशब्दादिष्वपि प्रवृत्तिर्व्यपदेशिवद्भावात्स्यादत आह—

## व्यपदेशिवद्भावोऽप्रातिपदिकेन ॥ ३२ ॥

पूर्वात्सपूर्वादिनिरित्येकयोग एव कर्त्तव्ये पृथग्योगकरणमस्यां ज्ञापकम्।

भैरवी।

सिद्धो भवतीति भगवतोक्तम् ततो नैतदस्ति प्रयोजनं ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते इत्युक्त्वा न च ठञ्विधौ काचित् प्रकृतिर्गृह्यते इदं तर्हि प्रयोजनमार्हादगोपुच्छसङ्ख्यापरिमाणात् ठक् परमगोपुच्छेन क्रीतम्पारमगोपुच्छिकमत्र ठक्प्रतिषेधइढञ् सिद्धो भवति एतदपि नास्ति प्रयोजनम् विधौ प्रतिषेधः प्रतिषेधश्चायमिति प्रतिपादिम्। अत्र न ठञ् विधौ काचिदित्येवं कथनेन तत्तद्रूपेण प्रातिपदिकस्य यत्र ग्रहणं तत्र प्रतिषेधः इति कथनेन च ग्रहणवतेत्यस्य प्रत्ययविधिविषयत्वमेवेति ध्वनितमित्यर्थः। *अन्यथा*। एतद्वचनाभावे। एतेन व्याख्यानेन यत्केनचिदुक्तं "समासप्रत्ययविधौ" इत्येतदपेक्षया "ग्रहणवता" इति भिन्नवचनमिति तन्निरस्तम्। असमासग्रहणस्य वार्त्तिकस्थप्रत्ययांशो नापूर्व इत्यत्रैव ज्ञापकत्त्वादिति ॥ ३१ ॥

तदन्तस्य उपस्थितिप्रसङ्गादाह—*नन्वेवमिति*। *एवम्*। प्रातिपदिकेन तदन्तविधिप्रतिषेधे अपीति शेषः। एतेनैकातिप्रसङ्गस्य परिहारेऽप्यतिप्रसङ्गान्तरमस्त्येवेति ध्वन्यते

तत्त्वप्रकाशिका।

न चैवम् "अल्लोपोऽन" इत्यत्रादिति तपरकरणं व्यर्थं स्यादिति वाच्यम्? अन्धातोः क्विप्युपधादीर्घे आनित्यादौ वर्णत्वातिदेशेऽपि अल्त्वस्यानतिदेशादनल्विधाविति निषेधस्याप्रवृत्त्या स्थानिवद्भावेनान्त्वातिदेशेन प्राप्ताल्लोपस्य वारणाय तदावश्यकत्वादिति वदन्ति। *प्रत्ययविधिविषय इति*। तत्त्वञ्च स्वतादात्म्य स्वनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्वैतदन्यतरसम्बन्धेन प्रत्ययाधिकारपठितत्वे सति प्रययविशिष्टविधायकत्वम्। आद्यसम्बन्धनिवेशाद् "गर्गादिभ्योयञ्" इत्यस्य सङ्ग्रहः, द्वितीयेन "नान्तादसंख्यादेः" इत्यस्येति बोध्यम्। विशेष्यानुपादाने "अग्रान्त" इत्यादावपि निषेधप्रवृत्त्या कुड्मलाग्रदन्निति न स्यात्। *उक्तरर्थत्वादेव*। प्रत्ययविधिविषयत्वादेवेत्यर्थः ॥ ३१ ॥

*एकयोगे इति*। ननु स्वातिरिक्तावयवकत्वस्य व्यपदेशिवद्भावेनातिदेष्टुमशक्यत्वादेकयोगे केवलपूर्वशब्दात्कथमिनेः प्राप्तिरितिचेन्न "पूर्वादिनिः" "सपूर्वाच्च"इत्यनयोः स्थाने "पूर्वान्तादिनि" "इष्टादिभ्यश्च" इत्यत्रेष्टाद्यन्तेभ्य इत्येव कर्तव्ये पृथक्योगद्वयकरणमस्यां ज्ञापकम् इत्यत्र तात्पर्यात्। नच पदलाघवाभावः नच पूर्वशब्दस्येष्टादिगणे पाठे इष्टाद्यन्तेभ्य इनिरित्येकसूत्रकरणेन लाघवमिति, अनेनेत्यस्यानुवृत्त्येष्टाद्यन्तनिरूपितकर्त्रर्थं एव प्रत्यासत्या प्रत्ययस्य विधाने कृतपूर्वीत्यस्य सिद्धावपि व्यपदेशिवद्भावेन पूर्वीत्यस्यासिध्यापत्तेः पूर्वान्तनिरूपितकर्तृत्वाभावात्। अतो योगविभागसामर्थ्याद्बहिर्भूतक्रियानिमित्तकर्तृत्वेऽपि पूर्वशब्दात्प्रत्ययार्थं तथा पाठस्यावश्यकत्वादिति वाच्यम्, योगविभागाभावस्यैव लाघवात्।

इत्थञ्च धर्मिग्राहकमानेन सूत्रोपात्तान्तादिशब्दविषयकत्वमेव तस्याम्। इति सिद्धम्। युक्तञ्चैतत् प्रत्ययविधिविषयकत्वे हि "रोणी" "उगितश्च" इत्यादीनां केवलेऽप्रवृत्त्यापत्तिः। एतदर्थं तस्य चेति पाठे गौरवं स्यात्।

**न च "इष्टादिभ्यः" (५-२-८८) इति सूत्रेऽनुवृत्त्यर्थं तथा पाठोऽत एवानिष्टी-त्यादिसिद्धिरिति वाच्यम् ? ज्ञापकपरभाष्यप्रामाण्येनानिष्टीत्यादिप्रयोगाणामनिष्टत्वात्, एकयोगेऽपि तावत उत्तरत्रानुवृत्तौ बाधकाभावाच्च । अत एव "नान्तादसंख्यादेः" (५-२-४९) इति चरितार्थम् । अन्यथा पञ्चम इत्यादावपि व्यपदेशिवद्भावेन सङ्ख्यादित्वात्तद्वैयर्थ्यं स्पष्टमेव । इयं च प्रातिपदिकग्रहण एव, न तु प्रातिपदिकाप्रातिपदिकग्रहणे । तेन "उगितश्च"**

भैरवी।

तानेवातिप्रसङ्गानुपपादयति—*सूत्रान्तादित्यादिना* । *व्यपदेशिवद्भावोऽप्रातिपदिकेन* । अत्रापि प्रातिपदिकपदं पूर्ववत् प्रातिपदिकत्वव्याप्यतद्धर्मावच्छिन्नपरमेव । अत एव व्यपदेशिवद्भावेन "अत इञ्"इत्यनेनेञ् अस्यापत्यमिरित्यादौ भवति । *अत एव* । सपूर्वादित्यनुवृत्तेरेव । परोक्तम् "एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः" इति न्यायमाश्रित्य खण्डयति—*ज्ञापकपरेत्यादिना* । द्वितीयन्यायमाश्रित्याह—*एकयोगेऽपीति* । *अत एव* । प्रातिपदिकेन व्यपदेशिवद्भावनिषेधादेव । इतीत्यस्येतिसूत्रमित्यर्थः । *अन्यथा* । एतन्निषेधाभावे । परिभाषाघटकं प्रातिपदिकपदमुपात्तप्रातिपदिकत्वव्याप्यतत्तद्धर्मावच्छिन्नपरमित्येतत् व्युत्पादयति—*इयमित्यादिना* । *उगितश्चेति* । यदि प्रातिपदिकपदं प्रातिपदिकसंज्ञकशब्दमात्रपरं तदा "उगितश्च" इति सूत्रघटकस्योगित्पदस्य प्रातिपदिकसंज्ञकत्वात्, तेनापि व्यपदेशिवद्भावो न स्यात्, तथा चेयतीत्यत्र ङीब्न स्यात्, यदि च 'तस्य च'इतिवार्त्तिकबलात्केवलादपि ङीबित्युच्यते तदा ओर्भाव आवमित्यत्र "इगन्ताच्च लघुपूर्वात्" इत्यण्प्रत्ययसिद्धिः पूर्वोक्तार्थस्य फलम्, एवं हि पूर्वपरिभाषासाजात्यमस्याः परिभाषाया भवति, अत एव प्रत्ययविधिभिन्ने व्यपदेशिवद्भावः सिध्यति, तेन सर्वमधीनं सर्वं वेत्ति वा सर्वं इत्यत्र 'सर्वादेः' इति लुक् पूर्वपरिभाषायाः प्रत्ययविधिमात्रविषयत्वात् परमसजूरित्यत्र रुत्वञ्च सिध्यति ।

ननु यदि "व्यपदेशिवद्भावोऽप्रातिपदिकेन" इति परिभाषायाः पूर्वपरिभाषासाजात्यात् प्रत्ययविधिमात्रविषयत्वं तदाऽत एव "नान्तादसङ्ख्यादेः" इति सूत्रस्यैतत्परिभाषामञ्जारण चारितार्थ्यप्रदर्शनमयुक्तम्, यदि प्रत्ययविधिपदं प्रत्ययोद्देश्यकविधिपरं तदा पृथगागकरणस्य ज्ञापकत्वकथनासङ्गतिः। इयं ग्रहणवतेति चेत्युत्तरग्रन्थासङ्गतिश्चेति चेन्न, मडादीनां स्वतः प्रत्ययत्वमेवेत्याशयस्य कल्पनात्। प्रत्ययविधिशब्दस्तु प्रत्ययकर्मकविधिपर एव, मडादीनां प्रत्ययत्वे "नान्तादसङ्ख्यादेः"इत्यादिषु डड्ग्रहणानुवृत्तिर्न कल्प्या, प्रथमान्तस्य षष्ठ्यन्तत्वकल्पना च न कार्य्येति लाघवम् । "द्वेस्तीयः" इत्यनेनैकरूप्यञ्च भवति "षट्कती"त्यत्र तु थुकस्थाने थडितिपाठ्यम् । आगमत्वप्रतिपादनपरग्रन्थाश्च प्राचामनुरोधेनेति व्याख्येयम् ।

न च मडादीनां प्रत्ययत्वे षष्ठ इत्यत्र जश्त्वस्य चतुर्थ इत्यत्र रेफस्य स्थाने विसर्गस्य च "स्वादिष्वसर्वनामस्थाने" इति पदत्वापत्तिरिति वाच्यम् ? "षष्ठाष्टमाभ्यां चतुर्थोचाशिषी" इति निर्देशेन भत्वानुमानात् ।

न चैवमपि विंशतितम इत्यत्र प्रत्ययाद्युदात्तत्वेन तकाराकारस्य उदात्तत्वापत्तिरागमत्वे तु अनुदात्तत्वमिति दोष इति वाच्यम् ? "विंशत्यादिभ्य" इति सूत्रे वेतिवक्तव्येऽन्यतरस्यां ग्रहणेन समुच्चयार्थंनान्तोदात्तत्वमपि विधीयत इत्यर्थाश्रयणात् ।

अत्र मानन्तु "उभयो मणिरुभये देवमनुष्याः" इति भाष्योदाहरणबलेनोभयशब्दादुद्दि-वचनाभावकल्पनाद्विंशतितम इत्यन्तोदात्तोच्चारणमेव ।

यद्वा "षष्ठाष्टमाभ्यां चतुर्थी" त्यादिनिर्देशेन डड्ग्रहणस्यानुवृत्तस्य सप्तम्यन्तत्वं कल्प्यते

( ४-१-६ ) इत्यत्र न दोष इति तत्रैव भाष्ये स्पष्टम्। इयं 'ग्रहणवता' ( प० ३१ ) इति च परिभाषा प्रत्ययविधिविषयैवेति "असमासे निष्कादिभ्यः" (५-१-२०) इति सूत्रे भाष्यकैयटयोः स्पष्टम्। तेन "अहन्" (८-२-३८) इत्यादेः परमाहन्शब्दे केवलाहन् शब्दे च प्रवृत्तिरित्यन्यत्र विस्तरः ॥ ३२॥

ननु "वान्तो यि" (६-१-७९) इत्यादौ यादौ प्रत्यय इत्यर्थः कथमत आह—

यस्मिन्विधिस्तदादावल्ग्रहणे ॥ ३३ ॥

भैरवी।

एवञ्च शबादीनां विकरणत्ववत् मडादीनामपि तत्त्वमस्तु। एवञ्चान्यत्र "विकरणेभ्य" इत्युक्त्या तस्य प्रत्ययाद्युदात्तत्वप्रवृत्तावपि दोषो न भविष्यतीति स्वरे यो दोषः सोऽपि वारित इति केचित्।

परे तु मडादीनामागमत्वमेव युक्तम् "मडादिषु यस्यादिस्तन्निर्देशः कर्तव्यः, अक्रियमाणे प्रत्ययाधिकारात्, प्रत्ययो विज्ञायेत तत्र स्वरे दोष" इति भाष्येण प्रत्ययपक्षस्य दुष्टत्वसूचनात्।

नन्वेवं पञ्चम इत्यत्र व्यपदेशिवद्भावेन पञ्चन्शब्दस्य संख्यादित्वात् निषेधस्य प्रवृत्तिः स्यादिति चेन्न, एवं सति सर्वत्रैव सङ्ख्यादित्वात् सूत्रस्यैव वैयर्थ्यमिति मडागमविधानसामर्थ्यात् तद्विषये व्यपदेशिवद्भावानाश्रयणात्। एवञ्च पृथग्योगकरणं ज्ञापकमित्यस्य व्यपदेशिवद्भावस्य क्वाचित्कत्वबोधनद्वारेति शेषः। *अत एव* व्यपदेशिवद्भावस्य क्वाचित्कत्वादेव। *अन्यथा*। क्वाचित्कत्वानङ्गीकारे इति रीत्योपपत्तिः कार्य्येत्याहुः। द्वयोः परिभाषयोः प्रत्ययविधिमात्रविषयत्वे मानान्तरमाह—*इयमित्यादिना*। *तेन*। उक्तपरिभाषयोः प्रत्ययविधिमात्रविषयत्वेन। "असमासे निष्कादिभ्यः" इति सूत्रे—"विधौ प्रतिषेधः प्रतिषेधश्चायम्" इति भाष्योक्त्या तथा कल्पतादिति प्रागुक्तम्।

न च "विधौ प्रतिषेध" इत्युक्त्वा पूर्वपरिभाषाया अविषयत्वध्वननमस्तु, द्वितीयायाः प्रत्ययविधिमात्रविषयत्वध्वननन्तु कथमिति वाच्यम्? असमासग्रहणेन तदन्तविधौ ज्ञापिते सति केवले तदन्तस्थो यो निषेधस्तत्सिद्धिरप्युपपादनीया सा नोपपादिता व्यपदेशिवद्भावेन केवले तदन्ते तत्सम्भवस्याभिप्रायविषयत्वात्तेन द्वितीयपरिभाषापि प्रत्ययविधिमात्रविषयेत्यस्य ध्वननात्॥ ३२॥

तदन्तविध्यपवादत्वात् स्मृतामन्यामपि परिभाषामवतारयति—*नन्वित्यादिना*। *कथमिति*। तदन्तविधेः सम्भवादिति भावः।

न च यान्तप्रत्ययाप्रसिद्ध्या न तदन्तविधिरिति वाच्यं गोकाम्यमतर्तीति गोकाम्यात् एतस्माच्छब्दादाख्यानार्थके णिचि टिलोपे यान्तप्रत्ययस्य सम्भवात्।

न च "अचः परस्मिन्" इतिस्थानिवत्वम्, अज्झलादेशत्वात्। सूत्रारम्भसामर्थ्यादसिद्धत्वमपि न। *यस्मिन्नित्यादि*। अत्र यस्मिन्निति सप्तम्यन्तानुकरणम्, अल् गृह्यते ज्ञायते येन तस्मिन् सप्तम्यन्ते यो विधिः स तदादौ बोध्य इति अर्थकरणे "इको यणचि"इत्यादावपि तदादिविधेरापत्तिरिति तदन्तविध्यपवादत्वमस्या उक्तम्। तदन्तविधिः समानविभक्तिकविशेष्यविशेषणवाचकपदसन्निधाने भवति यथा तथेयमपि सप्तम्यन्तविशेष्यविशेषणवाचकसन्निधाने भवतीति कल्प्यम्। तथा च गृह्यते इतरभिन्नत्वेन ज्ञायते येन तद्ग्रहणम् विशेषणमिति

तत्त्वप्रकाशिका।

नचैवं कुड्मलाग्रदन्निति न स्यात्, व्यपदेशिवद्भावाप्राप्तेरिति वाच्यम्? इष्टापत्तेः ॥३२॥

*समानविभक्तिकेत्यादि*। नामार्थयोरभेदान्वये समानविभक्तिकत्वनियमात् सामाना-

**तदन्तविधेरपवाद इयम् । वाचनिक्येषा "येन विधिः" ( १-१-७२ ) इत्यत्र भाष्ये पाठता । अस्याश्च स्वरूपसती सप्तमी निमित्तम् । अत एव "नेड्वशि कृति" ( ७-२-८ ) इत्यादौ वशादेः कृत इत्याद्यर्थलाभः । इयं च**

भैरवी ।

यावत्, अल्ग्रहण इति कर्मधारयः पूर्वनिपातप्रकरणस्य "समुद्राभ्राद्घ" इति निर्देशेनानित्यत्वाद्विशेषणस्य ग्रहणपदस्य परनिपातः गृह्यमाण इत्यस्याध्याहारः । एवञ्चेतरभेदानुमितिजनकज्ञानविषये विशेषणे सप्तम्यन्तपदेन गृह्यमाणे यो विधिः स तदादौ बोध्य इति परिभाषार्थो भवति तस्य च यत्र विशेष्यवाचकं सन्निहितं भवति तत्रैव सम्भवो नान्यत्रेकोयणचीत्यादौ शब्दतादृशविशेष्यसन्निधानाभावात् । क्वचित्तु विशेष्यबोधकपदसन्निधानेऽपि अल्बोधकस्य विशेष्यसमर्पकतापीति स्वीकार्य्यम् "कारनाम्नि च" इति सूत्रे आदिग्रहणात् तेनाचीत्यस्य सन्निधानेऽपि "प्रादूहोढोढ्येषैष्येषु"इत्यादेरूहाद्यवयवेऽचीत्यर्थेनानुपपत्तिः । वाचनिक्येषेति*। यद्येषा "नल्यपितिज्ञापकसाध्या तथाहि अत्र हि "घुमास्थ"इति सूत्रे हलीत्यस्य क्ङितीत्यनेन सम्बन्धेन हलन्तक्ङितीत्यर्थो वाच्यस्तथा सति ल्यपस्तत्वासम्भवेनेत्वाप्राप्तिरतः सप्तम्यन्ते क्ङितीत्यस्मिन् सन्निहिते यद्धलीति तत्तदादेर्बोधकमिति स्वीकार्य्यमित्येषा स्वीकार्य्या अस्ति च तस्य सूत्रस्य उदाहरणं पीतवानित्यादि तस्मादिपरश्चेति वदन्ति । तन्न मनोरमम्, हलीत्यस्य क्ङिद्विशेषणत्वे तदन्तविधौ पीतमित्याद्यसिद्ध्यापत्तेः । ल्यप उपदेशे हलन्तस्य औपदेशिकहलन्ते इत्वप्रवृत्तिज्ञापनेन चारितार्थ्याच्च ।

एतेन पीयते इत्यादिरपि सिध्यति । अकारान्ते क्ङिति प्रत्ययेपीत्वं प्रवर्त्तेत इत्यर्थज्ञापकतयापि चारितार्थ्याच्च ।

नन्वस्यां परिभाषायां यस्मिन् विधिरिति न वाच्यम् तदादावलिग्रहण इति पाठ्यम् "तस्मिन्" इति परिभाषा पूर्वस्येत्यंशविकलोपतिष्ठतामत आह—*अस्याश्चेति । स्वरूपसतीत्यनेन सप्तम्यर्थाभावेऽपि अस्याः प्रवृत्तिरितिसूच्यते तस्मिन्निति परिभाषया तु न निर्वाहस्तस्याः सप्तम्यर्थसद्भाव एव प्रवृत्तेः । *अत एव* । सप्तमीश्रवणमात्रेण प्रवृत्तेरेव । अस्याः

तत्त्वप्रकाशिका ।

धिकरण्यं समानविभक्तिकानामेव । एवञ्चवक्ष्यमाणविशेष्यविशेषणयोरुभयोः सप्तम्यन्तत्वेति ग्रन्थः न्यायसिद्धार्थानुवादकः ।

एतेन मृदु पचतीत्यादौ व्यभिचारादयुक्तमेतदिति वदन्तः प्रत्युक्ताः । नामधात्वर्थयोस्तथात्वेऽपि नामार्थयोरतथात्वात् ।

*चारितार्थ्याच्चेति* । क्ङिति विद्यमानो यो हल् तस्मिन्नित्यर्थेनादोषाच्च ।

एतेन "रथवदयोश्च" इति सूत्रं "त्रौ च"इति वार्तिकं चास्यां ज्ञापकम् । अन्यथा" कोः कत्" इत्यत्राजन्ते उत्तरपदे इत्यर्थे एषामप्यजन्तत्वेन तेनैव सिद्धौ एतयोर्वैयर्थ्यं स्यादित्यपास्तम् । आचष्टण्यन्तात् क्विपि निष्पन्नयोः रथ्वदोःपरत आदेशविधानेन चारितार्थ्यात् । नच तन्मात्रप्रयोजनकत्वे रथ्वदोरित्येव वदेदितिवाच्यम्, क्विबन्तरम् वद्धातोः व्यावृत्यर्थत्वात् ।

यत्तु प्रदायच्छत्रमित्यत्र तुकि ईत्ववारणार्थकतया "नल्यपि" इत्यस्य चारितार्थ्यं नच बहिरङ्गतया तुकोऽसिद्धत्वं,'नाजानन्तर्यं' इति निषेधादिति वदन्ति तन्न । "आतो लोप इटि-च" इत्यादावपि अजन्ते आर्द्धधातुके इत्यर्थापत्तौ प्रदायेत्यादावकारस्यैव लोपे चारितार्थ्यस्यासम्भवात् ।

केचित्तु सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वात् "न ल्यपि" "अपोभः" इत्यादीनां ज्ञापकत्वमिति वदन्ति ।

"आर्द्धधातुकस्येट्" ( ७-२-३५ ) इति सूत्रे वलादेरित्यादिग्रहणसामर्थ्याद्विशेष्यविशेषणयोरुभयोः सप्तम्यन्तत्व एव प्रवर्त्तते । तेन "ङः सि धुट्" ( ८-३-२९ ) इत्यादौ सादेः पदस्येति नार्थः । "तीषसह" ( ७-२-४८ )

भैरवी ।

प्रवृत्तौ विशेषान्तरमाह—*इयञ्चेत्यादिना* । *आदिग्रहणसामर्थ्यादिति* । अन्यथा वलीत्येव ब्रूयात् ।

ननूभयोः सप्तम्यन्तत्व एव चेदस्याः प्रवृत्तिस्तदा "तीषसह" इति सूत्रेऽनुवृत्तस्य विशेष्यबोधकस्यार्द्धधातुकस्येत्यस्य सप्तम्यन्तत्वाभावात्तादेरित्यर्थलाभः कथमत आह—*तीषसहेति* । अत्रावृत्तस्य वलादेरित्यस्य तीतिविशेषणम् तीतिसौत्री प्रथमार्थे सप्तमी । एवञ्च वलादेरितिसमुदायार्थेनान्वयान्नेह व्यधिकरणत्वादितिवलादिपदार्थैकदेशवल्पदार्थेऽभेदेन विशेषणम् । वञ्च तकाररूपवलादेरित्यर्थ एतत्परिभाषाप्रवृत्तिं विनापि सिध्यति । एवं "सेसिचि" इत्यत्रापि बोध्यम् ।

वस्तुतस्तु "तीषसह" इत्यत्र "सेसिचि" इत्यत्र च सप्तमी यथाश्रुतैव वलादेरिति च तत्रानुवर्त्तते तीति इच्छत्यादिविशेषणं तस्मिन्निति परिभाषायाः प्रवृत्त्या च तकाराव्यवहितपूर्वेभ्य इच्छत्यादिभ्यः परस्य वलाद्यार्द्धधातुकस्येडित्याद्यर्थाश्रयणेन वेष्टसिद्धिः कार्य्या ।

एवञ्च तीतिसप्तम्याः प्रथमार्थकत्वकल्पना सौत्रत्वादेकदेशान्वयकल्पना च न कार्य्या "तस्मिन्" इति परिभाषाया षष्ठ्यंशविकलाया उपस्थितिश्चान्यत्र क्लृप्तैव ।

न च "तीषसह" इत्यादेर्वलादिपदार्थविशेषणत्वेन तस्य तीतिविशेषणं न स्यान्नह्युपाधेरुपाधिर्भवति विशेषणस्य वा विशेषणमिति न्यायादिति वाच्यम् ? गुणः कृतात्मसंस्कार इति न्यायस्यापि क्लृप्तत्वात् ।

नन्वेवम् "आर्द्धधातुकस्येड्वलादेः" इति सूत्रे आदिपदन्त्यक्त्वा वलीत्येव पाठ्यमार्द्ध-

तत्वप्रकाशिका ।

*वलीत्येव ब्रूयादिति* । ननु विभिन्नविभक्तिकत्वेन सामानाधिकरण्याभावात्तदादिविधेरप्रवृत्तौ तस्मिन्निति परिभाषया वलि परत आर्धधातुकस्येडागमविधाने भविष्यतीत्यादावेव स्यान्नतु भवितेत्यादावपि "नेड्वशि" इतिनिषेधस्तु सुशर्म्मा देवदत्त इत्यादौ चरितार्थः । एवञ्चादिग्रहणं सफलमिति चेन्न बहुलक्ष्यसंस्कारानुरोधेन वलीति सप्तम्याः षष्ठ्यर्थत्वाङ्गीकारेण तस्मिन्नित्यस्याप्रवृत्या सामानाधिकरण्यस्यापि सत्वेन परिभाषाप्रवृत्तेर्निर्विघ्नत्वात् शमिता यज्ञे इत्यादिनिर्देशानामसङ्गत्यापत्तेश्च । *सादेः पदस्येति* । नचैवं तदादिविध्यभावेऽपि तदन्तविधिर्दुर्वारा षष्ठ्यर्थकसीतिसप्तम्याः सामानाधिकरण्यादिति वाच्यम् "ङःसि" इतिदृष्ट्या रुत्वविसर्गयोः सिद्धत्वेन सान्तपदस्यासम्भवात् । अगत्या वैयधिकरण्यान्वयस्यैव मन्तव्यत्वात् ।

नचैवं तदादिविधेरप्यप्राप्तिः, तदन्तविधौ तथाङ्गीकारेऽपि तदादिविधौ सामानाधिकरण्यसम्भवात्तदानौचित्यात् ।

केचित्तु प्रत्ययावयवयकाराव्यवहितपूर्वयोरोदौतोरवावौ स्त इत्यर्थेन सर्वेष्टसिद्धौ परिभाषा व्यर्थैव । नचाश्वशब्दात् गोयुगच्प्रत्यये अश्वगोयुगमित्यत्र प्रत्ययावयवयकाराव्यवहितपूर्वत्वेन गोघटकौकारस्यावादेशापत्तिः, नच ओकारोच्चारणसामर्थ्यान्नावादेशः । अन्यथागव्यजेव विदध्यात्, अशब्देन समासे अश्वगोयुगशब्दादाचष्टण्यन्ताण्णिचि कर्त्तरि क्विपि क्विन्निमित्तकयलोपे निष्पन्ने अश्वगोशब्दे तस्य चारितार्थ्यात् । अन्यथा वस्योठि वृद्धौ अश्वगौ इति स्यात् । लोपात्प्रागेवादेशस्तु अकृतव्यूहेतिपरिभाषया नेति वाच्यम् औकारसाहचर्येण तत्प्रत्ययानवयवौकारस्य ग्रहणात् । "ङमो ह्रस्वादचि" इत्यादौ पदे परतः यो ङम् ततः परस्य

"सेऽसिचि" ( ७-२-५१ ) इत्यादौ यथा सादेरित्याद्यर्थलाभस्तथा शब्देन्दुशेखरे निरूपितम् ॥ ३३ ॥

घटपटं घटपटावित्यादिसिद्धये आह-

## सर्वो द्वन्द्वो विभाषयैकवद्भवति ॥ ३४ ॥

भैरवी ।

धातुकस्य प्रत्ययतया यस्माद्विहितस्तदादेरित्यस्य उपस्थितस्य वलीतिविशेषणमिति वलव्यवहितपूर्वाद्यस्मादर्द्धधातुकविधिस्तदादेः परस्यार्द्धधातुकस्येडित्यर्थेनेष्टसिद्धिरिति चेन्न । नह्युपाधेरुपाधिर्भवति विशेषणस्य वा विशेषणमिति न्यायस्यापीह शास्त्रे क्वचित् प्रवृत्तिर्भवतीत्यस्य ज्ञापनार्थन्तत् सत्वात् ।

यत्तु प्रकृतसूत्रे आदिग्रहणाभावे श्रुतत्वाद्वलीति आर्द्धधातुकस्यैव विशेषणं स्यान्नाक्षिप्तस्येतिवल्यार्द्धधातुकस्येत्यर्थापत्तौ भविष्यतीत्यादावेवेट्स्यान्न तु भवितेत्यादावित्यादिग्रहणस्य चारितार्थ्यात् न ज्ञापकत्वसम्भव इति तन्न, "जुष्टार्पितेन च्छन्दसि" इति निर्देशेन तादृशार्थासम्भवात् । न चेकारणैकादेशे कृते चकाररूपवल्परत्वेन निर्देशोपपत्तिरिति वाच्यम् ? "अचः परस्मिन्" इति स्थानिवद्भावेन तत्वासम्भवात, "परोक्षे लिट्" इति सूत्रे साधनेषु परोक्षेष्वित्यर्थकल्पने यदा रथ्यायान्तण्डुलोदकं दृष्टक्कुर्यन्तत्र भवितव्यमिति भाष्यप्रयोगे इडनापत्तेश्च ।

यत्तु विशेषणविशेष्ययोरुभयोः सप्तम्यन्तत्व एव चेत्तदादिविधिस्तदा "द्विगोर्लुगनपत्ये" इति सूत्रभाष्ये पञ्चगर्गरूप्यमित्यादौ लुक्परिहारायाजादिग्रहणं कर्तव्यमिति वार्त्तिककृतोक्तं तस्य खण्डनार्थम् "गोत्रेऽलुगचि" इति सूत्राद्वीत्यपकृष्याजादेरितिवाक्यभेदेन व्याख्यातम् । तेन क्वचिदनजादेरपि लुक् द्विरथ इत्यत्र यता यथेति चोक्तं तदेतद्विरुद्धमिति तदपि न, तस्य भाष्यग्रन्थस्याप्यचपदसम्बद्धं यदजादीतिसमुदितन्तन्न कार्य्याङ्गित्वादिग्रहणङ्कार्य्यमित्यत्र तात्पर्य्यात् । न चैवमपि "हुझल्भ्यो हेर्धिः" इति सूत्रे भाष्ये रुदिहि स्वपिहीत्यत्र झलन्तात् परत्वात् धित्वं प्राप्नोतीत्याशङ्क्य "घसिभसोर्हलि च" इत्यतो हलीत्यनुवर्त्य हलादेः हेरिति व्याख्यानेन दोषः परिहृतः तत्र विशेष्यस्य सप्तम्यन्तस्याभावेन तदादिपरत्वेन व्याख्यानं विरुध्यत इति वाच्यम्, निर्दिश्यमानपरिभाषयैव दोषाभावे सिद्धे हल्ग्रहणानुवृत्तिपरभाष्यस्यैकदेश्युक्तित्वादिति दिक् ॥ ३३ ॥

कृद्ग्रहण इति परिभाषया यथाऽतिदेशेन गतिकारकविशिष्टस्य कार्य्यं भवति तथा द्वन्द्वविषयेऽपि अतिदेशमाह-*सर्वो द्वन्द्वः इत्यादि* । सर्वपदस्य कात्स्न्यार्थकतया द्वन्द्वश्च प्राणो·

तत्वप्रकाशिका ।

ङमुडागम इत्यर्थेन नव्यमते परमदण्डिनावित्यादौ ङमुडागमो न ङमः पदे परत्वाभावात् । प्राचीनमतेऽपि ङमन्तस्य पदत्वाभावान्न दोषः । "मिनातिर्मिनोति" इत्यत्र लक्षणया इत्संज्ञकशकारादावित्यर्थः । इत्संज्ञकशे परे इत्यर्थो वा । शस्येत्संज्ञालोपाभ्यामपहारेऽपि भूतपूर्वगत्यजश्रयणेन तत्परत्वं बोध्यम् । "आतो लोप इटि च" इत्यत्रार्धधातुकावयवाचोः क्ङिटोः परयोरित्यर्थेन निर्वाहः । एवं सर्वत्र । अत एव एक इत्यादौ तादौचेत्यादौ आदिग्रहणं चरितार्थम्, इति वदन्ति ।

वस्तुतस्तु सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वात्परिभाषाकल्पनमेव न्याय्यम् ॥ ३३ ॥

*अतिदेशमाहेति* । सप्रसङ्गसङ्गत्येतिभावः । *सर्वो द्वन्द्व इति* । ननु समुदायेऽवयवगतसङ्ख्या ।आरोपे इतरेतरयोगद्वन्द्वः, अनारोपे समाहारः इति विवक्षयैवोक्तरूपद्वयस्य

"द्वन्द्वश्च प्राणी" (२-४-२) इत्यादिप्रकरणाविषयः सर्वो द्वन्द्व इत्यर्थः । "चार्थे द्वन्द्वः" ( २-२-२९ ) इति सूत्रेण समाहारेतरेतरयोगयोरविशेषेण द्वन्द्वविधानात् न्यायसिद्धेयम् । "तिष्यपुनर्वस्वोः" ( १-२-६३ ) इति सूत्रस्थं बहुवचनस्येतिग्रहणमस्यां ज्ञापकम् । तद्धीदं तिष्यपुनर्वस्वित्यत्र तद्व्यावृत्त्यर्थम् । नचैवमप्यत्र "जातिरप्राणिनाम्" ( २-४-६ ) इति नित्यैकवद्भावेन बहुवचनाभावादिदं सूत्रं व्यर्थमिति वाच्यम् ? तद्वैकल्पिकत्वस्यापि अनेन ज्ञापनात् । नचैते प्राणिन इति वाच्यम् , 'आपोमयः प्राण'

भैरवी

त्यादिप्रकरणविषयेऽपि वैकल्पिकत्वं प्राप्नोतीत्यत आह—*द्वन्द्वश्चेति* । सामर्थ्यात्तस्य प्रकरणस्य न वैकल्पिकत्वम् । एवञ्च सर्वपदं परिभाषाघटकम् "चार्थे द्वन्द्व" इति सूत्रोदाहरणस्य बोधकं न तु लक्षणस्येति फलितम् । अस्याः परिभाषाया न्यायसिद्धत्वेऽपि दार्ढ्याय लिङ्गमप्याह—*तिष्येत्यादिना* । ज्ञापकमित्यस्यापीति शेषः । बहुवचनग्रहणस्य ज्ञापकत्वमुपपादयति—*तद्धीत्यादिना* । पुनर्वसुशब्दस्य ताराद्वयबोधकतया वाच्यार्थस्य बहुत्वस्य व्यावर्त्याप्रसिद्धया बहुवचनग्रहणं व्यर्थमिति तदेनां परिभाषां ज्ञापयति । एतत्सत्त्वे त्वनयैवेदं तिष्यपुनर्वस्वित्यस्य सिद्धिरिति भावः। *एवम्* । "चार्थे द्वन्द्व" इत्यस्य वैकल्पिकत्वे । इदमित्युपादानेन "तिष्यपुर्वसु" इति समाहारद्वन्द्वे नपुंसकं । तथा च "जातिरप्राणिनाम्" इति सूत्रस्य विषयतास्तीतिशङ्काभिप्रायः । *सूत्रं व्यर्थमिति* । अस्योद्देश्याप्रसिद्धेरिति शेषः । तद्वैकल्पिकत्वेति* । अस्यात्र लक्ष्य इति शेषः । न तु सामान्यतो वैकल्पिकत्वमेव तस्य, "चार्थे द्वन्द्व" इत्यनेनैव सिद्धाऽस्य सूत्रस्य वैयर्थ्यमेव स्यात् ।

यद्वा यत्र व्यक्तेः प्राधान्यविवक्षा तत्रेदन्न प्रवर्त्तते, यत्र तु जातेः प्राधान्यविवक्षा तत्र तु प्रवर्त्तते इत्येवंरीत्या वैकल्पिकत्वमित्यर्थः कार्य्यः । अत एव उपक्रमोक्तं घटपटं घटपटावित्येतदप्युपपद्यते व्यक्तेस्तत्र प्राधान्यस्याश्रयणात् । एवमेव तिष्यपुनर्वसुशब्दयोर्द्वन्द्वे व्यक्तिप्राधान्यविवक्षायां पूर्वोक्तरीत्या बहुवचने प्राप्ते द्विवचनविधानं सङ्गच्छते । *प्राणिन इति* । देवत्वादेषां प्राणित्वमित्याशयः । *आपोमय इति* । अत्रापस्शब्दाद्आप्लृधातुप्रकृतिकाऽसुन्प्रत्ययान्ताज्जलपर्यायात् प्राचुर्य्ये "तत्प्रकृतवचने मयट्" इति सूत्रेणान्नमय इति वत्म-

तत्त्वप्रकाशिका ।

सिद्धौ व्यर्थयमपरिभाषेतिचेन्न सर्वनामसंज्ञकत्वेनाभिमतशब्देषु विवक्षाद्वयसत्त्वेऽपि इतरत्र तत्सत्त्वे मानाभावेनोक्तरूपद्वयानापत्तेः । अत एव लोके वृक्षाः वनमिति व्यवस्थया प्रयोगः, नतु वनानि वृक्ष इति । सर्वनामस्थले तु सर्वो लोकः सर्वे लोका इति द्विविधप्रयोगदर्शनादुभयविवक्षापि भवति ।

तथाच—कश्चिदुभूतावयवभेदकसमुदायबोधकः यथा वृक्षशब्दः, कश्चिदनुद्भूतावयवभेदकसमुदायबोधकः यथा वनशब्दः, कश्चिदुभयविधबोधकः यथा सर्वादयः । तत्र द्वन्द्वस्योभयविधबोधकाभावात्परिभाषारम्भ इति तात्पर्यम् ।

न च "चार्थे द्वन्द्व" इत्यनेन समाहारेतरेतरयोरविशेषेण द्वन्द्वविधानादेव विभाषयैकवद्भावे सिद्धे किमर्थोऽयमारम्भ इतिवाच्यम् ? "द्वन्द्वश्च प्राणितूर्य" इत्यनेन प्राण्यङ्गादीनामेव समाहारो नेतरेषामिति प्राप्तविपरीतनियमव्यावृत्त्या परिभाषाया आवश्यकत्वात् । *व्यावर्त्याऽप्रसिद्ध्येति* । विपरीतनियमेनैकवद्भावाप्रवृत्तेः । *ज्ञापयति* । विपरीतनियमाभावकल्पनयेतिशेष । *व्यक्तिप्राधान्यविवक्षायाम्पूर्वोक्तरीत्येति* । "फल्गुनीप्रोष्ठपदानाम्" इत्यतो नक्षत्रग्रहणानुवृत्तिसम्भवे पुनर्नक्षत्रग्रहणेन व्यक्तिप्राधान्य एवैतत्प्रवृत्तेः । एतेनैतद्वैकल्पिकत्व-

इति श्रुतेरद्भिर्विना ग्लायमानप्राणानामेव प्राणित्वात्। स्पष्टं चेदं "तिष्यपुनर्वस्वोः" (१-२-६३) इति सूत्रे भाष्ये। अत एव "द्वन्द्वश्च प्राणी" (२-४-२) इत्यादेः प्राण्यङ्गादीनामेव समाहार इति विपरीतनियमो न ॥३४॥

**सर्वे विधयश्छन्दसि विकल्प्यन्ते ॥ ३५ ॥**

"व्यत्ययो बहुलम्" (३-१-८५) इति सूत्रे भाष्ये बहुलमितियोगविभागेन "षष्ठीयुक्तश्छन्दसि" (१-४-९) इति सूत्रे वेति योगविभागेन चैषा साधिता। तेन प्रतीपमन्य ऊर्मिर्युध्यतीत्यादि सिद्धम्। युध्यत इति प्राप्नोति॥३५॥

ननु "क्षियः" (८-२-४६) इत्यादावियङ्कथमत आह—

**प्रकृतिवदनुकरणं भवति ॥ ३६ ॥**

भैरवी।

यत् आप मयमिदम् सर्वप्रापो मूर्त्तिः शरीरिणामिति यथा। *भाष्ये*। बहुवचनग्रहणस्य प्रयोजनकथनपरभाष्ये।

नन्वेषां प्राणित्वमस्तु "जातिरप्राणिनाम्" इत्यस्य च वैकल्पिकत्वं मास्तु "द्वन्द्वश्च प्राणि" इत्यादिसूत्रविषये समाहारः प्राण्यङ्गादीनामेवेतिनियमोऽस्त्विति तिष्यपुनर्वसुशब्दयोरितरेतरयोग एव द्वन्द्व इति बहुवचनस्यैव सत्वाद्बहुवचन ग्रहणमनर्थकमत आह—*अत एवेति*। बहुवचनग्रहणादेव पूर्वोक्तप्रकारादेव बहुवचनग्रहणस्य वैयर्थ्यं स्पष्टमेवेति प्राण्यङ्गादीनां समाहार एवेत्येवं नियमो वाच्यस्तथा चेतराणामुक्तरीत्या प्राणित्वाभावात्तेषां समाहारद्वन्द्वो भविष्यत्येव। एवञ्च नित्यैकवद्भावे बहुवचनाभावाद्बहुवचनग्रहणं व्यर्थमेवेति जातिरप्राणिनामित्यस्योक्तरीत्या वैकल्पिकत्वं स्वीकार्यमिति भावः। "जातिरप्राणिनाम्"इत्यस्य नित्यत्वे "तस्यादित" इति सूत्रभाष्ये 'क्षीरोदके सम्पृक्ते' इति प्रयोगे द्विवचनासिद्धिरपि स्यादिति द्रष्टव्यम् ॥ ३४ ॥

विकल्पस्य प्रक्रान्तत्वादाह—*सर्वे विधय इति*। अस्याचार्य्यैरिति शेषः। विकल्पन्त इति पाठस्तु सुगमः। एतल्लाभोपायमाह—*व्यत्यये इति*। *वेतियोगविभागेनेति*। एवञ्चानेन योगविभागेन सर्वेष्टसिद्धौ छन्दसि विकल्पविधायकं सर्ववचनं व्यर्थमिति ध्वनितम्। *तेन*। छन्दसि सर्वविधीनां वैकल्पिकत्वेन ॥ ३५ ॥

एकवद्भावस्य प्राक् प्रक्रमात्तत्प्रसङ्गेनातिदेशान्तरस्यापि, स्मृतौ तस्यापि निरूपणमुचितमिति तन्निरूपयितुमवतारयति—*नन्विति*। कथमिति*। सूत्रघटकशब्दावयवक्षिशब्दो

तत्त्वप्रकाशिका।

ज्ञापनेनैव बहुवचनस्य चारितार्थ्यात्परिभाषाज्ञापकत्वासम्भव इति वदन्तः प्रत्युक्ताः, जातिप्राधान्ये प्रवर्तमानस्य "जातिरप्राणिनाम्" इत्यस्यात्र विषयाभावेन व्यक्तिप्राधान्ये पूर्ववद्बहुवचनस्यैव सत्वेन तद्वैयर्थ्यस्य सौष्ठवात् ॥ ३४ ॥

*क्षिय इति। ननु ह्रस्वान्तानुकरणे विसंज्ञायामियङानुपपत्तिः, परत्वाद्गुणेन बाधात्। दीर्घान्तानुकरणे "क्षियो दीर्घात्" इत्यत्र दीर्घग्रहणं व्यर्थमिति चेन्न असर्वातिपर्युदासेनातिदिष्टधातुत्वानाश्रयस्यैव घित्वस्वीकारेण गुणाप्राप्तेः। अनयाऽशास्त्रीयस्यापि गुणाभावस्यातिदेशेनादोषाच्च,। अत एव "क्षियो दीर्घात्" इति दीर्घग्रहणं सङ्गच्छते।

केचित्तु दीर्घान्तस्यैवानुकरणं दीर्घग्रहणं तात्पर्यग्राहकमित्याहुः।

यत्तु असर्वातिपर्युदासेन साहचर्यपरिभाषया वा असंयोगोपधेकारान्तस्य स्पर्शघटकोपधाकेकारान्तस्य शब्दस्यैव वा संज्ञाविधानान्न निर्देशासङ्गतिरिति तन्न "विभाषा श्वेः" इति निर्देशस्यासङ्गत्यापत्तेः। कुक्षेरित्यस्यासिद्ध्यापत्तेश्च।

क्षिय इतीयङ्निर्देशोऽस्या ज्ञापकः। तत्रैव प्रातिपदिकत्वनिबन्धनविभक्तिकरणादनित्या चेयमिति "क्षियो दीर्घात्" ( ८-१-४६ ) इति सूत्रे भाष्ये स्पष्टम् ॥ ३६ ॥

ननु रामावित्यादौ वृद्धौ कृतायां कार्य्यकालपक्षे कथं पदत्वमुभयत

भैरवी।

हि क्षिधात्वनुकरणन्न तु क्षिधातुरेवेति भावः। *निर्देशः*। सौत्रनिर्देशः।

ननु यद्यतिदेशेन धातुत्वन्तर्हि धातुपर्य्युदासात् प्रातिपदिकत्वाभावेन विभक्तिरेव न स्यादत आह—*तत्रैवेति ॥ ३६ ॥

अतिदेशप्रसङ्गादतिदेशान्तरमपि वक्तुमाह—*नन्विति*। *कार्य्यकालपक्ष इति*। रामं स्मरतीतिप्रयोगे निघातप्रवृत्तिसमये पदत्वज्ञानमपेक्षितन्तच्च न सम्भवति प्रकृत्यवयवप्रत्ययोः स्थाने जातस्यादेशस्यैकस्य उभयरूपत्वस्य निरूपणमसम्भवात्। यो हि द्वयोः षष्ठीनिर्दिष्टयोः स्थाने जातः सोऽन्यतरव्यपदेशं लभते इति न्यायेनायं यदि प्रकृत्यवयवन्तदा सुप्त्वाभावः, यदि सुबिति व्यपदेशभाक् तदा पूर्वभागो यस्माद्विहितस्तत्त्वाभाव इति समुदायस्य पदत्वं कथमिति भावः। अत्र कार्य्यकालपक्ष इत्युपलक्षणम्, यथोद्देशपक्षेऽपि पूर्वकालप्रवृत्तस्य पदत्वस्यैकादेशे कृते रामावित्यादौ समुदायस्यान्यत्वादलाभात्। एकदेशेन विकृतमिति भावक्तान्तेन तृतीयान्तस्य समास एकदेशस्य विकारप्रतियोगिनोऽपि करणत्वविवक्षया तृतीयेति तत "अर्शआद्यच्" इति केचित्।

तत्त्वप्रकाशिका।

वस्तुतस्तु दीर्घस्यैवानुकरणम्, "क्षियो दीर्घात्" इत्यत्रत्यदीर्घग्रहणन्तु प्रतिपदोक्तक्षीष्धातोः व्यावृत्त्यर्थमिति बोध्यम् ॥ ३६ ॥

*पूर्वकालप्रवृत्तस्येति*। नित्यमपि एकादेशं बाधित्वा फलानभिसन्धानतापरनिमित्तकत्वेनान्तरङ्गत्वादितिभावः। *समुदायस्यान्यत्वादलाभादिति*। इदं न युक्तम्, आनुमानिकस्थानिवद्भावेन पदत्वस्य सुलभत्वात्। कार्यकालेतु नानुमानिकस्थानिवद्भावः यस्माद्विहितस्तदादित्वस्याशास्त्रीयत्वात्।

ननु आकडारीयभपदसंज्ञासु यथोद्देशपक्षस्यैव सिद्धान्तितत्वेनैकतरपक्षेणेष्टसिद्धौ पक्षान्तरेणतदुद्भावनस्यानुचितत्वेन च कार्यकालपक्ष इत्यसङ्गतम्। इण्धातौ उभयत आश्रयणेत्यस्यानाश्रयणादुभयत आश्रयण इत्यप्यसङ्गतमितिचेन्न प्राचीनमतेनैतद्ग्रन्थप्रवृत्तेः। भसाहचर्येण पदपदस्य "स्वादिषु"इतिविहितपदपरत्वात्। यद्वा "कार्यं तदा संज्ञा, स्वदेशत्यागश्च" इत्यंशद्वयवतः कार्यकालपक्षस्य स्वदेशत्यागांश एव पूर्वग्रन्थस्यैवकारेण व्यावर्तनात्। पक्षद्वयेनापि दोषाभावसम्भवस्याभिप्रेतत्वात्।

वस्तुतस्तु रामावित्युपलक्षणम् चकार सुपुपुपतुरित्यस्य। अत्र हि द्विरुक्तस्याभ्याससंज्ञायाम् "उरत्" इत्यत्वे सम्प्रसारणे च कृते "हलादिः शेषः" इत्यस्य पूर्वभागे द्विरुक्तपूर्वभागत्वाभावेनाभ्यासत्वाभावादप्रवृत्त्यापत्तिः।स्थानिवद्भावेन तु नाभ्यासत्वस्य निर्वाहः ऋकारादेरभ्यासत्वाभावात्। "सर्वे सर्वपदादेशाः" इति न्यायेनापि नातिदेशः तस्यार्थवद्विषयकत्वेनात्राभ्यासस्यानर्थकत्वात्। नचार्धविकारेणार्धाधिक्येन वा न्यायाप्रवृत्त्या कथमभ्यासत्वमिति वाच्यम्? स्वीयविधेयताश्रयावधिकपूर्वत्व स्वीयोद्देश्यविधेयोभयमात्रारब्धसमुदायघटकत्वोभयसम्बन्धेन द्वित्वशास्त्रविशिष्टोऽभ्याससंज्ञको भवतीत्यर्थक "पूर्वोऽभ्यास" इत्यस्य प्रवृत्तौ 'कृकृ' इति समुदायनिष्ठस्य स्वीयोद्देश्यविधेयोभयमात्रारब्धसमुदायत्वस्य "कर्कृ" इत्यत्र न्यायेनातिदेशात्। द्वितीयसम्बन्धादूर्णुनावेत्यत्रोर्णु इत्यस्य नाभ्यासत्वमिति बोध्यम्।

यत्तु देवदत्तः पचे, प्रहिणोति, प्रराभ्यां कुलाभ्यामित्यादि फलम् "पच इ" इत्यत्रत्यति-

आश्रयणेऽन्तादिवत्त्वाभावाद्यस्माद्विहितस्तदादितदन्तत्वाभावादत आह—

एकदेशविकृतमनन्यवत् ॥ ३७ ॥

अनन्यवदित्यस्यान्यवन्नेत्यर्थः । तत्रान्यसादृश्यनिषेधेऽन्यत्वाभावः सुतराम् । अत एव तादृशादर्थबोधः । अन्यथा शक्ततावच्छेदकानुपूर्व्यज्ञानात्ततो बोधो न स्यात् । एवं च रामिति मान्तस्य यस्माद्विहितस्तत्त्वम् औ इत्यस्य परादिवत्त्वेन सुप्त्वमिति तदादितदन्तत्वमार्थसमाजग्रस्तम् । छिन्नपुच्छे शुनि श्वत्वव्यवहारवन्मान्ते तत्त्वं लोकन्यायसिद्धम् । अत एव "प्राग्दीव्यतः" ( ४-१-८३ ) इति सूत्रे भाष्ये दीव्यतिशब्दैकदेशदीव्यच्छब्दा-

भैरवी ।

वस्तुतस्त्वेकदेशो विकृतो यस्येति बहुव्रीहिरित्युचितम् । पूर्वनिपातप्रकरणस्यानित्यत्वन्तु प्रागुक्तम् सामान्ये नपुंसकम् । अत्र नञाऽन्यशब्दस्य समासेऽन्यभिन्नाप्रसिद्ध्या वाक्यार्थाप्रसिद्धिरत आह—*अनन्यवदित्यस्येति* । न चैवमपि अन्यत्वस्य केवलान्वयितयाऽन्यसादृश्याऽप्रसिद्ध्या ऽप्रसिद्धितादवस्थ्यमिति वाच्यम्? तत्कार्यविधौ यद्यद्धर्मावच्छिन्नस्यापेक्षा तत्तद्धर्मावच्छिन्नभेदवत्परमत्रान्यपदमिति ततो वतिप्रत्यये सति तादृशभेदवत्सादृश्यन्नेत्यर्थात् ।

नन्वेवमन्यसादृश्यनिषेधेऽपि अन्यत्वनिषेधालाभेन रामावित्यादौ पूर्वोक्तदोषोऽस्त्येवेत्यत आह—*तत्रेति* । *तत्र* । एकदेशविकृते । *अन्यत्वाभावः* । अन्यत्वनिषेधः । *अत एव* । अन्यत्वनिषेधादेव । *तादृशात्* । विकृतात । *अन्यथा* । अन्यत्वनिषेधाभावे । परिभाषायां मानमाह—*छिन्नपुच्छ इत्यादिना* । यत्र भूयोऽवयवदर्शनन्तत्र जातेरभिव्यक्तिरितिलोकन्यायेन तत्र तत्र स स धर्मः परिकल्प्यः । लोकन्यायसिद्धस्यापि अत्र शास्त्रे आश्रयणे मानमाह—*अत एवेति* । लोकन्यायसिद्धस्यास्य वचनस्याङ्गीकारादेव ।

तत्वप्रकाशिका ।

हन्तत्वस्य "पचे" इत्यत्रारोपणाद्ये निघातः "हिनो" इत्यत्र हिनुशब्दत्वारोपेण द्वितीये "हिनुमिना" इति णत्वं, "रि" इत्यत्र रैशब्दत्वारोपेण तृतीये "रायो हलि" इत्यात्वं सिध्यति इति तन्न स्थानिवद्भावेन गतार्थत्वात् । एतेन "पचे" इत्यत्र स्थानिवद्भावेऽपि प्रहिणोतीत्यत्र न तेन निर्वाहः, ओकारे उत्वुध्याऽपि हिनुशब्दत्वालाभात्, "सर्वे सर्वपदादेशाः" इत्यस्यार्थवद्वियकत्वात् स्थानिनि सति यत्कार्य तदादेशेपीत्यर्थकेन "अचः परस्मिन्" इत्यनेनापि न, स्थापनिन्यभवत आदेशेप्यभावात इत्यपास्तम् । निगाल्यत इत्यस्य सिध्यर्थं तादृशनियमस्याभावात् । अन्यथा लत्वम्बाधित्वा णिलोपोत्तरं लत्वन्न स्यात् ।

*इत्युचितमिति* । इदं व्युत्पत्तिद्वयं न युक्तम् मान्ताकारान्तरामशब्दयोर्निरुक्तैकदेशविकृतत्वासम्भवात् । एवञ्चैकदेशः विकृतः यत्रेति बहुव्रीहिर्बोध्यः ।

तथाच-स्वावयवविकारविशिष्टं स्ववद्भवतीति परिभाषार्थः । स्वाघटकत्व स्वघटकमात्रोद्देश्यकविकारेतरत्व उभयसम्बन्धेन स्वविशिष्टाघटितत्व स्वघटकोद्देश्यकविकारघटितत्व स्वघटकोद्देश्यकविकारेतरयावद्घटितत्वैतत्रितयसम्बन्धेन स्वविशिष्टं स्ववद्भवतीति निष्कृष्टोऽर्थः । तेन न निजरशब्दे जराशब्दत्वापत्तिः । नवाऽरेति समुदायस्य जराशब्दत्वापत्तिः । *शक्ततावच्छेदकेति*। शक्तं पदम् शक्ततावच्छेदिका याऽऽनुपूर्वी, तद्विशिष्टमेव शक्यार्थबोधकं विकृतावयवत्वे तु तदवच्छेदिकानुपूर्व्यसत्वात्ततस्तादृशादर्थबोधो न स्यादित्यर्थः ।

*आर्थसमाजेति* । अर्थानामयमार्थः, स चासौ समाजः समुदायस्तेन ग्रस्तम् गणितम्,

नुकरणमिदमित्युक्ता किमर्थं विकृतनिर्देश एतदेव ज्ञापयत्याचार्यो भवत्येषा परिभाषैकदेशविकृतमनन्यवदित्युक्तम् । एतेनायं, न्यायः शास्त्रीयकार्य्य एव शास्त्रीयविकारे एवेत्यपास्तम् । विकृतावयवनिबन्धनकार्य्ये तु नायं, छिन्नपुच्छे शुनि पुच्छवत्त्वव्यवहारवद्विकृतावयवव्यवहारस्य दुरुपपादत्वात् । एवमक्तपरिमाणग्रहणेऽपि नायम्, उक्तयुक्तेः । एतत् "येन विधिः"

भैरवी ।

*विकृतनिर्देशः* । इकोऽभावरूपो यो विकारस्तद्विशिष्टनिर्देशः, अत्र विकारो न शास्त्रीयः किन्तु इच्छयानुच्चारणमेव । यत्र शास्त्रीयो विकारस्तत्रैवैषा परिभाषा प्रवर्त्तते इति नाग्रहः । किञ्च शास्त्रीयविकारेऽपि, परिभाषाया लोकन्यायसिद्धत्वात् । अत एव रामावित्यादौ वृद्धेः शास्त्रबोध्यत्वेऽपि अकारनिवृत्तेरार्थिकत्वेनाशास्त्रीयत्वेऽपि परिभाषाप्रवृत्तिः । अन्यत्वस्य निषेधे शक्ततावच्छेदिका याऽऽनुपूर्वी तदभेदप्रतीतिरपि अर्थबोधजनकनियामिकास्तीति तस्मादर्थबोधः । *एतेन* । अस्य न्यायस्य लोकसिद्धत्वेन ।

ननु कार्य्यकालपक्षमुपक्रम्यैतत्परिभाषावतरणमयुक्तमाकडाराधिकारस्थसंज्ञाविषये यथोद्देशपक्षस्यैवाश्रयणादिति चेन्न, यत्र तदधिकारस्थसंज्ञाद्वयप्रसक्तिस्तत्रैव यथोद्देशत्वस्याश्रयणात् । तथा चोक्तं प्राक् "आकडाराधिकारस्थभपदसंज्ञाविषयेत्विति" यत्र तु न द्वयोः प्रसक्तिस्तत्र कार्य्यकालत्वमपि । अत एव "अन्तादिवच्च" इति सूत्रे परादिवद्भावस्य वृक्षे तिष्ठतीत्यादौ कार्य्यकालपक्षे निघातसिद्धिः फलमित्युक्तम् ।

ननु व्यवस्थितयोः कार्यकालपक्षयथोद्देशपक्षयोर्मध्ये यथा प्रगृह्यसंज्ञाविषये यथोद्देशपक्ष एवाङ्गीक्रियते । अन्यथा "अणोऽप्रगृह्यस्य" इत्येतदेकवाक्यतापन्नस्य "ईदूदेत्" इति सूत्रस्य प्लुतदृष्ट्याऽसिद्धत्वात् । प्लुते कृते 'आगच्छतमग्नी' इत्यादौ त्रिमात्रत्वादीकारस्य प्रगृह्याभावेऽनुनासिकापत्तिर्यथोद्देशपक्षाश्रयणे तु प्लुतस्यैव प्रगृह्यसंज्ञाविधायकशास्त्रदृष्ट्यासिद्धत्वेनादौ प्रगृह्यत्वं भवति । न च तस्य स्थाने प्लुतादेशे तन्निवृत्तिरिति वाच्यम्, त्रिमात्रेऽपि प्लुतेऽसिद्धत्वेन द्विमात्रबुद्ध्या पुनः प्रगृह्यत्वाङ्गीकारात् । तथा रामावित्यादौ यथोद्देशत्वाङ्गीकारेण पदत्वस्य पूर्वप्रवृत्तस्य "सर्वे सर्वपदादेशा" इति न्यायेन सिद्धौ "एकदेशविकृतमनन्यवत्"इति पारिभाषानाश्रयणीयेति चेन्न, दृव्युर्ध्नी' अत्युर्ध्नीत्यादावनङि कृते "बहुव्रीहेरूधस" इति ङीप्प्रवृत्त्यर्थं परिभाषाङ्गीकारस्यावश्यकत्वात् । *विकृतावयवेति* । यथा मघवतः मघवन्तित्यत्र "मघवा बहुलम्" इति त्रादेशे कृते सम्प्रसारणमनेन न्यायेन, तत्रहि श्वादीनां सम्प्रसारणे नकारान्तग्रहणमनकारान्तप्रतिषेधार्थमिति हि भाष्ये उक्तम् ।

उक्तार्थं मानमाह—*छिन्नपुच्छ इति* । विशेषान्तरमप्याह—*एवमक्तेति* । परिच्छिन्नपरिमाणेत्यर्थः । परिमाणमत्रानुपूर्वी यथोक्तपरिमाणार्थवाचकानान्द्रोणादिशब्दानामधिके न्यूने वा न प्रवृत्तिरिति लोके दृश्यते तद्वत् । अत एवाऽराजकीयमित्यत्र "राज्ञः कच"

तत्त्वप्रकाशिका ।

अर्थे सम्बन्धिसमुदायान्तर्वृत्तमित्यर्थः । *किमर्थमिति* । न च लाघवात्तान्तस्यैवावधित्वे तस्यैवेदमनुकरणं न विशिष्टस्येतिवाच्यम् ? "अत इञ्" इत्यत्राणिञोः पर्यायेणविधानव्यावृत्त्यर्थमर्थानामेवावधिमत्वस्येष्टत्वेनावध्यवध्यवधिमतोस्साजात्यमितिनियमादर्थस्यैवावधित्वस्येष्टत्वात्तान्तस्य निरर्थकत्वेन तत्त्वासम्भवात् । एवञ्चैकदेशविकृतोऽप्यर्थबोधकः । अन्यथाऽनेन न्यायेन शब्दस्वरूपाभेदप्रतिपादनेऽप्युक्तरीत्या ऽर्थाबोधकत्वेनार्थस्यावधित्वं न स्यादिति भावः । *ज्ञापयतीति* । बोधयतीत्यर्थः । स्वांशे चारितार्थ्यासम्भवात् ।

नन्वेवं कतरदित्यत्र विकृतावयवद्वस्वत्वप्रयुक्तमपि कार्यं स्यादत आह—*विकृतावयवेति* । *अक्तपरिमाणेति* । संख्यात्वपरिमाणत्वव्याप्यधर्मावच्छिन्नप्रकारताकबुद्धिनिष्ठप्र

(१-१-७२) इत्यत्र भाष्यकैयटयोर्ध्वनितम् । यत्र त्वदूर्धं तदधिकं वा विकृतं तत्र जातिव्यञ्जकभूयोऽवयवदर्शनाभावेन तत्त्वाप्रतीतौ कार्य्यसिद्ध्यर्थं विकृतानल्पावयवत्वप्रतीत्यर्थं च स्थानिवत्सूत्रम् । क्वचित्तु लक्ष्यानुरोधान्न्यायानाश्रयणम् । तेनाभीयादित्यादिसिद्धिः । स्पष्टं च क्वचिन्न्या-

भैरवी।

इति छप्रत्यये नकारस्य ककारादेशे च कृते "अल्लोपो ऽनः" इति न । एवञ्च विशिष्टानुपूर्वीकाणां शब्दानां साक्षात् संज्ञाद्वारा वा यत्राश्रयणन्तत्रैव न प्रवर्त्तत इति, संज्ञाद्वारा परम्पराश्रयणादभीयादित्यादौ "एतेर्लिङि" इति न प्रवर्त्तते । तदेतद् वक्ष्यति "क्वचित्तु लक्ष्यानुरोधादिति" । *एतत्* । पूर्वोक्तमर्थजातम् । *ध्वनितमिति* । तत्र ह्युक्तपरिमाणानामर्थानां वाचका ये शब्दास्ते न न्यूने न वाधिके इत्यस्य न्यायस्य सङ्ख्याशब्दपरिमाणशब्दयोः प्रवृत्तिरुक्ता, तत्रार्थशब्दस्य वाच्यपरस्य संज्ञापरस्य च कथनं ध्वनितमित्यर्थः । एवञ्च "स्वंरूपम्" इति सूत्रेऽपि । प्रकृते एकदेशविकृतन्यायेनैव निर्वाहेऽवयवादेशस्थले स्थानिवत्सूत्रस्य न प्रयोजनं किन्तु यत्र समुदायादेशस्तत्रैवेति कश्चिदाह तदुक्तिं खण्डयति—*यत्र त्वर्द्धमिति । यथा यत्प्रस्तौतीत्यत्र "तिङि चोदात्तवति" इति प्रशब्दस्य निघातः प्रशब्दस्य गतित्वे सति स्यात् । तच्च प्रकृतेर्धातुत्वसाध्यन्तच्च नैकदेशविकृतन्यायेनेति तदर्थमपि सूत्रारम्भ आवश्यकः ।

एवञ्च तत्र "सर्वे सर्वपदादेशाः" इति न्यायेन स्तिवत्यस्य स्तौशब्दादेशकल्पनया स्थानिवद्भावेन धातुत्वबुद्ध्या प्रशब्दस्य कार्य्यकालपक्षे गतित्वं भवति । *तदधिकमिति* । यथा "प्रतापम्" इत्यत्र पूर्ववत् प्रशब्दस्य गतित्वे सति "गतिरनन्तर" इति प्रकृतिस्वरसिद्धिर्भवति ।

यदि सर्वत्रैकदेशविकृतन्याय आश्रीयते तदा बहुधीवानमाचष्टे स्त्रीत्यर्थे णिचि टिलोपे तदन्तात्क्विपि णिलोपे वा तस्यापि तेन न्यायेनान्नन्तबहुव्रीहिग्रहणेन ग्रहणं स्यात् । तथाच तस्मात् डाप्स्यात । *कार्य्यसिद्ध्यर्थमिति* । राजेत्यादौ सुलोपेऽपि स्थानिवत्त्वेन पदत्वसिद्धिः समुदायादेशस्थले यथा भवति, तथा धियौ कतरत् इत्यादौ यस्माद् विहितस्तत्वप्रतीतिरपि स्थानिवत्सूत्रसाध्यैव । *अभीयादित्यादिसिद्धिरिति* । अत्रोपसर्गत्वस्याक्षप-

तत्त्वप्रकाशिका—

तिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयताश्रयविशिष्टत्वम् वै० स्वघटित्व स्वसमनियतत्वान्यतरसम्बन्धेन । द्रव्यचक्रत्वस्यैकत्वप्रतिबन्धकीभूतद्वित्वघटितत्वात् । जरात्वादेस्त्रित्वप्रतिबन्धकीभूतचतुष्ट्वसमनियतत्वात्परिच्छिन्नपरिमाणत्वम् । गुडोदकमित्यत्र दकशब्दे उदकशब्दत्वातिदेशपरं भाष्यन्तु पूर्वोत्तरपदनिमित्तकार्यात्पूर्वमन्तरङ्गोऽप्येकादेशो नेतिपरिभाषया पूर्वमेव स्वरप्रवृत्तेरेकदेशयुक्तम् । न चैवं दीव्यतिशब्दत्वस्याप्यनेनातिदेशाभावः, दीव्यतिशब्दनिष्ठबोधजनकत्वस्यैवदीव्यच्छब्दे तिशेनेष्टसिद्धेः ।

यत्तु चतुष्ट्वं न जरात्वसमनियतं चतुष्ट्वस्य प्रतिधर्मिभिन्नत्वादिति तन्न जरात्वजातेः समनियतत्वाभावेऽपि तादृशव्यक्तिनिष्टधर्मस्य तथात्वात् । अत एव लक्षणे न जातिपदोपादानम् । एतेन जातिघटितलक्षणं कृत्वा शेखरोपपादनाय व्यापकाभावप्रतियोगित्वपर्यन्तं क्लिश्यन्तस्तेऽपास्ताः ।

केचित्तु "उदके केवले" इतिसूत्रस्थभाष्यविरोधान्न समनियतधर्मस्यानेनानतिदेशः, अभीयादित्यत्र तु न्यायस्यानित्यत्वात् ह्रस्वाप्रवृत्तिः । अत एवाभीयात्पतञ्जलिरित्यत्र न जस्त्वमिति वदन्ति । *अभीयादिति*। यद्यपि "अचः परस्मिन्" इति स्थानिवत्त्वेनैव भान्तस्य पदत्वाभावस्तथापि पटितीत्यादीनामुपलक्षणं बोध्यम् ।

याप्रवृत्तिः "प्रथमयोः पूर्वसवर्णः" ( ६-१-१०२ ) इत्यत्र कैयटेन दर्शिते-त्यन्यत्र विस्तरः ॥ ३७ ॥

इति प्रथमम्प्रकरणम् ।

---

भैरवी ।

रिमाणनिष्ठतयाऽयन्न्याय "एतेर्लिङि" इति विधीयमाने ह्रस्वे यद्यपि पूर्वोक्तरीत्या न भवति, तथापि पदत्वस्याक्तपरिमाणनिष्ठत्वाभावेन भान्ते जश्त्वाभावसिद्ध्यर्थमिह लक्ष्यानुरोधा श्रयणं कर्तव्यमिति बोध्यम् । उक्तार्थदाढर्याय दृष्टान्तमाह—*स्पष्टञ्चेति* । *कैयटेनेति* । तत्र वृक्षानित्यत्र "प्रथमयोः" इति सूत्रं बाधित्वा पररूपं प्राप्नोति इति शङ्कायां "प्रथमयोः" इति योगविभागं प्रदर्श्य योगविभागेन पररूपस्य बाधे प्रदर्शिते यथा योगविभागेन "प्रथमयोः" इति सूत्रम् " अतो गुणे " इति पररूपं बाधते तथा " अमि पूर्व " इत्येतमपि बाधेतेति शङ्कायां भाष्ये 'मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते' इत्ययं योगविभागः पररूपं बाधिष्यते अमि पूर्वत्वन्न बाधिष्यते इति समाहितम् । ततो भाष्यकृतैवोक्तम् यद्येतदस्ति मध्येऽपवादाः, पुरस्तादपवादा इति नार्थ एकेनापि योगविभागेन पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते, इत्येवं पररूपम् "अकः सवर्णे"दीर्घत्वं बाधिष्यते "प्रथमयोः पूर्वसवर्णः"दीर्घत्वन्नबाधिष्यते इति तत्र मध्येऽपवादा इतीतिप्रतीकमुपादाय कैयटेनोक्तम् । न्यायश्रायन्न तु वचनं यद्वक्ष्यति यद्येतदस्तीति न हि वचनस्यासत्ता सम्भावना न्यायस्तु क्वचित् क्वचिदाश्रीयत इति युज्यते वक्तुमिति ॥ ३७ ॥

इति प्रथमम्प्रकरणम् ।

---

तत्त्वप्रकाशिका ।

केचित्तु एतन्न्यायस्वीकारे यत्र यत्राक्तपरिमाणादौ दोषस्तत्र तत्र न्यायानाश्रयणेनैव निर्वाहो लाघवादिति तन्न, अण्णन्ताच्छ्रायसशब्दाद्द्विवचने श्रायसावित्यत्र वृद्धौ सान्तस्योगित्वेनानेन न्यायेनाङ्गतया च प्राप्तस्य नुमः पूर्वसम्बन्धित्वेन "अचः परस्मिन्" इतिस्थानिवत्त्वेन वारणपरभाष्यासङ्गतेः । अतः पदत्वे कर्तव्ये एवैतन्न्यायानाश्रयणमिति बोध्यम् । *अन्यत्रेति*। वस्तुतो व्यर्थेयं परिभाषा रामावित्यादौ यथोद्देशपक्षेण निर्वाहात् । आरेत्यादौ स्वीयविधेयताश्रयावधिकपूर्वत्व स्वीयोद्देश्यताश्रयसमभिव्याहृतवर्णाघटितत्वोभयसम्बन्धेन द्वित्वशास्त्रविशिष्टोऽभ्याससंज्ञको भवतीत्यर्थक"पूर्वोऽभ्यास" इत्यनेनाभ्यासत्त्वेनादोषात् । 'प्रारदीव्यत' इत्यत्र तु सौत्र इकारलोपः । अत इव स्थानिवत्सूत्रे भाष्ये आदेशग्रहणेनानुमानिकस्थान्यादेशभावेन पचत्त्वित्यादीनां पदत्वमङ्गीकृत्य एतदर्थमेकदेशविकृतस्योपसंख्यानमिति यन्नोदितं तन्न वक्तव्यं भवतीत्युक्तं सङ्गच्छत इति दिक् ॥ ३७ ॥

इति प्रथमम्प्रकरणम् ।

# अथद्वितीयम्प्रकरणम् ।

## पूर्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः ॥ ३८ ॥

पूर्वात्परं बलवत् । विप्रतिषेधशास्त्रात्पूर्वस्य परं बाधकमिति यावत् ॥

नन्वेवं 'भिन्धि' (भिन्तात्) इत्यत्र परत्वात् तातङा बाधितोऽकच् (धिः) न

भैरवी ।

## अथबाधबीजप्रकरणम् ।

एकदेशविकृतमनन्यवदित्यत्र प्रतिषेधार्थकस्य नञः सत्वान्निषेधेन भावांशस्य बाधो दृष्ट इति तत्प्रसङ्गेनान्यप्रयुक्तबाधानामप्युपस्थितिरिति तन्निरूपयति—*पूर्वपरेत्यादिना* । संग्राहकवाक्यमेतत् । पूर्वापेक्षया परस्य बलवत्त्वमात्रेण लक्ष्याणां सिद्धिर्न भवतीति फलितार्थमाह—*पूर्वस्येति* ॥ ३८ ॥

*नन्वेवमिति* । पूर्वस्य परशास्त्रेण विप्रतिषेधशास्त्रबलाद्बाधकल्पने । *अकजुन स्यात*। "तिङश्च" इति विहितोऽकजुनस्यादित्यर्थः । क्वचित्परत्वात्तातङा बाधितो धिर्न स्यादिति-पाठोऽस्ति सत्वयुक्तः धिर्नस्यादित्यस्य भिन्धीत्यत्र धीत्यस्य श्रवणन्न स्यादित्यत्र तात्पर्यमिति वाच्यन्तच्च न सम्भवति तातङो वैकल्पिकतया एतदभावे तच्छ्रवणस्य सिद्धेरिति तात्पर्य्यार्थविरोधात्, एवमाशङ्क्य पुनः प्रसङ्गविज्ञानन्यायेन समाधानमपि न युक्तम् "अचश्च" इति सूत्रस्थभाष्यविरोधात् । तत्र हि–भाष्ये प्रतक्ष्य प्रक्ष्येत्यत्र संयोगनिवृत्यर्थम् "ऊकाल" इति सूत्रेऽज्ग्रहणम्, अन्यथा "ह्रस्वस्य पिति" इति तुक् स्यादित्युक्त्वा अचमुमुदायनिवृत्त्यर्थञ्चाज्ग्रहणम् । अन्यथा "छे च" इतितुको "दीर्घात्पदान्ताद्वा" इति वैकल्पिकतुका तितउच्छत्रमित्यत्राच्समुदायस्य दीर्घसंज्ञायां बाधः स्यादिति "ऊकालोऽच्" इतिसूत्रेऽज्ग्रहणस्य प्रयोजनम् "अचश्च" इतिसूत्रे उक्तम् । तत्र कैयटः, दीर्घलक्षणे तुकि परत्वात् प्रवृत्ते सकृद्गतिन्यायाद्ध्रस्वलक्षणः पुनः प्रवर्त्तते ।

नचैवं विषयविषये पुनःप्रसङ्गविज्ञानमस्ति नित्यविकल्पयोर्विरोधात् पूर्वेण परस्य बाधप्र-

तत्त्वप्रकाशिका ।

## अथ बाधबीजप्रकरणम् ।

क्रमप्राप्तं बाधबीजं वक्तुमाह-एकदेशेति* । *उत्तरोत्तरमिति* । "आनुपूर्व्ये द्वे वाच्ये" इत्युत्तरशब्दस्य द्वित्वं समासवच्च बहुलमिति बहुलग्रहणेनात्र समासवद्भावः । एवञ्च पूर्वपरेत्यानुपूर्व्या यदुत्तरं तद्बलीय इत्यर्थः । अथवा समाहारद्वन्द्वः एक उत्तरशब्दः परवाचकः, एकस्तूत्तरत्वेन गृहीतोत्तरपरः ।

ननु परशास्त्रं पूर्वशास्त्राद्बलवत् परशास्त्रत्वादित्यनुमाने हेतोः पक्षमात्रवृत्तित्वेनासाधारणत्वाद्व्याप्तिग्रहप्रतिबन्धादप्रयोजकत्वमत आह—*विप्रतिषेधशास्त्रादिति* । एवञ्चानुकूलतर्कसत्वान्नाप्रयोजकत्वं हेताविति भावः ॥ ३८ ॥

*अकच्न स्यादिति । इदं न युक्तमकचो कुत्सानिमित्तकत्वेन बहिरङ्गत्वात् । *श्रवणन्न स्यादिति* । परत्वात्तातङा बाधात् । "तातङि हेः स्थानिवत्वप्रतिषेधो वक्तव्य" इति वार्तिकेन स्थानिवत्वनिषेधाच्च । *सिद्धेरिति* । नच तातङोऽभावपक्षे धिभावाभावोऽपि विधेय इति वाच्यम् । अप्राप्तविभाषास्थलेऽभावस्य सिद्धतया भावमात्रस्य विधानात् । अत एव मुमुक्षते वत्स इत्यत्राभ्यासलोपो न ।

केचित्तु भिन्धीति भिन्तादित्यस्योपलक्षणम् । तत्र परत्वात्तातङा बाधितो धिर्न स्यात् ।

स्यादत आह—

**पुनः प्रसङ्गविज्ञानात्सिद्धम् ॥ ३९ ॥**

नन्वेवं तिसृणामित्यत्र परत्वात्तिस्रादेशो पुनस्त्रयादेशः स्यादत आह—

**सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव ॥ ४० ॥**

तत्र क्वचिच्चरितार्थयोरेकस्मिन् युगपदुभयोःकार्य्ययोरसम्भवेन बाध-काभावात्पर्य्यायेण तृजादिवच्छास्त्रद्वयप्रसङ्गे नियमार्थं विप्रतिषेधसूत्रमिति सकृद्गतिन्यायसिद्धिः।

यथा—तुल्यबलयोरेकः प्रेष्यो भवति स तयोः पर्यायेण कार्य्यं करोति यदा तमुभौ युगपत्प्रेषयतो नानादिक्षु च कार्य्यं तदाभयोर्न करोति यौगप-द्यासम्भवात्तथा शास्त्रयोर्लक्ष्यार्थयोः क्वचिल्लक्ष्ये यौगपद्येन प्रवृत्त्यसम्भवाद-प्रतिपत्तौ प्राप्तायामिदं परं विध्यर्थं, तत्र कृते यदि पूर्वप्राप्तिस्तदपि भवत्येवेति पुनःप्रसङ्गविज्ञानसिद्धिरिति विप्रतिषेधसूत्रे भाष्ये स्पष्टम्।

यत्तु कैयटादयो व्यक्तौ पदार्थे प्रतिलक्ष्यं लक्षणोपप्लवादुभयोरपि शा-

भैरवी।

स्त्रात् यत्र हि पूर्वो विधिः परेण बाधते तत्र पुनः प्रसङ्गविज्ञानमित्याह—यथा भिन्धकीत्यत्र। एवञ्च भिन्धीत्यत्र तातङि कृतेऽपि यदि "पुनः प्रसङ्गन्यायेन" समुदायस्य धिः स्यात् तदा तातङ्प्रवृत्तिबाधः स्पष्ट एव ॥ ३९ ॥

*नन्वेवम्*। बाधके प्रवृत्तेऽपि बाध्यस्य प्रवृत्तिस्वीकारे। *त्रयादेशः स्यादिति*। स्थानिवद्भावेन त्रिशब्दत्वादिति शेषः। *सकृद्गताविति*। गतौ पूर्वपरयोर्युगपत प्राप्तौ सत्यां यो विप्रतिषेधः परेण बाधस्तस्मिन् सति यत्सकृद्बाधितन्तद्बाधितमेव। एतौ द्वावपि न्यायौ लक्ष्यानुरोधाद् व्यवस्थितौ। एतयोर्यथा सिद्धिर्भवति तं प्रकारमाह—*तत्रेत्यादिना*। *क्वचित्*। परस्पराविषये चारितार्थयोरित्यस्य कार्य्ययोरित्यत्रान्वयः। एकस्मिन् लक्ष्ये अ-सम्भवेनेत्यत्रान्वयः। *लक्ष्यार्थयोः*। लक्ष्योपकारकयोः। *भाष्ये स्पष्टमिति*। एवञ्च शा-स्त्रीयदृष्टान्तेन सकृद्गतिन्यायेऽस्मिन् लौकिकदृष्टान्तेन पुनः प्रसङ्गविज्ञानन्यायस्य सिद्धिः। कैयटोक्तरीत्या न्यायद्वयसिद्धिं वदतां मतन्त्वयुक्तमिति सूचयितुमाह—*यत्त्विति*। *व्य-क्तौ पदार्थे*। व्यक्तिः पदानां वाच्येतिमते। अयं पक्षः "सरूपाणाम्" इति सूत्रभाष्ये द्रव्या-भिधाने व्याडिरित्यनेन वर्णितः, द्रव्यवाच्यत्वे सरूपसूत्रारम्भ एव साधकः, तथाचोक्तं भा-ष्यकृता—प्रत्यर्थंशब्दनिवेशान्नैकेनानेकार्थस्याभिधानमिति युक्तश्चायं पक्षः शक्तिग्राहकशिरो-मणेर्व्यवहारस्य तत्रैव सम्भवात्। अनुगता जातिः शक्यतावच्छेदिकेति न शक्यानन्त्यम्।

नचानुगतजातेः शक्यत्वाभावे शक्यतावच्छेदकत्वानुपपत्तिरिति वाच्यम्? अकारणत्वे-ऽपि कारणतावच्छेदकत्ववच्छक्यत्वेऽपि शक्यतावच्छेदकत्वसम्भवात्। तत्वञ्च शक्तिग्रहे श-क्यनिष्ठा या विशेष्यता तदवच्छेदकतया भासमानत्वम्। अवच्छेदकत्वञ्चान्यूनानतिरिक्त-वृत्तित्वमतः पृथिवीत्वादेर्न घटादिपदशक्यतावच्छेदकत्वापत्तिः। आकाशशब्दादौ तु संज्ञा-शब्दवदाकाशशब्दावच्छिन्ने शक्तिरिति नाकाशः शब्दाश्रय इति व्यवहारानुपपत्तिः। *प्रति-

तत्वप्रकाशिका।

एवञ्च स्थानिवत्त्वप्रतिषेधारम्भो व्यर्थः स्यादिति भावः। भाष्यानुगामिनस्तु तिसृणामित्यत्र परत्वात्तिस्रादेशेन बाधितो नुट् न स्यादित्यवतरणमाहुः ॥ ३९ ॥

*शास्त्रद्वयप्रसङ्ग इति*। अयम्भावः—यद्यपि विधेये स्वोद्देश्यतावच्छेदकावच्छेदेन व्याप-

त्रयोस्त तल्लद्वयविषययोरचरितार्थ्येन पर्य्यायेण द्वयोरपि प्राप्तौ परमेवेति नियमार्थमिदमिति सकृद्गतिन्यायसिद्धिः । अत्र पक्ष एतन्नियमवशादेतल्ल-द्वयविषयकपूर्वशास्त्रानुपप्लव एव । जातिपक्षे तूद्देश्यतावच्छेदकाक्रान्ते क्वचि-ल्लद्ये चरितार्थयोर्द्वयोः शास्त्रयोः सत्प्रतिपक्षन्यायेन युगपदुभयासम्भवरू-पविरोधस्थल उभयोरप्यप्राप्तौ परविध्यर्थमिदमिति "पुनः प्रसङ्गविज्ञानसि-

भरवी ।

लक्ष्यमिति* । लक्ष्यभेदेन संस्कारकस्य लक्षणस्य भिन्नस्य कल्पनादित्यर्थः । अत्र सरूपसूत्र-स्थमुक्तं भाष्यं संयोगसंज्ञासूत्रस्थं ग्रामशब्दस्य बह्वर्थत्वप्रतिपादनानन्तरं तद्यः "सारण्यके ससीमके सस्थण्डिलके" वर्त्तो तमभिसमीक्ष्यैतत् प्रयुज्यतेऽनन्तराविमौ ग्रामाविति भा-ष्यञ्च मूलम् ।

ननु परमेव भवतीति नियमकल्पने तद्व्यक्तिविषये कल्पितस्य पूर्वशास्त्रस्य वैयर्थ्यन्दुर्वार-मत आह—*अत्र पक्ष इति* । *जातिपक्ष इति* । अत्र जातिपदं तत्रत्यपदार्थसाधारणधर्म-परं तेनाकाशत्वाभावत्वादीनां परमतसिद्धजातिलक्षणशून्यत्वेऽपि न क्षतिः । एतस्यैवात्र शास्त्रे स्वार्थपदेन व्यवहारः । एतादृशधर्मस्य वाच्यत्वे "जात्याख्यायामेकस्मिन् बहुवचनम्" इति सूत्रे सरूपग्रहणपरं भाष्यमाकृतिग्रहणादित्याकृत्याभिधानात् सिद्धमितिच भाष्यम्मानम् ।

ननु व्यक्तौ शक्तिग्राहकस्य व्यवहारस्य सत्वात् कथञ्जातावेव शक्तिसिद्धिरिति चेदुच्यते। पूर्वव्यवहारेण व्यक्तौ शक्तिग्रहेऽप्यानन्त्यात् तावतीषु व्यक्तिषु शक्तिग्रहासम्भवाज्जातावेव तस्या उचितत्वात् ।

यद्यपि गौर्गोपदशक्य इति शक्तिग्रहो व्यक्तिविशेष्यकस्तथापि शिखीध्वस्त इतिवत् "सविशेषणे विधिनिषेधौ विशेषणमुपसंक्रमतः सति विशेष्ये बोधे" इतिन्यायेन जातौ शक्तिः कल्प्यते । एतत्पक्षे वाच्यार्थस्यैकत्वाच्छब्दभेदेन अर्थभेदेऽपि न शब्दभेद इत्यत्र संयोगसंज्ञासूत्रस्थग्रामशब्दोऽयं बह्वर्थ इति भाष्यम्मानम् । न च जातेर्वाच्यत्वे गां दद्याद् व्रीहीन् वहन्तीत्यादावन्वयानुपपत्तिरिति वाच्यम् । व्यक्तौ लक्षणाया एतादृशे स्थले स्वी-कारात् । शक्यार्थस्य तत्राश्रयत्वमेव सम्बन्धः । शाब्दबुद्धिं प्रति वृत्तिप्रयोज्योपस्थितेर्हेतु-त्वान्न तज्जन्योपस्थितेः शाब्दबोधहेतुत्वक्षतिः ।

न चाकाशशब्दस्य शब्दावच्छिन्ने शक्तिश्चेच्छक्तिसम्बन्धस्यैव शक्यतावच्छेदकतावच्छे-दकत्वं वाच्यम् । एवञ्च शक्यतावच्छेदकतावच्छेदकसम्बन्धापरिचयात्तस्य शक्तिग्रहानुपपत्ति-रिति वाच्यम्? कुतं कस्माच्च भवतीत्यत्र च तादात्म्यसम्बन्धस्य शक्यतावच्छेदकतावच्छेदक-तया एतत्सम्बन्धेन शब्दावच्छिन्नविशेष्यकस्य वाच्यवाचकभावात्मकशक्तिप्रकारकस्य ग्रहस्य सम्भवात्।*सत्प्रतिपक्षन्यायेनेति*।यथा सत्प्रतिपक्षस्थले विरोधिसाध्यद्वयव्याप्यवत्तापरामर्श-सत्त्वेन तदभावव्याप्यवत्ताज्ञानस्य तद्वत्ताबुद्धिं प्रति प्रतिबन्धकतया न कस्यापि साध्यस्यानु-मितिस्तथात्रापि परस्परप्रतिबन्धान्न कस्यापि शास्त्रस्य प्रवृत्तिः स्यादित्यर्थः । *परविध्यर्थ-मिति* । विप्रतिषेधशास्त्रमिति शेषः । एवञ्जातिव्यक्त्यन्तरस्य वाच्यत्वाभिप्रायेण कैयटस-म्मतरीत्या न्यायद्वयोपपत्तिमुपपाद्य भाष्यसम्मतेन जातिव्यक्त्योरुभयोर्वाच्यत्वमिति मतेन

तत्त्वप्रकाशिका ।

कत्वमवश्यं स्वीकार्यम् । अन्यथा विधेयशून्यस्यापि कदाचित्प्रयोगः साधुः स्यात् , तच्च नेष्टं प्रत्ययः परो भवत्येवेति नियमात् । एवञ्च पर्यायेणेत्यसङ्गतम् । तथापि विधेयद्वयविधानारम्भ-सामर्थ्यादन्यतरत्वेन व्यापकत्वस्वीकारान्न दोषः ।

यत्तु 'उद्देश्यतावच्छेदकसामानाधिकरण्येन विधेयान्वय' इति तन्न । कदाचिद्विधेयशून्य-स्यापि साधुत्वापत्तेः । एवञ्चात्रापि शास्त्रद्वयप्रामाण्यादन्यतरत्वेन प्रवृत्तिप्रसङ्गः ।

ष्ठिः" इत्याहुस्तन्न । व्यक्तिपक्षे सर्वं लक्ष्यं शास्त्रं व्याप्नोति न जातिपक्षे इत्यत्र मानाभावात् । न ब्राह्मणं हन्यादित्यादौ जात्याश्रयसकलव्यक्तिविषयत्वार्थमेव जातिपक्षाश्रयणस्य भाष्ये दर्शनात् । अत एव "सरूप"सूत्रे भाष्ये जातौ पदार्थेऽनवयवेन साकल्येन विधेःप्रवृत्तेर्गौरनुबन्ध्य इत्यादौ सकलगवानुबन्धनासम्भवात्कर्मणो वैगुण्यमुक्तम् । द्रव्यवादे चासर्वद्रव्यावगतेर्गौरनुबन्ध्य इत्यादावेकः शास्त्रोक्तोऽपरोऽशास्त्रोक्त इत्युक्तम् ।

भैरवी ।

खण्डयति—तन्नेत्यादिना* ।

*सर्वं लक्ष्यं शास्त्रमिति* । सर्वं लक्ष्यमिति कर्मबोधकम् शास्त्रमिति कर्तृपरम् ।

ननु जातेर्वाच्यत्वमते जातौ कार्य्यान्वयस्य शास्त्रबोध्यत्वञ्जातौ कार्य्यान्वयश्च । यत्किञ्चिच्छक्तिद्वारा जातश्चेदपि शास्त्रञ्चरितार्थमिति सर्वलक्ष्यव्यापने शास्त्रारम्भसामर्थ्यरूपं यत् तत्तस्मिन् पक्षे मानन्तन्नास्तीति वदाम इत्यत आह—न ब्राह्मणमिति* । सकलव्यक्तिविषयत्वार्थम्ब्राह्मणत्वजात्याश्रयसकलब्राह्मणहननिषेधाय । *भाष्ये* । सरूपसूत्रे ।

अयम्भावः—व्यक्तेरेव जातेरेव वाच्यत्वमिति पक्षस्याश्रयणन्न युक्तम् जातिशक्तिवादे गोत्वशक्तिग्रहाद्गोत्वपदजन्याद्गोत्वविशेष्यकबोधापत्तेः । न च गोत्वपदशक्तिग्रहो गोत्वत्वावच्छिन्नविशेष्यताको गोपदशक्तिग्रहस्तु गोत्वत्वानवच्छिन्नविशेष्यताक इति न गोत्वपदजन्यशक्तिग्रहादापत्तिरिति वाच्यम्, गोत्वनिष्ठनिरवच्छिन्नविशेष्यताकशक्तिग्रहस्य गोत्वत्वन्न गोपदशक्यमिति बाधग्रहस्येऽपि सम्भवेन तादृशबाधग्रहकाले गोत्वनिष्ठनिरवच्छिन्नविषयताकशाब्दबोधापत्तेः। यदि च गोत्वे निरवच्छिन्नैव गोत्वपदस्य शक्तिः, गोपदं गोरित्याकारकं स्वरूपतो गोत्वप्रकारकं गोपदत्वविशिष्टविशेष्यकं शक्तिज्ञानं गोत्वविशिष्टविशेष्यकशाब्दबोधस्य हेतुरित्युच्यते । तदा कदाचित्समवायेन गोत्वप्रकारकं कदाचित्कालिकसम्बन्धेन गोत्वप्रकारकमिति व्यवस्थानुपपत्तिः । जातिविशिष्टशक्तिस्वीकारे तु समवायेन गोत्वविशिष्टविषयकशक्तिग्रहस्य समवायेन गोत्वप्रकारकशाब्दबुद्धिंप्रति हेतुत्वमितिकार्य्यकारणभावेन नानुपपत्तिः। गोत्वपदस्य गोत्वत्वे शक्तिर्यथागोपदस्य गोत्व इति तु वक्तुमशक्यम्, लाघवमूलकस्याकृतिवादस्य शिथिलत्वापत्तेः ।

किञ्च केवलव्यक्तेर्वाच्यत्वे गौः शुक्लश्चलो डित्थ इति सह प्रयोगानुपपत्तिर्धर्मविशेषात् ।

किञ्च यत्र हस्तिपके हस्तिनः पालकत्वसम्बन्धो न गृहीतस्तत्रापि हस्तिपकान्तरविशेष्यकसम्बन्धग्रहाद्बोधापत्तिरिति तद्वारणाय तद्व्यक्तिविशेष्यकशाब्दबोधे तद्व्यक्तिविशेष्यकसम्बन्धग्रहस्य हेतुता वाच्या । तथा सति व्यक्तीनां नानात्वात्कालान्तरीयदेशान्तरीयव्यक्तिविषयकशाब्दबोधानुपपत्तिरतो गवादिपदानाङ्गोत्वादिविशिष्टे शक्तिरित्यभ्युपेयम् । यत्तदप्युक्तं सरूपसूत्रभाष्ये-"न ह्याकृतिपदार्थस्य द्रव्यन्न पदार्थो द्रव्यपदार्थकवादिमते आकृतिर्न पदार्थ इत्युभयोरुभयम्पदार्थ" इति यद्यप्येतद्भाष्याद्विशकलितशक्तिवाद इति प्रतीयते, तथापि कस्यचित्किञ्चिद्गुणभूतङ्किञ्चित् प्रधानभूतमित्युत्तरभाष्यपर्य्यालोचनया विशिष्टशक्तिवाद एव तात्पर्य्यमवधार्य्यते ।

किञ्च जातिरेव पदार्थ इति मते सर्वलक्ष्याव्यापने जातिवाच्यत्ववादस्य शिथिलत्वापत्तिः। उद्देश्यतावच्छेदकावच्छेदेन शास्त्रप्रवृत्तेस्तत्पक्षे लाभादित्यपि बोध्यम् ।

उक्तार्थे मानमाह-*अत एवेति* । जातिवादस्य सकलव्यक्तिसंग्रहार्थमेव । *अनवयवेन । अस्यैव व्याख्या साकल्येनेति व्यक्तिविशेषा एवावयवा इत्युच्यन्ते । *असम्भवादिति* । देशकालभेदेन व्यक्तीनामानन्त्यादिति भावः । *वैगुण्यमुक्तमिति* । तस्य फलानवाप्तौ तात्पर्य्यम् । तर्हि द्रव्यमेववाच्यमित्यस्त्वित्यत आह-*द्रव्येति* । *चस्त्वर्थे* । *एकः शास्त्रोक्त

**किञ्च न हि भाष्योक्ततृजादिदृष्टान्तस्य व्यक्तिपक्ष एव सर्वविषयत्वं न जातिपक्ष इत्यत्र मानमस्ति । अपि च व्यक्तिपक्षेऽप्यन्यव्यक्तिरूपविषयलाभेन चरितार्थयोरियं व्यक्तिर्विरोधात् स्वविषयकत्वं न कल्पयतीति वक्तुं शक्यम् । जातिपक्षेऽपि तज्जात्याश्रयतद्व्यक्तिविषयकत्वमेव नैतद्व्यक्तिविषयकत्वमित्यत्र विनिगमकाभावः । तत्र लक्ष्यानुसारात् क्वचिच्छास्त्रीयदृष्टान्ताश्रयणं क्वचिल्लौकिकदृष्टान्ताश्रयणमिति भाष्यसम्मतमार्ग एव युक्त इति बोध्यम् । द्वयोः कार्ययोर्यौगपद्येनासम्भव एव विप्रतिषेधशास्त्रोपयोगी । इदम् "इको गुण" इति ( १-१-३ ) सूत्रे कैयटे स्पष्टम् । यथा शिष्टादित्यादौ तातङ्शाभावयोर्युगपत्प्रवृत्तौ स्वस्वनिमित्तानन्तर्यासम्भवः ।**

**यद्यपि तातङादेः स्थानिवत्त्वेनास्त्येव तत् , तथाप्यादेशप्रवृत्त्युत्तरमेव स, न तु तत्प्रवृत्तिकाले । एवं नुमतृज्वत्त्वयोः प्रियक्रोष्टूनीत्यादौ युगपदसम्भवो यदागमाः । ( प० ११ ) इत्यस्य नुम्प्रवृत्त्युत्तरं प्रवृत्तेः । एवं भि-**

भैरवी ।

इति । द्रव्यस्य वाक्यतरङ्गे प्रत्यर्थं शब्दनिवेशस्योक्तत्वाद्गौरनुबन्ध्य इतिशास्त्रघटकैकःशब्दः एकगोव्यक्त्यभिधायकः स्यात् तथा चैकेन पुरुषेण तच्छास्त्रजन्यबोधोत्तरमेकगोरनुबन्धे कृतेऽपि शास्त्रस्य कृतार्थत्वादपरः पुरुषो यदि तथा कुर्यात्तदाऽशास्त्रीयं कुर्यादित्यर्थः । व्यक्तेर्वाच्यत्वमत एव येन प्रकारेण विप्रतिषेधसूत्रस्य नियामकत्वमुक्तं तं प्रकारन्निरस्यति—*अपिचेति* । *विनिगमकाभाव इति* । तथा च—जातिपक्षेऽपि सर्वव्यक्तिविषयकत्वसम्भवेन पर्यायप्राप्तौ विप्रतिषेधसूत्रं नियमार्थं स्यादिति भावः ।

एवं कैयटादिसम्मतमार्गन्दूषयित्वा स्वसिद्धान्तमाह—*तत्रेति* । "विप्रतिषेधे परङ्कार्यम्" इत्यस्य सूत्रस्य यत्र प्रवृत्तिस्तद्दर्शयति-*द्वयोरित्यादिना* । द्वयोरित्यस्य परस्परविषयपरिहारेण लब्धावकाशयोरित्यादि । एतच्च यत्रान्यतरस्य निरवकाशत्वन्तत्र निरवकाशस्य चरितार्थबाधकतायाः दर्शनादर्थसिद्धम् । *शास्त्रोपयोगी* । शास्त्रप्रवृत्त्युपयोगी । यौगपद्येनासम्भव इत्यनेन एकस्मिन् प्रयोगे यौगपद्येनासम्भवो दर्शितो नत्वेकस्य कार्यद्वयासम्भव एवेति दर्शितम् । अतएव भाष्ये नावश्यन्द्विकार्ययोग एव विप्रतिषेधः किन्तर्ह्यसम्भवोऽपीति प्रतिपादितम् । द्विकार्ययोगेत्यस्य द्वाभ्याङ्कार्याभ्यां योगो यस्यैकस्य स न विप्रतिषेधविषय इत्यर्थः । *कैयट इति* । तेन हि तत्र द्विकार्ययोगयत्वाभावे केवलोऽप्यसम्भवो विप्रतिषेध इत्युक्तम् । केवलासम्भवमेवदर्शयति—*यथेति* । *स्वस्वनिमित्तेति* । तत्र शाभावे ह्यानन्तर्यन्निमित्तमिति स्पष्टमेव । तातङादेशे "तुह्योः" इति सूत्रस्याङ्गाधिकारे पाठेनाङ्गानन्तर्यन्निमित्तमिति बोध्यम् । नचाङ्गस्येति नानन्तरपदाध्याहारेण तन्निरूपितसम्बन्धार्थिका षष्ठी किन्तर्हि निमित्तनिमित्तिभाव इति वाच्यम् , अङ्गसंज्ञा यस्माद्या विहितस्तस्मिन् तदादेर्भवतीति तत्व्यवहारस्य तत्र निमित्तत्वन्तच्चादेशे सति स्थानिवद्भावं विना न सम्भवतीति भावः । *तातङादेरिति* । अत्रादिना शाभावपरिग्रहः । *तत्* । आनन्तर्यम् । *सः* । स्थानिवद्भावः । एवं स्वस्वनिमित्तासम्भवस्य यथा पूर्वत्र प्रदर्शनं तद्वत् प्रत्ययस्याङ्गानन्तर्यं ह्युभयत्र निमित्तमङ्गसंज्ञा च तत्त्वबुद्धिसाध्येति भावः । *यदागमा इति* । स्थानिवद्भावस्या-

तत्त्वप्रकाशिका ।

***कार्यद्वयासम्भव इति* । शास्त्रेण गव्यादीनामसाधुत्वाय स्वविधेयघटितं साधु तदितरदसाधु इत्यवश्यं बोधनीये, तुह्योरित्यनेन शास्तादित्यस्य साधुत्वं शाधीत्यस्यासाधुत्वमे-**

न्धीत्यत्र तातङ्विभावयोर्युगपदेकस्थानिसम्बन्धस्वाङ्गरूपनिमित्तानन्तर्य्यस्य चासम्भवो बोध्यः । "नुम्नुटोः" अपि नुटयजादिविभक्त्यानन्तर्य्यबाधो नुमि ह्रस्वान्ताङ्गबाध इत्यसम्भवाद्विप्रतिषेधः । क्वचिदिष्टानुरोधेन पूर्वशास्त्रे स्वरितत्वप्रतिज्ञाबलात् स्वरितेनाधिकं कार्य्यमित्यर्थात्पूर्वमेव भवति । तेन सर्वे पूर्वविप्रतिषेधाः संगृहीता इति "स्वरितेन"(१-३-११) इति सूत्रे भाष्ये । विप्रतिषेधसूत्रस्थपरशब्दस्येष्टवाचित्वात् तत्संग्रह इति वप्रतिषेधसूत्रे भाष्ये ॥ ४० ॥

नन्वेवमेधते इत्यादौ परत्वाद्विकरणे "अनुदात्तङितः" (१-३-१२) इत्यादिनियमानुपपत्तिस्तेन व्यवधानादत आह—

**विकरणेभ्यो नियमो बलीयान् ॥ ४१ ॥**

अत्र "वृद्भ्यः स्यसनोः" (१-३-९२) इति सूत्रेण स्ये विभाषातङ्विधानं ज्ञापकम् । अन्यथा स्यव्यवधाने नियमाप्रवृत्तौ सामान्यशास्त्रेणोभय-

भैरवी ।

प्युपलक्षणम् । एवम् पूर्वतो विशेषोऽप्यस्तीत्याह—*युगपदेकेति । नादेशस्यान्यतरस्य तत्र प्रसक्तिस्तत्रैव विप्रतिषेधविचारः शास्त्रे प्रवृत्त्युपयोगी किन्त्वागमविषयेऽपीत्याह—*नुम्नुटोरपीति* । पूर्वोक्तसङ्ग्राहकवाक्यस्य पूर्वापेक्षया परस्य यद्बलवत्त्वन्तद्बोधकत्वमेव लभ्यते, न तु परापेक्षया पूर्वस्य बलवत्त्वबोधकत्वन्तथाप्येतस्योपलक्षणत्वन्न त्वेतदुक्तस्थल एव बलवत्त्वमित्याशयेनाह--*क्वचिदित्यादि ॥ ४० ॥

पूर्वविप्रतिषेधस्य भाष्योक्तस्थल एव प्रवृत्तिरित्याशयेन शङ्कते—*नन्वेवमिति* । *एवम्* । पूर्वविप्रतिषेधादन्यत्र परस्य पूर्वबाधकत्वे । *एधते इत्यादाविति* । आदिना पचत इत्यस्य संग्रहः । "अनुदात्तङित" इत्यादिपदेन "स्वरितञित" इत्यस्य संग्रहः । सामान्यशास्त्रेण स्यादिभ्यः परत्वात् प्रथमतो जातानामादेशानामयन्नियम इत्याशयेन शङ्क्यम् ।*अत्र*। अस्यां परिभाषायाम्। *स्ये इति* । सतीतिशेषः । *विभाषातङ्विधानमिति* । अतङिति-छेद इदं सूत्रं परस्मैपदबाधकात्मनेपदस्य बाधकमित्याशयेनैवमुक्तिः । *अन्यथा* । एतत्परिभाषाभावे । *सामान्यशास्त्रेण* । "तिप्तस्झि" इत्यनेन ।

तत्त्वप्रकाशिका ।

वं शाहावित्यनेन शाहीत्यस्य साधुत्वमितरस्यासाधुत्वं बोध्यत इति परस्परं विरोधोऽपि स्पष्ट एव । एवमन्यत्रापि विरोधोऽनुसन्धेयः ॥ ४० ॥

परम्बलवदित्यस्यापवादभूतां परिभाषामवतारयति-*पूर्वविप्रतिषेधेति* । *परत्वादिति* । विकरणस्य खशूचानशादौ, आत्मनेपदस्य तु लिङादौ चारितार्थ्यम्; प्रकृते उभयोः प्राप्तौ परत्वाद्विकरणमिति भावः । इदमत्र तत्त्वम्–"तिप्तस्झी"त्यनेन विहिताः तिबादयः "अनुदात्तङित" इत्यादिभिर्नियम्यन्ते, एवञ्च तिबादिषु सत्सु नियमविकरणयोः प्राप्तौ परत्वाद्विकरणे विकरणेन व्यवधानान्नियमाप्राप्तिः । न च विकरणे कृताकृतप्रसङ्गित्वादतुल्यबलविरोधत्वम्, परत्वादित्यस्य नित्यत्वादित्यत्रोपलक्षणत्वात् । "परान्नित्यम्" इत्यस्यानन्तरमनुल्लेखस्तु वैचित्र्यार्थः ।

नच नियमस्याप्राप्तियोग्ये विकरणस्य चारितार्थ्याभावेन नियमबाध इति वाच्यम् ? कृते नियमे चरितार्थत्वात् । नचैवं तक्रकौण्डिन्यन्यायेन बाधः, "भविष्यति गम्यादयः" इति निर्देशेन तस्यानित्यत्वेनात्राप्रवृत्तेः । अत्र कल्पे विषयसप्तम्याश्रयणे विप्रतिषेधशास्त्र-

सिद्धौ विकल्पविधानं व्यर्थं स्यात्। अत्रार्थे ज्ञापिते तु स्य इति तत्र विषयसप्तमी बोध्येति "अनुदात्तङित" (१-३-१२) इत्यत्र भाष्यकैयटयोः स्पष्टम्। विकरणव्यवधानेऽपि नियमप्रवृत्तेरिदं ज्ञापकमिति "शदेः शितः" (१-३-६०) इत्यत्र भाष्ये ध्वनितम्।

वस्तुतोऽस्माज्ज्ञापकात् "अनुदात्तङित" (१-३-१२) इत्यादि प्रकरणं तिबादिविध्येकवाक्यतया विधायकम्। तत्र "धातोः" (३-१-९१) इति विहितपञ्चमी, तत्समानाधिकरणम् "अनुदात्तङित" (१-३-१२) इत्यादि विहितविशेषणमेव। एवं च लावस्थायां स्येऽपि तद्व्यवधाने तङ्सिद्धिः। शबादि-

भैरवी।

नन्वेवमपि तस्मिन् काले स्याभावेन स्ये सति विहितस्य विकल्पस्य न प्राप्तिरिति स्वविषये चारितार्थ्यमतो ज्ञापकत्वासम्भव इत्यत आह—*अत्रार्थे इति*। परिभाषाबोध्यार्थे। *तत्र*। "वृद्भ्य" इति सूत्रे। पक्षान्तरमाह-*विकरणव्यवधान इति*। *इदम्*। "वृद्भ्य" इति सूत्रम्। *ध्वनितमिति*। तत्र हि न्यविशत इत्यत्र "नेर्विश" इत्यनेनात्मनेपदमेव भवति स च नियमो न प्राप्नोतीत्याशयेनोपसर्गनियमेऽड्व्यवाये उपसङ्ख्यानमिति हि वार्त्तिककृतोक्तम्। तच्च वार्त्तिकं यदि विकरणात् प्राङ् नियमः स्यात् तदा नियमं नित्यत्वाद्विकरणेऽडागम इति व्यर्थं स्यात्। यदि तु "वृद्भ्य" इति सूत्रं विकरणव्यवधाने नियमानां प्रवृत्तौ ज्ञापकमिति पक्षस्तदा नित्यत्वात् "नेर्विश" इत्यस्मात् प्राग्विकरणे तस्य नित्यत्वादेव नियमात् प्रागडागमेऽटो विकरणान्तभक्ततया धातोर्नः परत्वाभावान्नियमानुपपत्तिरितिवार्त्तिकमावश्यकमिति रीत्या ध्वनितमित्यर्थः। इदञ्च भाष्यं लावस्थायामडागम इत्यनाश्रित्य प्रवृत्तमिति बोध्यम्।

पूर्वोक्तप्रकारद्वयेऽपि गौरवमतः सिद्धान्तमाह-*वस्तुत इति*। अस्माज्ज्ञापकात् "वृद्भ्य" इति सूत्ररूपाज्ज्ञापकात्। *एकवाक्यतया*। वाक्यैकवाक्यतया। काय्यकालपक्षमाश्रित्येदम्भाष्यं प्रवृत्तमत एव तत्र भाष्ये लस्य तिबादयो भवन्तीत्युपस्थितमिदं भवति "अनुदात्तङित" इत्यादीत्युक्तम्। *तत्र*। तिबादिविधौ लावस्थायाम्। *स्येऽपीति*। अनुदात्तङिदादिविशेषणानामिदानीं सामान्यशास्त्रप्रवृत्तावप्यपेक्षा, "स्यतासी" इत्येतत्प्रवृत्तौ तु नेति रीत्याऽन्तरङ्गत्वात् स्येपीत्यर्थः, अत्रापिशब्दोऽरुचिबोधनाय।

वस्तुतो न लादेशात् प्राक्स्यादयः, लादेशानां स्यादिभ्यः परत्वान्नित्यत्वाच्च। स्यादीनान्तु न नित्यत्वम्, शब्दान्तरं प्राप्नुवतो लक्षणान्तरेण प्राप्नुवतश्चानित्यत्वाभ्युपगमात्। न च लादेशानामपि शब्दान्तरात् प्राप्तेरनित्यत्वमिति वाच्यम्, एवमपि परत्वानपायात्। नापि स्यादीनामपवादत्वम्, अनवकाशत्वाभावात्। नाप्युक्तरीत्यान्तरङ्गत्वम्, अधिकापेक्षस्य बहिरङ्गत्वमित्यर्थस्य वक्ष्यमाणरीत्याऽनाश्रयणात्।

ननु यदि "अनुदात्तङित्" इत्यादि प्रकरणस्य तिबादिविधायकशास्त्रैकवाक्यतया विधायकत्वन्तदाऽनियमप्रसङ्गाभावात् "अनुदात्तङित" इत्यादिसूत्रे परिभाषात्वव्यवहारानुपपत्तिरिति चेन्न, अस्मिन् पक्षे परिभाषापदस्य परिभाषावदित्यर्थकत्वात्।

ननु विहितविशेषणत्वेन व्याख्यानस्यैवेष्यत इत्यादौ स्यव्यवधाने तङ्सिद्धिवच्छबादिव्यवधानेऽपि तङ्सिद्धेः फलत्वकुतो नोक्तमत आह—*शबादिभ्य इति*। कर्त्रादौ सार्व-

तत्त्वप्रकाशिका।

बाधे च गौरवमत आह-*पक्षान्तरमिति*। *गौरवमिति*। नियमस्वीकारे प्राप्तबाधः अप्राप्तकल्पने जातनिवृत्तिरितिगौरवम्। *तिबादिविधौ*। अत एव लिट्लुनातीत्यादौ न तिबाद्यादेशः॥ ४१॥

भ्यस्तु पूर्वमेव नियमः ।

यद्वा लमात्रापेक्षत्वादन्तरङ्गा आदेशा लकारविशेषापेक्षत्वात्स्यादयो बहिरङ्गा इति दिग्योगलक्षणपञ्चम्यामपि न दोषः । अत्र पक्षे "वृद्भ्यः स्य" (१-३-९२) इति सूत्रं स्यविषय इति व्याख्येयम् । आत्मनेपदशब्दादौ भाविसंज्ञाश्रयणीयेति तत्त्वम् । भिन्नवाक्यतया सामान्यशास्त्रविहितानां नियमे तु लुगादिनेव नियमेन जातनिवृत्तिरङ्गीकार्य्या । भुक्तवन्तं प्रति मा भुङ्क्था इति ब्रूयात् किं तेन कृतं स्यादिति न्यायस्तु नात्र शास्त्रे आश्रयितुं युक्तो नियमादिशास्त्राणां वैयर्थ्यापत्तेः । ध्वनितं चेदं "स्थानेऽन्तरतम" (१-१-५०) इति सूत्रे भाष्ये । शास्त्रानर्थक्यं तु वृद्धिसंज्ञासूत्रे भाष्ये तिरस्कृतम् । सामान्यशास्त्रेणोत्पत्तिस्तु सरूपसूत्रस्थकैयटरीत्या प्रधानानु-

भैरवी ।

धातुके तेषां विधानादिति शेषः । *नियमः* । एकवाक्यतया विधानम् । इदञ्च व्याख्यानं "स्यतासीलृलुटोः" इति सूत्रे "आर्द्धधातुक" इत्यस्यानुवृत्तिं लादेशानामन्तरङ्गत्वञ्चानपेक्ष्य कृतम् । तदननुवृत्तौ पूर्वोक्तरीत्या लादेशानामन्तरङ्गत्वे च धातोरिति परशब्दापेक्षया दिग्योगलक्षणा पञ्चम्येवास्त्वित्याशयेनाह-*यद्वेति* । *लमात्रेत्यादि* । इदमन्तरङ्गत्वोपपादनं कैयटरीत्या । वस्तुतस्तु अपरनिमित्तकत्वेन लादेशानामन्तरङ्गत्वमत्र बोध्यम् । *न दोषः* । शबादिभ्योऽपि पूर्वमेव लादेशानां प्रवृत्तेर्न दोषः । *अत्र पक्षे* । एकवाक्यतया आत्मनेपदविधायकत्वम् "अनुदात्तङित" इत्यादेरिति पक्षे ।

नन्वेकवाक्यतैव अनुपपन्ना पूर्वन्तिबादीनां परस्मैपदत्वेनात्मनेपदत्वेन च ज्ञानस्य लस्थानिकत्वज्ञानसापेक्षत्वाल्लस्थानिकत्वज्ञाने च परस्मैपदत्वज्ञानस्य कारणत्वादित्यन्योन्याश्रयत्वादित्यत आह—*आत्मनेपदशब्दादाविति* । *भाविसंज्ञेति* । एकवाक्यतेत्थं कार्य्या अनुदात्तङितो धातोर्लस्य स्थाने नैतादृशास्तिबादयो भवन्ति येषां जातानामात्मनेपदसंज्ञा भविष्यतीति ।

आत्मनेपदसंज्ञाविधायके लग्रहणानुवृत्तेः फलन्तु चानशस्तत्संज्ञावारणमेव । वस्तुत इत्याद्युक्तपक्षापेक्षया पूर्वोक्तपक्षयोर्दोषानाह—*भिन्नेत्यादिना गौरवमित्यन्तेन* । *नियमे* । पूर्वोक्तरीत्या नियमाश्रयणे । *जातनिवृत्तिः* । सामान्यशास्त्रेण जातानान्तिबादीनामनुदात्तङिदादिभ्यो निवृत्तिः ।

ननु नियमेन निवृत्तेरसम्भवो भुक्तवन्तमिति न्यायविरोधादत आह-*भुक्तवन्तमिति* । नियमादिशास्त्राणामित्यादिना निषेधशास्त्रपरिग्रहः। भुक्तवन्तमितिन्यायानाश्रयणस्य भाष्यारूढत्वमपि सूचयन्नाह-*ध्वनितञ्चेदमिति*। *इदम्* । उक्तन्यायानाश्रयणम् । तत्र हि-तस्य सूत्रस्य शास्त्रान्तरेण जातानामनन्तरतमानामादेशानां निवर्त्तकत्वं कथितम् । नियमादिशास्त्रवैयर्थ्ये इष्टापत्तिं परिहरति-*शास्त्रेत्यादिना* । प्रमाणभूत आचार्य्यो दर्भपाणिः शुचाववकाशे प्राङमुख उपविश्य सूत्राणि प्रणयति स्म । तत्र नैकेनापि वर्णेनानर्थकेन भवितव्यमिति ग्रन्थेन तिरस्कृतम् ।

ननु सामान्यशास्त्रेण जातानां निवृत्तिरित्यस्य कथमुपपत्तिः, नहि एकस्माद्धातोर्जातस्यैकस्य लस्यानेकादेशानां सम्भवः, समुदायस्य स्थान्यर्थाभिधानसमर्थत्वाभावादत आह—*सामान्येति* । *सरूपसूत्रस्थकैयटरीत्येति* । तत्र हि-एकस्माद्गर्गशब्दात् बहूनां यञ्प्रत्ययानामसम्भवं प्रतिपाद्यैकस्यापत्यस्य प्रकृत्यर्थेन योगात् प्रधानभेदे च गुणावृत्त्या गार्ग्यशब्दानामेवैकशेष इति हि तेनोक्तम् । *प्रधानानुरोधेनेति* । गार्ग्या इत्यत्र यञ्प्रत्ययस्य प्राधान्य-

रोधेन गुणभेदकल्पना तावत् प्रकृतिकल्पनया कार्य्या, प्रत्ययनिवृत्तौ च तत्कल्पितप्रकृतेरपि निवृत्तिः कल्प्येति गौरवमित्यन्यत्र विस्तरः ॥ ४१ ॥

## परान्नित्यं बलवत् ॥ ४२ ॥

कृताकृतप्रसङ्गित्वात् । तत्राक्लृप्ता भावकस्याभावकल्पनापेक्षया क्लृप्ताभावकस्यैव तत्कल्पनमुचितमिति नित्यस्य बलवत्त्वे बीजम् । तदाह-कृताकृतप्रसङ्गि नित्यं तद्विपरितमनित्यम् । अत एव तुदतीत्यादौ परादपि गुणान्नित्यत्वात् शप्रत्ययादिर्भवति ॥ ४२ ॥

भैरवी ।

नु प्रधानीभूतार्थप्रतिपादकतया स्पष्टमेव । तिबादिप्रत्ययानान्तु "भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि" इति यास्कोक्तरीत्या यद्यपि न सम्भवस्तस्योपपद्यते तथापि सिद्धन्धात्वनुवादेन तेषां विधानेनापूर्वाणां विधानात् प्राधान्यं द्रष्टव्यम् । *गुणभेदः* । प्रकृतिभेदः । *प्रत्ययनिवृत्तौ चेति* । चकारः प्रकृतेरपि निवृत्तिश्चेत्यनन्तरं द्रष्टव्यः । *विस्तर इति* । एतेन लुगादिस्थले यथा प्रत्ययानामनुत्पत्तेरेवान्वाख्यानमिति सिद्धान्तस्तथेहापि नियमादिना सामान्यशास्त्रविहितानुत्पत्तेरेवान्ताख्यानमित्याश्रीयते तदाद्यपक्षयोरपि दोषाभाव इत्यस्य विस्तर इत्यर्थः ॥ ४१ ॥

*परादित्यादि । परस्यापि बलवतो नित्यम्बाधकमित्यर्थः । *तत्र* । परनित्ययोर्मध्ये । *बीजमिति* । लाघवमेव नित्यस्य बलवत्वे बीजं नत्विदं वाचनिकमिति भावः । *तदाह* । यन्नित्यस्य बलवत्वे बीजमुक्तं तदेवाह--*अतएव* । नित्यस्य बलवत्वादेव ।

ननु तुदतीत्यत्र सत्यपि सम्भवे बाधनं भवतीति न्यायेन शप्रत्ययस्य पूर्वं प्रवृत्तिर्भवति, न तु नित्यत्वेन गुणस्यापि, कृते शप्रत्ययप्रसक्तेः, बाधकेन "क्ङिति च"इत्यनेन बाध इति त्वन्यदिति साम्यमुभयोरत आह—*आदीति* । तेन रुणद्धि रन्धयति अस्मै इत्यस्य संग्रहः । आद्ये गुणं बाधित्वा श्नम् । द्वितीये तु उपधावृद्धिं बाधित्वा "रधिजभोरचि" इति नुम् । तृतीये नित्यत्वात् ङेस्मै भवति । कृताकृतप्रसङ्गि नित्यम्, तद्विपरीतमनित्यमिति समुदिता परिभाषा ॥ ४२ ॥

तत्त्वप्रकाशिका ।

*परान्नित्यमिति* । नित्यम्पराद्बलवदिति प्रतिज्ञावाक्यम् । तत्र हेतुमाह-*कृताकृतप्रसङ्गित्वात् इति* । आवश्यके श्राद्धभोजनादौ दौहित्रादिवदिति दृष्टान्तः । परत्वमनित्यत्वे उपलक्षणम् । तच्चापवादान्तरङ्गेतरम्बोध्यम् । तेन तदादाय न व्यभिचारः । विप्रतिषेधशास्त्रात्परस्य प्राबल्यबोधनेन बाधस्तु नाशङ्कनीयः, नित्यस्य कृताकृतप्रसङ्गित्वेन तुल्यबलविरोधाभावात् । हेतुदले श्रैपादिकभिन्नत्वे सतीति विशेषणीयम् । तेन सापादिकानित्यस्य बलवत्त्वेऽपि न क्षतिः । अप्रयोजकत्वशङ्कावारणाय तर्कमाह-*क्लृप्ताभावकेति ।

ननु तुदतीत्यत्रोभयप्रवृत्तौ नित्येन कथं परशास्त्रबाध इतिचेन्न, उभयोर्यौगपद्यासम्भवेनान्यतरशास्त्रस्य प्रवृत्तेरावश्यकत्वेनाल्पसंकोचकस्य नित्यस्यैव प्रवृत्तेरुचितत्वात् । तथाहि-- यदि परशास्त्रस्य पूर्वम्प्रवृत्तिस्तदा एतत्कालिकावच्छेदेनैतदुद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वेन नित्यशास्त्रसंकोचः, यदि नित्येन परस्य संकोचस्तदा एतदुद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वं परस्येति संङ्कोचस्याल्पत्वम् । *शप्रत्ययादिरिति* । नच शस्य शित्वसामर्थ्याद्गुणाभाव इति वाच्यम् ? विचति पृच्छतीत्यादौ सम्प्रसारणाद्यर्थतया तस्य चारितार्थ्यात् । नच प्रतिपदोक्तत्वं, तुदः प्रतिपदोक्तत्वेप्यादिशब्दग्राह्याणामतथात्वात् ॥ ४२ ॥

यद्व्यक्तिसम्बन्धितया पूर्वं प्रवृत्तिस्तद्व्यक्तिसम्बन्धितयैव पुनः प्रवृत्तौ कृताकृतप्रसङ्गित्वमित्याशयेनाह—

**शब्दान्तरस्य प्राप्नुवन्विधिरनित्यो भवति ॥ ४३ ॥**

इदं "शदेः शितः" (१-३-६०) इति सूत्रे भाष्ये स्पष्टम् । तत्र हि न्यविशतेत्यत्र विकरणे कृते तदन्तस्याङ्कृते धातुमात्रस्येत्यडनित्य इत्युक्तम्॥४३॥

एतत्तुल्यन्यायेन आह—

**शब्दान्तरात् प्राप्नुवतः शब्दान्तरे प्राप्नुवतश्च अनित्यत्वम् ॥ ४४ ॥**

एतन्मूलकमेवाह—

**लक्षणान्तरेण प्राप्नुवन्विधिरनित्यः ॥ ४५ ॥**

अतिदेशविषय इयमसिद्धवत्सूत्रे कैयटेनोक्ता ॥ ४५ ॥

भैरवी

तत्र प्रथमांशस्योदाहरणं प्रदर्श्य द्वितीयांशस्यानेकविधत्वं यथा सम्भवति तद्दर्शयति-*य द्व्यक्तीत्यादिना* । अयमर्थोऽवश्यमेपिपर्तीत्यर्थे स्वीकार्य्यः । अत्र हीपधातोः सनि द्विर्वचनेडागमयोः प्राप्तौ शब्दान्तरप्रापिकानित्याद्द्विर्वचनात् प्रागिडागमे कृते पिपशब्दस्य द्विर्वचनं भवति, इदम् व्यक्तिविशेषसम्बन्धस्य चिन्तनेनानित्यत्वम् । व्यक्तिविशेषचिन्तायामपि नित्यस्य उदाहरणन्तु, च्यवन्ते प्लवन्त इति । अत्र हि च्युअअन्त इतिस्थिते शप्रत्ययनिमित्तकगुणस्य "अतो गुण" इति पररूपैकादेशस्य च प्राप्तौ वक्ष्यमाणरीत्या नित्यैकादेशात प्राग्गुणस्य सिद्धिः ॥ ४३ ॥

इयञ्च यद्व्यक्तीत्यादिनोक्ता परिभाषा न्यायभूता, न तु वाचनीकी, तत्र व्यक्तिपदेनोद्देश्यव्यक्तिवन्निमित्तव्यक्तेरुद्दशाव्यवहितोच्चारितशब्दव्यक्तेश्च ग्रहणमपि सम्भावव्यत इत्याशयेन आह-*एतत्तुल्येति । आद्योदाहरणम्माभवानुजिहदिति । अत्र ह्रुहेर्णिचि लुङि शब्दान्तरात प्राप्नुवतोऽनित्याद्द्वित्वात पूर्वं परत्वेन "णौ चङि" इत्युपधाह्रस्वत्वस्य प्रवृत्तिर्भवति, यदि तु "णौ चङि" इति सूत्रभाष्योक्त्या यदयमोणिमृदितङ्करोति तज्ज्ञापयत्याचार्य्यो द्विर्वचनात् ह्रस्वत्वं बलीय इति रीत्या कृताकृतप्रसङ्गित्वेन द्वित्वस्य नित्यत्वेऽपि ह्रस्वत्वस्य पूर्वं प्रवृत्तिरित्युच्यते तदापूर्वोक्तमेव च्यवन्ते प्लवन्त इत्युदाहरणं बोध्यम् ।

अत्र हि गुणे कृते शब्दान्तरात् प्राप्नुवत एकादेशस्यानित्यत्वात पूर्वं गुणो भवति । अन्यथैकादेशे ङिति निषेधः स्यात् । अत्रापि "अचः परस्मिन्" इति स्थानिवद्भावस्य निषेधे कर्त्तव्ये प्रवृत्तिरिति चेदुच्यते तदा "नेर्विशः" इति सूत्रस्थस्य न्यविशतेत्यत्र विकरणान्तस्याटि कृते विशेर्नेः। परत्वाभावान्नियमानुपपत्तावुपसर्गनियमेऽड्व्यवाय उपसङ्ख्यानमिति यद्वार्तिकं तस्योक्तिसम्भव एवैतस्याः प्रयोजनम् । द्वितीयोदाहरणन्तु करिष्यते हरिष्यते इत्यादि । अत्र हि शब्दान्तरे प्राप्नुवतो विकरणस्यानित्यत्वात् लादेशे "स्वरितञित" इत्यनेन कृतेऽस्य प्रवृत्तिरन्यथा कृते विकरणे ञितः परत्वाभावान्नियमो न स्यात् ॥ ४४ ॥

यदि तु यद्व्यक्तीत्यत्र व्यक्तिपदं शास्त्रव्यक्तिपरमिति गृह्यते तदाह—एतन्मूलकेति* । उक्तयुक्तिमूलकेत्यर्थः । *लक्षणान्तरेण* । उपदेशातिरिक्तेन । *असिद्धवत्सूत्र इति* । तत्र हि कुर्व इत्यत्र कुरउवसितिस्थिते लघूपधगुणोकारलोपयोः प्राप्तौ उलोपो नित्योगुणस्तु उलोपे कृते प्रत्ययलक्षणेन प्राप्त इत्यनेन न्यायेनानित्य इत्युक्तम् । एतदुदाहरणमजरांसि कुलानीति,

यदा तु शास्त्रव्यतिरेकेण तद्विधेयकार्य्ययोरेव नित्यत्वादिविचारो यदापि व्यक्तिविशेषाश्रयणाभावस्तदाह—

**क्वचित्कृताकृतप्रसङ्गमात्रेणापि नित्यता ॥ ४६ ॥**

कृते द्वितीये नित्यत्वेनाभिमतस्य पुनः प्रसंगमात्रं नित्यत्वव्यवहारे प्रयोजकं न तु बाधकाबाधितफलोपहितप्रसङ्गोऽपि तथेति भावः ॥ ४६ ॥

तदाह—

**यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम् ॥४७॥**

क्वचित्तु बाधकाबाधितफलोपहितप्रसंग एव गृह्यते । तदाह—

**यस्य च लक्षणान्तरेण निमित्तं विहन्यते तदप्यनित्यम् ॥४८॥**

सप्तमे कैयटेनैतदुपष्टम्भकं लोकव्यवहारद्वयमुदाहृतम् । वालिसुग्रीव-

भैरवी ।

अत्र हि नुम् जरसादेशयोः प्राप्तयोरेतदभावे कृताकृतप्रसङ्गित्वेन नित्यत्वान्नुम् स्यात्, तस्मिन् सति नुमाव्यवधानाज्जरसादेशो न स्यात्, एतत्परिभाषास्वीकारे तु पूर्वमजन्तत्वाज्जरसादेशे तु झलन्तत्वात् प्राप्तिरिति लक्षणान्तरप्राप्तिकत्वेन नुमप्यनित्य इति परत्वाज्जरसि कृते झलन्तलक्षणो नुम्भवति ॥ ४९ ॥

नन्वेवं तुदतीत्यत्र गुणे कृते शप्रत्ययस्य शब्दान्तरात् प्राप्तत्वेन स्थानिवत्वातिदेशेन च प्राप्तत्वेनानित्यत्वात् परत्वाद्गुणे कृते प्राप्तौ रूपासिद्धिरत आह—*यदा तु शास्त्र इति* । एवञ्च लक्ष्यानुरोधेन एषा एव परिभाषा तत्र स्वीक्रियत इति भावः । कृताकृतप्रसङ्गि नित्यमिति प्रथमांशघटकप्रसङ्गांशो बाधकाबाधितत्वरूपविशेषणसत्त्वासत्त्वद्वैविध्येनोक्त इति परिभाषापि द्विविधेत्याशयेन आह-*कृते द्वितीय इति । कार्य्यस्येति । अभिमतस्येत्यस्य विशेष्यमध्याहार्य्यम् । *प्रसङ्गमात्रमिति*। एतस्य मात्रपदस्य व्यवच्छेद्यं दर्शयति-*नतित्विति४६

*लक्षणान्तरेण* । शास्त्रान्तरेण । एतेन तस्य विशेषणस्यासत्त्वं दर्शितम् ॥ ४७ ॥

तद्विशेषणविशिष्टां परिभाषामाह—क्वचित्त्विति* । सप्तमे इति* । तत्र "स्वमोर्नपुंसकात्" इति सूत्रभाष्ये "स्वमोर्लुक्"त्यदादिभ्यश्च"इति वक्तव्यमिति वार्त्तिककृतोक्तम् । इदञ्च वार्त्तिकमन्तरङ्गानपि विधीन् इत्यत्रापिशब्दः परस्यैव संग्राहक इत्याशयेन प्रवृत्तम् । इहापि यथा स्यात्, तत् ब्राह्मणकुलमिति । किंपुनः कारणं न सिध्यति । कृते अत्वे न लुग्भवेत् । अत्वे कृते लुङ् न प्राप्नोति । इदमिह सम्प्रधार्य्यम् ।अत्वङ्क्रियतां लुगिति । किमत्र कर्त्तव्यं, परत्वादत्वम् । नित्योलुक्, कृतेऽप्यत्वे प्राप्नोत्यकृतेऽपि । अनित्यो लुक्, नहि कृतेऽत्वे प्राप्नोति। "अतोऽम्"इत्यम्भावेन भवितव्यम् । तस्मात् 'त्यदादिभ्यश्च'इति वक्तव्यमिति भाष्येऽभिहितम् । अत्र कैयटः—नित्यो लुगिति ।अत्वन्तु लुकि कृते प्रत्ययलक्षणप्रतिषेधान्न प्राप्नो-

तत्त्वप्रकाशिका ।

यस्यचे लक्षणान्तरेणेति* ।अस्योदाहरणं स्वापयति मापयतीति । अत्र मपर्यन्तस्य स्वमौ पररूपात्पूर्वं नित्यत्वाट्टिलोपः वृद्धिः पुक् । अत्र पररूपे सति "प्रकृत्यैकाच्"इति प्रकृतिभावेन यद्यपि निमित्तं विहन्यते, तथाप्यनया नित्यत्वम् टिलोपस्य । नचान्तरङ्गत्वात्पररूपे प्रकृतिभावे स्वादयतीतीष्टम्, "नाजानन्तर्य" इति निषेधात् । तदसत्त्वेऽन्तरङ्गपरिभाषायानित्यत्वाच्च । नच वार्णपरिभाषया टिलोपः, भावकार्य एव धर्मिग्राहकमानेन तस्याः प्रवृत्तेः । एतन्मते तदसत्वाच्च ॥ ४७ ॥

अनित्यमिति* । अस्योदाहरणम् स्यानः, अत्र गुणात्पूर्वं नित्यत्वादूठ् गुणस्तूठि यणा

योर्युध्यमानयोर्भगवता वालिनि हतेऽपि सुग्रीवस्य वालितः प्राबल्यं न व्यवहरन्ति। भगवत्सहायैः पाण्डवैर्जये लब्धेऽपि पाण्डवानां प्राबल्यं व्यवहरन्ति चेति। सर्वं चेदं लक्ष्यानुरोधाद्व्यवस्थितम्॥ ४८॥

"लुटः प्रथमस्य" (२-४-८५) इति सूत्रे भाष्ये—

## स्वरभिन्नस्य प्राप्नुवन्विधिरनित्यो भवति॥ ४९॥

इति पठ्यते।

यत्र त्वेकस्यैव कार्यस्य परत्वं नित्यत्वं च तत्रेच्छयान्यतरत् तदुभयं वा तस्य बलवत्त्वे नियामकमुल्लेख्यम्। अत एव तत्र तत्र परत्वान्नित्यत्वाच्चेति भाष्ये उच्यते। वस्तुतस्तत्र परत्वादित्युक्तिरेकदेशिनः। स्पष्टं चेदं विप्रतिषेधसूत्रे कैयटे। "णौ चङि" (७-४-१) इति ह्रस्वापेक्षया नित्यत्वान्तरङ्गत्वप्रयुक्तद्वित्वस्य प्रथमतः प्रवृत्तौ नित्यत्वादित्येव भाष्य उक्तम्।

भैरवी।

तीत्यनित्यम्। अनित्यो लुगिति। अत्वे कृते लुग्बाधकस्यामादेशस्य प्राप्त्या लक्षणान्तरोपपादिप्रवृत्तिविधानं दुर्बलमेव धार्तराष्ट्रानिवेति। एतेन बाधकाबाधितेतिविशेषणविशिष्टं कृताकृतप्रसङ्गित्वं नित्यत्वव्यवहारे निमित्तं दर्शितम्॥ ४८॥

शब्दान्तरस्येति प्रागुक्तपरिभाषायाः प्रपञ्चभूतामन्यामपि परिभाषामाह—*लुट इत्यादिना*। *स्वरभिन्नस्येति*। स्वरेण भिन्नस्येत्यर्थः। स्वरोऽपि शब्दान्तरत्वसम्पादक इति भावः। *पठ्यत इति*। तत्र भाष्ये स्वः कर्त्तेत्यादौ तस्य "अनुदात्तेत्" इति स्वरापत्तिमुपपाद्य तस्य डादिभिर्विप्रतिषेधविचारे कृताकृतप्रसङ्गित्वेन द्वयोरपि नित्यत्वमुक्त्वा लक्षणान्तरेणेति प्रागुक्तरीत्या निघातस्यानित्यत्वं प्रतिपाद्य डादीनामनित्यत्वमेवमुक्तम्। स्वरस्यापि शब्दान्तरत्वकारकत्वमिति तद्भावः। एतत्परिभाषोदाहरणं दध्युदकमिति। अत्र दधि उदकमितिस्थिते नब्विषयस्येत्याद्युदात्तत्वेनेकारस्यानुदात्तस्य कृताकृतप्रसङ्गितया प्राप्तनित्यत्वेको यणादेशः पूर्वन्न भवति किन्तु "उदके केवल" इति पूर्वपदान्तोदात्तस्वरेण भिन्नस्य स्थाने प्राप्तत्ववदनित्य इति परत्वादुदके केवल इति पूर्वपदान्तोदात्तत्वे कृते प्रवर्त्तते। तत "उदात्तस्वरितयोर्यण" इति स्वरितत्वमुकारस्य सिध्यति।

सर्वसाधारणविशेषमाह—*यत्रेति*। *अन्यतरत्*। परत्वनित्यत्वान्यतरत्। एकस्य कार्यस्य बलवत्त्वमुपपादनीयं तच्चोभयथापि सम्भवति। *अत एव*। बलवत्त्वप्रतिपादनतात्पर्य्यत्वादेव। *तत्र तत्रेति*। अस्य भाष्य इत्यत्रान्वयः। *तत्र*। भाष्ये। *एकदेशिन इति*। नित्यानित्ययोरतुल्यबलत्वेन विप्रतिषेधशास्त्राप्राप्तेः। *स्पष्टञ्चेदमिति*। तत्र हि—"विप्रतिषेधे परं कार्य्यम्" इत्यत्र यः कार्य्यशब्दस्तत्राहार्थे कृत्यः। कारणयोरयं कार्य्यस्तुल्यबललक्ष तथेति नित्यानित्योत्सर्गापवादान्तरङ्गबहिरङ्गेष्वस्य सूत्रस्याव्यापार इति तेनोक्तम्। एवञ्च तत्र नित्यत्वादित्याद्येकदेशिवाक्यम्। उक्तार्थे भाष्यमुपष्टम्भकमित्याह—*णौ चङीति*।

तत्त्वप्रकाशिका।

बाधितत्वादनित्य इति ध्येयम्। एवमस्मै इत्यत्रानादेशात्पूर्वं नित्यत्वात्स्मायादेशस्ततो हलिलोपेन बाधादनित्य अनादेश इति॥ ४८॥

*डादीनामनित्यत्वमिति*। अनया डादीनामनित्यत्वात्परत्वात्स्वरे अन्तोदात्तसिद्धिरुक्ता। एतदभावे लक्षणान्तरेणेतिपरिभाषया निघातस्यानित्यत्वेन नित्यत्वाड्डादेशे टिलोपे सतस्स्वरे उदात्तनिवृत्तिस्वरेणान्तोदात्तत्वानापत्तिरिति भावः। *सिध्यतीति*। इदं पूर्वोत्तर-

एवं नित्यान्तरङ्गयोर्बलवत्त्वमपि यौगपद्यासम्भव एवेति बोध्यम् ॥ ४९ ॥

नित्यादप्यन्तरङ्गं बलीयोऽन्तरङ्गे बहिरङ्गस्यासिद्धत्वात् । तदाह—

## असिद्धं बहिरङ्गमन्तरङ्गे ॥ ५० ॥

अन्तर्मध्ये बहिरङ्गशास्त्रीयनिमित्तसमुदायमध्येऽन्तर्भूतान्यङ्गानि निमि·

### भैरवी ।

यद्यप्युभयं बलवत्त्वप्रयोजकं भवति तथापि प्रथमोपस्थितत्यागो नोचित इत्याशयेन नित्यत्वादित्येवोक्तमिति भावः । विशेषान्तरमप्याह—*एवमिति* । पूर्वत्वस्य बलवत्त्वप्रयोजकत्वस्य बलवदित्यर्थः ॥ ४९ ॥

यत्तु सीरदेवादयः नित्यादपि अन्तरङ्गम् बलीय इति परिभाषान्तरम् । यत्र नित्यस्य बहिरङ्गत्वमनित्यस्य तु अन्तरङ्गत्वं तत्रास्य प्रवृत्तिः, तेन बहिरङ्गान्तरङ्गयोरन्तरङ्गं बलीय इति सिद्धत्राजानन्तर्य्यपरिभाषया च अस्य न निषेध इति । तत्र तन्मतं दूषयितुमुपक्रमते—*नित्यादपि अन्तरङ्गमित्यादिना* । *असिद्धमित्यादि* । एतत्परिभाषास्वीकारात् पदस्य विभज्यान्वाख्यानमिति पक्षे ग्रामणिनी इत्यादौ कृताकृतप्रसङ्गिनित्यादपि नुमः प्राक् ह्रस्वत्वस्य सिद्धिरन्यथा नुम्यनजन्तत्वान्न स्यात् । उक्तपरिभाषायाः कर्त्तव्य इति शेषः । परिभाषां पूरणेन व्याचष्टे—*अन्तरित्यादिना* । अन्तः शब्दार्थमाह—*मध्ये इति* मध्यत्वस्य सावधिकत्वेनावध्याकाङ्क्षाशान्त्यर्थमाह—*बहिरित्यादि* । उपस्थितत्वाद्बहिरङ्गशास्त्रीयनिमित्तसमुदाय एव गृह्यत इति भावः । अन्तर्भूतानीति शेषपूरणम् । अङ्गशब्दो निमित्तवाची । *निमित्तसमुदायादिति* । अत एवातिष्ठिपदित्यत्र णिनिमित्तके गुणे कर्त्तव्ये बहिरङ्गस्य "तिष्ठतेरित्" इतीत्वस्यासिद्धत्वात् गुणाभावस्य सिद्धिः ।

### तत्त्वप्रकाशिका ।

पदकार्यादन्तरङ्गोऽप्येकादेश इत्यत्रैकादेशपदं सन्धिकार्यस्योपलक्षणमित्यर्थाज्ञानेन ॥ ४९ ॥

नन्विदमवतरणमयुक्तम्परिभाषातुल्यपदार्थतात्पर्येणाकिञ्चित्करत्वादतो नित्यापेक्षयाऽन्तरङ्गस्य बलवत्त्वे बीजमाहेत्येवावतरणं वक्तुं युक्तमित्यभिप्रेत्य ग्रन्थाशयमाह-*यत्तुसीरदेवादय इति* । *नित्यादपीति* । अपिना परस्य संग्रहः । अन्तरङ्गत्वादिति हेतुः, हेतोः पक्षमात्रवृत्तित्वेनाप्रयोजकत्वशङ्कावारणायानुकूल तर्कमाह-*अन्तरङ्गे बहिरङ्गस्येति* । साध्यदलेऽपवादभिन्नत्वमितिविशेषणं देयम् । तेनापवादेनान्तरङ्गबाधेऽपि न क्षतिः । *न स्यादिति* । इदन्नित्यादन्तरङ्गस्योदाहरणं, परादन्तरङ्गस्य तु धियति अशुश्रुवदित्यादि । अत्र परमपि लघुपधगुणं बाधित्वा पूर्वोपस्थितिनिमित्तकत्वेनान्तरङ्गत्वादियङुवङौ ।

ननु परापेक्षयाऽन्तरङ्गस्य बलवत्त्वे किं बीजमितिचेन्नान्तरङ्गदृष्ट्या परस्यासिद्धत्वेन युगपदसम्भवरूपविप्रतिषेधाभावात् विप्रतिषेधशास्त्राप्रवृत्तेः । अत एव "ओमाङोश्च" इत्याङ्ग्रहणं चरितार्थम् । एवं नित्यादन्तरङ्गस्य बलवत्त्वेऽपि बोध्यम् । अत एव "अचः परस्मिन्" इतिसूत्रे पट्व्या मृद्व्या इत्यादौ "अचः परस्मिन्" इत्यस्य खण्डनावसरे नित्यस्यापि परयणादेशस्यानया सिद्धत्वात्पूर्वयणादेशस्साधितो भाष्ये । *अन्तः शब्दार्थमाह इति* । अन्तर्भूतानीत्येतद्घटकान्तः शब्दार्थमित्यर्थः । परिभाषाघटकान्तः शब्दार्थमाह-*अन्तर्भूतानीति* । तु मध्यार्थः, समानाधिकरणानामेव बहुव्रीहेरनुशासनात् । *शेषपूरणमिति* । अन्तर्भूतानीत्यस्य इति शेषः । बहिरङ्गशास्त्रीयनिमित्तसमुदायमध्ये इत्यन्तमिति भावः । बहिरङ्गशास्त्रीयेतिफलितार्थकथने नतु तत्वेन निवेशोऽतो नान्योन्याश्रयः । लक्ष्यं तु बहिरङ्गत्वेन जिघृक्षितशास्त्रीयोद्देश्यतावच्छेदकत्वेनाश्रीयमाणशब्दसमुदायघटकनिमित्तकत्वम् । बहिरङ्गत्वेन जिघृक्षितमित्यस्य बहिरङ्गत्वप्रकारकज्ञानविषयकेच्छाविषयीभूतेत्यर्थः । तथा च बहिरङ्गं वि·

त्तानि यस्य तदन्तरङ्गम्। एवं तदीयनिमित्तसमुदायाद्बहिर्भूताङ्गकं बहिरङ्गम्। एतच्च "खरवसानयोः" ( ८-३-१५ ) इति सूत्रेऽसिद्धवत्सूत्रे च भाष्यकैयटयोः स्पष्टम्। अत्राङ्गशब्देन शब्दरूपं निमित्तमेव गृह्यते शब्दशास्त्रे तस्यैव प्रधानत्वात्। तेनार्थनिमित्तकस्य न बहिरङ्गत्वम्। अत एव "न तिसृचतसृ" ( ६-४-४ ) इति निषेधश्चरितार्थः। अन्यथा स्त्रीत्वरूपार्थनिमितकतिस्रपेक्षयान्तरङ्गत्वात्त्रयादेशे तदसङ्गतिः स्पष्टैव। अत एव त्रयादेशे "स्रन्तस्य

भैरवी।

अत्र प्राञ्चः—अन्तः शब्दस्याधिकरणशक्तिप्रधानतया क्रियायामेवास्यान्वय इति स्थितानीत्यस्याक्षेपः। अन्तः स्थितनिमित्तकत्वञ्च पारिभाषिकम् पूर्वस्थानिकत्वाल्पनिमित्तकत्वपूर्वोपस्थितनिमित्तकत्वपरनिमित्तकत्वाभावान्यतमरूपम् द्वितीयं घटकत्वेन सङ्ख्यया वा तृतीयन्तु प्रक्रियाक्रमेण प्रयोगे प्रागुच्चारणेन वा यथायथं ग्राह्यम्। एतेषामुदाहरणानि तत्र तत्र स्फुटानि। कार्यिणो निमित्तत्वेनानाश्रयणस्यान्यत्र दर्शनादिहापि कार्यी निमित्तपदेन यद्यपि न गृह्यते तथापि कार्यी विशेषणस्य निमित्तस्य निमित्ततावच्छेदकस्य चेह निमित्तपदेन ग्रहणम्। एतेषु तृतीयस्य यत्रान्तरङ्गबहिरङ्गयोर्युगपत्प्रवृत्तिस्तत्राश्रयणम्। अत्रान्तरङ्गशास्त्रीय बहिरङ्गशास्त्रात् प्राक्प्रवृत्तिरेतावतैव बहिरङ्गस्यासिद्धत्वव्यवहारः। एतादृशस्यान्तरङ्गत्वस्य लोकदृष्टन्यायतो लाभः चतुर्थान्तरङ्गत्वमादाय तु जातस्य बहिरङ्गस्यासिद्धत्वं भवति। द्वितीयेनापि क्वचिज्जातस्यासिद्धत्वम्। यथाऽतिष्ठिपदित्यादावित्याहुः।

भाष्यानुसारिणस्तूक्तेषु नानाविधान्तरङ्गभावेषु यत्र भाष्याद्यनुग्रहः स एव सहेतुकत्वेनाश्रयणीय इत्याहुः। निमित्तानीति बहुवचनमुदाहरणानान्नानात्वाभिप्रायेण। *तदीयेति*। अन्तरङ्गशास्त्रीयेत्यर्थः। बहिर्भूतत्वमप्युक्तवैपरीत्येन बोध्यम्। उक्तार्थे प्रमाणमाह—*एतच्चेति*। *खरेति*। अन्तरङ्गं बहिरङ्गमिति प्रतिद्वन्द्वभाविनावेतावर्थावित्यादिना तत्र स्पष्टमित्यर्थः। स्वसिद्धान्तमाह—*अत्रेति*। *शब्दरूपमेवेति*। अत्र शब्दपदं सप्तम्याद्यन्तशब्दोपात्तप्रयोगस्थशब्दरूपपरम्। एवकारव्यवच्छेद्यं स्पष्टयति—*तेनेति*। अत एवातिक्षिणे इत्यत्र "इकोऽचि" इतिनुमागमस्याधिकर्त्रीबार्थसापेक्षस्य क्षिया इतीयङपेक्षया न बहिरङ्गत्वम्। उक्तार्थे पाणिनिसम्मतिं दर्शयति—*अत एवेति*। अर्थनिमित्तकस्य बहिरङ्गत्वस्यानङ्गीकारादेव। *त्रयादेश इति*। इदमुपलक्षणं दीर्घत्वस्यापि। यद्यन्तरङ्गत्वान्नामीति दीर्घत्वं पूर्वं स्यात्, तदा कृतदीर्घस्य तिस्रादेशे विकारकृतलक्ष्यभेदाभावेन 'लक्ष्ये लक्षणं सकृदेव प्रवर्त्तत' इति न्यायेन पुनर्दीर्घप्राप्तौ निषेधवैयर्थ्यं स्पष्टमेव। एतेन बहिरङ्गत्वेन तिस्रादेशस्य पूर्वमप्रवृत्तावप्यन्तरङ्गे त्रयादेशे कृते तस्य स्थानिवद्भावेन त्रिशब्दत्वात् पुनस्तिस्रादेशे दीर्घप्रवृत्त्यर्थ "न तिसृचतसृ" इति सूत्रमस्त्वितिशङ्कापि निरस्ता।

तत्त्वप्रकाशिका-

नाऽपि इच्छाया अप्रतिबन्ध्यत्वेन तद्विषयकेच्छाभवितुमर्हति अतो नोक्तदोषः। एवं बहिरङ्गत्वलक्षणेऽप्युह्यम्।

यत्तु स्वप्रवृत्तावित्यादि तन्न स्वशब्दस्याननुगतत्वात्।

*शङ्कापि निरस्तेति*। नच विशिष्टरूपोपादानेनार्थवत्वपरिभाषया "त्रेस्त्रय" इत्यत्रोद्देश्यनिमित्तयोरुपस्थितार्थद्वयेन साम्यमिति वाच्यम्? तिस्रादेशेऽपि, उपस्थितार्थद्वयेन स्त्रीत्वरूपार्थेन चाधिक्यात्।

ननु तिस्रादेशे शब्दान्तरत्वेन विकाराभावान्न लक्ष्ये लक्षणन्यायप्रवृत्तिः। अत एव भाष्ये विकारागमादिभिः शब्दानित्यत्वमाशङ्क्यादेशेन शब्दान्तरत्वकथनं सङ्गच्छतेऽतः प्रासदी-

प्रतिषेध" इति स्थानिवत्सूत्रस्थभाष्यवार्त्तिकादि सङ्गच्छते। एतेन गौधेरः पचेरन्नित्यादावेयादीनामङ्गसंज्ञासापेक्षत्वेन बहिरङ्गतया असिद्धत्वाद्वलि लोपो न स्यादिति परास्तम्। एयादेशादेरपरनिमित्तकत्वेनान्तरङ्गत्वाच्च।

भैरवी।

किञ्च "नामि"इति दीर्घदृष्ट्याऽर्थनिमित्तकबहिरङ्गतिस्रादेशस्यासिद्धत्वान्निषेधवैयर्थ्यमित्यपि बोध्यम्। *अत एव*। अर्थनिमित्तकबहिरङ्गत्वानाश्रयणादेव।

यद्यर्थनिमित्तकस्य बहिरङ्गत्वं तदाऽन्तरङ्गे त्रयादेशे तस्य स्थानिवद्भावेन तिस्रादेशे कृते "लक्ष्ये लक्षणस्य" इति न्यायेन पुनस्त्रयादेशाप्राप्तेर्वार्त्तिकस्य सकृद्गतिन्यायेन समाधानपरभाष्यस्य चासंगतिः स्पष्टैव। वार्त्तिकादीत्यादिपदेन तत्प्रत्याख्यानपरभाष्यस्य संग्रहः। *एतेन*। अर्थकृतबहिरङ्गत्वस्यानाश्रयणे प्रयोजकस्य उक्तशब्दरूपनिमित्तस्यैवाश्रयणेन। एयादीनामित्यादिपदेन सीयुडागमपरिग्रहः।

न च सीयुटोऽङ्गाधिकारे पाठाभावेनाङ्गसंज्ञासापेक्षत्वेन बहिरङ्गत्वं वक्तुमशक्यमिति वाच्यम्? अङ्गसंज्ञेत्यत्राङ्गस्य संज्ञाऽङ्गसंज्ञेत्यर्थाश्रयणेनाङ्गसम्बन्धिधातुसंज्ञाया विवक्षितत्वात्। पचेरन्नित्यादावित्यादिपदेन भवेदित्यादिसंग्रहे तु एयादीनामित्यादिपदेनेयादेशपरिग्रहः।

यत्तु "वर्णो वर्णेन" इति सूत्रभाष्ये 'समानाधिकरणसमासाद्बहुव्रीहिर्भवति विप्रतिषेधेन' इति वार्त्तिकखण्डनावसरे स्वपदार्थे विधीयमानः कर्मधारयोऽन्तरङ्गः अन्यपदार्थे बहुव्रीहिर्बहिरङ्ग इत्यभिहितं तदेतदर्थनिमित्तकबहिरङ्गत्वाश्रयणे विरुध्येतेति। तन्न। उक्तान्तरङ्गबहिरङ्गभावप्रदर्शनेन विप्रतिषेधस्य खण्डनेऽपीष्टस्य बहुव्रीहेरसाधनेन तस्य भाष्यस्यैकदेश्युक्तित्वात्।

किञ्च विप्रतिषेधोपपादनावसरे बहुव्रीहेः कण्ठे काल इत्यत्रावकाशं प्रदर्शयता "शेषो बहुव्रीहिः" इतिसूत्रस्थस्य समानाधिकरणानां बहुव्रीहिरितिवार्त्तिकस्योक्तिः परित्यक्तेति तस्यैकदेश्युक्तित्वम्।

किञ्चैतत्खण्डनावसरे कर्मधारयबहुव्रीह्योरन्तरङ्गबहिरङ्गभावोपपादनमप्ययुक्तम्। बहुव्रीहेः समानाधिकरणपदसम्बन्धिनश्चारितार्थ्याभावात्। एतदर्थे च इष्टिरियं पठिता समानाधिकरणसमासाद्बहुव्रीहिरिष्ट इति वदताऽपि बहुव्रीहेश्चारितार्थ्यञ्चप्रेक्षितमिति समानाधिकरणेत्यारभ्येष्टिरित्यन्तभाष्यस्यैकदेश्युक्तित्वमावश्यकमेव।

तत्त्वप्रकाशिका।

घंवारणाय निषेधश्चरितार्थ इत्यरुचेराह—*किञ्चेति*। *इत्यपि बोध्यमिति*। अयमाशयः—अन्तरङ्गत्वात् त्रयादेशे दीर्घे च कृते ततस्तिस्रादेशे पुनर्न दीर्घस्य प्राप्तिः, बहिरङ्गत्वेन तिस्रादेशस्यासिद्धत्वात्।

ननु दीर्घेऽजानन्तर्यसत्त्वेन "नाजानन्तर्ये" परिभाषया कैयटमते तिसृणामित्यत्रासिद्धत्वाभावात् "न तिसृचतसृ" इति निषेधस्य न वैयर्थ्यमत आह—*अत एव त्रयादेशे स्नन्तस्येति*।

न च तिसृणामित्यत्र स्थानिवत्त्वेन प्राप्तस्य "षट्त्रिचतुर्भ्यो हलादिः" इति स्वरस्य निवृत्तिस्तत्फलम्। त्रयादेशे एव स्थानिवत्त्वस्य प्रतिषिद्धत्वेन स्वरे तस्येष्टत्वात्।

ननु एयादेरङ्गप्रत्ययसंज्ञोभयापेक्षत्वस्येव, लोपस्य विधेयत्वेऽपि संज्ञाया अविधेयत्वेन निमित्तत्वे बाधकाभावात्। लोपविधायकस्य लोपवलसंज्ञोभयनिमित्तकत्वेन साम्यम्। अङ्गसंज्ञाया अनिमित्तत्वञ्चेत्यरुचेराह—*पचेरन्निति*। अत्र ह्यियादेशः अदङ्गयासार्वधातुकसंज्ञेतिसंज्ञाचतुष्टयापेक्षत्वेन बहिरङ्गः।

ननु समुदायसापेक्षेयादेशापेक्षया लोपस्य वर्णद्वयापेक्षत्वेनान्तरङ्गत्वमत आह—*अपरनिमित्तकत्वेनेति*।

ननु "येन विधिस्तदन्तस्य" ( १-१-७२ ) इति सूत्रे भाष्ये "इको यणचि" ( ६-१-७७ ) इत्यादावपि तदन्तविधौ स्योन इत्यत्रान्तरङ्गत्वाद्यणो गुणबाधकत्वमिष्यते तन्न सिद्ध्येत्, ऊनशब्दमाश्रित्य यणादेशो नशब्दमाश्रित्य गुण इत्यन्तरङ्गत्वाद्गुण एव स्यादित्युक्तम् ।

अत्र कैयटः-सिवेर्बाहुलकादौणादिके नप्रत्यये गुणवलोपोठां प्रसङ्गे ऊडपवादत्वाद्वलोपं बाधते गुणं त्वन्तरङ्गत्वाद्बाधते । गुणो ह्यङ्गसम्बन्धिनीमिग्लक्षणां लघ्वीमुपधामार्द्धधातुकं चाश्रयति । उठ् तु वकारान्तमङ्गमनुनासिकादिञ्च प्रत्ययमित्थंरूपापेक्षत्वादन्तरङ्गः, तत्र कृते यणगुणौ प्राप्नुत इति ।

भैरवी ।

यत्तु कैयटेन "येन विधिः" इति सूत्रस्थभाष्यस्य योजनाय तादृशशब्दरूपनिमित्तातिरिक्तस्याश्रयणं कृतं तत्खण्डयितुं शङ्कते—।—*नन्विति* । *अचीत्यादावपीति* । अत्रापि·

तत्त्वप्रकाशिका ।

न चोभयविधान्तरङ्गत्वस्योभयत्र सत्त्वात्कथमसिद्धत्वमिति वाच्यम् ? "उपदेशग्रहणं कर्तव्यमिति "आयनेयी" इति शेखरसिद्धान्तादेशविधायकशास्त्रीयनिमित्तसमुदायघटकनिमित्तकत्वाभावेन पचेदित्यत्र लोपस्येयादेशघटकयकारनिमित्तकत्वादियादेशशास्त्रीयनिमित्तसमुदायघटकत्वाभावेन च लोपविधायकस्यान्तरङ्गत्वाभावात् ।

केचित्तु चेलेः क्नोपीरितिनिर्देशेन वलि लोपेऽन्तरङ्गपरिभाषा न प्रवर्तत इति कल्पनेन प्राचाम्मते न दोषः । एवञ्च चिन्त्यमिदं सर्वमिति वदन्ति । अपरनिमित्तान्तरङ्गत्वस्वीकारे बीजन्तु "ऊकाल" इति निर्देश एव । अन्यथा समाहारद्वन्द्वे उऊऊ३ इति स्थिते परत्वात्सवर्णदीर्घे ततो ह्रस्वे उकाल इति स्यात् । अपरनिमित्तकत्वेनेत्यस्य उपश्लेषातिरिक्तनिमित्तकत्वमर्थः । एवञ्च पञ्चम्यन्तसप्तम्यन्तान्यतरनिमित्तकं बहिरङ्गमिति फलितम् । अत एव 'यस्स' इत्यादौ "त्यदादीनाम" इत्यतः प्रागन्तरङ्गत्वात्"हल्ड्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्" लोपो न । अत एवाजरांसीत्यत्र नुम् जरसादेशात्पूर्वविप्रतिषेधेनेति स्वग्रन्थविरोधो न । अन्यथाऽपरनिमित्तकत्वेनान्तरङ्गत्वादेव जरसः पूर्वं शीभावे तद्ग्रन्थासङ्गतिः स्यात् । अत एव "नामि" इति सूत्रे आमीति न्यासे नित्यत्वाद्दीर्घ आपादितो भाष्ये । सप्तम्यन्तमात्रनिमित्तकस्यैव तत्त्वे तु तदसङ्गतं स्यात् । " ऋतो भारद्वाजस्य " इति सूत्रेपदेशानपकपे जहर्थेत्यत्र परत्वाद्गुणेऽनजन्तत्वान्निषेधो न प्रोप्नोतीत्युक्तं, भाष्ये, तत्त्वेतु गुणात्पूर्वमेवेड्निषेधे तदसङ्गतिः स्पष्टैव ।

केचित्तु जातबहिरङ्गस्थले एव उक्तान्तरङ्गत्वस्वीकारेणोक्तभाष्यद्वयस्याविरोधं वदन्ति । तन्न युक्तम् । तादृशस्थले एवैतादृशान्तरङ्गत्वस्वीकारे मानाभावात्फलाभावाच्च । यदितु इतरेतरद्वन्द्वेन"उकाल" इति निर्देशस्योपपत्तिरिति ब्रूते तदा अतोऽम्" इत्यत्र तपरकरणमात्रांशे बीजमित्यवेहि । तद्धि आ इत्यत्राम्भावव्यावृत्त्यर्थम् । अन्यथा अश्च आश्चेति समाहारद्वन्द्वे परत्वात्सवर्णदीर्घे ततो ह्रस्वे आ इति रूपाभावे सर्वत्र ह्रस्वस्यैव सम्भवेन तद्व्यर्थं स्यात् । तस्येतु अन्तरङ्गत्वात्पूर्वं ह्रस्वे ततो दीर्घे लक्ष्येलक्षणन्यायेन न पुनर्ह्रस्वः । न च परत्वाद्वृद्धौ सत्यां टिलोप इति मते तितउशब्दादाचक्षाणण्यन्तात्क्विपि तिता इत्यत्र चारितार्थ्यम् । नच ह्रस्वः टिलोपस्य स्थानिवत्त्वादिति वाच्यम् ? वृद्धेर्लोपो बलीयानिति सिद्धान्तपक्षे तितमित्यस्यैवेष्टत्वात् । नचात्रापि ह्रस्वे टिलोपस्य स्थानिवत्त्वमिति वाच्यम् ? अनादिष्टादचः पूर्वत्वाभावात्

नचैवं दुदूषतीत्यत्र दिवस इति स्थिते उठं बाधित्वा परनिमित्तकत्वेनान्तरङ्गत्वात्पूर्वं द्वित्वेऽभ्यासे उकारश्रवणानापत्तिरिति वाच्यम्, घटकनिमित्तकत्वरूपान्तरङ्गत्वस्योठ्यपि सत्त्वेनोभयोः साम्ये परत्वात्पूर्वमूठ्प्रवृत्तेः सूपपादत्वात् ।

एवं च संज्ञापेक्षस्यापि बहिरङ्गत्वं स्पष्टमेवोक्तमिति चेत्, न, तदन्तविधावपि बहुपदार्थापेक्षत्वरूपबहिरङ्गत्वस्य गुणे सत्त्वेन तत्र दोषकथनपरभाष्यासङ्गतेः। बहिरङ्गान्तरङ्गशब्दाभ्यां बह्वपेक्षत्वाल्पापेक्षत्वयोः शब्दमर्यादयाऽलाभाच्च। तथा सत्यसिद्धं बह्वपेक्षमल्पापेक्ष इत्येव वदेत्। अत एव "विप्रतिषेधे" सूत्रे भाष्ये गुणाद्यणादेशोऽन्तरङ्गत्वादित्यस्य स्थाने इत्युदाहरणं न तु गुणादूडन्तरङ्गत्वादित्युक्तम्। त्वद्रीत्यातदपि वक्तुमुचितम्। प्राथम्यात्तदेव वा वक्तुमुचितम्। मम त्वन्तरङ्गपरिभाषया तद्वारणासम्भवात्तन्नोक्तम्। किं च सिद्धान्ते नित्यत्वात् गुणात्पूर्वमूठ्, गुणस्तु ऊठि यणा बाधितत्वा-

भैरवी।

शब्देन यत्र विशेष्यं प्रकान्तं तत्र तु भवत्येव, यत्र तु न प्रक्रान्तं तत्रापि शब्दस्वरूपस्य विशेष्यत्वात् तदन्तविधिस्वीकार इति दर्शितम्। इगन्तस्य शब्दस्याजादौ शब्दे परे यणादिरित्येवमर्थस्तदा स्यादिति बोध्यम्। *संज्ञापेक्षस्येति*। गुणस्येति शेषः। *तदन्तविधावपीति*। अत्रापिशब्दोपादानाद्विशेष्यसन्निधानाभावेन न तदन्तविधिरिति ध्वनितम्। तदुक्तं वार्त्तिककृता प्रकृते तदन्तविधिरिति। *बहुपदार्थेति*। उक्तरीत्या पदार्थत्रयापेक्षेत्यर्थः यणादेशस्तु इगन्ताजादिसापेक्षत्वादन्तरङ्ग इति भावः। तदन्तविधौ यादृशस्यान्तरङ्गबहिरङ्गशब्दार्थस्याश्रयणे न दोष उक्तः स एव तु नास्तीत्याह--*बहिरङ्गान्तरङ्गेति*।

ननु शक्त्या तेन शब्देन तस्यालाभेऽपि तत्तात्पर्येण प्रयोगाल्लक्षणया तथास्तु इत्यत आह-*तथासत्येति*।*इत्येवेति*। निर्बीजलक्षणापेक्षया स्पष्टप्रतिपत्त्यर्थमित्येव वदेदित्यर्थः। *अतएव*। भवदुक्तस्य तदर्थस्याभावादेव। *इत्युदाहरणमिति*। दत्तमिति शेषः। *इत्युक्तमिति*। अन्तरङ्गम्बलीय इत्यस्य फलनिरूपणावसर इति शेषः। *त्वद्रीत्या*। कैयटोक्तरीत्या। *उचितमिति*। उठ्गुणयोरपि तयोः सत्वादिति भावः। *ममत्विति*। मत इति शेषः। *तद्वारणेति*। ऊठा गुणवारणेत्यर्थः।

ननु भाष्यान्यथानुपपत्त्या कैयटोक्तमावश्यकमिति वदाम इति चेत् तत्राह-*किञ्च सिद्धान्त इति*। अत्र सिद्धान्तपदोपपादनेन तस्मिन् काले तदसिद्धिरपि दोष इति ध्वनितम्।

तत्त्वप्रकाशिका।

वस्तुतस्तु कनृक्यङन्तात्सुमनायशब्दात्कर्तृक्विपि अल्लोपयलोपयोः सुमना इत्यत्र तपरकरणस्य चारितार्थ्येन ज्ञापकत्वासम्भवात्फलाभावाच्चापरनिमित्तकत्वमन्तरङ्गत्वमिति न युक्तम्। न च ह्रस्वः, अल्लोपयलोपस्य स्थानिवत्त्वात्, "क्वौ लुप्तं न स्थानिवत्" इति तु न, क्वौ विधिं प्रत्येवतत्प्रवृत्तेः। अत एव दुद्युषतीत्यपि साधु सङ्गच्छते।*ऊडपवादत्वादिति*। ननु देवमाचष्टे द्युरित्यत्र टिलोपणिलोपयोः स्थानिवत्त्वेन वलोपाप्राप्त्योठि क्वौविधिम्प्रतिनिषेधात्तदप्राप्त्या तत्राठश्चारितार्थ्यमिति चेन्न, अनुनासिकनिमित्तस्योठोऽपवादत्वमित्यभिप्रायात्। *अन्तरङ्गत्वादिति*। गुणे निमित्तानि पञ्च उठि चत्वारीति भावः। *असङ्गतेरिति*। कैयटमते ऊठीव यण्यपीगन्ताजादिशब्दद्वयमात्रापेक्षत्वेन गुणशास्त्रीयसंख्यावन्निमित्तान्तर्भावाद्गुणापेक्षयाऽन्तरङ्गत्वस्य सुवचत्वेन भाष्यासङ्गतिरिति भावः। न च गुणेऽपि पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्गत्वस्य वक्तुं शक्यत्वेनोभयोरन्तरङ्गयोः परत्वाद्गुणस्स्यादिति न भाष्यासङ्गतिरिति वाच्यम्? सिद्धान्तेऽपि त्वदुक्तान्तरङ्गत्वस्य गुणे सत्वेन यणो ऽन्तरङ्गत्वेन गुणबाधकत्वप्रतिपादनपरभाष्यासङ्गतेः।

ननु शब्दकृतान्तरङ्गबहिरङ्गभावस्य प्राधान्यं, शब्दशास्त्रे तस्य प्राधान्यात्, अर्थकृतस्य तु गौणत्वम्। एवञ्च प्रधानान्तरङ्गगुणदृष्ट्या यणोऽसिद्धत्वान्न संज्ञाकृतबहिरङ्गत्वाश्रयणेऽपि

द्गणोत्थः । ऊनशब्दमाश्रित्येत्यादिभाष्येण च परिभाषायामङ्गशब्देन सप्तम्याद्यन्ततयोपात्तं शब्दरूपं निमित्तमेव गृह्यत इति स्पष्टमेवोक्तम् ।

यत्तु कैयटेन तदन्तविधिपक्षे परत्वाद्गुणः प्राप्नोतीत्युक्तं तत्तूनशब्दमाश्रित्येत्यादिभाष्यासङ्गत्या चिन्त्यम् । वलि लोपेऽन्तरङ्गपरिभाषा न प्रवर्तत इति तु न युक्तम् । तत्सूत्रे भाष्ये एव वव्रश्चादिषु लोपातिप्रसङ्गमाश-

भैरवी ।

*यणा बाधितत्वादिति* । बाधकाबाधितप्रसङ्गस्य नित्यत्वसाधकत्वादिति भावः । कैयटोक्तार्थे भाष्यविरोधमप्याह—*ऊनेत्यादि । सप्तम्याद्यन्तेति* । अत्रादिना षष्ठ्यन्तशब्दोपात्तातिरिक्तस्य ग्रहणं, न तु षष्ठ्यन्तशब्दोपात्तस्य, कार्यिणो निमित्तत्वेन अनाश्रयणात् । पदत्वाश्रयसमुदायस्यापि ग्रहणं, तेन परिभाषाज्ञापकपरभाष्यस्यापि सङ्गतिः। *परत्वाद्गुण इति। तदा द्वयोस्तौल्यादिति भावः । *भाष्येति* । अन्तरङ्गत्वबहिरङ्गत्वबोधकभाष्येत्यर्थः। गौधेरः पचेरन्नित्यत्रोक्तशङ्कायामन्यकृतसमाधानं दूषयति । *वलिलोप इत्यादिना* । *तत्सूत्रे-

तत्वप्रकाशिका।

भाष्यासङ्गतिरित्याह—*तदन्तविधौ यादृशस्येति* । *लक्षणया तथास्त्विवति* । अन्तर्भूतसंख्या अङ्गानि यस्येति विग्रहे शब्दमर्यादयाऽपि लाभसम्भवः ।

ननु मुख्यगौणबहिरङ्गान्तरङ्गभावस्य तथा सति लाभासम्भवाद्भाष्यमसङ्गतं स्यात अतस्तथानोपात्तमत आह—*अत एवेति* ।

ननु रीतिद्वयस्य सम्भवादविशेषान्नोक्तमत आह—*प्राथम्यादिति* । *गुणात्पूर्वमूठिति* । ननु तदन्तविधिपक्षे यणो बहिरङ्गत्वेन कृताकृतप्रसङ्गित्वाद्गुणस्यापि नित्यत्वेन ऊठ्गुणयोः प्राप्तौ परत्वाद्गुण एव तत ऊठि इकोऽभावाद्यणः प्राप्तिरेव नास्ति इति ऊनशब्दमाश्रित्येति भाष्यमसङ्गतं स्यात्, मम तु संज्ञाकृतबहिरङ्गत्वेन कृताकृतप्रसङ्गित्वाभावान्न गुणस्य नित्यत्वमितिभाष्यं सम्यगेवेति चेन्न, ऊठि ऊकारे अन्यथा वकारे परतः विधानेन गुणस्यानित्यत्वात्, शब्दान्तरे प्राप्नुवन् विधिरनित्यो भवतीति परिभाषणात । नच गुणे शब्दान्तरात् प्राप्नुवत ऊठोऽप्यनित्यत्वमितिवाच्यम्, लक्ष्यानुरोधेन तस्येहानाश्रयणात् ।

ननु तव मते 'सिऊ न' इति समुदायस्योभयत्राश्रयणाद्घटकत्वघटितत्वाभावेन भाष्यमसङ्गतं स्यादत आह—*ऊनशब्दमाश्रित्येति* । *सप्तम्याद्यन्ततयेति* । बहिरङ्गत्वेन जिघृक्षितशास्त्रघटकयत्किञ्चित्पदेनाश्रीयमाणशब्दसमुदायघटकपर्याप्तोपस्थितीयप्रकारतासमानाधिकरणविषयताप्रयोजकसप्तम्यन्तपञ्चम्यन्तान्यतरपदघटितशास्त्रत्वमन्तरङ्गत्वम् । बहिरङ्गत्वेनाभिमतं शास्त्रम् "इको यणचि" इति तेनाश्रीयमाणशब्दसमुदाय ऊन इति तद्घटकः 'न' इत्येतत्पर्याप्तोपस्थितीयप्रकारतासमानाधिकरणविषयताप्रयोजकं सप्तम्यन्तपदमार्धधातुक इति तत्पदघटितत्वम् "पुगन्तलघूपधस्य च" इतीत्यस्य । एवमन्यत्रापि बोध्यम् ।

यद्वा बहिरङ्गत्वेन जिघृक्षितशास्त्रविशिष्टशास्त्रभिन्नत्वमन्तरङ्गत्वम् । शास्त्रे वै० स्वीयोद्देश्यतावच्छेदकत्वेनाश्रीयमाणशब्दसमुदायघटकनिमित्तकत्वाभाववत्व स्वघटकौपश्लेषिकाधिकरणबोधकसप्तम्यन्तपञ्चम्यन्तान्यतरपदप्रयोज्योपस्थितीयविषयतापर्याप्त्यधिकरणीभूतसमुदायघटकपर्याप्तोपस्थितीयप्रकारतासमानाधिकरणविषयताप्रयोजकसप्तम्यन्तपञ्चम्यन्तान्यतरपदघटितत्वाभाववत्वैतदुभयसम्बन्धेन । एवञ्च प्रकृते "ऊकाल" "वाह ऊठ्" इत्यादौ च न काप्यनुपपत्तिः । * न प्रवर्तते इति * । एतत्फलन्तु ज्ञापयति, यातिः, पचेदित्यादि । अत्र णिज्निमित्तकस्य पुकः किन्निमित्तस्यातो लोपस्य प्रकृतिप्रत्ययोभयापेक्षत्वेन बहिरङ्गस्येयादेशस्य चान्तर्भूतनिमित्तकत्वेनान्तरंगे वलि लोपे नासिद्धत्वम् । एवमक्षद्यूरितिभाष्योदाहृते ऊठोऽसिद्धत्वाद्वलि लोपो न । 'नाजानन्तर्ये' इत्यस्यान्तरंगे कृते इत्यर्थे मानाभावो

ङ्ग्योपदेशसामर्थ्यान्न। न च वृश्चतीत्यादौ चारितार्थ्यम्, बहिरङ्गतया संप्रसारणस्यासिद्धत्वेन पूर्वमेव तत्प्राप्तेरिति भाष्योक्तेः।

यत्तु नलोपस्य षट्संज्ञायामसिद्धत्वात्पञ्चेत्यत्र "न षट्" (४-१-१०) इति निषेध इति तच्चिन्त्यम्। नलोपस्य हि पदसंज्ञासापेक्षत्वेन बहिरङ्गत्वं वाच्यम्, तच्च न। संज्ञाकृतबहिरङ्गत्वस्यानाश्रयणात्। पञ्चेत्यत्र निषेधस्तु स्त्रियां यत् प्राप्नोति तन्नेति व्याख्यानसामर्थ्येन भूतपूर्वषट्त्वमादायेति बो-

भैरवी।

ति*। "लोपोव्योः" इतिसूत्रेत्यर्थः। *तत्प्राप्तेः*। वलोपप्राप्तेः उक्तकैयटोक्तिवत् "नलोपः सुप्स्वर" इतिसूत्रस्थकैयटोक्तमपि खण्डयति। *यत्त्विति। *तच्चिन्त्यमिति*। नलोपस्य बहिरङ्गत्वसाधकाभावादिति शेषः। तमेवाह-*नलोपस्येत्यादिना*। नन्वेवं पञ्चेत्यत्र टाबाप-

तत्त्वप्रकाशिका।

गौरवञ्च। अत्र मानन्तु चेलेः क्नोपेरितिनिर्देशः, स्वरदीर्घयलोपेष्वित्यत्र यलोपग्रहणञ्च। तद्धि वाय्वोरित्यत्र वलि लोपे स्थानिवत्वाय, वलि लोपेऽन्तरङ्गपरिभाषाप्रवृत्तौ तथैव सिद्धेः तद्वैयर्थ्यं स्पष्टमेव। * नयुक्तमिति *। न च "स्वरदीर्घ"इति वार्तिके यलोपग्रहणं व्यर्थमिति वाच्यम्, धर्मिग्राहकमानेन परिभाषायामागमादेशातिरिक्तस्यैव निमित्तस्याङ्गपदेन ग्रहणेन प्रकृते वलि लोपस्यान्तरङ्गत्वाभावात्। "भविष्यति गम्यादयश्च" इति निर्देशेन प्रकृतिप्रत्ययनिमित्तकस्यान्तरङ्गे कर्तव्येऽसिद्धत्वं नेति कल्पनेनादोषाच्च। अतएव मथ्नातीत्यादौ "अनिदिताम्" इति नलोपसिद्धिः। अन्यथा श्नाप्रत्ययस्यासिद्धत्वात्तन्न स्यात्। वस्तुत इदमेव युक्तं वलि लोपे उक्तधर्मिग्राहकमानेन जातबहिरङ्गासिद्धत्वाभावस्यैव कल्पनान्नैतत्सूत्रस्थभाष्यविरोधः। "लोपो व्योः" इत्यत्र वकारग्रहणस्य भाष्ये प्रत्याख्यानाद्यकारविषये न प्रवर्तते इति कल्पनाद्वा। न च सम्प्रसारणाविषये वृश्चेत्यत्र लोपो दुर्वार इति वाच्यम्? पदसंस्कारपक्षेऽपि वृश्चतीत्यत्र विकरणात्प्राग्वलोपप्राप्त्या, वकारोच्चारणसामर्थ्याद्वृश्च धात्ववयववकारातिरिक्तस्य "लोपो व्योः" इत्यत्र वकारस्य ग्रहणेनादोषात्। अत एव पचेदिति सिध्यति। अन्यथा यास्थानिकयादेशस्यासिद्धत्वेन यलोपो न स्यात्।

केचित्तु वलि लोप इत्यत्र"न पदान्त" सूत्रस्थवलोपग्रहणम् ज्ञापकम्, अन्यथा यायायति इति समुदायसापेक्षत्वेन बहिरङ्गतयाऽसिद्धत्वादन्तरङ्गवलिलोपस्याप्राप्त्या तदसङ्गतिः स्पष्टैवेति वदन्ति। तन्न, ण्यन्तादय्धातोः क्विपि णिलोपे यलोपे च अ इति सिध्यति, तत्र वलि लोपे णिलोपस्य स्थानिवत्वप्रतिषेधाय नचारितार्थ्यात्। णिलोपवलिलोपयोस्तुल्यनिमित्तकत्वेन वलि लोपस्यान्तरङ्गत्वाभावात्।

अन्ये तु वरेग्रहणं ज्ञापकम्, न च ज्ञापिते यायावर इत्यत्र प्रकृतिप्रत्ययापेक्षतयाऽऽलोपस्यासिद्धत्वेनालोपाभावेन वरेग्रहणं व्यर्थमेवेति वाच्यम् "आतो लोप" इत्यस्य तदादिपदोपस्थित्या समनिमित्तकत्वात्।

ननु घञर्थकप्रत्ययान्तपिसशब्दस्याशब्देन समासे तत आचक्षाणण्यन्ताद्वरचि णिलोपे गुणे पेस्वर इति सिध्यर्थन्तच्चरितार्थम्, अन्यथा णिलोपस्य स्थानिवत्वाद्गुणो न स्यादिति चेन्न, वरे इत्यस्य वरे लुप्तं न स्थानिवदित्यर्थेन निषेधाप्रवृत्त्या पिस्वर इत्यस्यैवेष्टत्वात्। * षट्संज्ञायामसिद्धत्वादिति*। यथोद्देशे कैयटादिमते षट्त्वस्याल्वृत्तित्वे कार्यकाले विकृतावयवनिबन्धनकार्ये एकदेशन्यायाप्रवृत्त्या नान्तत्वासम्भवेन षट्त्वाप्राप्त्याऽनयाऽसिद्धत्वं तैः स्वीकृतम्, षट्संज्ञायास्संख्यासापेक्षत्वेऽपि पदप्रातिपदिकेति संज्ञाद्वयसापेक्षत्वेन नलोपस्य बहिरङ्गत्वमिति भावः। * व्याख्यानसामर्थ्येनेति *। इदं कार्यकालपक्षे। यथो-

ध्यम् । अत एव कृति तुग्ग्रहणं चरितार्थम् । वृत्रहभ्यामित्यादौ पदत्वनिमित्तकत्वेऽपि नलोपस्य बहिरङ्गत्वाभावात् । भ्यामः पदसंज्ञानिमित्तत्वेऽपि नलोपस्य तन्निमित्तकत्वाभावात् । परम्परया निमित्तत्वमादाय बहिरङ्ग-

भैरवी ।

त्तिः । न च "नलोपः सुप्स्वर" इति निर्वाहः, पदसंज्ञायां नलोपासिद्धत्वस्य तत्राफलत्वस्य भाष्ये कथनादत आह—*पञ्चेत्यत्रेति* । *अत* *एव* । अर्थकृतबहिरङ्गत्वस्यानाश्रयणादेव । *अभावादिति* । संज्ञाकृतबहिरङ्गत्वानाश्रयणस्य प्रागुक्तत्वादिति ।

ननु पदसंज्ञाद्वारा पदत्वस्य भ्यान्निमित्तकत्वमस्त्वित्यत आह—*परम्परयेति* । नलोपे भ्याम इति शेषः । यदि परम्परया निमित्तस्याश्रयणं स्यात् तदा कृतितुग्ग्रहणं व्यर्थमेव स्यादिति भावः ।

ननु परम्परया निमित्तत्वमप्रसिद्धमनुमतमितिन्यायेन भाष्यकारसम्मतमेव, एवञ्च कृतितुग्ग्रहणं न कार्यमिति लाघवं भवति, अतएव भसंज्ञायाः परनिमित्तकत्वमभिप्रेत्यैव वक्ष्यमाण-

तत्त्वप्रकाशिका ।

दुद्देशे तु लुगर्थं जातं पदत्वमादायैवानुमानिकस्थानिवद्भावेन सिद्धम् ।

ननु प्रियपञ्चा द्रौपदीत्यत्र ङीब्डाब्निषेधेन व्याख्यानं चरितार्थमिति चेत्सत्यम्, "अजाद्यतष्टाप्" ऋचि पादः, अन्यतरस्यां ङीप् पाद इति वर्तते ऋचीति निवृत्तन्तत 'ऋन्नेभ्य' इति न्यासेन सिद्धे ङीप्प्रकरणमध्ये पुनष्टाप्करणेन टापो निषेध इति बोधनेन भूतपूर्वपदत्वमादाय तत्प्रवृत्तेस्सूपपादत्वात् ।

किञ्च स्थानिवद्भावेन यथोद्देशस्यैवाश्रयणान्निषेधोपपत्तेः सङ्केतसम्बन्धेन पदत्ववद्वत्वस्य पदत्वस्याल्पवृत्तिधर्माभावात् । अत एव पदसंज्ञा नलोपासिद्धत्वस्य न फलमिति पदसंज्ञासूत्रे भाष्योक्तं सङ्गच्छते ।

किञ्च "न षट्" इतिसूत्रे "डाबुभाभ्याम्"त्यत्रानुवर्त्य वाक्यभेदेन व्याख्यानेनाद् षाच्च । * नलोपासिद्धत्वस्य तत्राफलत्वस्य भाष्ये कथनादिति * । तत्रहि "संज्ञाविधौ किमुदाहरणम्? दण्डिदत्तौ दत्तदण्डिनौ, नात्र घित्वाद्दण्डिन एव पूर्वनिपातः, ननु च यदा घित्वं तदा पूर्वनिपातः, यदा पूर्वनिपातस्तदा नलोपे घित्वमितीदमयुक्तम्, संज्ञाग्रहणसामर्थ्येन यस्य पूर्वपदत्वे घित्वं भावि तस्य पूर्वनिपात इत्युक्तम् । यदि पदसंज्ञायां फलं स्यात्तदा सामर्थ्योपपादनमसङ्गतं स्यात् । तस्माद्घिसंज्ञायामेव तत्प्रवर्तत इति भावः । फलं त्वस्य द्युकामाविति । नचैतावन्मात्रार्थत्वे "द्वन्द्वे घि"इत्यनन्तरं 'दिव' इति पठित्वा शब्दस्वरूपविशेष्यकतदन्तविधिना परमद्युकामावित्यादिसिद्धेः संज्ञाग्रहणं न कार्यमितिवाच्यम् ग्रामणिपुत्राविस्यत्र पूर्वनिपाताय संज्ञाग्रहणस्यावश्यकत्वात् ।

किञ्च गुरुच्छत्रमित्यत्र पूर्वनिपाते तुकि घित्वासम्भवादनियमः सिध्यति, उक्तार्थानाश्रयणे नियमापत्तिः । अत एवाज्ग्रहणेन "नलुमता" इत्यस्यानित्यत्वज्ञापनपरं भाष्यं सङ्गच्छते । अन्यथाऽलुकि वारिपुशय इत्यत्र सम्बोधने नुमोऽसिद्धत्वेन गुरुसंज्ञायां "गुरोरनृत" इति प्लुतः स्यात् । तद्वारणायाज्ग्रहणस्यावश्यकत्वेन भाष्यमसङ्गतं स्यात् । *भूतपूर्वपदत्वमादायेति * । पूर्वं भूतं स्थितं पदत्वं स्थानिवद्भावेनादायेत्यर्थः । *चरितार्थमिति* । न च वृत्रहधनमित्यत्रापरनिमित्तकत्वेन पदत्वस्यान्तरङ्गत्वं शङ्क्यं बहिर्भूतसुब्निमित्तकपदत्वापेक्षनलोपापेक्षया किब्निमित्तकतुकोऽन्तरङ्गत्वाहानेः । * वृत्रहभ्यामिति * । वृत्रेति पृथक्पदम् । तेन न समुदायापेक्षबहिरङ्गत्वाशङ्का । हभ्यामित्यत्र वर्तमाने क्विप् । तेन भ्रूणेतिनियमाप्राप्तिः ।

न च त्रिपाद्यां बहिरङ्गपरिभाषायाऽप्रवृत्त्या कथमेतदितिवाच्यम् ? कृतितुग्ग्रहणाभावे

त्वाश्रयणे तु न मानम्। ध्वनितं चेदं "नलोपः सुप्" ( ८-२-२ ) इति सूत्रे भाष्य इति तत्रैव भाष्यप्रदीपोद्योते निरूपितम्।

अन्तरङ्गे कर्त्तव्ये जातं तत्कालप्राप्तिकं च बहिरङ्गमसिद्धमित्यर्थः।

भैरवी।

परिभाषाज्ञापनस्यापि सङ्गतिर्भवतीत्यत आह—*ध्वनितमिति*। तत्र हि "वृत्रहभ्याम्" इत्यत्र कृतितुग्ग्रहणस्य प्रयोजनमुक्त्वा, तुग्विधौ चोक्तम्, किमुक्तम् "सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य" इति, ग्रामणिकुलमित्यादौ तुगभावायावश्यिकयाऽनयैव परिभाषया वृत्रहभ्यामित्यस्यापि सिद्धौ कृतितुग्ग्रहणं न कार्य्यम्। ग्रामणिकुलमित्यत्राजन्तत्वं ह्रस्वत्वस्य निमित्तं यदि तस्मिन् कृते तुक् स्यादवयवावयवश्च समुदायावयवो नेतिपक्षस्तदा तादृशसन्निपातविघातः स्वष्ट एवेत्याशयः। अत्र भाष्यकृता सन्निपातपरिभाषया वृत्रहभ्यामित्यस्य सिद्धिमुक्त्वा कृतितुग्ग्रहणस्याकर्त्तव्यतोक्ता, न तु बहिरङ्गासिद्धत्वेन, विभक्तेः सं॰ां प्रति निमित्तत्वेऽपि नलोपं प्रत्यनिमित्तत्वं, परम्परया निमित्तत्वञ्चानाश्रितं, तेनेदं ध्वनितमित्यर्थः। तत एकदेश्याह इदं तर्हि प्रयोजनम्। कृतीति वक्ष्यामि। इह माभूत्। वृत्रहच्छत्रम्। तुगभावो माभूदित्यर्थः स एव आह—नियमार्थमेतद्भविष्यति। कृल क्षण एव तुङ्माभूत्, छलक्षणो यथा स्यात्, अत्रापि प्रत्ययलक्षणेन विभक्तिपन्निपातनिमित्तं यत्पदं तस्य नलोपे निमित्तत्वे यादृशसन्निपातः पदसंज्ञायां निमित्तं तस्य विघातस्तुकि सति स्यादिति परम्परामाश्रित्य यादृशसंन्निपातः पदसंज्ञायां निमित्तं तस्य विघातस्तुकि सति स्यादिति परम्परामाश्रित्य सन्निपातपरिभाषयैव कृतं स्यादित्याशङ्क्योत्तरमुक्तं न ह्येषः सन्निपातलक्षणः, प्रत्ययलक्षणेन सुबन्तस्य यत्पदत्वं तन्निमित्तकत्वाभावात्। एवञ्च वृत्रहभ्यामित्यत्र नियमानुपयोग इति भावः।

ननु बहिरङ्गपरिभाषया वृत्रहच्छत्रमित्यत्र तुगभावः सिद्ध इति नियम आवश्यक इति चेत्। अत्र कैयटः—पदत्वमात्रनिमित्तकत्वात् नात्र बहिरङ्गो नलोपः नहि एष इत्यनेन परम्परया निमित्तत्वे मानाऽभाव इति स्पष्टमेव प्रतीयते इति। परिभाषाज्ञापनावसरे तु ज्ञापकपरभाष्यप्रामाण्यात्पदसंज्ञाद्वारा तत्र विभक्तिनिमित्तकत्वमाश्रीयत इति भावः।

वस्तुतस्तु न सामान्यतोऽर्थनिमित्तकबहिरङ्गत्वस्यानाश्रयणम् "स्वार्थद्रव्यलिङ्गसंख्याकारकाणां क्रमिकत्वात् "येन क्रमेण ज्ञानन्तेन क्रमेण तद्बोधकशब्दप्रादुर्भावस्यान्तरङ्गबहिरङ्गभावेन स्वीकारात् तथा बहिर्भूतसाधनार्थकप्रत्ययनिमित्तकद्वित्वापेक्षयाऽन्तरङ्गार्थनिमित्तकः सुडादौ भवतीति ग्रन्थस्तथा "निपात एकाजनाङ्" इति सूत्रे एकाजिति कर्मधारयो न बहुव्रीहिर्वर्त्तिपदार्थप्रधानत्वेनान्तरङ्गत्वादिति ग्रन्थश्चोज्जीवितो भवति। तथा "वर्णो वर्णेन" इतिसूत्रस्थोक्तभाष्यमप्यामश्रस्येनोपपद्यते किन्तु अन्तरङ्गो बहिरङ्गश्चेति प्रतिद्वन्द्वभाविनावेतावर्थाविति "खरवसानयोः" इति सूत्रस्थभाष्यप्रमाण्येनोभयोः शब्दयोस्तुल्यत्वस्य न्यायसिद्धतया यत्र बहिरङ्गशास्त्रत्वेनाभिप्रेतमर्थनिमित्तकमन्तरङ्गशास्त्रञ्च न तथा किन्तु शब्दनिमित्तकमेव तत्रैतस्याः परिभाषाया अप्रवृत्तिर्यत्र तूभयोरप्यर्थनिमित्तकत्वेन तत्वन्तत्र तु प्रवर्त्तत एवेति कल्प्यते। अत एव मनुष्योऽयम्प्रातरुत्थायेत्यादिरीत्या साधितायां बहिरङ्गान्तरङ्गयोरन्तरङ्गं बलीय इति परिभाषाया अस्यामेवान्तर्भावोऽप्युपपद्यत इति दिक्।

एतावता प्रबन्धेन पदार्थं निरूप्य वाक्यार्थं वर्णयति—*अन्तरङ्ग इति*। ननु जाततत्कालप्राप्तिकबहिरङ्गस्यैवासिद्धत्वमनेन चेद्बोध्यते तदा "लोपो व्योः" इतिसूत्रस्थप्रागुक्तभाष्यविरोधः। अत्र ह्युपदेशोत्तरं वलोपस्य प्राप्तिस्तदानीञ्च सम्प्रसारणस्य जातत्वतत्कालप्राप्ति-

तत्त्वप्रकाशिका।

तुकि नलोपस्यासिद्धत्वाभावेनाप्रवृत्तिबीजाभावात्। *जातमिति*। ननु मास्तु जातासिद्धत्वे

तत्त्वप्रकाशिका ।

फलाभावात् "वाह ऊठ्" सूत्रस्थोठ्ग्रहणस्य ज्ञापकत्वप्रतिपादनपरं भाष्यन्त्वेकदेश्युक्तिः । न च पचावेइमिति फलम्, अन्यथा एत ऐइत्यैत्वं स्यादितिवाच्यम् । 'इत ऐ' इति न्यासेनादोषात् । भवानीत्यत्र तु नास्य प्रवृत्तिः, "मेर्नि" इतीकारोच्चारणसामर्थ्यात, गौरवाद् मेनै इति न कृतमिति चेत्तर्हि सामर्थ्यादित्यस्य तक्रन्यायेनैतदपवादत्वादित्यर्थात ।

यत्तु "मोन" इति कर्तव्ये "मेर्नि" इतीकारोच्चारणसामर्थ्याद्भाव इति, भवाम इत्यत्र तु न दोषः, "सेह्यपिच्च" इति साहचर्येणैकवचनसम्बन्धिन एव ग्रहणादिति तन्न "आदेः परस्य" इत्यस्याप्रवृत्त्या मकारस्य नकारादेशासम्भवात् ।

न च पचावेदमित्यत्र "आमेत" इत्यस्य दुर्वारत्वम् तथाऽऽचारक्विबन्तादशब्दाल्लुटि कर्मव्यतिहारे उत्तमपुरुषे इटि निष्पन्नेन एशब्देन पचावेत्यस्य "आख्यातमाख्यातेन" इति समासे पुनः सुशब्देन समासे नपुंसकह्रस्य सुपचावि इत्यत्रैत्वापत्या तथान्यासस्य दुष्टत्वमिति वाच्यम् ? प्रतिपदोक्तकारग्रहणेनादोषात् । न च पचाव भवाव एधु कर्मसु तेभ्यः पचावभवावेभ्य इत्यत्र प्रतिपदोक्तै ारस्य सत्वेनैत्वापत्तिरितिवाच्यम्, "टित आत्मनेपदानां टेरे" इत्यत आत्मनेपदानामित्यनुवर्त्यात्मनेपदघटितशास्त्रसम्बन्धिन एवैत्वविधानात् । न च व्यवधानात्कथमनुवृत्तिरिति वाच्यम्, "ब्रुवः पञ्चानामादित आहो ब्रुवः" "टित आत्मनेपदानां टेरे," "थासः से," "लिटस्तझयोरेशिरेच्" "लोट आमेतः" "सवाभ्यां वामौ," "उत्तमस्य एत ऐ, पिच्च अत्रोत्तमस्य सम्बध्यते ततः एतुन, लङ्वत्, एधः, "सेह्यपिच्च" "वा छन्दसि," "मेर्नि," "लोटोडाटौ," इति सूत्रव्यत्यासेन मण्डुकप्लुत्या वा अनुवृत्तेर्दुर्वारत्वात् । नवादिदपदित्यत्र "णौचङ्" इति ह्रस्वे "अत उपधाया" वृद्धिर्नेति फलम्, न च तपरकरणसामर्थ्याद्रूपग्राहस्त्वे वृद्धिर्नेतिकल्पनेनादोषः, इश्चाश्चेतिसमाहारे यम्, यम्पालयतीति यपालः, तस्यापत्यं स्त्री ऐयपाली, सा भार्या यस्य स ऐयपालभार्य इत्यत्र तपरस्य सफलत्वात्, अन्यथाऽगि पावकाकारस्य वृद्धौ "वृद्धिनिमित्तस्य"इतिनिषेधाद्पुंवद्भावो न स्यात्, यदि चात्राल्लोपगिलोपयोः स्थानिवत्त्वान्न वृद्धिरित्युच्यते तर्हि यदासस्यापत्यमैयदासी, सा भार्या यस्य स ऐयदासभार्य इत्यत्र चरितार्थत्वमवेहि इति वाच्यम् अदुपधाद्विहिते ञ्णितीत्यर्थनादोषात । अत एव युवानमाचष्टे कनयतीति भाष्यप्रयोगः सङ्गच्छते । नचैवं मारयतीति न स्याद्, इदुदुपधेभ्यो णिचोऽनभिधानात् । नच जहारेत्यत्र "ऋच्छत्यृताम्" इति गुणे, अभाजि, राग इत्यत्र नलोपे वृद्धिर्नेस्यादिति वाच्यम्' "ऋच्छत्यृतां," "भञ्जेश्च" चिणि, घञि च भावकरणयोरित्यादौ विषयसप्तम्याश्रयणेनादोषात् ।

यत्तु "नाग्लोपि" इतिसूत्रे शास्ग्रहणं ज्ञापकमुपधाह्रस्वनिष्पन्ने वृद्धिर्नेति, अन्यथा "णौचङि"इति ह्रस्वेऽपि वृद्धावशशासदितिस्यादेवेति तन्न क्विबन्तशासशब्दस्य एशब्देन समासे तत आचष्टे णिचि टिलोपे लुङि चङि "क्लिलुगुपधात्वचङ्परनिर्ह्रासेषु" इति स्थानिवत्त्वप्रतिषेधाद्भ्रमे टिलोपस्य स्थानिवत्त्वादूवृद्धेरप्राप्तेरशशमदितिप्राप्ते तद्वारणाय शासग्रहणस्य चरितार्थत्वात् । नाप्यसूसुददित्यत्र "णौ चङि" इतिह्रस्वस्यासिद्धत्वाल्लघूपधगुणाभावः फलम् क्नोः क्त्वेन प्रत्ययोपदेशकालिकलघूपधस्य गुणविधानात पुगन्तसार्वधातुकसाहचर्यादार्धधातुके परतः स्वोत्तरप्रत्ययानिमित्तकस्यैवेको गुणविधानाच्च ।

न चैवं तोतोर्ति दोधोर्ति इत्यादौ गुणो न स्यात्, यङ्लुकश्छान्दसत्वात्, न च तुर्वीधातोः वनिपि तोर्वेति न स्यात्, उपदेशसामर्थ्याद्वलोपो नेतिवकारप्रत्याख्यानपरभाष्यप्रामाण्यात्तस्यानभिधानात् । एवं जागृढ इत्यत्र सम्प्रसारणस्यासिद्धत्वाद् रुगादयो नेत्यपि फलन्न ऋदुपधो योऽभ्यासस्तस्य रुगादय इत्यर्थं न तदप्राप्तेः । जगदम्बेत्यत्र ह्रस्वस्यासिद्धत्वान्न टाबित्यपि न फलं सन्निपातपरिभाषया टापोऽप्रवृत्तेः । नच जगदम्बात्रेत्यत्र सवर्णदीर्घस्यासिद्ध-

वृश्चत्यादिषु पदसंस्कारपक्षे समानकालत्वमेव द्वयोरिति बोध्यम् ।

एतेनान्तरङ्गं बहिरङ्गाद्बलीय इति परिभाषान्तरमित्यपास्तम् । एनामाश्रित्य विप्रतिषेधसूत्रे भाष्ये तस्याः प्रत्याख्यानाच्च । अन्तरङ्गशास्त्रत्वमस्या लिङ्गम् ।

भैरवी ।

कत्वरहितेनासिद्धत्वासम्भावादत आह—*वृश्चत्यादिष्विति* । आदिना पट्व्या मृद्व्येत्यस्य सङ्ग्रहः । *पदसंस्कारपक्ष इति* । एतेन पदसंस्कारपक्षाभिप्रायकमेव तद्भाष्यमतो न तद्विरोधः । *एतेन* । अस्याः परिभाषाया उक्तार्थकरणेन । ननु वक्ष्यमाणज्ञापकसाजात्याज्जातस्यैव बहिरङ्गस्यानेन असिद्धत्वविधानं युक्तमत आह—*एनामिति* । एवञ्च विप्रतिषेधसूत्रीयबहिरङ्गादन्तरङ्गं बलीय इति परिभाषाखण्डनपरभाष्यप्रामाण्येन तत्कालप्राप्तिकमित्यंशोऽपि स्वप्रमाण एव जात इत्यंशस्तु ज्ञापकसाजात्यात्कल्प्यत इति बोधयितुं ज्ञापकं दर्शयिष्यति । परिभाषाया लिङ्गवत्त्वनियमाल्लिङ्गं तावदाह—*अन्तरङ्गशास्त्रत्वमिति* । कैयटादिसम्मता-

तत्त्वप्रकाशिका ।

त्वान्न पुनर्ह्रस्व इति फलमितिवाच्यम् लक्ष्ये लक्षणन्यायेन पुनर्ह्रस्वाप्रवृत्तेः । नच दीर्घस्य तन्मात्रोद्देश्यकविकाराभावेन तल्लक्ष्यत्वाभाव इति वाच्यम् । विभक्तिस्थानिकैकादेशस्थले एव तथा स्वीकारात् । अत एव ऊखतुरितिप्रयोगः सङ्गच्छते, इति चेन्न, क्विबन्तभूशब्दात्सुपि भुवावित्यत्रोवङोऽसिद्धत्वादूठाऽभावेन सफलत्वात्, न च सत्यप्युठि यणाष्टसिद्धिः, अन्तरङ्गत्वादपवादत्वाच्च पूर्वं सवर्णदीर्घे ततो यणि भ्वावित्यापत्तेः, नचाङ्गत्वात् "ओः सुपि"इति यणि तत्सिद्धिः, 'नभूसुधियोः इति निषेधस्तु साहचर्याद्धल्पूर्व एवेति वाच्यम् ? चक्रकापत्तेर्दुरुद्धरत्वात् । तथाहि पूर्वं पूर्वाकार "इको यणचि"इति प्राप्नोति तं सवर्णदीर्घःबाधते तमाङ्गत्वादोःसुपीति तमन्तरङ्गत्वादिको यणचीति । स्वायम्भावमित्यत्रोऽन्त्याद्गत्वाद्गुणं बाधित्वावङि गुणे स्वायम्भोवमित्यापत्तेश्च । "च्छ्वोः" इत्यत्र छसाहचर्यात्प्रत्ययानिमित्तकस्य वस्य ग्रहणेन न दोष इति तु न वक्तुं शक्यते क्विबन्तेषधातोरशब्देन समासे तत आचारक्विपि शतरि शपा सहैकादेशे इषादित्यत्र छत्वे क्विपः प्रत्ययलक्षणेन शत्वे इशादित्यत्र प्रत्ययनिमित्तकस्य छत्वस्य सत्वात्, पररूपस्य स्थानिवद्भावस्तु न "नपदान्त"इति निषेधात् । घञर्थकप्रत्ययान्तादियशब्दादाचारक्विबन्ताण्णौ दियतीत्यस्य च फलत्वात । अन्यथा क्विपमादाय यलोपः स्यात् ।

वस्तुतस्तु असूपुददित्यपि फलम्बोध्यम् क्नोः कित्करणेन प्रत्ययावयवप्रकृत्यवयवेतदुभयारब्धसंयोगनिमित्तकगुरुसंज्ञा लघुसंज्ञां न बाधत इत्येव कल्प्यते । ननु प्रत्ययोपदेशकालिको यो लघूपध इति, असुस्रुवदित्यत्र प्रत्ययोपदेशकालिकलघूपधत्वाभावेन गुणाप्राप्त्या, लघुपधगुणादन्तरङ्गत्वादुवर्ङिति भाष्यासङ्गत्यापत्तेः । एवं सुवावित्यत्रोवङोऽसिद्धत्वादूठ् नेति बोध्यम् । *अन्तरङ्गशास्त्रत्वमस्यां लिङ्गमिति* । "सामर्थ्यं सर्वशब्दानां लिङ्गमित्यभिधीयते" इत्यभियुक्तोक्तेः शब्दसामर्थ्यं लिङ्गम्, तदेव परिभाषाया अङ्गभावे निमित्तम् । तच्चान्तरङ्गशास्त्रत्वे एव इति तत्रैव श्रौतकल्पनया प्रवर्तते, नतु बहिरङ्गशास्त्रत्वे नाप्यन्तरङ्गत्वे । अत एवागच्छ पयोऽद् पयोद इत्यादावुत्वदृष्ट्या प्लुतस्यासिद्धत्वं भाष्योक्तं सङ्गच्छते । अन्यथा बहिरङ्गस्य प्लुतस्य त्रिपादीस्थतया परिभाषाया अप्रवृत्त्या परत्वात्प्लुत एव स्यादुत्वदृष्ट्या प्लुतस्याश्रयत्वेन सिद्धत्वात् । अत एव पूर्वत्रासिद्धमित्यनेन त्रैपादिकान्तरङ्गस्य शास्त्रत्वेन रूपेणासिद्धतया न तत्र परिभाषाप्रवृत्तिरन्यथाशास्त्रत्वेनासिद्धावपि तत्प्रवृत्तिर्दुर्वारा स्यात् ।

प्राञ्चस्तु अन्तरङ्गत्वमेवास्याः प्रवृत्तौ निमित्तम् त्रिपाद्यामियं प्रवर्तत एव । अत एव नार्कुटः कार्त्तिः सुध्युपास्यः नार्मत इत्यादीनां सिद्ध्यर्थम् "विसर्जनीयोऽनुत्तपदे""निष्ठान्तत्वम-

इयं च त्रिपाद्यां न प्रवर्त्तते त्रिपाद्या असिद्धत्वात् । अस्याश्च "वाह ऊठ्" सूत्रस्थमूठ्ग्रहणं ज्ञापकमित्येषा सपादसप्ताध्यायीस्था । अन्यथा संप्रसारणमात्रविधानेन लघूपधगुणे "वृद्धिरेचि" (६-१-८८) इति वृद्धौ विश्वौह इत्यादिसिद्धेस्तद्वैयर्थ्यं स्पष्टमेव । सत्यां ह्येतस्यां बहिरङ्गसम्प्रसारणस्या-

भैरवी ।

मर्वाचीनोक्तिं खण्डयितुं सिद्धान्तं तावदाह—*इयञ्चेति* ।

नन्वस्याः सपादसप्ताध्यायीस्थत्वे एतद्दृष्ट्या त्रिपाद्या असिद्धत्वं सम्भवति तदेव तु कथमत आह—*अस्याश्चेति* । एवञ्च सपादसप्ताध्यायीस्थज्ञापकज्ञाप्यत्वात्सपादसप्ताध्यायीस्थत्वमत्र सिध्यति । *अन्यथा* । एतत्परिभाषाभावे । *सम्प्रसारणेति* । "वसोः सम्प्रसारणम्" इतिसूत्रात् सम्प्रसारणपदानुवृत्त्येत्यादिः । *लघूपधगुण इति* । पूर्वरूपोत्तरं व्याश्रये लघूपधगुणे । *तद्वैयर्थ्यम्* । ऊठ्ग्रहणवैयर्थ्यम् । ननूड्विधानाभावे प्रष्ठोहः प्रष्ठौहेत्यत्रा "उडिदम्" इतिस्वरो न स्यादिति चेदत्राहुः, "उडिदम्" इति सूत्रे वूडिदमिति पठित्वा व उरितिषष्ठीसमासे वुश्च ऊठ् चेति द्वन्द्वेन स्वरस्य सिद्धेः । वकारपाठफलं तु पृधातोः क्विपि पुरः पुरेत्यत्र तस्याप्रवृत्तिः । न चैवमपि वप्धातोः क्विपि उपेत्यत्र प्राप्नोतीति वाच्यम् । ऊठ्साहचर्य्येणेणन्ताङ्गोद्देश्यकस्यैव वोर्ग्रहणात् । उठ्युपधाग्रहणमिति वार्त्तिकेऽपि वुठ् इति पाठ्यम् । तेन परस्य विभज्यान्वाख्यानमितिपक्षे ह्वेञः क्विपि हुवो हुवेत्यत्र न तस्य प्रवृत्तिः । सम्प्रसारणपूर्वत्वस्य नित्यत्वात् पूर्वमेव प्रवृत्त्यानुपधात्वात् स्वराप्रवृत्तेः । न चैवमपि वहधातोः क्विपि सम्प्रसारणे ऊह ऊहेत्यत्र स्वरः प्राप्नोतीति वाच्यम् । उकारसाहचर्य्येणैव यत्र वकारस्योकारविधायकशास्त्रे उद्देश्यतावच्छेदकधर्मस्य साक्षादुपादानं तत्र स्वरप्रवृत्तेरङ्गीकारात् । "वचिस्व" इति सूत्रे यजादिपदेन वहधातोः सङ्ग्रहेऽपि साक्षादुपादानाभावेनोह इत्यादौ तस्याऽप्रवृत्तिः । एवञ्च 'वूठ्युपधाग्रहणम्' इति वार्त्तिकस्याक्षद्युवेति व्यावर्त्यमस्तु । प्राचीनरीत्योठ्ग्रहणस्य ज्ञापकत्वं विघटयति ।

तत्त्वप्रकाशिका ।

वृद्धेः" 'यणःप्रतिषेधो वाच्यः' नृमतौवत्वप्रतिषेधः" इति वार्तिकचतुष्टयमारभ्यान्तरङ्गपरिभाषया प्रत्याख्यातं भाष्ये ।

नवीनास्तु वार्तिकचतुष्टयं कर्तव्यमेवेति वदन्ति निरूपयिष्यते चैतत्पुरस्तात् ।

*व्यावर्त्यमस्त्विति* । विश्वनाथभट्टास्तु वाहष्ठित् वाहष्ठ इति वा न्यासेन सिद्धे "ऊड्-इदम्" इत्यत्र ठिदिदमिति ऊठ्युपधाग्रहणमित्यत्र ठित्युपधाग्रहणमिति च न्यस्य ठिद्विधानारम्भसामर्थ्याच्चित्रङ इव सम्प्रसारणविशिष्टस्य डित्वात्स्वरसिद्धेरूठ्विधानं व्यर्थमेवेत्याहुः ।

त्रिपथगाकारास्तु एकमात्रालाघवेन स्वरविधायके उद्देरपि पाठेन ज्ञापकपरभाष्यप्रामाण्येन वहेः क्विपोऽनभिधानेन वैयर्थ्यमुद्घाटयन्ति ।

यत्तु तेनैव यद्वा ह्रस्व उठ् विधेयः, स्वरविधायके च ठिदिति पाठ्यम् तस्मादूठविधानमन्यार्थमिति ज्ञापकत्वं सम्यगेवेति तन्न पदगौरवेणायुक्तत्वादिति हैमीकारः ।

वस्तुतस्तु मात्रालाघवस्य बलवत्त्वात् यु . मेवात एवेनातोरिकाराकारौ प्रत्याख्यातौ भगवता भाष्यकृता । अक्षद्युवेत्यत्र तु ठित्युपधाग्रहणमितिकरणेनादोषः ।

केचित्तु ऊडिदमित्यत्र उडिदमिति न्यस्य "पुत्येधत्यूठ्सु" "ज्वरत्व" इत्यादौ ह्रस्व एव उठ विधेय इति न काप्यनुपपत्तिरिति वदन्ति तन्न आवयतेः क्विप्युठि वार्णपरिभाषया सवर्णदीघ बाधित्वा गुणवृद्ध्योरवावितिरूपापत्तेः, इष्यते तु औरितीति विश्वनाथभट्टाः ।

यत्तु वश्च वाश्चेतिविग्रहे वलि वलोपेन वौ, उश्च ऊश्चेति द्वन्द्वे ततः षष्ठीतत्पुरुषे वो इति, इदमि अवादेशे वविदमिति स्वरविधायके न्यस्य ववास्थाने यौ दीर्घह्रस्वौ उकारौ ताभ्यां

सिद्धत्वाल्लघूपधगुणो न स्यात् । न च "पुगन्त" ( ७-३-८६ ) इति सूत्रे निमित्तमिका विशेषणमत एव भिनत्तीत्यादौ न गुणः । एवं च "नाजानन्तर्ये" ( प० ५१ ) इति निषेधात्कथं परिभाषाप्रवृत्तिरिति वाच्यम् । प्रत्ययस्याङ्गांश उत्थिताकाङ्क्षत्वेन तत्रैवान्वयात् । पुगन्तेत्यादौ कर्मधारयाश्रयणेन प्रत्ययपराङ्गावयवलघूपधारूपेको गुण इति "इको गुणवृद्धी" (१-१-३) इति

भैरवी ।

*नचेति* । *अत एव*। निमित्तस्येतिविशेषणत्वादेव।*न गुण इति* । येन नाव्यवधानन्यायेनेकवर्णव्यवधान एव प्रवृत्तेरङ्गीकारात् । *एवञ्च* । निमित्तस्येविशेषणत्वे च । *तत्रैव* । अङ्गे एव । एवञ्चाऽन्यानन्तर्याश्रयणाभावः स्फुट एव । *प्रत्ययेति* । सार्वधातुकार्द्धधातुकेत्यर्थः ।

ननु सम्प्रसारणमात्रविधाने प्रौहः दध्युह इत्यादि न सिध्यति । अचि पररूपप्रसङ्गत्वे

तत्त्वप्रकाशिका ।

परायाऽसर्वनामस्थानविभक्तरुदात्तविधानेनेष्टसिद्धिरिति तन्न । "इलोपो व्योः" इतिसूत्रस्थवकारप्रत्याख्यानपरभाष्यविरोधादित्युत्तरावलिकारः ।

सिद्धान्तविदस्तु भाष्यप्रामाण्यात् विश्वौह इत्यत्रोडिदमित्यस्याप्रवृत्तिरेवेति वदन्ति ।

चन्द्रिकाकारस्तु ऊडिदमित्यत्र सवर्णदीर्घणोकारः प्रश्लिष्यते, सच साहचर्यादृकारस्थानिक उपधाभूतो धातुस्थश्च गृह्यते, तेन तस्थुप इत्यादौ नातिप्रसङ्गः । विश्वौह इत्यादौ चाभीष्टस्वरसिद्धिरित्याह—*बहिरङ्गसम्प्रसारणस्येति* । अस्य बहिरङ्गत्वं भत्वस्य पदद्वयाश्रितत्वेन बोध्यम् ।

नच सञ्ज्ञाकृतबहिरङ्गत्वस्य परम्परया वा बहिरङ्गत्वस्यानाश्रयणान्नेदं युक्तमिति वाच्यम् ? भत्वेन निमित्तस्याक्षेपात् । नच परनिमित्तकत्वेन गुणस्यापि बहिरङ्गत्वमिति वाच्यम् । अङ्गपदस्य प्रत्ययपरतः विधानेऽवध्यादिमति शक्तिस्वीकारेणोभयोः परनिमित्तत्वाविशेषात् । *लघूपधगुणो न स्यादिति* । नच सम्प्रसारणस्यासिद्धत्वेऽपि पूर्वरूपस्यासिद्धत्वाभावाद् गुणेनेष्टसिद्धिरिति वाच्यम् "हल" इति ज्ञापकेन सम्प्रसारणवृत्तिधर्मस्य "सम्प्रसारणाच्च" इति पूर्वरूपेऽप्यारोपेण तत्र बहिरङ्गत्वस्य सुवचत्वात् । अत एव हूत इत्यादौ पूर्वरूपेऽपि सम्प्रसारणत्वाद्दीर्घसिद्धिः । अत एव जागृढ इत्यादौसम्प्रसारणस्यासिद्धित्ववत्तस्याप्यसिद्धत्वाद्गुणादिर्न । नच "अचः परस्मिन्" इति स्थानिवद्भावेन ऋदुपधत्वान्नेदं फलमिति वाच्यम् ? अभ्यासकार्ये तदुत्तरखण्डादेशस्य तत्कार्यप्रतिबन्धकीभूतं स्थानिवत्त्वं नेति कल्पनेन तन्निषेधात् । अत एव वसुसंप्रसारणमज्विधौ सिद्धं वक्तव्यमिति वार्त्तिकं सङ्गच्छते । अन्यथा सम्प्रसारणस्याभीयत्वेनासिद्धत्वेऽपि पूर्वरूपस्याद्धित्वाभावेन लोपसिद्धया तदसङ्गतं स्यात् । *उत्थिताकाङ्क्षेति* । अङ्गशब्दस्य प्रत्ययपरतो विधानावध्यादौ शक्तिस्तत्र प्रत्ययस्योत्थिताकाङ्क्षत्वमितिकथञ्चिद्योज्यम् । यथाश्रुतं तु न युक्तम् अङ्गपदार्थस्यपित्रादिपदार्थवत्सनिरूपकत्वाभावात् सङ्केतसम्बन्धेनाङ्गत्वस्यैवाङ्गपदार्थत्वाच्च । नचाङ्गत्वशरीरे पूर्वत्वस्य पतितत्वेनाङ्गत्वं नित्यसाकाङ्क्षमिति प्रत्ययांशे उत्थिताकाङ्क्षतयेतितात्पर्यमिति वाच्यम् ? स्वाव्यवहितपूर्वत्व स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयावयवकत्वोभयसम्बन्धेन प्रत्ययविशिष्टत्वरूपाङ्गत्वस्य देवदत्तस्य पुत्र इत्यादाविवाकाङ्क्षाशान्त्या नित्यसाकाङ्क्षत्वाभावात् । प्रत्ययस्यापि स्व स्वप्रकृत्यन्यतरार्थप्रत्यायकत्वरूपतयोत्थियाकाङ्क्षत्वाभावात् । साकाङ्क्षत्वेऽपि पित्रादेः पुत्र इवाङ्गस्यैव प्रत्यये विशेषणत्वेनाङ्गसम्बन्धिप्रत्ययपरेक इत्यर्थे परिभाषाप्रवृत्तेर्दुर्वारत्वाच्च ।

सूत्रभाष्यसम्मतेऽर्थे भिनत्तीत्यादावदोषाच्च। अकारान्तोपसर्गेऽनकारान्ते चोपपदे वहेर्वाहेर्वा ण्विविच्चावनभिधानान्न स्त एव। वार्य्यूहेत्यादि तूहतेः क्विपि बोध्यम्। धातूनामनेकार्थत्वान्नार्थासङ्गतिः। 'प्रौह' इत्याद्यसाध्वेव वृद्धेरप्राप्तेः। अस्योहस्यानर्थकत्वात् न "प्रादूहोढो" (६-१-८९-३ वा०) इत्यस्यापि प्रवृत्तिः।

न च कार्य्यकालपक्षे त्रिपाद्यामेतत्प्रवृत्तिर्दुर्वारेति वाच्यम्? पूर्वं प्रति परस्यासिद्धत्वान्तरङ्गाभावेन पूर्वस्य तन्निरूपितबहिरंगत्वाभावात्तया तस्यासिद्धत्वप्रतिपादनासम्भवात्।

भैरवी

उकारस्य च गुणाप्राप्तेरिति कथमुट्ग्रहणस्य ज्ञापकतेत्यत आह—*अकारान्तोपेति*। वाहेर्वे-त्यत्र वाशब्दः समुच्चये "वा स्याद्विकल्पोपमयोः" इति कोशात्।

नन्वत्र वाहेर्विजित्यनुचितम्, णिलोपस्य स्थानिवद्भावेन भसंज्ञाक्षिप्तप्रत्ययपरत्वाभावेन सम्प्रसारणाप्राप्ते भसंज्ञया प्रत्ययविशेषाक्षेपश्च आवश्यकोऽन्यथा वाहवाद्शब्दावयववाहशब्दस्य सम्प्रसारणापत्तिः स्यात्, न च विज्ग्रहणं क्विप उपलक्षणमिति 'क्वौ लुप्तमिति" स्थानिवत्त्वस्य निषेधो भविष्यतीति वाच्यम्? तस्य असार्वत्रिकत्वादिति चेन्न, 'बाह्, प्रयत्ने' इत्यस्माद्विजित्यभिप्रायात्। अस्य दन्त्योष्ठ्यादित्वमपरमते प्रसिद्धम् वेह्नवत्।

वस्तुतस्तु प्रष्ठौह आगतं प्रष्ठवाड्रूप्यमिति "विभाषा पूर्वाह्न" इतिसूत्रे भाष्ये प्रयोगाल्लौकिकविग्रहे प्रष्ठौह इत्यस्य दर्शनेन "वहश्च" इति छन्दसीत्यस्यासम्बन्धेन लोपेऽपि ण्विप्रत्ययस्य स्वीकारान्नानुपपत्तिरिति।

ननु यद्यनकारान्तोपपदे तस्यानभिधानं तदा वार्य्यूह इति न स्यादत आह—*वार्य्यूह इत्यादीति*।

नन्वेवं प्रौह इत्यपि तथा स्यादत आह—*प्रौह इति*। *अप्राप्तेरिति*। ऊठोऽभावादिति भावः।

नन्वेवमपि "प्रादूहोढ" इत्यनेन वृद्धिः स्यादत आह-*अस्योहेति*। आशसन्तैकदेशस्येत्यर्थः।
ऊहेत्यकारान्तस्य शसैकदेशाकारेण निष्पाद्यस्य कथञ्चिदप्यर्थवत्वं नास्तीति भावः। यदुक्तं पूर्वत्रेयं त्रिपाद्यान्न प्रवर्त्तत इति, तत्र कैयटोक्तरीतिमाश्रित्य प्राचामुक्तिं खण्डयितुमुपक्रमते। *न चेत्यादिना*। *तया*। बहिरङ्गपरिभाषया तत्रोपस्थिततया। *तस्य*। पूर्वस्थबहिर-

तत्त्वप्रकाशिका।

वस्तुतस्तु "पुगन्त" इत्यस्यैकवर्णव्यवधाने प्रवृत्तावपि "नाजानन्तर्य" परिभाषायां तत्सहने मानाभाव इति नप्राप्तिरितिदिक्। *नानुपपत्तिरिति*। केचित्तु प्रष्ठौह इति रूपं वाह्धातोरपि सम्भवेन भाष्योपपत्तौ लोकेऽपि ण्विप्रत्ययस्य स्वीकारे मानाभाव इत्याहुः।

*परस्यासिद्धत्वादिति*। नच पूर्वत्र कर्तव्ये परस्य "पूर्वत्रासिद्धम्" इत्यनेनासिद्धत्वेऽपि कृते परस्यासिद्धत्वे मानाभावेन कार्तिरित्यादौ वृद्धौ नत्वविधायकस्यासिद्धत्वाभावात् परिभाषाप्रवृत्या वृद्धेर्बहिरङ्गासिद्धत्वेन तत्वाप्रवृत्तिः। अत एवाष्टानामिति प्रतीकस्थशेखरोऽपि सङ्गच्छते। अत एव बहिरङ्गासिद्धत्वेन नृमतौ वत्वप्रतिषेध इत्यादिवार्तिकाणां प्रत्याख्यानमपि सम्यगेवेतिवाच्यम् "नभकुर्छुराम्" इत्यत्र कुर्ग्रहणेन कृते पूर्वस्मिन् परस्यासिद्धत्वस्य कल्पनात्। अन्यथा कुर्यादित्यत्र "अत उत्सार्वधातुके" इत्यत्र तपरकरणेन गुणाभाववद्दीर्घस्यापि वारणसम्भवात्सद्धयर्थः स्यात्। मम तु कृतेऽप्युत्वे दीर्घस्यासिद्धत्वेन तद्ग्रहणं युक्तमेव। अत एव चक्षर्यते इत्यत्र "उत्परस्यात" इत्युति दीर्घः सिध्यति।

न चानया पूर्वस्यासिद्धत्वात्तदभावेन तं प्रति परासिद्धत्वं "पूर्वत्र" ( ८-२-१ ) इत्यनेन वक्तुमशक्यमिति वाच्यम् ? एवं हि विनिगमनाविरहादुभयोरप्यप्रवृत्त्यापत्तेः ।

किंच पूर्वत्रत्यस्य प्रत्यक्षत्वेन तेनानुमानिक्या अस्या बाध एवोचितः । अतः कार्यकालपक्षेऽपि त्रिपाद्यामस्या अनुपस्थितिरेव । अत एव कार्यकालपक्षमेवापक्रम्याक्तयुक्तोरुक्तानो "अयुक्तोऽयं परिहारो न वा बहिरङ्गलक्षणत्वात्" इतीत्युक्तं "विसर्जनीय" सूत्रे भाष्ये सिद्धान्तिना त्रिपादीस्थेऽन्तरंगे कर्तव्येऽयं परिहारो न युक्त इति तदर्थः । किं तु वचनमेवा-

भैरवी ।

ङ्गस्य । *अनया* । असिद्धं बहिरङ्गेत्यनया । *एवंहि* । 'पूर्वत्रासिद्धम्, 'असिद्धं बहिरङ्गम्' इत्याभ्यां मिथः प्रवृत्तिप्रतिबन्धे हीत्यर्थः । *आपत्तेरिति* । अन्यतरा प्रवृत्तिरिष्टा न तु उभयोरिति भावः । एवमभ्युपगम्यवादेनोक्तम् ।

वस्तुतो विनिगमकमस्तीत्याह-*किञ्चेति* । *अस्याः* । बहिरङ्गपरिभाषायाः । *अतः* उक्तहेतुभ्याम् । अपिशब्दस्तदभिमत यथोद्देशपक्षसमुच्चायकः । स्वोक्तार्थे भाष्यसम्मतिमाह—*अत एवेति* । उभयत्रैतदनुपस्थितेरिष्टत्वादेव । *विसर्जनीयसूत्रइति* । विसर्जनीयविधायके "खरवसानयोः" इतिसूत्र इत्यर्थः । *न युक्तः* । संयोगान्तस्य"रदाभ्याम्"इत्यादौ यत्र यत्रोक्तः स सर्वो न युक्त इत्यर्थः । *वचनमिति* । वचनानीत्यर्थः । एकवचनं प्रकृताभिप्रायेण । यत्र यत्र दोषस्य प्रसक्तिस्तत्र तत्र वचनमारब्धव्यमित्यर्थो वा । यथा "संयोगान्तस्य लोप" इति सूत्रे दध्यत्रेत्यत्र यकारस्य लोपवारणाय "संयोगान्तस्य लोपे यणः प्रतिषेध" इति वचनमारब्धन्तस्य "न वा झलो लोपात्" इत्यनेन प्रत्याख्यानं कृतम् । तत्र वाशब्दोपादानेन वचनारम्भः कर्तव्यो "झलो लोप" इति वा स्वीकार्यमित्यर्थः । यथा "मादुपधायाः" इति सूत्रे नार्मतं वत्वस्य प्रतिषेध इत्यस्य 'न वा बहिरङ्गलक्षणत्वात्, इत्यनेन यत् प्रत्याख्यानं तत् न युक्तं किन्तु प्रतिषेधवचनमेव युक्तम् । अत्र नृमतोऽपत्यमिति विग्रहे जातस्याणो रेफनिमित्तत्वेन बहिरङ्गत्वेऽपि तत्प्रत्याख्यानमुक्तयुक्त्या न युक्तमिति भावः । तथा "रदाभ्याम्" इति सूत्रे निष्ठानत्वमवृद्धेः" इतिवचनं कार्तिरित्याद्यर्थं कर्तव्यम् । तथा "खर-

तत्त्वप्रकाशिका-

त्रिपाद्यामप्रवृत्तौ फलन्तु तद्वानित्यत्र वत्वस्यासिद्धत्वाभावेनानुनासिको न, कश्चरः अत्र कदादेशस्यासिद्धत्वाभावाज्जश्त्वभावो न, वारिणा सर्वेषां करिष्यतीत्यत्र प्रकृतिप्रत्ययनिमित्तकत्वेन बहिरङ्गस्य सुटः स्यस्य नाभावस्य चासिद्धत्वाभावात् षत्वणत्वाभावो न, विवक्षति बद्धमर्माभिरत्राद्ययोः झलादिनिमित्तकत्वेन "व्रश्च" इति षत्वस्य "नहो ध" इति धत्वस्य चासिद्धत्वाभावात्कत्वजश्त्वाभावो न, अन्त्ये भिन्निमित्तकत्वेन बहिरङ्गस्यैत्वस्यासिद्धत्वेन इत्वाभावो नेति बोध्यम् । *अलो लोप इति वेति* । एतेन त्वन्मते इव मन्मतेऽपि एतद्वार्तिकानारम्भ इति सूचितम् । *न युक्तमिति भाव इति* । नृमतः ऋमच्छब्दस्याप्युपलक्षणत्वेन तस्मात् क्यजन्ताल्लङि "आर्मत्यत्" इत्यत्राटश्चेति वृद्धेर्बहिरङ्गत्वाभावत्ववारणायावश्यकत्वात् ।

यद्वा "मादुपधायाः" इति विहितविशेषणाश्रयणात्, यवादेराकृतिगणत्वाच्च दोषाभावे मन्मतेऽपि वार्त्तिकानारम्भ एव । *कार्तिरित्याद्यर्थमिति* । आवश्यकञ्चैतत्, ऋधातोः क्ते आचारक्विपि आर्तदित्यत्र वृद्धेर्बहिरङ्गत्वाभावेन नत्वाभावार्थम् । तथा नैष्कुल्याद्यर्थमिदुपधस्येति षत्वे वृद्धेरसिद्धत्वं वक्तव्यमिति वचनमारब्धव्यम्, यद्वा समर्थग्रहणात्कृतसन्धेरेव

रब्धव्यमिति तदाशयः । अत एव 'निगाल्यत' इत्यादौ लत्वार्थं "तस्य दोष" इति वचनमेवारब्धम् । अन्यथान्तरङ्गत्वाण्णिलोपात्पूर्वं वैकल्पिकलत्वे तद्वैयर्थ्यं स्पष्टमेव । येऽपि लक्ष्यानुरोधादानुमानिक्याप्यन्तरङ्गपरिभाषया

भैरवी ।

वसानयोः" इतिसूत्रे नार्कुटो नार्पत्य इत्यत्र विसर्गवारणाय विसर्जनीयोऽनुत्तरपदे इति वचनं कृतम्। अस्योत्तरपदे सति न विसर्ग इति नार्थः यशः समूह इत्यत्र विसर्गानापत्तेः। किन्तु उत्तरपदे सति यो रेफ उत्तरपदनिमित्तक इति यावत्। न चोत्तरपदस्य न रेफनिमित्तत्वं किन्त्वण इति वाच्यम्। तस्याण्निमित्तकत्वेऽपि उत्तरपदे सत्युकारस्यादित्वव्यपदेशेनोत्तरपदस्य निमित्तत्वात्। आदेशव्यपदेशद्वारकं निमित्तत्वमिहविवक्षित मित्याशयात्।

न चैवमपि नार्कलिपरित्यत्रोत्तरपदस्य निमित्तत्वाभावाद्विसर्गो दुर्वार इति वाच्यम्। 'अनुत्तरपद' इत्यस्योत्तरं यत्पदमर्थवत् तन्निमित्तकभिन्नमित्यर्थात्। एवमेव "रषाभ्याम्" इतिसूत्रे रशब्दस्योत्तरं यदर्थवत् तन्निमित्तकभिन्नरेफे लक्षणया "मादुपधायाः" इति सूत्रेऽकारस्यापि तादृशस्य ग्राह्यतया सामञ्जस्यान्नानावचनारम्भकृतगौरवन्तु फलमुखत्वान्न दोषावहमिति बोध्यम्।

कार्यकालपक्षे लक्ष्यदर्शनवशादानुमानिक्या परिभाषया प्रत्यक्षसिद्धस्य पूर्वत्रासिद्धमित्यस्य बाधकथनं लक्षणकचक्षुषां वक्तुमुचितं किन्तु वचनारम्भ एव स्वीकर्तुमुचित इत्यत्र सिद्धान्तसम्मतिमाह—*अत एवेति* । त्रिपाद्यामेतत्परिभाषाया अप्रवृत्तेरेव ।

तत्त्वप्रकाशिका ।

तद्धितोत्पत्त्या न दोषावकाशः । *अर्थवत् तन्निमित्तेत्यादि* । स्वाव्यवहितपूर्वत्व स्वोत्तरप्रत्ययनिमित्तकत्वोभयसम्बन्धेनार्थवद्विशिष्टस्य रेफस्य विसर्गो न इत्यर्थः । नचैतद्वचनारम्भ एव गौरवम् , रामाणां प्रियाष्टनः राज्ञ इत्यादौ नुडल्लोपयोरसिद्धत्वेन णत्वश्चुत्वानापत्तेः । नच "भविष्यति गम्यादयः" इति निर्देशेनान्तरङ्गपरिभाषायाः प्रत्ययावयवकार्येऽप्रवृत्तिरिति ज्ञाप्यतेऽन्यथा स्यस्यासिद्धत्वादिण्न स्यादिति वाच्यम्? कार्त्तिर्नामेत इत्याद्यर्थं तथापि वार्तिकारम्भापत्तेः ।

वस्तुतस्तु "उभयथर्क्षु" इति निर्देशेन स्वाव्यवहितपूर्वत्व अच्स्थानिकत्व स्वाघटितपदाघटकनिमित्तकादेशावयवत्वत्रितयसम्बन्धेन खर्विशिष्टस्य रेफस्य विसर्जनीयो न भवतीति कल्प्यते । नर्कलिपरित्यत्र रेफे ककाराव्यवहितपूर्वत्वस्य ककारादिघटित पदघटकेऽप्रत्ययनिमित्तकादेशावयवत्वस्य च सत्वेन न विसर्जनीयः । एवं प्राछंतीत्यत्रापि बोध्यम् । एवञ्च वार्तिकमकरणीयमेव ।

यत्तु स्वाघटितपदाघटकत्वसम्बन्धेन खर्विशिष्टस्येति तन्न नार्कुट इत्यत्र ककारघटितं पदं नृ इति तद्घटकस्य ऋकारस्थानिकरेफस्य सत्वेनाघटकत्वाभावाद्विसर्गापत्तेः । यदपि स्वाघटितपदाघटकाण्निमित्तको रेफ इति व्याख्यानं तदपि चिन्त्यम्। सम्बन्धे निमित्तपदाप्रवेशात्।

केचित्तु स्वाव्यवहितपूर्वोच्स्थानिकत्व स्वनिमित्तकत्वोभयसम्बन्धेन स्वविशिष्टरेफस्य स्वनिमित्तको विसर्जनीयो न भवतीति कल्प्यते इति उत्प्राछंतीत्यादौ न दोषः । अत्र निमित्तता तद्भावभावितमात्रेण । प्रथमसम्बन्धेन दास्याः पुत्र इत्यादौ न दोषः । अव्यवहितपूर्वेत्युक्त्या या होतुः पुत्र इत्यादौ न दोषः । अचपदोपादानेन शार्ङ्गिश्छिन्धीत्यत्र न । द्वितीयसम्बन्धेन धातः पश्येत्यादौ न क्षतिरिति वदन्ति । *वैयर्थ्यमिति* । न च प्लायते अत्रान्तरङ्गत्वाद्दीर्घे लत्वार्थं, तथा तक्षिरक्षिभ्यां ण्यन्ताभ्यां क्विपि तक् रगित्यत्र संयोगादिलोपार्थ, प्रहिणोतीत्यत्रान्तरङ्गगुणापेक्षया णत्वस्यासिद्धतया णत्वार्थं वचनमावश्यकमिति कथं

**प्रत्यक्तसिद्धस्य पूर्वत्रेत्यस्य बाधं वदन्ति तेऽपि लक्षणैकचक्षुर्भिर्नादर्तव्या इति दिक् ।**

**अत एव "ओमाङोश्च" ( ६-१-९५ ) इत्याङ्ग्रहणं चरितार्थम् । तद्धि**

**भैरवी ।**

यदुक्तमन्तरंगे कर्त्तव्ये जातं तत्कालप्रासिकञ्च बहिरंगमसिद्धमिति तत्राद्यंशस्य ज्ञापकसिद्धत्वं प्रदर्श्य द्वितीयांशस्यापि सूत्रकारसम्मतत्वं दर्शयति—*अत एवेति* । द्वितीयांशनिवेशादेव । *तद्धीत्यादि* । वाक्यसंस्कारपक्षे इदं, तस्य विभज्यान्वाख्यान

तत्त्वप्रकाशिका ।

व्यर्थमिति वाच्यम् ? लत्वे निगाल्यते इति भाष्यीयप्रयोगार्थं तस्य वैयर्थ्यमित्याशयात् । *नादरणीयेति* । केचित्तु कार्यकालेऽस्याः सर्वथाऽप्रवृत्तौ न मानम् , पूर्वम्प्रति परस्यासिद्धत्वादित्युक्तयुक्तिर्न मूलम् कृते पूर्वस्मिन् परस्यासिद्धत्वे मानाभावात् । अत एव तत्र तत्र शब्देन्दुशेखरे शब्दरत्ने च तथाप्रतिपादितस्सङ्गच्छते । "कर्तरि चर्षी" इत्यादिनिर्देशाः कार्यकालेऽस्याः क्वचित्त्रिपाद्यामप्रवृत्तौ गमकाः ।

किञ्च सर्वथा त्रिपाद्यामप्रवृत्तौ दृश्यत्र कार्तिः नार्मतः नेष्कृतिरित्याद्यर्थमनेकवचनारम्भे तवैव गौरवम् । आरम्भप्रत्याख्यानयोः फलैक्याय फलान्तराभिनिवेशस्य निष्प्रमाणत्वादनभिधानाच्च । विसर्जनीयसूत्रस्थमतो "अयुक्तोऽयं परिहारो नवा बहिरङ्गलक्षणत्वात्" इति भाष्यन्तु "तस्य दोष" इत्यत्र लत्वग्रहणं कुर्वता वार्तिककृता पूर्वत्र कृतेऽपि परस्यासिद्धत्वाङ्गीकारात्तद्रीत्या तम्प्रति तत्परिहारस्यायुक्तताभिप्रायकमिति न तद्विरोधः । अत एव प्रत्याहाराह्निके नृनमनस्यापत्यं नार्नमनिरित्यत्र णत्वं प्रति वृद्धिरसिद्धेत्युक्तम् ।

किञ्च वार्तिके लत्वग्रहणं प्लायत इत्यत्र लत्वे स्थानिवद्भावार्थम् अत्रैकादेशापेक्षया विशिष्टसमुदायनिमित्तकलत्वमेव बहिरङ्गमिति न बहिरङ्गपरिभाषया सिद्धिः । विसर्जनीयसूत्रस्थं त्वेवमेषा परिभाषा सिद्धा भवतीत्यन्तमेव भाष्यं सिद्धान्त्युक्तिः । कुतो नुखल्विव्यादित्वेकदेशिनः पूर्वत्र कृते परस्यासिद्धत्वे मानाभावात् । "नभकुर्छुराम्" इति सूत्रे कुर्ग्रहणं तु परिभाषायां यथोद्देशपक्षे तात्पर्यग्राहकमित्याहुः ।

अयमत्र निष्कर्षः—प्राञ्चस्तु त्रिपाद्यामन्तरङ्गपरिभाषा प्रवर्तते नवेति संशये कार्यकाले प्रवर्ततेऽन्यत्र नेत्याहुः । एवञ्च नार्कुटाद्यर्थं तत्तद्वचनारम्भो न कर्तव्यो भवति तद्वान् रामाणामित्यादि तु यथोद्देशपक्षाश्रयणेन सिद्धम्, व्यवस्थितपक्षद्वय इति न्यायान्न विपरीतशङ्कोद्भावनमिति तेषामाशयः । युक्तञ्चैतत्, अनेकत्रानेकक्लिष्टकल्पनयाऽस्य लघुभूतत्वात् ।

नव्यास्तु न यथोद्देशः नापि कार्यकालः किन्तु "पूर्वत्रासिद्धम्" इतिसूत्रमेव त्रिपाद्यां प्रवृत्तिनिवृत्त्योर्मूलम् इति त्रिपाद्या असिद्धत्वादेषां न त्रिपाद्यां प्रवृत्तिरित्याहुः । निरूपितञ्चैतत् यथोद्देशपक्षनिरूपणावसरे । पूर्वत्र कृते परस्यासिद्धत्वाभावेनानेकवार्तिकारम्भकृतगौरवेण चैतदयुक्तमिव प्रतिभातीति विवेचयन्तु कृतधियः। *द्वितीयांशनिवेशादेव* । फलमस्य पियति, असुसुवत, ग्रामणिनी अयजे इन्द्रम्, स्यति केशा इत्यादि, आद्ययोः लघूपधगुणादन्तरङ्गत्वादियङुवङौ, तृतीयचतुर्थयोः नुम्दीर्घाभ्यामन्तरङ्गत्वाद् ह्रस्वगुणौ, पञ्चमेऽडिड्भ्यामन्तरङ्गत्वाद्यासुट्, अन्त्ये गुणादन्तरङ्गत्वात्सवर्णदीर्घः, इति केचित् ।

अन्येतु सत्यपि गुणे जातबहिरङ्गासिद्धत्वेनाद्ययोरियङुवङौ निष्प्रत्युहावित्याहुस्तन्न, गुणस्यासिद्धत्वेऽपि युवुध्यापादनासम्भवात् । अत एव "पूर्वत्रासिद्धम्" इत्यत्र शास्त्रासिद्धत्वं सिद्धान्तितं सर्वैः ।

यत्तु कोः कित्करणात्पुगन्तसाहचर्याच्च हलन्तलघूपधे एव गुणप्रवृत्तेर्नैतत्फलमिति तन्नाचारक्विबन्तघञर्थकान्तभियधातोः कर्तृक्विप्यल्लोपयलोपयोस्तत आचारक्विपि भयतीति

खट्वा आ ऊढेत्यत्र परमपि सवर्णदीर्घं बाधित्वा अन्तरङ्गत्वाद्गुणे कृते वृद्धिप्राप्तौ पररूपार्थम्। साधनबोधकप्रत्ययोत्पत्त्यनन्तरं पूर्वं धातोरुपसर्गयोगे पश्चात् खट्वाशब्दस्य समुदायेन योगाद्गुणस्यान्तरङ्गत्वमिति "सम्प्रसारणाच्च" ( ६-१-१०८ ) इति सूत्रे भाष्ये स्पष्टम्। एहीत्यनुकरणस्य शिवादिशब्दसम्बन्धे तु नास्य प्रवृत्तिर्ज्ञापकपर 'सम्प्रसारणाच्च'इति सूत्र-

भैरवी।

एव समकालप्राप्तिसम्भव इत्याशयेन। तथैव दर्शयति—*खट्वेति*। ननु गुणस्य सवर्णदीर्घादत्रान्तरङ्गत्वं न सम्भवत्युभयापेक्षयोभयत्र सत्त्वात् प्रत्युत पूर्वोपस्थितनिमित्तकत्वरूपमन्तरङ्गत्वं सवर्णदीर्घ एवेत्यत आह—*साधनेत्यादि समुदायेन*। उपसर्गद्योत्यार्थसहितधात्वर्थेन कारकस्य क्रियाकाङ्क्षानियमाद्, एवञ्च प्रक्रियाक्रमेण पूर्वोपस्थितनिमित्तकत्वरूपमन्तरङ्गत्वमाद्गुणस्यैवेति भावः। अत्र साधनबोधकप्रत्ययोत्पत्त्यनन्तरमिति कथनं वक्ष्यमाणो यः 'पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण'इति सिद्धान्तस्तदभिप्रायेण। न च प्रयोगे प्रागुच्चारणरूपं पूर्वोपस्थितत्वं दीर्घनिमित्तस्येति तस्याप्यन्तरङ्गत्वसम्भवेनोभयोः समत्वात्परत्वाद्दीर्घ एव स्यादिति वाच्यम्। धातूपसर्गकार्यत्वेन गुणस्यान्तरङ्गत्वात्। आङ्ग्रहणस्य ज्ञापकतापरभाष्यप्रमाण्येनैकपद एव पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्गत्वस्य बलवत्त्वप्रयोजकत्वकल्पनाच्च। न चाङा सहैकादेशस्याप्येकपदावयवरूपं यत्पूर्वोपस्थितनिमित्तं तत्प्रयोज्यत्वन्नास्तीति कथमाद्गुणस्यान्तरङ्गत्वमिति वाच्यम्, एकपद एवेत्यस्यैकार्थबोधकं यत्पदं तदवयवनिमित्तकमित्यर्थात्। उपसर्गाणां द्योतकतया आङा सहितस्य समासरूपपदस्यैकार्थस्यापि बोधकता स्फुटैव। खट्वा सहितस्य तु वाक्यार्थबोधकतया नैकपदावयवनिमित्तकत्वमेव।

ननु स्वतन्त्रं यदेहीतिपदं तदवयवैकारस्य पूर्वान्तवद्भावेनाङ्त्वात् तदनुकरणेनैहीत्यनेन षष्ठ्यन्तशिवशब्दस्य समासे प्रकृतिवदनुकरणमितिन्यायेनाङ्त्वबुध्या तत्र वृद्धिवारणाय आङ्ग्रहणस्य चरितार्थत्वात्। कथमाङ्ग्रहणस्य ज्ञापकत्वमत आह—*एहीत्यनुकरणस्येति*। *अस्य*। "ओमाङोश्च" इत्यस्य। इदञ्च समुदायानुकरणे समुदायघटकवर्णे यो व्यवहारः सोऽनुकरणावयवेऽपीतिवदतां प्राचामनुरोधेन।

वस्तुतस्तथा न युक्तम् 'अस्य वामीयं सूक्तम्' इत्येतदवयवस्य सुपो लुगापत्तेः 'प्रकृतिवद्' इत्यस्यानित्यत्वेन तद्वारणन्तु क्लिष्टम्।

किञ्चेदमनुकरणं समुदायस्य नत्वेकदेशस्येति समुदायनिष्ठधर्मस्यैवातिदेशो युक्तो

तत्त्वप्रकाशिका।

रूपानापत्तेः अल्लोपस्य स्थानिवत्त्वेन व्यवायात्।

मम तु हलन्तेतिनियमाभावेनादोषः। अयजे इन्द्रमित्यत्र दीर्घम्बाधित्वा नित्यत्वात् गुण इत्यपि न, सवर्णदीर्घस्यापवादत्वात्। अन्तरङ्गत्वे त्वपवादो यद्यन्यत्रेतिन्यायान्न दोषः। अत एवाङ्ग्रहणस्य ज्ञापनपरस्वग्रन्थोऽपि सङ्गच्छते। पट्व्या मृद्व्येतिभाष्योदाहरणमपि युक्तमेव। पूर्वं परयणादेशः ततः पूर्वस्येति तु न युक्तम् अनल्विधावितितन्निषेधात्। परयणादेशस्य बलवत्वाच्च।

अपरे तु इच्छति, अभवकत् इति फलमाद्येऽन्तरङ्गत्वात्तुकि गुणो न, अन्त्ये नित्यादप्यकचोऽन्तरङ्गत्वात् "हतश्च"इति लोपः। अन्यथा एच्छति, अभवतक् इति स्यादित्याहुः।

ननु वृद्धिसूत्रस्थभाष्यप्रामाण्यात्पदानां स्वातन्त्र्येणैव व्युत्पाद्यत्वप्रतीत्या खट्वा ओढेतिसिद्धयोः सम्बन्धे वृद्धिबाधनार्थमाङ्ग्रहणं चरितार्थमत आह—*तद्धीति*। "युष्मद्युपपदे" इत्यादिसूत्रस्वारस्येन वाक्यसंस्कारपक्षस्यापि शास्त्रे आश्रयणन्तत्राङ्ग्रहणं व्यर्थमिति भावः। *परमपि सवर्णदीर्घमिति*। न च कृताकृतप्रसङ्गित्वेन नित्यत्वाद्गुण एवेति

स्थभाष्यप्रामाण्येनानित्यं प्रकृतिवदनुकरणमित्यतिदेशमादाय लब्धाङ्गत्वे एतदप्रवृत्तेः ।

यत्तु पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेन च । उपसर्गेण तत्संज्ञक-शब्देन साधनेन कारकेण तत्प्रयुक्तकार्य्येण च । अत एवानुभूयत इत्यादौ सक-र्म्मकत्वात् कर्म्मणि लकारसिद्धिरिति तन्न । क्रियायाः साध्यत्वेन बोधात्सा-ध्यस्य च साधनाकाङ्क्षया तत्सम्बन्धोत्तरमेव निश्चितक्रियाबोधेन साधन-कार्य्यप्रवृत्त्युत्तरमेव क्रियायोगनिमित्तोपसर्गसंज्ञकस्य सम्बन्धौचित्यात् । अत एव "सुट्कात् पूर्वः" (६-१-१३५) इति सूत्रे पूर्वं धातुरुपसर्गेणेत्युक्त्का नैतत् सारं पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणेत्युक्तोक्तयुक्त्या अस्यैव

भैरवी ।

नत्वेकदेशनिष्ठस्येति बोध्यम् ।

अत्र प्राञ्चः पूर्वोक्तरीत्या आङ्ग्रहणस्य ज्ञापकतापरभाष्यं धातूपसर्गयोः कार्य्यमन्तरङ्ग-मित्येतन्न्यायविरुद्धमिति वदन्ति, तन्मतं खण्डयितुमुपक्रमते—*यत्त्विति* । कैयटसम्मतं पूर्वं धातुरुपसर्गेण युज्यत इति वचनस्यार्थमनुवदति—*उपेत्यादिना* । साधनरूपार्थसम्ब-न्धेन नेष्टसिद्धिरत आह—*तत्प्रयुक्तेति* । *अत एव* । पूर्वमुपसर्गसम्बन्धस्वीकारादेव । इत्यादावित्यादिपदेनोपास्यते गुरुरित्यादेः संग्रहः । क्रियाया इति* । अस्य धातुन इत्यादि । *साध्यस्य* । साध्यत्वेन प्रतीयमानस्य । साधनस्येत्यादौ नियमत इति शेषः । साध्यत्वसा-धनत्वयोर्निरूप्यनिरूपकभावादिति भावः । *तत्सम्बन्धोत्तरम्* । साधनप्रयुक्तकार्यसम्ब-न्धोत्तरमेव । *निश्चितक्रियाबोधेन* । निश्चितं यत्क्रियात्वं तस्य बोधेन, क्रियात्वस्य साध्य-त्वेन प्रतीयमानव्यापारकत्वरूपत्वात् । *क्रियायोगेति । क्रियाविशेषणीभूतार्थद्योतकेत्यर्थः । क्रियागत विशेषार्थद्योतनाय हि प्रादेरुपसर्गस्य योगः स्वीक्रियते, क्रियात्वनिश्चयश्च तदैव भवतीतिभावः । *अत एव* । उक्तहेतोरेव ।

ननु यदि पूर्वञ्चोपसर्गस्ययोगस्तदा पूर्वोक्तस्थले कर्मणि लकारसिद्धिः कथमत आह—

तत्त्वप्रकाशिका-

वाच्यम् ? दीर्घस्यापवादत्वात् । ज्ञापिते तु अपवादो यद्यन्यत्रेति न्यायेनान्तरङ्गत्वाद्गुण एवेति भावः। *नत्वेकदेशनिष्ठस्येति*। इदं बालम्भट्टाद्यनुरोधेन । *गुणस्यान्तरङ्गत्वमिति* । न च देव आ उष्णमित्यत्र धातूपसर्गकार्याभावेन गुणस्यान्तरङ्गत्वासम्भवात्परत्वाद्दीर्घे प्राप्ते नित्याच्चित्यं बलीय इत्यत्रैवाङ्ग्रहणस्य ज्ञापकत्वं युक्तं, खट्वा आ उढ इत्यत्रापि नित्य-त्वाद् गुणे वृद्धिबाधनार्थन्तच्चरितार्थमिति वाच्यम् । अपवादत्वात्सवर्णदीर्घे तत गुणे इष्टरूप-सिद्धेस्तस्य व्यर्थत्वात् । ज्ञापिते तु "अपवादो यद्यन्यत्र" इति न्यायेनान्तरङ्गत्वात् गुणे वृद्धिबाधनार्थन्तच्चरितार्थम् । *इति बोध्यमिति* । वस्तुतस्तु अतिदेशस्यानित्यत्वेन प्राप्तः सुपोलुक् वारितो भाष्ये । अत एव जहिजोड इत्यादौ जोडं जहीतिसमुदायानुकरणेऽवयवस्य सुप्त्वाल्लोपस्सिध्यति । *तत्सम्बन्धोत्तरमिति* । नच साधनसम्बन्धात्पूर्वं क्रियाबोधक-त्वाभावात्कथं धातुत्वमिति वाच्यम्, यथा भाविसाधनसम्बन्धाश्रयणेन क्रियावाचित्वमा-श्रित्य धातुसंज्ञा जायते यथाच भाविकर्मत्वमाश्रित्योपक्रम एव कर्मत्वं तथा भाव्युपसर्गस-म्बन्धादुपक्रम एव विशिष्टक्रियावाचित्वं दृश्यतामित्यर्थके—

धातोः प्रसाधनयोगस्य भाविनः प्रक्रमाद्यथा ।
धातुत्वं कर्मभावश्च तथान्यदपि दृश्यताम् ॥

इति हरिकारिकया समाहितत्वात् ।

युक्तत्वमुक्तं साधनं हि क्रियां निर्वर्त्तयतीत्यादिना भाष्ये । उपसर्गद्योत्यार्था-न्तर्भावेण धातुनैवार्थाभिधानादुक्तेषु कर्म्मणि लकारादिसिद्धिः । पश्चाच्छ्रोतुर्बोधाय द्योतकोपसर्गसम्बन्धः । एवं च अन्तरङ्गतरार्थकोपसर्गनिमित्तः सुट् संकृतीत्यवस्थायां क्त्वादितः पूर्वं प्रवर्त्तते ततो क्त्वादि । अत एव प्रणिदापयतीत्यादौ णत्वं "यदागमाः" (प० ११) इति न्यायेन समाहितं भाष्ये । अत एव प्रत्येति प्रत्यय इत्यादिसिद्धिः । अन्यथान्तरङ्गत्वात् सवर्णदीर्घ रूपासिद्धिः । यदुपसर्गनिमित्तकं कार्य्यमुपसर्गार्थाश्रितं विशिष्टोप-

भैरवी

*उपसर्गद्योत्येति* । *धातुनैवद्योत्यः* । अनुभवादिः । एवकार उपसर्गसंज्ञकशब्दसम्बन्धाभावबोधनाय धातूनामनेकार्थत्वादिति भावः । *उक्तेषु* । अनुभूयते सुखमित्यादिषु ।

ननु धातोरनेकार्थत्वेनोपसर्गद्योत्यार्थान्तर्भावेन पूर्वमेव चेद्धातोर्वृत्तिस्तदोपसर्गोच्चारणं व्यर्थमित्यत आह—*पश्चादिति* । *योग इति* । उपसर्गसंज्ञकशब्दस्य सम्बन्धं करोति । अन्यथा प्रयोगान्तरे तत्समभिव्याहाराभावे तादृशार्थस्याप्रतीततया वक्तुर्द्योत्यार्थविशिष्टार्थवृत्तिरयं धातुरिति ज्ञानसत्त्वेऽपि तादृशार्थवृत्तित्वनिमित्तकस्य प्रत्ययस्य प्रयोगेऽपि श्रोतुस्तत्तादृशार्थबोधो न स्यादत उपसर्गसंज्ञकशब्दसम्बन्ध आवश्यक इति भावः । एवञ्चैवं क्रमः सिद्धः । पूर्वमुपसर्गयोगो नामोपसर्गद्योत्यार्थे वृत्तिस्ततस्तत्संज्ञाशब्दसम्बन्धात् प्राक् साधनप्रयुक्तः कार्य्यस्य प्रत्ययस्य योगस्तत उपसर्गसंज्ञकस्य शब्दस्य सम्बन्ध इति । एवं क्रमकल्पनेन द्वयोरपि वचनयोरेकवाक्यतैव भवति न तु विरोधः । एतेन दीक्षितादिकल्पितो वचनार्थो निरस्तो द्रष्टव्यः । तैर्हि द्वयोर्वचनयोर्यथाश्रुतार्थकता स्वीकृता । एवञ्च यदा "पूर्वं धातुरुपसर्गेण" इतिपक्षस्तदोपसर्गसम्बन्धेऽपि तत्प्रयुक्तं कार्य्यं प्रत्यय इत्यादिनिर्देशेन न प्रवर्त्तते, किन्तु साधनबोधकप्रत्यये कृते तत्प्रयुक्तकार्य्यं च ।कृते प्रवर्त्तत इति ज्ञापकेन निर्वाह इत्येवं लक्ष्याणां सिद्धिरित्युक्तम् ।

परन्तु पूर्वं द्वयोर्विरोधकल्पना ततो ज्ञापकेन निर्वाहस्य कल्पनेति गौरवं तत्परिहारायैकवाक्यतैवोपपादितरीत्या स्वीकर्त्तुमुचितेत्याशयेनाह—*एवञ्चेति* । *संकृतीत्यवस्थायामिति* । अत्र तिशब्दोच्चारणं साधनबोधकत्वं वस्तुतः प्रयुज्यमानस्यादेशस्यैव, लकारस्य तु तत्स्थानित्वेन कल्पितस्य प्रक्रियानिर्वाहाय तदर्थत्वकल्पनेत्यभिप्रायेण । उपसर्गार्थस्यान्तरङ्गत्वं धातोः पूर्वं तस्मिन्नर्थवृत्त्या । अत एव साधनरूपार्थापेक्षया तस्य प्रकर्षः । अतस्तादृशार्थं निमित्तकत्वात्सुडादेरप्यन्तरङ्गत्वं बाह्यसाधनप्रयुक्तं यत्कार्य्यं प्रत्ययस्तन्निमित्तकत्वात् क्त्वादेर्बाहिरङ्गत्वम्, एवं रीत्या सिद्धौ 'सुट्कात्पूर्व' इति न वाच्यमिति भावः । उपसर्गसंज्ञकशब्दसम्बन्धात् प्राक् साधनयोग इत्यर्थे भाष्यकारसम्मतिमाह—*अत एवेति* । पूर्वं साधनयोगादेवेत्यर्थः । *णत्वमिति* । यदि पूर्वमुपसर्गसम्बन्धः स्यात् तदान्तरङ्गत्वात् णत्वं तदुत्तरं पुकि न्यायानुपयोगः स्पष्ट एव ।

ननु ऐपादिकेऽन्तरङ्गे बहिरङ्गपरिभाषाया अप्रवृत्तेर्णत्वात् प्राक् पुगागम एवेति न्यायानुसरणं युक्तमेवेति चेन्न । बहिरङ्गपरिभाषाप्रवृत्तिमभ्युपेत्य णत्वमिति न, किन्तु प्रागुक्तरीत्या पुकः प्राक्कालिकत्वान्न्यायानुसरणं विनापि णत्वन्न स्यादिति भाष्यकारीयानुसरणेन पूर्वं साधनसम्बन्धो भवतीति वदाम इत्याशयात् । *अत एव* । साधनबोधकप्रत्यययोगस्य पूर्वं स्वीकारादेव । प्रत्यय इत्यादिपदेन "णेरध्ययने वृत्तम्" इति निर्देशस्य संग्रहः । एवञ्चोक्तार्थे सूत्रकारस्यापि सम्मतिरिति भावः । *अन्यथा* । उक्तार्थानङ्गीकारे । *अन्तरङ्गत्वात्* । पूर्वोपस्थितनिमित्तकत्वेनान्तरङ्गत्वात । "न धातुलोप आर्द्धधातुके" इति सूत्रस्थभाष्यविरोधपरिहारायाह—*यदुपसर्गेति* । विशिष्टोपसर्गनिमित्तत्वात् । धात्वर्थगतविलक्षणार्थ-

सर्गनिमित्तकत्वात्तदन्तरङ्गम् ।

यत्तु न तथा, तत्र पूर्वागतसाधननिमित्तकमेवान्तरङ्गम् । अत एव "न धातु" ( १-१-४ ) इति सूत्रे प्रद्ध इत्यत्र गुणो बहिरङ्ग इति भाष्ये उक्तम् ।

किञ्च पूर्वमुपसर्गयोगे धातूपसर्गयोः समास ऐकस्वर्याद्यापत्तिरिति "उपपदमतिङ्" इति (२-२-१९) सूत्रे भाष्ये स्पष्टम् । भावार्थप्रत्ययस्यापि र्वमेवोत्पत्तिः । अत एव "णेरध्ययने" (७-२-२६) इति निर्देशः सङ्गच्छते । इदं च सामान्यापेक्षं ज्ञापकं भावतिङोऽपि पूर्वमुत्पत्तेः । अन्यथा तत्र समासापत्तिः । तिङ्क्त्वतिङितिनिषेधान्न तत्र दोषो यदि भावतिङ्युपसर्गयोगोऽस्तीत्यलम् ।

यत्तु विशेषापेक्षात्सामान्यापेक्षमन्तरङ्गं विशेषापेक्षे विशेषधर्मस्याधिकस्य निमित्तत्वात् । यथा "रुदादिभ्यः सार्वधातुके" ( ७-२-६६ ) इत्यत्र रुदादित्वं सार्वधातुकत्वं च । तत्र सार्वधातुकत्वज्ञानाय प्रकृतेर्धातुत्वज्ञानं प्रत्ययस्य प्रत्ययत्वज्ञानं चावश्यकमिति यासुडन्तरङ्गः ।

एतेन यत् "अनुदात्तङितः" ( १-३-१२ ) इति सूत्रे कैयटेनोक्तं 'लमात्रापेक्षयाऽन्तरङ्गास्तिबादयो, लकारविशेषापेक्षत्वाद्बहिरङ्गाः स्यादयः' इति तत्परास्तम् । विशेषापेक्षत्वेऽपि तस्य सामान्यधर्म्मनिमित्तकत्वाभावेन तत्र-

भैरवी ।

द्योतकताविशिष्टोपसर्गनिमित्तकत्वात् । सञ्चस्कारेत्यत्र सुड्यथा । *न तथा* । न तादृशार्थनिमित्तकं, किन्तु उपसर्गसंज्ञकशब्दसम्बन्धनिमित्तकं तद्बहिरङ्गमिति स्वीकार्य्यम् । *पूर्वागतेति* । पूर्वोत्पन्नेत्यर्थः । *साधननिमित्तकम्* । साधनबोधकप्रत्ययनिमित्तकम् । पूर्वागतेतिकथनेन पश्चादागतं यत्पदान्तरं खट्वेत्यादि तत्प्रयुक्तं बहिरङ्गमिति पूर्वोक्तार्थः सूचितः । *भाष्ये उक्तमिति* । यद्यपि प्रेद्ध इत्यत्र गुणस्य नोपसर्गनिमित्तकत्वं किन्तु तदवयवनिमित्तकत्वं तथाप्युपसर्गस्य तद्भावभावित्वेन निमित्तत्वम् विशिष्टपदोपादानेनोपसर्गसंज्ञकस्य समुदायस्य निमित्तत्वे तद्विशेषणाभूतस्यार्थस्यापि निमित्तत्वमिति ध्वनितम् । 'पूर्वं धातुरुपसर्गेण युज्यते' इति मते दोषान्तरमप्यस्तीत्याह—*किञ्चेति* । *समासे* । "सह"इतियोगविभागेन "कुगति" इति वा समासे । ऐकस्वर्य्यादीत्यादिपदेनैकपद्यपरिग्रहः ।

ननु यत्र प्रत्ययस्य साधनबोधकता तत्र तथा अस्तु, यत्र तु भावे प्रत्ययस्तत्रोपसर्गनिमित्तकमेवादौ स्यादत आह—*भावार्थकेति* । *पूर्वमिति* । उपसर्गसंज्ञकशब्दसम्बन्धात् प्रागित्यर्थः । एवञ्च तत्राप्यन्तरङ्गत्वादादौ प्रत्ययनिमित्तमेव कार्य्यं भवतीति भावः । *अत एव* । भावार्थकप्रत्ययस्य पूर्वमुत्पत्तिस्वीकारादेव । *अन्यथा* । तिङः पूर्वमुत्पत्त्यस्वीकारे ।*तत्र* । तिङ्विषये । धातुनोपसर्गस्येतिशेषः । *यदिभावेति* । वस्तुतोभावतिङन्तस्थले उपसर्गयोग एव नास्तीति यदिपदोपादानेन ध्वनितम् ।

प्राचामुक्तिखण्डयति—*यत्त्विति* । *अधिकस्य* । सामान्यधर्मादधिकस्य । *सार्वधातुकत्वञ्चेति* । निमित्तमिति शेषः । एवञ्च सामान्यधर्मापेक्षयाऽपेक्षयाधिको धर्मो निमित्तकोटौ यत्र विशेषापेक्षोऽस्ति तद्बहिरङ्गमिति फलितम् । तथा चेद्बहिरङ्गो यासुडन्तरङ्गस्तदाह—*यासुडिति* । एतेन वक्ष्यमाणप्रकारेण । तं प्रकारमेव आह—*विशेषापे-

तत्त्वप्रकाशिका ।

किञ्चेति* । न च लकारोत्पत्तावपिसाधनकार्यं जातमेवेति समासो दुर्वार एवेतिवाच्यम् ?

स्य दुरुपपादत्वात्, परनिमित्तकत्वेन स्यादीनां बहिरङ्गत्वाच्चेति तन्न। विशेषस्य व्याप्यत्वेन व्यापकस्यानुमानेनोपस्थितावपि तस्य निमित्तत्वे मानाभावेनाधिकधर्म्मनिमित्तकत्वानुपपादनात्। भाष्ये एवं विधान्तरङ्गबहिरङ्गभावस्य क्वाप्यनुल्लेखाच्च।

यत्तु मतुप्सूत्रे भाष्ये पञ्च गावो यस्य सन्ति स पञ्चगुरित्यत्र मतुप्प्राप्तिमाशङ्क्य प्रत्येकमसामर्थ्यात् समुदायादप्रातिपदिकत्वात् समासात् समासेनोक्तत्वादिति सिद्धान्तिनोक्ते नैतत्सारमुक्तेऽपि हि प्रत्ययार्थ उत्पद्यते द्विगोस्तद्धितो यथा पाञ्चनापितिरिति पूर्वपक्षयुक्तिर्भाष्ये। "द्विगोर्लुगनपत्ये" (४-१-८८)लुग्विधानात्तद्धितार्थे द्विगोस्तद्धितो भवति पञ्चगुशब्दश्च द्विगुरिति तदाशयं कैयटः।ततो द्वैमातुरः पाञ्चनापितिः पाञ्चसु कपालेषु संस्कृत इत्यादौ सावकाशद्विगोर्बहुव्रीहिणा प्रकृते परत्वाद्बाध इत्याशयेन नैष द्विगुःकस्तर्हि बहुव्रीहिरिति सिद्धान्तिनोक्ते तमवकाशमजानानोऽपवादत्वाद्द्विगुः प्राप्नोतीति पूर्वपक्षी। अन्यपदार्थैः सुबन्तमात्रस्य विधीयमानबहुव्रीहेः संख्यायास्तद्धितार्थे विधीयमानो द्विगुर्विशेषविहितत्वाद्बाधकः प्राप्नोतीति कैयटः।

भैरवी।

क्षत्वेऽपीति*। *तस्य*। बहिरङ्गत्वेनाभिप्रेतस्य। सामान्यधर्मनिमित्तत्वाभावेनेत्यनेनोभयनिमित्तकत्वाभावो बोधितः। *तत्वस्य*। बहिरङ्गत्वस्य। विशेषापेक्षशास्त्रात्सामान्यापेक्षशास्त्रन्तदान्तरङ्गम्भवेद्यदा विशेषधर्मस्य (१)व्याप्यस्य ज्ञाने सति (२)व्यापकस्यानुमितिविषयस्य सामान्यधर्मस्यापि विशेषापेक्षशास्त्रप्रवृत्तावपेक्षा स्यात् तदेव तु नेत्याशयेन दूषयति—*तन्नेत्यादिना*। *अनुमानेनेति*। अनुमानमनुमितिकरणं तेनोपस्थितिस्तत्प्रयोज्यानुमितिरित्यर्थः। एतादृशे विषयेऽस्यैव सम्भवादिति भावः।*तस्य निमित्तत्वे*। व्यापकस्य निमित्तत्वे। *मानाभावेनेति*। शब्दानुपात्तत्वात। तस्य निमित्तत्वस्वीकाराभावेऽप्यतिप्रसङ्गाभावादिति भावः। एवं सति तत्र नित्यत्वाद्याद्युट्। अडिटोस्तु याडुटि न प्राप्तिरपृक्तत्वाभावादिति बोध्यम्। यदुक्तं भाष्ये 'एवंविधान्तरङ्गबहिरंगभावस्य क्वापि अनुल्लेखाद्' इति तन्न युक्तं मतुप्सूत्रभाष्य एव तथोक्तत्वादिति कश्चित् भ्राम्येत्तस्तादृशशङ्कानुत्थानार्थं तद्भाष्यमनुवदति—*यत्त्विति*। *इत्याशङ्क्य*। इत्याशङ्काबोधकशब्दं श्रुत्वा। अस्य सिद्धान्तिनोक्ते इत्यत्रान्वयः। *मतुप्प्राप्नोतीति*। भवता कस्मादापाद्यते वाक्यावयवात् प्रत्येकाद्वाक्याद्वा समासाद्वेति कोटित्रयेण वितर्क्य क्रमेण खण्डयति—*प्रत्येकमित्यादिना*। *असामर्थ्यात्*। परस्परापेक्षत्वेनाऽसामर्थ्यात्। नैतत् सारमित्यारभ्य पूर्वपक्षयुक्तिरित्यन्त एको ग्रन्थः। यद्यपि तद्धितार्थविषये द्विगुसमासविधानात् तद्धितस्य योऽर्थस्तद्वाचकता समासस्य नास्तीत्यतस्तद्धितोत्पत्तिः सुलभैवेति,तथापि न्यायसिद्धार्थे लिङ्गदर्शनमप्यस्तीत्याशयेन तदभिप्रायं कैयट आह—*द्विगोरित्यादिना*। *तत इति*। अस्य सिद्धान्तिनोक्त इत्यत्रान्वयः। *पूर्वपक्षीति*। अस्य आहेति शेषः। तदाशयं प्रकटयति—*अन्यपदार्थमात्र इत्यादिना*। द्वैमातुरः पाञ्चनापितिरित्यत्र प्रत्ययस्य न लुक् "अनपत्य" इति पर्युदासात् द्विगुविषयेऽप्यन्यपदार्थसद्भावेन

(१) व्याप्यत्वमिति। स्वाभाववदवृत्तित्वम्, व्याप्यत्वम्।

(२) व्यापकत्वमिति। स्वाधिकरणवृत्ति अत्यन्ताभावीयप्रतियोगितानवच्छेदकधर्मवत्त्वं व्यापकत्वम्।

ततः सिद्धान्त्येकदेश्याह, अन्तरङ्गत्वाद्बहुव्रीहिः। कान्तरङ्गता, अन्यपदार्थे बहुव्रीहिर्विशिष्टेऽन्यपदार्थे द्विगुस्तस्मिंश्चास्य तद्धितेऽस्तिग्रहणं क्रियत इति। अधिकार्थ्यर्थापेक्षमत्वर्थनिमित्तो द्विगुर्बहिरङ्ग इति कैयट इति। नैषा सिद्धान्त्युक्तिरेतावतापि अपवादत्वाहानेः। अच्सामान्यापेक्षयणो विशिष्टसवर्णाजपेक्षदीर्घेण बाधदर्शनात्।

किञ्च उक्तरीत्या परत्वेनैव बाधसिद्धेः। किञ्च अत्राधिकापेक्षत्वेनैव बहिरङ्गत्वम्। न केवलविशेषापेक्षत्वेनेति नैतद्भाष्यारूढं विशेषापेक्षस्य बहिरङ्गत्वम्। अतएव सुबन्तसामान्यापेक्षो बहुव्रीहिस्तद्विशेषापेक्षो द्विगुरिति नोक्तं भाष्ये। न चार्थकृतबहिरङ्गत्वस्य अनाश्रयणादिदमयुक्तम्, एकदेश्युक्तित्वेनादोषात्। अतएवास्तिग्रहणं नोपाध्यर्थं, किन्तु अस्तिशब्दान्मतुबर्थमितित्वदभिमतं बहिरङ्गत्वमपि द्विगोर्नास्तीति प्रतिपाद्य सिद्धान्तिना "मत्वर्थे द्विगोः प्रतिषेधो वक्तव्यः" इति वचनेनैतत्सिद्धमित्युक्तम्। अतएव "तदोः सः सौ" ( ७-२-१०६ ) इति सूत्रेऽनन्त्ययोरिति चरितार्थम्।

अन्यथा प्रत्ययसामान्यापेक्षत्वेनान्तरङ्गत्वादन्त्यस्यात्वेऽनन्त्यस्यैव सत्वे सिद्धे तद्वैयर्थ्यं स्पष्टमेव। "पादः पत्" ( ६-४-१३० ) इति सूत्रे भाष्यकैयटयो·

भैरवी।

बहुव्रीहेः प्राप्तिरिति भावः। *सिद्धान्त्येकदेश्याहेति*। समाधानकर्तृत्वेनायं सिद्धान्ती, एकदेशित्वं चास्याग्रे नैषेत्यादिना स्पष्टम्। *अन्यपदार्थे*। अन्यपदार्थमात्रे। *विशिष्टे*। अस्तीति विशेषणविशिष्टे अन्यपदार्थे। *तस्मिन्नित्यादि*। अस्य द्विगोरर्थद्वारा निमित्तभूते तद्धिते तद्धितविधायके "तदस्यास्त्यस्मिन्" इति सूत्र इति योजना। *एतावता*। अधिकार्थापेक्षत्वेन बहिरङ्गत्वेऽपि। *अपवादत्वाहानेः*। पूर्वपक्षिणैव यदुक्तमपवादत्वं तस्याहानेः, तद्रीत्या अधिकापेक्षत्वेऽपि बाधकत्वात्। तत्र हेतुमाह—*अजिति*। *विशिष्टः*। अधिकः। सवर्णत्वस्य सवर्णपदप्रवृत्तिनिमित्तं यत्सावर्ण्यं तत्परत्वमिह बोध्यम्। इदं दूषणं परोक्तमपवादत्वमभ्युपेत्य।

वस्तुतोऽपवादत्वमेव नास्तीत्याह—*किञ्चेति*। सावकाशत्वस्य दर्शनादिति भावः।

नन्वस्य एकदेश्युक्तित्वमस्तु तथापि विशेषापेक्षात्सामान्यापेक्षमन्तरङ्गमिति प्रकाशितमेवेत्यत आह—*किञ्चात्रेति*। *अत्र*। द्विगौ। अधिकापेक्षत्वेन*। अधिकनिमित्तकत्वेन। *बहिरङ्गत्वमिति*। भवदभिमतमस्तीति शेषः। *अत एव*। भाष्यकाराऽनभिप्रेतत्वादेव। अन्यथा तदप्ययुक्तम् स्यादिति भावः। *इदम्*। एवं रीत्या बहिरङ्गत्वोपपादनम्। *अत एव*। एकदेश्युक्तित्वादेव। *अस्तिशब्दादिति*। अस्तिमानित्यादौ। *त्वदभिमतम्*। सिद्धान्त्येकदेश्यभिमतम्। *बहिरङ्गत्वमपीति*। अत्रापिनाऽपवादत्वस्य समुच्चयः। *सिद्धान्तिना*। सिद्धान्तित्वेनाभिमतेन। वस्तुतो नैष सिद्धान्ती, पूर्वोक्तरीत्या परत्वेनैव सिद्धौ वचनाङ्गीकारस्य निष्फलस्य करणात्। तथा च पञ्च गावोऽस्य सन्ति स पञ्चगुरित्यत्र परत्वेनैव द्विगुं बाधित्वा बहुव्रीहिर्भवतीति बोध्यम्। *अत एव*। विशेषापेक्षात्सामान्यापेक्षमन्तरङ्गमित्यस्याभावादेव। एवञ्च तादृशान्तरङ्गबहिरङ्गभावः सूत्रविरुद्ध इत्याशयः। *अन्यथा*। तथाङ्गीकारे। *प्रत्ययेति*। विभक्तीत्यर्थः। पूर्वोक्तार्थं द्रढयति—*पादःपदितीति*। *भाष्यकैयटयोरिति*। तत्र निर्दिश्यमानपरिभाषायाः प्रयोजनस्य कथनावसरेऽहृदितामित्यादाविदितामाद्योः सम्प्रसारणायां परत्वादिटमाशङ्क्यान्तरङ्गत्वं तामा·

रप्येतदन्तरङ्गत्वाभाव एव सूचित इति सुधियो विभावयन्तु।

नन्वेवमसुस्रुवदित्यत्र लघूपधगुणादुवङोऽल्पनिमित्तत्वाभावादुवङ् न स्यादिति चेत्। न। तत्रान्तःकार्य्यत्वरूपान्तरङ्गत्वसत्त्वात्। अन्तःकार्य्यत्वं च पूर्वोपस्थितनिमित्तकत्वमङ्गशब्दस्य निमित्तपरत्वात्। इदमन्तरङ्गत्वं लोकन्यायसिद्धमिति मनुष्योऽयं प्रातरुत्थाय स्वशरीरकार्य्याणि करोति ततः सुहृदां ततः सम्बन्धिनामर्थानामपि जातिव्यक्तिलिङ्गसंख्याकारकाणां बोधक्रमः शास्त्रकृत्कल्पितस्तत्क्रमेणैव च तद्बोधकशब्दप्रादुर्भावः कल्पित इति तत्क्रमेणैव तत्कार्य्याणीति पट्व्येत्यादावन्तरङ्गत्वात् पूर्वं पूर्वयणादेशः परयणादेशस्य बहिरङ्गतया असिद्धत्वादित्यनेन "अचः परस्मिन्" (१-१-५७)

भैरवी।

दीनामुक्तम्, कैयटेन च प्राग्लादेशेभ्यो धात्वधिकारात् तामादीनामन्तरङ्गत्वमुक्तम्।

यदि विशेषापेक्षात्सामान्यापेक्षमन्तरङ्गमिति स्यात्तदा लादेशविषये धात्वधिकारसत्त्वेऽपि तामादीनां सामान्यापेक्षत्वेनान्तरङ्गत्वं वक्तुं शक्यमिति प्राग्लादेशेभ्य इति कथनमनर्थकमापद्येतेति भावः।

प्रागुक्तेषु पारिभाषिकान्तः स्थितनिमित्तकत्वेषु तृतीयस्याश्रयणं युक्तमेव लक्ष्यानुरोधाद्भाष्यकारादिसम्मतत्त्वाच्चेति ध्वनयितुमाशङ्क्य समाधत्ते--*नन्वित्यादिना*। *एवम्*। उक्तसिद्धान्ते। *अल्पनिमित्तत्वाभावादिति*। एतेन द्वितीयस्यान्तः स्थितनिमित्तकत्वस्याभाव उक्तः। उवङादेशे चङ्मात्रस्य गुणे तु सार्वधातुकमात्रस्यापेक्षास्ति। यद्यपि लघूपधस्याङ्गस्य तत्र ग्रहणे घटकत्वेन उवङोऽप्यपेक्षास्ति तथापि निमित्तत्वेन तस्य न ग्रहणम् सप्तम्यन्तशब्दानुपात्तत्वादिति भावः।

तृतीयम्प्रकारमाश्रित्य समाधत्ते--*तत्रेति*। प्राचीनसम्मतस्याल्पापेक्षमन्तरङ्गमित्यस्याभावेऽपि बहिरङ्गशास्त्रीयनिमित्तसमुदायघटकनिमित्तकत्वस्याभावेऽपि चान्तःकार्यत्वरूपस्यान्तरङ्गत्वेन प्रादुद्रुवदित्यादेः सिद्धिरिति भावः। एतादृशान्तरङ्गत्वं लोकेऽपि दृष्टमित्याह--*इदमिति*। उक्तान्तरङ्गत्वे भाष्यकारस्यापि सम्मतिं दर्शयितुमाह--*अर्थानामित्यादिना*। *अर्थानाम्*। शब्दवाच्यानाम्। *शास्त्रकृत् कल्पित इति*। शास्त्रकारीययुक्तिसिद्ध इत्यर्थः। विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य कारणतया विशिष्टबुद्धिरादौ न सम्भवति निष्प्रकारिका व्यक्तिप्रतीतिश्च निर्विकल्पकभिन्ना नास्त्येव निर्विकल्पके त्ववश्यं जातिभानमेतदर्थमेव निर्विकल्पकस्य स्वीकार इति रीत्या जातेरादौ प्रतीतिरिति व्यवहारः। ततो लिङ्गादीनान्निराश्रितानाम्भानमिति व्यक्तिप्रतीतिः, ततः सङ्ख्यापेक्षया लिङ्गस्य पदार्थान्तरापेक्षत्वात्प्रथमं प्रतीतिः, सङ्ख्यायास्तु द्वित्वादिकायाः पदार्थान्तरसापेक्षत्वं स्पष्टमेव। एकत्वमपि प्रसिद्धसङ्ख्यारूपं वस्तुमात्रसाधारणमतो न व्यावर्तकमिति समभिव्याहृतपदार्थसंसर्गित्वविशिष्टप्रकृत्यर्थतावच्छेदकावच्छिन्ननिष्ठभेदप्रतियोगितानवच्छेदकत्वमेकत्वमेकवचनार्थ इति तदपि पदार्थान्तरसापेक्षमतो लिङ्गाद्बहिरङ्गम्। एवंरीत्या लिङ्गस्यान्तरङ्गत्वात् तत्प्रयुक्तटाबादेरुत्पत्तिः। ततः कारकत्वस्य विजातीयक्रियापेक्षत्वं सङ्ख्यायास्तु सजातीयापेक्षत्वमिति सङ्ख्याप्रतीतिस्ततो बहिर्भूतक्रियासापेक्षकारकत्वप्रतीतिरिति क्रमः शास्त्रकृत्कल्पित इत्यर्थः।

ननु एतादृशैकत्वस्यैकवचनार्थत्वं पशुना यजेतेत्यादावनुपपत्तिः, समभिव्याहृतं पदं यजेतेति तत्संसर्गित्वविशिष्टप्रकृत्यर्थतावच्छेदकं यागीयपशुत्वन्न तु तत्तद्यागीयपशुत्वं तेन रूपेण यज्धातोरुपस्थित्यभावात्तदवच्छिन्नपश्वन्तरनिष्ठभेदप्रतियोगितावच्छेदकत्वस्य पशुनिष्ठे-

इति सूत्रे भाष्ये स्पष्टम् । तदपि युगपत्प्राप्तौ पूर्वप्रवृत्तिनियामकमेव यथा पट्व्येत्यत्र पदस्य विभज्यान्वाख्याने न तु जातस्य बहिरङ्गस्य तादृशेऽन्तरङ्गेऽसिद्धतानियामकं प्रागुक्तलोकन्यायेन तथैव लाभादिति "वाह ऊठ् ( ६-४-१३२ ) सूत्रे कैयटे स्पष्टम् । अत एव वाय्वोरित्यादौ वलि लोपो यणः स्थानिवत्त्वेन वारितो "अचः परस्मिन्" इत्यत्र भाष्यकृता । क्रमेणान्वाख्याने तु उक्तोदाहरणे पूर्वप्रवृत्तिकत्वमप्यन्तरङ्गत्वं बहिरङ्गस्यासिद्धत्वमपि निमित्ताभावादप्राप्तिरूपं बोध्यम् ।

यत्तु एवं रीत्या पूर्वस्थानिकमप्यन्तरङ्गमिति तच्चिन्त्यम् । स्रजिष्ठ इत्यादौ विन्मतोर्लुकि टिलोपस्यापवादविन्मतोर्लुक्प्रवृत्त्या जातिपक्षाश्रयणेन वारणप्रयासस्य "प्रकृत्यैकाच्" ( ६-४-१६३ ) इति सूत्रप्रयोजनखण्डनावसरे भाष्यकृत्कृतस्य नैष्फल्यापत्तेः । त्वदुक्तरीत्या विन्मतोर्लुको बहिरङ्गासि-

भैरवी ।

कत्वे सत्त्वादिति चेन्न । तादात्म्यस्वाश्रयपशुकरणकयागकरणपशुनिष्ठभेदप्रतियोगितावच्छेदकत्वोभयसम्बन्धेनैकत्वविशिष्टान्यैकत्वमेकवचनार्थ इत्यस्य स्वीकारात् । प्रतियोगिप्रसिद्धिश्चानेकपशुकरणकयागस्थले द्रष्टव्या । स्वमेकत्वम् । अत्र तादात्म्यानिवेशे सर्वेषामेवैकत्वानामेकत्वाऽऽश्रयपशुकरणकयागकरणपशुनिष्ठभेदप्रतियोगितावच्छेदकत्वं चालनीन्यायेन अस्तीति एकत्वविशिष्टान्यैकत्वाऽप्रसिद्धिः । तादात्म्यमात्रस्य संसर्गत्वे तादात्म्यसम्बन्धेनैकत्ववत्त्वं सर्वस्मिन्नेकत्वेऽस्तीत्येकत्वविशिष्टान्यत्वस्याप्रसिद्धिरित्युभयसम्बन्धनिवेशः । अनेनैव क्रमेण पट्व्या मृद्व्येत्यत्र लिङ्गबोधकस्त्रीप्रत्ययस्य प्राक् प्रादुर्भावात् तत्प्रयुक्तयणादेशः पूर्वम्प्रवर्तते, पूर्वम्पूर्वयणादेशः परयणादेशापेक्षया पूर्वकालप्राप्तिकत्वेन भेदेन कल्पितशास्त्रबोध्यः पूर्वयणादेशः । *तदपीति* । पूर्वोक्तमन्तः कार्यत्वमपीत्यर्थः । *युगपत्प्राप्तौ* । पूर्वोपस्थितनिमित्तकस्य परोपस्थितनिमित्तकस्य च युगपत्प्राप्तौ । *पूर्वप्रवृत्तिनियामकमिति* । पूर्वोपस्थितनिमित्तकस्येत्यादिः । *तादृशे* । पूर्वोपस्थितनिमित्तके । नन्वतिष्ठिपदित्यत्र गुणस्य पूर्वोपस्थितनिमित्तकत्वेनैतादृशान्तःकार्यित्वमाश्रित्यैव जातस्येत्वस्यासिद्धत्वमस्त्वित्यत आह-*प्रागुक्तेति* । लोकन्यायस्य युगपदुपस्थितविषयत्वात् । *अतएव* । पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्गत्वस्य जातबहिरङ्गासिद्धत्वनियामकत्वाभावादेव । वाय्वोरित्यत्र ।यलोपस्यनिमित्तभूतो वकारो यद्यपि पूर्वमुपस्थितस्तथाप्यस्य जातबहिरङ्गासिद्ध त्वनियामकत्वाभावात्तन्निवारणाय "अचः परस्मिन्" इतिस्थानिवद्भावो भाष्यकृताश्रितः । अन्यथासिद्ध त्वादेव वारणे भाष्यासङ्गतिः स्पष्टैव । न च यलोपविधिम्प्रति न स्थानिवदिति निषेधः शंक्यः । 'स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिवत्' इति नियमात् । *उक्तोदाहरणे* । पट्व्येत्यादौ अदुद्रुवदसुस्रुवदित्यत्र तु पूर्वोक्तरीतिरेवाऽऽश्रयणीया । *पूर्वप्रवृत्तिकम्* । असन्दिग्धपूर्वकालिकप्रवृत्तिकम् । अत्रान्तरङ्गत्वम्पूर्वोपस्थितनिमित्तकत्वम् ।

प्रागुक्तपारिभाषिकचतुर्विधाऽन्तरङ्गत्वेषु प्रथमोक्तं निरस्यति--*यत्त्विति* । *तच्चिन्त्यमिति* । प्राचीनोक्तं चिन्त्यमित्यर्थः । चिन्ताबीजमाह--*स्रजिष्ठ इत्यादाविति । अत्र स्रग्विन्शब्दादिष्ठन् ।

ननु पूर्वमिनित्यस्य टेरित्यनेन लोपस्य प्राप्तिर्विनो लोपे त्वज्शब्दस्येतिविषयभेदात् कथं "विमन्तोर्लुक्" इत्यस्यापवादत्वमत आह—*जातीति* । नाप्राप्ते टित्वावच्छिन्नस्य लोपे विन्मतोर्लुगारभ्यतेऽतो विन्मतोर्लुग्विषये टित्वावच्छिन्नस्य लोपो न प्रवर्त्तते तत्कदानोद्देश्याय

सिद्धत्वेन अनायासतस्तद्वारणात्। भाष्ये ईदृशरीत्या बहिरङ्गासिद्धत्वस्य कण्ठनाश्रयणाच्च। परिभाषायामङ्गशब्दस्य निमित्तपरत्वाच्च।

इयं चोत्तरपदाधिकारस्थबहिरङ्गस्य न असिद्धत्वबोधिकेतीच "एकाचोऽम्" (६-३-६८) इति सूत्रे भाष्ये पूर्वपक्षयुक्तिरिति सा नादर्त्तव्या। परन्तप इत्यादावनुस्वारे नासिद्धत्वं मुमस्त्रिपाद्यामेतदप्रवृत्तेः।

नव्यमतेऽपि यथोद्देशपक्षाश्रयणेनान्यथासिद्धोदाहरणदानेन तस्य तदुक्तित्वमावश्यकमित्याहुः। आभीयेऽन्तरङ्गे आभीयस्य बहिरङ्गस्य समाना-

भैरवी।

दभिदानमिवेति भावः। *तद्वारणात्*। पुनः प्राप्तस्य टिलोपस्य वारणात्। किञ्च उक्तान्तरङ्गत्वं न भाष्यकारसम्मतमित्याह--*भाष्य इति*। *निमित्तपरत्वादिति*। स्थानिनो निमित्तत्वाभावः सुप्रसिद्ध एवेति भावः।

*इयमिति*। असिद्धमिति परिभाषेत्यर्थः। *पूर्वपक्षयुक्तिरिति*। एवं रूपाया उक्तिः सा पूर्वपक्षिण इत्यतो ना ऽऽदर्त्तव्येत्यर्थः। तत्र हि-अथेह कथं भवितव्यं श्रियमात्मानं मन्यते ब्राह्मणकुलं श्रियम्मन्यं श्रिमन्यमिति चेति श्रियम्मन्यमिति भवितव्यमिति सिद्धान्तिनोक्तम्। ततः पूर्वपक्षी आह, "स्वमोर्" इतिलुक्कुतो नेति। ततो बाध्यसामान्यचिन्तया सिद्धान्त्याह, नाप्राप्ते लुक्यस्यारम्भात्सुपोधात्वितिवत् स्वमोरित्यस्याप्यनेन बाध इति। ततो बाध्यविशेषचिन्तया पूर्वपक्षी, 'येन नाप्राप्तिन्यायेन' "सुपोधातु" इति लुक् एवंविधानस्बाधकम्, अथवा "मध्येऽपवादाः पूर्वान्विधीन्बाधन्ते" इति न्यायेन "सुपोधातु" इत्यस्यैवायं बाधक इति। ततः सिद्धान्ती आह-'असिद्धं बहिरङ्गमन्तरङ्गे' इति परिभाषया अमोऽसिद्धत्वाल्लुगभाव इति। एवंरीत्या समाधानेकृते एषा परिभाषा उत्तरपदाधिकारे शक्या विज्ञातुमिह हि दोषः स्यात् द्विषन्तपः परन्तप इत्यत्र संयोगान्तलोपो न स्यात् तस्माच्छ्रिमन्यमित्येव भवितव्यमिति। एषा पूर्वपक्षयुक्तिरेतस्या उक्तेरन्यथा सिद्धोदाहरणदानेन पूर्वपक्षयुक्तित्वं स्पष्टयति--*परन्तप इत्यादाविति*। अनुस्वार इत्युपलक्षणम्। संयोगान्तस्य लोपेऽपीति बोध्यम्। *त्रिपाद्यामेतदप्रवृत्तेरिति*। त्रैपादिकेऽन्तरङ्गबहिरङ्गपरिभाषाया अप्रवृत्तेर्विसर्जनीयसूत्रभाष्ये सिद्धान्तितत्वात्। *नव्यमतेऽपि*। दीक्षितमतेऽपि। एतन्मते त्रिपाद्यामसिद्धपरिभाषाया यथोद्देशपक्षे अप्रवृत्त्या तथोक्तेर्यदुदाहरणं तत्सिद्धमिति भावः। *तस्य*। उक्तभाष्यस्य। *तदुक्तित्वम्* पूर्वपक्षयुक्तित्वम्। *आहुरिति*। भाष्यीयसिद्धान्तानुयायिन इति शेषः। एतत्परिभाषावृत्तिविषयेऽपरं विशेषमाह--*आभीय इत्यादिना*। समानाश्रयस्येत्यनेनासिद्धवत्सूत्रस्य प्रवृ-

तत्त्वप्रकाशिका।

साधनस्य सङ्ख्याविशिष्टत्वनियमेन सम्पूर्णतदाकाङ्क्षानिवर्तकतिङामुत्पत्त्यैव तदाकाङ्क्षानिवृत्तिरितिपूर्वं तिङ्यतिङिनिषेधसम्भवात्॥ ९० ॥

*पूर्वपक्षयुक्तिरिति*। वस्तुतस्तु परन्तप इत्यत्र त्रिपाद्यामन्तरङ्गपरिभाषायाऽप्रवृत्त्या दोषाभावेऽपि महाब्राह्मणः त्रयोविंशतिः अष्टाकपालम् इत्यादौ आत्वत्रयसादेशादेरसिद्धत्वेन सवर्णदीर्घाद्यप्रवृत्त्या परस्मैपदं सर्वपांसुत्र इत्यादावलुको बहिरङ्गत्वेनासिद्धत्वात्स्मायाद्यप्रवृत्त्यापत्त्या आभीयबहिरङ्गस्यासिद्धत्वन्न भवतीतिवक्तव्यत्वेन अस्य भाष्यस्य सिद्धान्त्युक्तित्वमितिचन्द्रिकाकारः। श्रियम्मन्यमित्यत्र बाध्यसामान्यचिन्ताश्रयणमम्विधिसामर्थ्यादितिभावः।

ननु पपुष इत्यादावनया परिभाषया सम्प्रसारणस्य बहिरङ्गत्वेनासिद्धत्वादल्लोपादीनि न स्युरित्यत आह—*आभीयेऽन्तरङ्ग इति*।

श्रयस्य नानेनासिद्धत्वमसिद्धत्वादित्यसिद्धवत् सूत्रे भाष्ये स्पष्टम् । एवं सिचिवृद्धेर्येन नाप्राप्तिन्यायेनान्तरङ्गबाधकत्वमूलकं न सिच्यन्तरङ्गमस्तीति "इको गुण" ( १-१-३ ) इति सूत्रे भाष्ये स्पष्टम् ॥ ५० ॥

नन्वेवम्, अक्षद्यूरित्यादौ बहिरङ्गस्योठोऽसिद्धत्वादन्तरङ्गो यण् न स्यादत आह—

## नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः ॥ ५१ ॥

अत्र "षत्वतुकोः" ( ३-१-८३ ) इति सूत्रस्थतुग्ग्रहणं ज्ञापकम् । अन्यथाधीत्य प्रेत्येत्यादौ समासोत्तरं ल्यप्प्रवृत्त्या पूर्वं समासे जाते तत्र संहि-

भैरवी ।

त्तियोग्यता उक्ता । *अनेन* । 'असिद्धं बहिरङ्गमन्तरङ्गम्' इतिवचनेन । *असिद्धत्वात्* । आभीयासिद्धत्वात् । *भाष्य इति* । तत्र हि–"वसुसम्प्रसारणमज्विधौ सिद्धं वक्तव्यम्" अन्यथा पुपुषः, तस्थुषः, चिच्युषः लुलुवुषः इत्यादावल्लोपयणुवङामप्रवृत्त्यापत्तिरित्युक्त्वा अन्तरङ्गं बहिरङ्गमिति प्रतिद्वन्द्विभाविनाविति "असिद्धवत्' सूत्रेण बहिरङ्गदृष्ट्या अन्तरङ्गस्यासिद्धत्वात् "असिद्धं बहिरङ्गम्" इति परिभाषाया अप्रवृत्तिरित्युक्तम् ।

अयम्भावः—असिद्धपरिभाषाया ऊठ्ग्रहणेन ज्ञापितत्वादाभीयतया यस्यासिद्धत्वं तन्निमित्तनिमित्तकत्वं परम्परया भाष्यप्रामाण्यादाश्रित्य समानाश्रयत्वादसिद्धवत्सूत्रस्य प्राप्त्या असिद्धमिति परिभाषाया अप्रवृत्तिरिति । अपरं विशेषमाह--*एवमिति* । *एवम्* । पूर्ववत् । ' न सिच्यन्तरङ्गमस्ति" इति प्राचीना वदन्ति तत्रापूर्ववचनं किन्त्वर्थात्सिद्धमितिभावः । *अरतरङ्गेति* । गुणेत्यर्थः । ज्ञापकमप्यस्मिन्नर्थे भाष्ये उक्तम्--"अतो हलादेः" इति सूत्रेऽदूग्रहणम् । "ह्मयन्त" इति सूत्रे णिश्विग्रहणञ्च । अदूग्रहणव्यावर्त्त्यमकोषीदित्यादि तदन्यथासिद्धमन्तरङ्गे गुणे कृतेऽलघुत्वात् । तथाश्वयीदित्यादौ गुणायादेशयोर्यान्तत्वात्तदभावसिद्धौ णिश्विग्रहणस्य वैयर्थ्यं दुर्वारम् । "न सिच्यन्तरङ्गम्" इति स्वीकारफलन्त्वनेनार्यादित्यस्य सिद्धिरन्यथा गुणायादेशयोर्यान्तत्वाद्वृद्धिर्नस्यादिति ॥ ५० ॥

एतावता प्रबन्धेन बहिरङ्गपरिभाषां निरूप्यैतद्बाधकपरिभाषां निरूपयितुमाशङ्कते--*नन्वेवमिति* । *एवम्* । बहिरङ्गपरिभाषास्वीकारे । *अक्षद्यूरिति* । अक्षशब्दे उपपदे दिवेः क्विप् । *बहिरङ्गस्य ऊठ इति* । अन्तरङ्गयणादेशापेक्षयेत्यादिः । यणादेशेऽज्मात्रं निमित्तमूठि तु बहिर्भूतः क्विबित्यूठ्बहिरङ्गः । अत्र परस्थितनिमित्तकत्वरूपमेव बहिरङ्गत्वं बोध्यम् ।

तत्त्वप्रकाशिका ।

ननु अचिरार्यात् अजिरार्यादित्यत्रान्तरङ्गत्वाद्गुणेऽयादेशे यान्तत्वाद्वृद्धिनिषेधस्स्यादतस्तद्वारणाय "ह्मयन्त" इति सूत्रे श्विग्रहणान्न सिच्यन्तरङ्गमस्ति" इतिज्ञाप्यते तेनाश्वैषीदित्यादौ न गुण इतिवदतामुक्तिं निराकर्तुमाह-*एवंसिचीति* । न चानश्वैषादित्यत्र वृद्धेः परत्वाल्लघूपधगुणो दुर्वारः, नाप्राप्त्यसम्भवेन वृथा बाधायोगादितिवाच्यम् बाध्यसामान्यचिन्ताश्रयणेनादोषात् ॥ ५० ॥

*अक्षद्यूरित्यादौ* । आदिना हरय इत्यस्य सङ्ग्रहः । *अत्र* । परिभाषायाम् । भाष्ये यदयं "षत्वतुकोः" इत्याद्युक्तं तथापि वक्ष्यमाणयुक्तेस्तुग्ग्रहणे एव तत्तात्पर्यमित्याह-*तुग्ग्रहणमिति* । *अधीत्येति* । क्त्वान्तेनाधीत्यस्य योगे धातूपसर्गयोः संहिताया नित्यत्वेनान्तरङ्गनिमित्तविनाशकल्यप्प्रयोजकसमासस्यान्तरङ्गापेक्षया बलवत्त्वेऽपि प्रकृते तदभावादन्तरङ्गत्वाद्दीर्घे पूर्वान्तवद्भावेन गतित्वाद्यपदेशिवद्भावेन कृदन्तत्वात्ततस्समासे ल्यपि तुक एकपदसम्बन्धिप्रकृतिप्रत्ययमात्रापेक्षत्वेनान्तरङ्गत्वाद्दीर्घस्यासिद्धत्वमितिभावः । नच दीर्घा-

ताया नित्यत्वाल्ल्यबुत्पत्तिपर्यन्तमप्यसंहितयावस्थानासम्भवेनैकादेशे ल्यपि तुगपेक्षया पदद्वयसम्बन्धिवर्णद्वयापेक्षैकादेशस्य बहिरङ्गतया असिद्धत्वेन तद्वैयर्थ्यं स्पष्टमेव। पदद्वयसंम्बन्धिवर्णद्वयापेक्षैकादेशस्य बहिरङ्गत्वमिति प्रेद्ध इत्यादौ गुणो बहिरङ्ग इति ग्रन्थेन "न धातुलोप" (१-१-४) इति सूत्रे "संयोगान्तस्य लोपः" (८-२-२३) इति सूत्रे च भाष्ये स्पष्टम्।

यत्तु षत्वग्रहणमपि ज्ञापकम्। अन्यथा कोऽसिचदित्यादौ पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वेन बहिरङ्गस्यैकादेशस्यासिद्धत्वेन षत्वाप्रवृत्तौ किं तेनेति तन्न। इणः पूर्वपदसम्बन्धित्वेन षत्वस्यापि पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वेन उभयोः समत्वात् एकादेशस्य परादिवत्त्वेनौसिचदित्यस्य पदत्वेन सस्य

भैरवी।

ननु पदद्वयसम्बन्धिवर्णद्वयापेक्षं बहिरङ्गमित्यस्य पूर्वमकथनाद्भाष्यकारानुक्तत्वाच्च कथं बहिरङ्गत्वसाधकत्वमत आह-*पदद्वयेति*। प्रेद्ध इत्यादौ आदिपदेनोपेद्ध इत्यस्य संग्रहः। *"न धातुलोप" इति सूत्रे*। तत्र आर्द्धधातुकनिमित्ते धात्वेकदेशलोपे यत्किञ्चिन्निमित्ते गुणवृद्धी न भवत इत्यर्थं उपेद्ध इत्यादावपि निषेधः स्यादित्युक्त्वा, इत्थं समाहितम्-पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वेन बहिरङ्गत्वं वस्तुतस्तन्न सम्भाव्यते। परन्तु तत्र यदुपसर्गनिमित्तमित्याद्येवोक्तमत आह-*संयोगान्तस्येति*। तत्र हि-दध्यत्रेत्यत्र बहिरंगो यणादेशः अन्तरंगो लोप इत्युक्तम्। पदद्वयसम्बन्धीत्यस्य विशेषणस्य तत्राऽनुपादानेऽपि वस्तुतस्तथात्वमस्तीत्यत्रैव तात्पर्य्यम्। कैयटाद्युक्तिं खण्डयति-*यत्त्विति*। *एकादेशस्य*। पूर्वजातस्येति शेषः। *इणः*। ओकारस्य। अत्र तु तदन्तर्गत इत्यत्र तात्पर्य्यम्। *षत्वस्यापीति*। अत्रापिनाएकादेशसमुच्चयः। अत एवाह—*उभयोरिति*। ननु षत्वग्रहणं तत्र मास्तु कोऽसिचत्कोऽस्येत्यत्र तु न षत्वस्यापत्तिः, एकादेशेनाकारस्यापहारे कृते एकदेशविकृतन्यायेन सिचदित्यस्य स्येत्यस्य च पदत्वात्। "सात्पदाद्योः" इति निषेधः सिद्ध एवेत्यत आह-*एकादेशस्येति*।

तत्वप्रकाशिका।

त्पूर्वं षित्परत्वाभावादुत्तरन्तु ह्रस्वाभावादन्तरङ्गाकर्तव्यताया अभावेन कथमसिद्धत्वमिति वाच्यम्। असिद्धत्वोत्तरं ह्रस्वबुद्ध्यान्तरङ्गप्राप्तेस्तद्विषयत्वात्।

केचित्तु समासे कृते संहिताया अविवक्षया तुकि ततो दीर्घे ज्ञापकज्ञानशैथिल्यमितिवदन्ति। तन्निरस्यति-*असंहितयेति*।

ननु वीच्छत्रं सूच्छत्रमित्यादौ पदान्तपदाद्योरेकादेशस्य सत्त्वेन दीर्घस्यासिद्धत्वान्नित्यतुक्सम्पादनेन तुकश्चारितार्थ्यम्। अन्यथा "पदान्ताद्वा" इतिविकल्पापत्तिः नात्र दीर्घस्य बहिरङ्गत्वं पदद्वयनिमित्तकत्वेनोभयोः समत्वादिति चेन्न षत्वसाहचर्यान्नित्यतुग्विधावेवैकादेशस्यासिद्धत्वविधानात्। अतएव ज्ञापकपरभाष्यमपि सङ्गच्छते। नचैवं षत्वे कर्तव्ये यत्पदसन्धिस्सस्य षत्वन्तत्पदसम्बन्धिवर्णेन सहैकादेशस्यैव ग्रहणं तद्वत्तुक्यप्यस्तु। एवञ्च नहि वेः पक्षिण इः वी तस्य छत्रम् वीच्छत्रमित्यादौ तत्पदसम्बन्धिवर्णेनैकादेशोऽस्तीतिवाच्यम् अङ्गुलेरिः अङ्गुलोः तस्य सङ्गोऽङ्गुडीसङ्ग इत्यादौ षत्वेऽपि तथानियमाभावात्। *एकादेश इति*। धर्मिग्राहकमानादन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब्बाधत इति तु अन्तरङ्गनिमित्तविनाशकल्यप एव प्राबल्यबोधकमिति भावः। अत एव निरेष्यगत अभिवाद्यगत इत्यादौ निरादिपूर्वादिपिवद्योर्णिचि लघूपधगुणे ल्यपि णेरयादेशाभावः सिध्यति।

केचित्तु प्रकृत्येत्यत्र प्रादेराद्युदात्तत्वसिद्धिः, अन्यथाऽन्तरङ्गमपि "निपाता आद्युदात्ता" इति स्वरं बाधित्वाऽनया पूर्वं ल्यपि ततः पूर्वपदप्रकृतिस्वर एव स्यादित्याहुस्तदसत्,

पदादित्वाभावान्न "सात्पदाद्योः" ( ८-३-१११ ) इत्यनेन निषेधः । त्रैपादिकेऽन्तरङ्गे कार्य्यकालपक्षेऽपि बहिरङ्गपरिभाषाया अप्रवृत्तेः पूर्वमुपपादितत्वाच्च । परिभाषार्थस्तु–अचोऽन्यानन्तर्य्यनिमित्तकेऽन्तरङ्गे कर्त्तव्ये जातस्य बहिरङ्गस्य बहिष्ट्वप्रक्लृप्तिर्न । बहिस्पदेन बहिरङ्गम्, तस्य भावो बहिरङ्गत्वं तत्प्रयुक्तासिद्धत्वस्य न प्रक्लृप्तिः न प्राप्तिरिति । असिद्धं बहिरङ्गमित्युक्त्वा "नाजानन्तर्य्ये" इति वक्ष्यामीति भाष्योक्त्या तत्रत्यस्यान्तरङ्गे इत्यस्यानुवृत्तिसूचनात् । तेन पचावेदमित्यादौ न दोषः । अन्तरङ्गस्या-

भैरवी ।

*पदादित्वाभावादित्यस्य* । सकारस्येत्यादिः ।

ननु "सात्पदाद्योः" इति निषेधप्रवृत्तिप्रतिबन्धस्य अशास्त्रीयत्वात् तदर्थमतिदेशः कथं स्यात्–यदि च निषेधप्रवृत्तिप्रतिबन्धस्याभावाभावरूपस्य प्रतियोगिरूपतया षत्वरूपत्वमिति नाशास्त्रीयत्वमिति ब्रूषे, तर्हि उक्तरीत्या औसिचदित्यस्य पदत्वेनेणः पूर्वपदासम्बन्धित्वेन ज्ञापकत्वं युक्तमेव ।

किंच भानुष्ट्वमित्यपि षत्वग्रहणस्य फलमस्तु तत्र न कथमप्यशास्त्रीयत्वशङ्कापि अत्र ह्युस्शब्दात्सुबन्ताल्लालसायां क्यचि सुगागमे उस्शब्दाद्वा सुबन्तात् क्यचि सुब्लुकि क्विपि अल्लोपयलोपयोर्भानुशब्दस्योस्शब्देन समासे एकादेशे च सति ततस्त्वप्रत्यये "ह्रस्वात्तादौ तद्धिते" इति षत्वे कर्त्तव्ये एकादेशस्यासिद्धत्वात् ह्रस्वात्परत्वमाश्रित्य षत्वं भवति, तच्च बहिरङ्गपरिभाषयव सिद्धमिति "षत्वतुकोरसिद्ध" इति सूत्रे षत्वग्रहणं व्यर्थं सत्तत्र ज्ञापकमेवेत्यत आह—*त्रैपादिक इत्यादि* ।

यत्त्वस्याः परिभाषाया अर्थनिरूपणावसरे हरदत्तादय ऊचुः "अचोरानन्तर्य्यम्" इति द्विवचनान्तेन समासः क्वेत्यधिकरणाकाङ्क्षायां बाध्यासिद्धपरिभाषायाम् उभयोरुपादानादुभाभ्यां,तन्निरासादन्तरङ्गबहिरङ्गे चेतिलब्धमिति, तदेतज्ज्ञापकं क्ङितिग्रहणात्पचावेदमित्यत्र।बाध्यासिद्धपरिभाषायाः प्रवृत्तिपराऽऽकरप्रामाण्याद्धर्म्मिग्राहकमानविरोधेन चायुक्तमित्याशयेन आह—*परिभाषार्थस्त्विति* । अच इति सम्बन्धसामान्ये षष्ठी न तु स्थानषष्ठी । तेनाक्षद्यूरित्यस्य ज्ञापकस्य चोपपत्तिः । *अन्यानन्तर्य्ये* । अन्यनिरूपितानन्तर्ये । ज्ञापकसाजात्यादाह—*जातस्येति तत्प्रयुक्तासिद्धत्वस्येति* । एवं च बहिष्ट्वपदं बहिरङ्गत्वप्रयोज्यासिद्धत्वे लाक्षणिकमिति बोध्यम् । न च लक्षणैव चेदाश्रीयते तदा बहिष्ट्वपदस्यासिद्धपरिभाषायां लक्षणा अस्तु एवञ्चाचोन्यानन्तर्य्यनिमित्तकेऽन्तरङ्गे कर्त्तव्येऽसिद्धपरिभाषा न प्रवर्त्तेत इत्यस्त्विति वाच्यम् । त्वान्तस्य लक्षणा यदि परिभाषायां स्यात् तदा त्वप्रत्ययोपादानमनर्थकमापद्येत । शक्यार्थस्य स्वाश्रयवाचकपदघटितत्वं सम्बन्ध इति वक्तव्ये तदपेक्षया त्वप्रत्ययमनुपादाय बहिःपदस्य स्वरूपशक्तस्य घटितत्वसम्बन्धेन परिभाषायां लक्षणाया उचितत्वात् साजात्याल्लब्धस्य जातस्येत्यस्य तदालाभश्च स्यादिति भावः । परिभाषार्थमध्ये यदुक्तमन्तरङ्गे कर्त्तव्य इति तल्लाभोपायमाह—*असिद्धमित्यादिना* । तेन* । अचो-

तत्त्वप्रकाशिका ।

इष्टापत्तेः ।

यत्तूक्तनिर्देशे पराजग्ध्येत्यत्रान्तरङ्गत्वादेकादेशे ततो जग्धिम्बाधित्वाऽनया ल्यपि पश्चाजग्ध्यादेशेनैकादेशस्याप्यपहारापत्तिस्तन्न ल्येन स्वप्रकृतिद्वारा वाऽन्तरङ्गनिमित्तविनाशकल्यपः प्राबल्यकल्पनात् ।

अनुवृत्तिसूचनादिति* । वस्तुतस्तु "वाह ऊठ्" सूत्रदेशत्वादसिद्धपरिभाषायाः प्रथमपादस्थतुग्ग्रहणेन ज्ञापितायामस्यामनुवृत्त्यसम्भवाच्चिन्त्यमेतत् । बहिष्ट्वपदार्थस्य नित्यसा-

चूस्थानिककार्य्यस्यैत्वस्यान्यानन्तर्य्यनिमित्तकत्वाभावात् । जातस्य बहिरङ्गस्येत्युक्तयायजे इन्द्रं धियतीत्यादौ बहिरङ्गदीर्घगुणादेरसिद्धत्वं सिद्धम् । अत एव "इण्ङिशीनामाद्गुणः सवर्णदीर्घत्वाच्छ्चङन्तस्यान्तरङ्गलक्षणत्वात्" इत्यादिः संगच्छते । अत एव "ओमाङोश्च" ( ६-१-९५ ) इत्याङ्ग्रहणं चरितार्थम् । तद्धि शिव आ इहीति स्थिते परमपि सवर्णदीर्घं बाधित्वा धातूपसर्गकार्यत्वेनान्तरङ्गत्वाद्गुणे वृद्धिबाधनार्थम् ।

न चाक्षद्यूरित्यत्र यणि कृते ऊठोऽसिद्धत्वाद्वलि लोपापत्तिरिति वाच्यम् ? अचोऽन्यानन्तर्य्यनिमित्तकेऽन्तरङ्गे कर्त्तव्ये कृते च तस्मिन् यदन्तरङ्गं प्राप्नोति तत्र च कर्त्तव्ये नासिद्धत्वमित्येदर्थात् । असिद्धपरिभाषायाः अनित्यत्वेन तद्वारणे त्वस्या वैयर्थ्यं तेनैव सिद्धेः । अत एव "नलोपः सुप्" (८-२-२)

भैरवी ।

ऽन्यानन्तर्य्यनिमित्तक इत्युपादानेन । *अतएव* । जातस्येत्यस्य कल्पनादेव । आद्यम् विप्रतिषेधसूत्रस्थम् । एतदुदाहरणमयजे इन्द्रम्, ग्रामे इह, सर्वे इत्थम् । अन्त्यम् "क्ङिति च" इति सूत्रस्थम् । तदुदाहरणन्धियति, रियति, पियति, अदुद्रुवदित्यादि । इत्यादीत्यादिपदेन "अचः परस्मिन्" इति सूत्रस्थं पद्व्या मृद्व्येत्येतत्साधनावसरे यदुक्तं बहिरङ्गेण सिध्यतीति भाष्यं तस्य सङ्ग्रहः । अत्रार्थे सूत्रकारस्यापि सम्मतिमाह--*अत एवेति* । जातस्येत्यस्य निवेशादेव । *तद्धीति* । पदस्य विभज्यान्वाख्याने इदम् । *धातूपसर्गेति* । यद्यपि सिद्धान्ते पूर्वं साधनयोगः स्वीकृतस्तथापि तद्बाधकप्रत्ययोत्पत्त्यनन्तरं स्वार्थमात्रद्योतकत्वेन साकाङ्क्षतया धातोरुपसर्गयोगे ततः समुदायार्थेन शिवशब्दार्थस्य योग इति गुणस्यान्तरङ्गत्वम् । अत्रार्थेऽक्षद्यूरित्यत्र वकारस्योठादेशे यणि "लोपो व्योः" इति यलोपे कर्त्तव्य ऊठोऽसिद्धत्वं स्यादस्याश्च परिभाषाया असिद्धत्वाभावसम्पादिकाया न प्राप्तिरन्तरङ्गस्य वलिलोपस्याचोऽन्यानन्तर्य्यनिमित्तकत्वाभावादित्याशयेन हरदत्तकैयटसम्मतपरिभाषार्थपक्षेऽप्यस्या न प्राप्तिरित्याशयेन च शङ्कते--*न चेति* । समाधत्ते--*अच इत्यादि* । तदर्थात्* । प्रकृतपरिभाषार्थात् । एतादृशार्थस्वीकारे त्वचोऽन्यानन्तर्य्यनिमित्तकोऽन्तरङ्गो यणादेशस्तस्मिन् कृतेऽन्तरङ्गे वलि लोपे कर्त्तव्येऽसिद्धत्वस्य निषेधो भवतीति भावः । बृहद्विवरणकारेणाचोऽन्यानन्तर्य्यनिमित्तकेऽन्तरङ्गे कर्त्तव्य इत्येव प्रकृतपरिभाषार्थः स्वीकृतोऽक्षद्यूरित्यत्र वलिलोपस्यापत्तिस्त्वसिद्धमिति परिभाषाया अनित्यत्वात्प्रवृत्तिरित्युक्त्वा वारिता । तथाकथनमनुचितमित्याशयेन आह--*असिद्धेत्यादि* । *तद्वारणेत्विति* । तुनाऽरुचिर्बोधिता । तद्बीजन्तु यदीयं परिभाषा नाङ्गीक्रियते तदास्यां यज्ज्ञापकं तदसिद्धपरिभाषाया अनित्यत्व एव ज्ञापकमिति वक्तव्यन्तथा च सति "ह्रस्वस्य पिति" इति तुकि कर्त्तव्येऽसिद्धपरिभाषा न प्रवर्त्तत इति फलितम् । एवं सति ग्रामणिपुत्रो ग्रामणिपतिरित्यत्र तुक्प्राप्नोति ।

यदि च सन्निपातपरिभाषया तत्र तुग्वार्य्यते, तदा सन्निपातपिभाषयैव वक्ष्यमाणस्य

तत्त्वप्रकाशिका ।

काङ्क्षत्वात्प्रत्यासत्त्याऽजानन्तर्यनिरूपितस्यैव तस्य ग्रहणेनान्तरङ्ग इत्यस्य लाभ इति युक्तमुत्पश्यामः । अभावादितिधातोरित्यनुवृत्तस्य विहितविशेषणत्वमित्याशयः । केचित्तु एधस्वेदमित्यादावमादेशापत्त्याऽस्याऽनित्यत्वमवश्यं स्वीकार्यं स्यादन्तरङ्गपरिभाषाया एवानित्यत्वकल्पनेनेयं व्यर्थेत्याहुः । तन्न सकारसाहचर्याद्विकारात्परस्यानतिदिष्टाकारस्य ग्रहणेन दोषात् । *वलिलोपापत्तिरिति* । चिन्त्यमेतत् वलिलोपेऽन्तरङ्गपरिभाषाया-

इति सूत्रे कृति तुग्ग्रहणं चरितार्थम्। अन्यथा वृत्रहभ्यामित्यादौ बहिर्भूतभ्याम्निमित्तकपदत्वाश्रयत्वेन बहिरङ्गतया नलोपस्यासिद्धत्वेन सिद्धेस्तद्वैयर्थ्यं स्पष्टमेव। मम तु तुक्यजानन्तर्य्यसत्त्वान्न दोषः।

न चैवं सति "ह्रस्वस्य पिति" (६-१-७१) इति सूत्रस्थ भाष्यविरोधः। तत्र हि ग्रामणिपुत्र इत्यत्र "इको ह्रस्वोऽङ्यो" (६-३-६१) इति ह्रस्वे कृते तुकमाशङ्क्य ह्रस्वस्य बहिरङ्गासिद्धत्वेन समाहितम्। 'नाजानन्तर्यं' इत्यस्य सत्त्वे तत्र तदप्राप्तेरसङ्गतिः स्पष्टैवेति वाच्यम्। तेन भाष्येणास्या अनावश्यकत्वबोधनात्। एतज्ज्ञापकेनान्तरङ्गपरिभाषाया अनित्यत्वबोधनस्यैव न्याय्यत्वात्। अत एव "अचः परस्मिन्" (१-१-५७) इति सूत्रे भाष्ये पटु ई आ इत्यत्र परयणादेशस्य तयासिद्धत्वात्पूर्वयणादेशः साधितः। अत एवैषा परिभाषा भाष्ये पुनः क्वापि नोल्लिखिता। अत एवान्तरङ्गपरिभाषामुपक्रम्य विप्रतिषेधसूत्रे ऽस्या बहूनि प्रयोजनानि सन्ति तदर्थमेषा परिभाषा कर्त्तव्या प्रतिविधेयं च दोषेषु इत्युक्तं "सम्प्रसारणाच्च" (६-१-१०८)

भैरवी

"ह्रस्वस्य पिति"इतिसूत्रस्थभाष्यप्रयोगे तुक्प्राप्तिरूपदोषस्य वारणे सिद्धे वक्ष्यमाणस्या अस्या अनावश्यकत्वेत्यस्य ग्रन्थस्यासङ्गतिरित्यधुना नाजानन्तर्यपरिभाषा सत्वमेवोचितमिति। नन्वस्त्वस्यावैयर्थ्यं तावतापीष्टापत्तिरत आह-*अत एवेति*। नाजानन्तर्य्यपरिभाषासत्वादेवेत्यर्थः *अन्यथा*। अनित्यासिद्धपरिभाषया निर्वाहे। *पदत्वाश्रयत्वेनेति*। पदत्वनिमित्तकत्वेनेत्यर्थः। असिद्धपरिभाषाज्ञापकपरभाष्यप्रामाण्येन परम्परयापि निमित्तकत्वं क्वचिदाश्रीयते इत्यभ्युपेत्येदम्। *मम तु*। नाजानन्तर्य्यपरिभाषास्वीकर्त्तुर्मम। *तुकि*। तुग्विधायके "ह्रस्वस्य"इति सूत्रे। *न चैवं सति*। नाजानन्तर्य्यपरिभाषास्वीकारे सति। *तुकमाशङ्क्य*। प्रत्ययलक्षणेन क्विप्परत्वात्तुकमाशङ्क्य। *बहिरङ्गासिद्धत्वेनेति*। बहिर्भूतोत्तरपदनिमित्तकत्वेन ह्रस्वस्य बहिरङ्गत्वमिति भावः। *तत्र*। ग्रामणिपुत्र इत्यत्र। *तदप्राप्तेरिति*। नाजानन्तर्य्यपरिभाषया निषेधाद्बहिरङ्गपरिभाषाया अप्राप्तेरित्यर्थः। नाजानन्तर्य्यपरिभाषार्थमध्ये जातस्येत्यस्य निवेश इत्यभिमानेनेयमाशङ्क्य परोक्तप्रकारमभ्युपेत्य समाधत्ते—*तेन भाष्येणेति*। "ह्रस्वस्य" इति सूत्रस्थभाष्येणेत्यर्थः। बहिरङ्गपरिभाषया समाधानकर्त्रैकदेशिनास्यावश्यकत्वं ध्वनितम्। स एवाह--*अत एवेति*। अनावश्यकत्वेन नाजानन्तर्यपरिभाषाया अभावादेव। वस्तुतस्तु इदं चिन्त्यम्। नाजानन्तर्यपरिभाषाया अर्थनिरूपणावसरे जातस्येत्यस्य निवेशादेव "अच परस्मिन्" इति सूत्रस्थभाष्यं सुयोजमेव। तस्य भाष्यस्य बहिरङ्गान्तरङ्गयोर्युगपत् प्राप्तिविषयकत्वात्। अनया सामान्यतो बहिरङ्गपरिभाषाया निषेधः क्रियते इत्याशयकैकदेशिना "अचः परस्मिन्" इति सूत्रस्थभाष्यविरोधाभिमानिना नाजानन्तर्यपरिभाषाया अभाव एव स्वीकृतस्तन्मताभिप्रायेणाह—*अतएवैषेति*। एषा नाजानन्तर्यपरिभाषा। *नोल्लिखितेति*। इदमप्येकदेशिमतमवलम्ब्यैव। यदनया साध्यं तदसिद्धपरिभाषाया अनित्यत्वेनैव साधनीयमिति भावः। *अतएव*।

तत्त्वप्रकाशिका।

अप्रवृत्तेः। *अनावश्यकत्वबोधनादिति*। वस्तुतः श्रौतमजान्तर्यं गृह्यते इति भाष्यविरोधोद्भावनम्भ्रमः। *पटु इ आ इति*। इदमपि चिन्त्यम् जातस्यैवानयासिद्धत्वाङ्गी-

इति सूत्रे भाष्ये । प्रतिविधानं च परिभाषाविषयेऽनित्यत्वाश्रयणमेवेति ध्वनितमित्यलम् ॥ ५१ ॥

नन्वेवं गोमत्प्रिय इत्यादौ पदद्वयनिमित्तकसमासाश्रितत्वेन बहिरङ्गं लुकं बाधित्वान्तरङ्गत्वाद्धल्ङ्याद्लिोपे नुमादयः स्युरत आह—

**अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते ॥ ५२ ॥**

अत्र च "प्रत्ययोत्तरपदयोश्च" (७-२-९८) इति सूत्रं ज्ञापकम् । त्वत्कु-

भैरवी ।

असिद्धपरिभाषाया अनित्यत्वादेवं । इति ध्वनितमिति* । एकवचनान्तप्रतिविधेयमितिशब्दोच्चारणेनानित्यत्वमेव ध्वनितम् । अन्यथा यत्र यत्र दोषप्रसक्तिस्तत्र तत्र तद्वारकोपायान् प्रदर्शयतानि प्रतिविधानानीतिवदेदिति भावः । *अलमिति* । अलमर्थस्तु पूर्वोक्तरीत्या यद्यपि नाजानन्तर्यपरिभाषायाः सत्वमुचितमिति लभ्यते, तथापि वचनाङ्गीकारे गौरवस्य स्पष्टत्वात्, नाजानन्तर्यपरिभाषाया अभाव एवोचितः। विप्रतिषेध सूत्रस्थमेतत्परिभाषासत्वपरं भाष्यमेवैकदेश्युक्तिः । "ह्रस्वस्यपिति" इतिसूत्रस्थभाष्यस्य सम्प्रसारणाच्च" इति सूत्रस्थभाष्यरीत्या सकलप्रयोजननिर्वाहेण सिद्धान्त्युक्तित्वमेवोचितमिति । अतएव प्रतिविधेयं दोषेष्वित्यत्रैकवचनम् । यन्नाजानन्तर्यपरिभाषायां ज्ञापक तदसिद्धपरिभाषाया अनित्यत्व एव ज्ञापकमिति बोध्यम् ।

यदि तु नाजानन्तर्यपरिभाषास्वीकारोऽपि भाष्यकृतः स्यात्तदा सापि तत्रोल्लिखितुमुचिता, यत्र विप्रतिषेधसूत्रभाष्ये नाजानन्तर्यपरिभाषोल्लिखिता तस्यापि भाष्यस्यासिद्धपरिभाषाया अनित्यत्वतात्पर्यकत्वमेव । यतोऽनित्यत्वस्य स्वविषयतावच्छेदकसमानाधिकरणाभावप्रतियोगित्वरूपतया नाजानन्तर्यपरिभाषाया यो विषयस्तत्रापि स्वविषयतावच्छेदकस्य सत्त्वेन तया निषेधेऽपि तादृशानित्यत्वं लब्धमेवेति विप्रतिषेधसूत्रस्थभाष्यमपि चैकदेश्युक्तिरिति यदि विभाव्यते तदा तथास्त्विति दिक् ॥ ५१ ॥

*एवम्* । असिद्धपरिभाषायाः सिजादाविव प्रागुक्तज्ञापकबलेनाचोऽन्यानन्तर्यं यत्र तत्रानित्यत्वादप्रवृत्तिस्वीकारे । *अन्तरङ्गत्वात्* । बहिरङ्गशास्त्रीयनिमित्तसमुदायघटकनिमित्तकत्वेनान्तरङ्गत्वात् । *नुमादय इति* । प्रत्ययलक्षणेनेत्यादि, समासाश्रितत्वेनेत्यस्य कथनं समुदायस्यापेक्षासूचनाय परम्परयापि यन्निमित्तं तस्य क्वचिदङ्गीकारात् । *अन्तरङ्गानपीति* । अत्रापिना परस्य नित्यस्य च सङ्ग्रहः । *इति सूत्रमिति* । त्वमादेशविधायकमेतत्सूत्रमित्यर्थः । अस्य ज्ञापकत्वं विशदयति—*त्वत्कृतमित्यादिना* । आदिना त्वदीयो

तत्त्वप्रकाशिका ।

*लोप इति* । नव ततः परत्वाद्दीर्घनुमादयः स्युरितिवाच्यम्? अपरनिमित्तकत्वेन हल्ङ्यादिलोपस्यान्तरङ्गत्वात् । नच तक्रन्यायेन दीर्घस्तं बाधेत, हल्ङ्यादिविषये न्यायाप्रवृत्तेः। *क्वचिदङ्गीकारादिति* । नचोपदाग्रहणसामर्थ्यान्नुमः पूर्वं दीर्घ इति वाच्यम्? उपधाग्रहणस्य पूर्वमात्रोपलक्षकत्वात्। *परस्य नित्यस्य च संग्रह इति* । तेन तत्कुलमित्यत्र पराद्प्यत्वापूर्वं लुक्, ह्यस इत्यादौ परमपि हल्ङ्यादिलोपं बाधित्वा "अव्ययादाप्सुपः" इति लुक् च सिध्यति ।

वस्तुतस्तु-अपिघटितः पाठो न युक्तः भाष्ये क्वापि तथाऽभावात् । "स्वमोर्नपुंसकात्" इत्यत्रापिघटितः पाठः कैयटेन मतान्तरतयोपन्यस्तः । अत एव तद्राजसूत्रस्थभाष्यं स्वरसतस्सङ्गच्छते । सामासिकलुको बहिरङ्गत्वेन तद्राजलुको बाधकत्वात् । अत एव "त्यदादिभ्यश्च" इतिवार्त्तिकं सङ्गच्छते । भवतादित्यत्र परत्वात्तातङि सकृद्गतिन्यायेन हेर्लुक्न । त्वं

तमित्यादौ लुगपेक्षयान्तरङ्गत्वाद्विभक्तिनिमित्तकत्वेन "त्वमावेकवचने" (७-२-९७) इत्यनेन सिद्धे इदं व्यर्थं सदेतज्ज्ञापकम् ।

ननु तव पुत्रस्त्वत्पुत्र इत्यादौ तत्रममादिबाधनार्थं तदावश्यकमिति चेत् । एवं तर्ह्यत्रत्यमपर्यन्तग्रहणानुवृत्तिस्तज्ज्ञापिकेति भाष्यकृतः । युष्मदादिभ्य आचारक्विप् तु न सम्पूर्णसूत्रस्य ज्ञापकतापरभाष्यप्रामाण्याद् "ह्रस्वनद्यापः" (७-१-५४) इति नुड्विधायकसूत्रस्थभाष्यप्रमाण्येन हल-

भैरवी ।

मदीय इत्यस्य प्रत्ययनिमित्तकादेशस्य परिग्रहः । *विभक्तिनिमित्तकत्वेनेति* "अष्टन आ विभक्तौ" इति सूत्राद्विभक्तावित्यस्य तत्रानुवृत्तेः । एतत्फलं युष्मत्सुन्दरपुत्र इति त्रिपदबहुव्रीहावादेशाभावः । *इदम्* । उक्तसूत्रम् । *एतज्ज्ञापकम्* । अस्याः परिभाषाया ज्ञापकम् । आदिना तुभ्यं हितं त्वद्धितमित्यादिसंग्रहः । *तत्र ममादीति* । आदिना तुभ्याद्यादेशपरिग्रहः । *ननु* । उक्तसूत्रम् । अत्र उक्तसूत्रे यदि तवाद्यादेशविधानार्थमेतत् सूत्रं स्यात्तदा उत्सर्गसमानदेशा अपवादा' इति न्यायेन मपर्यन्तस्यादेशे सिद्धेऽत्र तदनुवृत्तिर्व्यर्था स्यादिति भावः । अत्र युष्मदस्मद्भ्यामाचारे क्विपि प्रत्यये परे आदेशसम्पादकतया प्रत्ययग्रहणस्य चारितार्थ्यादुत्तरपदग्रहणमेव ज्ञापकमिति प्राञ्चः । तन्न युक्तमित्याशयेनाह—*युष्मदादिभ्य इति* । *सम्पूर्णसूत्रस्येति* । न चान्तरङ्गानपीति परिभाषाभावे यत्रोत्तरपदेऽनेनादेशस्तत्र समाससम्पादकविभक्तेः प्रत्ययग्रहणेन ग्रहणादुत्तरपदग्रहणमेव नास्तीति कथं सम्पूर्णसूत्रस्येत्युक्तमिति वाच्यम्, यदि विभक्तेस्तत्रत्यप्रत्ययग्रहणेन ग्रहणं तदा प्रत्ययग्रहणमपि व्यर्थम्, विभक्तौ परत आदेशस्य त्वमावित्येव सिद्धेरित्याशयात् । न केवलमाभ्यामेवाचारे क्विप् न किन्तु हलन्तेभ्य एवेत्याह—*ह्रस्वेति* । तत्र परिशेषात् षष्ठीबहुवचनस्य ग्रहणमित्येतन्निरूपणवसरे "कास्प्रत्ययात्" इतिसूत्रविहितस्य न ग्रहणमदन्तत्वेन सानुबन्धकत्वात् । स चावश्यमनुबन्ध उपादेयः । अन्यथा मस्येत्वापत्तेरित्युक्त्वातस्येत्वन्न फलाभावात्, प्रत्ययान्तादयमाम् विधीयते तत्र नास्ति विशेषः मिदचोऽन्त्यात्परत्वेन प्रत्ययपरत्वेन वा । एतेन अनभिधानं ध्वनितम् । यदि हलन्तेभ्य आचारे क्विप् स्यात्तदा विशेषस्य स्पष्टतया नास्तीत्युक्तिरसङ्गता स्यात् । आमो मकारस्य नेत्वमास्कासोराम्विधानाज्ज्ञापकादिति तु युक्त्यन्तरम् । अवगल्भादिभ्यस्तु अजन्तेभ्य एव क्विबिति बोध्यम् । *एवम्* । क्विप इव । इदमुपलक्षणमत्यन्तस्वार्थिकतरबादेरप्यनभिधानम् । यदुक्तं मपर्यन्तग्रहणानुवृ-

तत्त्वप्रकाशिका ।

ब्राह्मणकुलं सनीस्रस इत्यादौ लुक् बहिरङ्ग एव । सुपथि वनमित्यत्र कृताकृतप्रसङ्गित्वमात्रेण नित्यत्वाल्लुकि नात्वादि । ह्रस्वस्वसित्यदावनुमाहचर्येणाव्ययभिन्नासन्तस्य ग्रहणेन न दीर्घः एतेन ज्ञापकसिद्धस्यासार्वत्रिकत्वेन भवतादित्यादौ न दोष इत्यपास्तम् भाष्यरीत्या वाचनिकत्वेन ज्ञापकसिद्धात्वाभावाच्च । युष्मदस्मदोरलिङ्गत्वेनेत्यपि न युक्तम् "शिशीनुमलुग्विधि-इतिवार्त्तिकविरोधात् ।

ननु ज्ञापितेऽपि सूत्रे व्यर्थं त्वमावित्यत्र विभक्तावित्यस्यानवृत्तेरत आह*-विभक्तिनिमित्तकत्वेनेति* । *व्यर्था स्यादिति* । नचास्तु व्यर्थत्वादननुवृत्तिरितिवाच्यमनुवृत्तिकरणपरभाष्यप्रमाण्येनानुमितपाणिनीयस्वरितत्वप्रतिज्ञाया व्यर्थत्वापत्तेः । ननु तत्कन्यास्वीकर्तुर्वार्त्तिककारमते ऽपवादत्वाभावात्तत्स्वीकर्तुः भाष्यस्योत्सर्गेतिन्यायाभावात्सर्वादेशवारणाय तदस्त्वितिचेन्न । यत्रापवादशास्त्रीयस्थानितावच्छेदकं साक्षात्परम्परया वोत्सर्गशास्त्रीयस्थानिताया अवच्छेदकन्तत्रोत्सर्गसमानेतिन्यायस्य भाष्यकृतोऽप्यभिप्रेतत्वात् ।

न्तेभ्य आचारक्विबभावाच्च । एवमेवैकार्थकाभ्यां प्रातिपदिकाभ्यां प्रातिपदिकणिचोऽपि अनभिधानं बोध्यम् । एतेन तत्रादेशार्थं प्रत्ययग्रहणं चरितार्थमित्यपास्तम् ।

ननु मपर्यन्तानुवृत्तिरपि सर्वादेशत्ववारणाय चरितार्था । न च 'उत्सर्गसमानदेशा अपवादा, इतिन्यायेनासिद्धवत्सूत्रस्थभाष्यसम्मतेन मपर्य्यन्तस्यैवादेशे सिद्धे तदनुवृत्तिर्व्यर्थेति वाच्यम् ? तस्य श्नम्बहुजकजादौ व्यभिचारादिति चेन्न, श्नमि मित्त्वेन बहुचि पुरस्ताग्ग्रहणेनाकचि प्राक्टेर्ग्रहणेन तस्य बाधेऽपि अत्रोत्सर्गस्यैत्यागे मानाभावात् । अत एव "तस्मिन्नणि च" (४-३-२) इत्यनेन युष्माकाद्यादेशविधानं चरितार्थम् । अन्यथा आकङादेशमेव विदध्यात् । आकङि तवकाद्यादेशयोरेतदपवादयोरुक्तन्यायेनान्त्यादेशत्वापत्तिः, अतस्तद्विधानमिदमेव च तज्ज्ञापकम् ।

यद्यपि विरोधे बाधकत्वमिति वार्तिकमतेऽयं न्यायो भाष्यकारस्तु विनापि विरोधं सत्यपि सम्भवे बाधकत्वमिच्छतीत्यनभिहितसूत्रस्थकैयटरित्या नायं नियमस्तथापि युष्माकाद्यादेशविधानज्ञापित उत्सर्गःस्वीक्रियत

भैरवी ।

त्तिर्ज्ञापिकेति तत्र शङ्कते—*नन्विति* । *अनुवृत्तिरपीति* । अत्रापिशब्द 'सूत्रस्य समुच्चायकः । *तस्य* । उत्सर्गेति न्यायस्य । *व्यभिचारादिति* । एतेन तस्या प्रामाणिकत्वं सूचितम् । *उत्सर्गस्येति* । अत्रोत्सर्गपदोपादानेनोत्सर्गान्तरतौल्यं सूचितम् । उत्सर्गान्तरस्य ह्ययं स्वभावो यत् सामान्यतः प्रवृत्तिर्यत्र तु बाधकस्य विषयता तत्राप्रवृत्तिरिति । प्रत्युत तस्य न्यायस्य स्वीकार एव मानमस्तीत्याशयेन आह—*अत एवेति* । तस्योत्सर्गस्य स्वीकारादेव । *आकङमेवेति* । लाघवादिति शेषः । ङित्वादस्यान्त्यादेशत्वेऽपि एतदपवादयोस्तवकममकादेशयोरनेकाल्त्वात्सर्वादेशत्वं भविष्यतीति भावः । न्यायस्य स्वीकारे तु युष्माकास्माकेतिसमुदायादेशविधानं युक्तमेवेत्याह—*आकङीति* । *इदमेव* । युष्माकास्माकेति समुदायादेशविधानमेव । उक्तमेव शङ्कासमाधिभ्यां द्रढयति—*यद्यपीत्यादिना* । *वार्तिकमत इति । यद्युत्सर्गापवादयोः समानदेशत्वं तदा विरोध इति भावः । *नायं नियम इति* । एवञ्च तेनानिर्वाहान्मपर्य्यन्तानुवृत्तिश्चरितार्थेति ज्ञापकत्वासम्भव इति भावः ।

तत्त्वप्रकाशिका—

*प्रातिपदिकणिचोऽनभिधानमिति* । प्रत्ययोत्तरपदयोः" "इत्यनेनैव सिद्धेः पृथक् "त्वमावेकवचन" इति सूत्रकरणसामर्थ्यात् । "प्रत्ययोत्तर" इतिसूत्रेऽपि विभक्तिपदानुवृत्त्यानभिधाने मानं चिन्त्यम्

*असिद्धवत्सूत्रेति* । तत्रहि एत्वं लोपापवादो विज्ञास्यते, नचकारस्य लोपः प्राप्नोतीत्युक्तम् । तद्धि सति न्याये एधित्यत्रैत्वस्य लोपस्थान्ध्कारस्थानिकत्वेन सङ्गच्छते । *ज्ञापकमिति । ज्ञापनफलं त्वस्या ज्ञापकत्वोपपादनमेवेति बोध्यम्

ननुसाकच्कयुष्मकच्छब्दे फलभेदः, युष्माकाद्यादेशस्य साकच्कापहारकत्वेन निर्दिश्यमानत्वाभावादादेशाप्राप्तेराकङि साकच्कानपहारकत्वेन निर्दिश्यमानत्वेनादेशप्राप्तेः । सिद्धान्तेऽपि युष्मककच्छब्दस्य युष्माकादेशे यौष्माकीण, आकङ्पक्षेतु यौष्मकाकीणइति फलभेद इति चेन्न हसन्तादामनद्वाऽणि अजि वा विवक्षिते सुबन्तस्यैव टेः प्रागकच्प्रवृत्त्याऽकचा व्यवधानादादेशस्यैवाप्राप्तेः ।

एवेति प्रकृते न दोषः । एतद्भाष्यमपि तत्स्वीकारे मानम् । एवं च मपर्य्यन्तानुवृत्तिस्त्वत्कृतमित्यादौ मपर्य्यन्तस्यादेशविधानार्था। तत्र चान्तरङ्गत्वात् "त्वमौ" (७-२-९७) इत्येव सिद्धे व्यर्था सैतज्ज्ञापिका । ज्ञापिते त्वस्मिन्नेतद्विषये त्वादीनामप्राप्त्या तदपवादत्वाभावेन मपर्य्यन्तस्यैवादेशार्थं सा चरितार्थेति तदाशयः ।

यत्तु हरदत्तेनान्तरङ्गप्रवृत्तौ प्रत्यय उत्तरपदे च मपर्य्यन्तासम्भवेन

भैरवी ।

*प्रकृते* । त्वादिविषये ।

ननु प्रकृतेऽनियम एवास्तु नोत्सर्गस्वीकारोऽत आह—*एतदिति* । मपर्य्यन्तग्रहणस्य ज्ञापकता परोक्तभाष्यमपीत्यर्थः । एवञ्च युष्मकाद्यादेशविधानसहकृतोक्तभाष्येण प्रकृते तथैवाङ्गीक्रियत इति भावः । *एवञ्च* । तन्न्यायसिद्धौ च । *विधानार्थेति* । इति वक्तव्यमिति शेषः । *तत्र च* । त्वत्कृतमित्यादौ च । *अन्तरङ्गत्वादिति । लुगपेक्षया अन्तरङ्गत्वादित्यर्थः । *अस्मिन्* । अन्तरङ्गानपीतिन्याये । *एतद्विषये* । "प्रत्ययोत्तरपदयोः" इतिसूत्रविषये । *त्वादीनामप्राप्त्येति* । बाधकस्य लुको विषयतासत्वेन तद्विषये पूर्वं त्वममाविति न प्रवर्तते विभक्तेर्लुकि तु विभक्तिपरत्वाभावादप्राप्तिरिति भावः । *तदपवादत्वाभावेन* । तदपवादत्वासम्भवेन । तथा "चोत्सर्गसमानदेशा अपवादा" इत्येतन्न्यायाविषयतयाधिकस्यादेशवारणाय सा मपर्य्यन्तग्रहणानुवृत्तिश्चरितार्थेत्यर्थः । *तदाशयः* । भाष्याशयः ।

*यत्त्विति* । अस्य इत्युक्तमित्यत्रान्वयः । *अन्तरङ्गप्रवृत्ताविति* । अस्यान्तरङ्गानपीति न्यायाभावे प्रागित्यादिः । *असम्भवेनेति* । क्वचित्त्वमयोः क्वचित्त्वादेर्जात-

तत्त्वप्रकाशिका—

नचौसि " ओकारसकार"इत्यादिना युष्मदादेष्टेः प्रागकचि तत्सम्भव इति वाच्यम् ? "अलुगुत्तर" इति सूत्रस्थभाष्यप्रामाण्यात्प्रमाणं विना द्वित्वादिभानस्य वृत्तावनभ्युपगमेन द्विवचनान्तेन विग्रहायोगात् । अत एव कुमार्य्योरगारमिति प्रतीके कैयटेन "कथं द्विवचनान्तेन समास इत्याशङ्क्य नैष दोषः यथा तावकीन इत्यादावादेशेन सङ्ख्याविशेषो व्यज्यते तथेहापि सत्यां प्रगृह्यसंज्ञायां प्रकृतिभावेन द्वित्वं व्यज्यते इति दोषोपन्यास" इत्युक्तमिति केचित्तन्नैकवचने तवकममकादेशप्रवृत्याऽन्यत्र सङ्ख्याविशेषस्याप्रतीतया विग्रहस्यैवाभावेन युष्माकास्माकविधानवैयर्थ्यापत्तेः ।

अन्येतु अकच्विशिष्टे निर्दिश्यमानत्वस्यानङ्गीकारेणाकज्विषये फलभेदाभावात् । अकइत्यस्य निर्दिश्यमानावयवत्वमुपलक्षणमिति "अनाप्यक" इत्यादेर्नासङ्गतिः । अत एवेम अ इत्येव वक्तव्ये क इति करणादकच्सहितस्य कादेशसाधनं मनोरमोक्तं सङ्गच्छते ।

यद्वा मादक इत्येव सिद्धेः युष्माकाद्यादेशस्य ज्ञापकत्वात् । नचैवमपि अन्तरङ्गानपीति परिभाषाप्रयोज्यं युष्माकादेशविधानवैयर्थ्यं तत्प्रयोज्यश्च "उत्सर्गसमानदेशाः" इतिन्यायः तत्प्रयोज्यं च मपर्यन्तानुवृत्तिवैयर्थ्यं तत्प्रयोज्या चान्तरङ्गानपीतिपरिभाषा तत्प्रयोज्यं च युष्माकादेशविधानवैयर्थ्यमिति वाच्यम् "घकालतनेषु" इति ज्ञापकेन यत्तद्धितशास्त्रीयोद्देश्यतावच्छेदकं यद्रूपं तद्रूपावच्छिन्नोद्देश्यताके कार्ये कर्तव्ये तत्तद्धितपरत्वसम्भावनायां सुपामविद्यमानवद्भावस्य कल्पनेन युवाद्यादेशाप्राप्तेश्चक्रकाभावात् ।

केचित्तु तवकश् ममकश् इति न्यासेन शित्करणसामर्थ्यात्सर्वादेशसिद्ध्या ज्ञापितेऽपि चारितार्थ्याभावस्तथापि तवकश् ममकश् इत्यत्रशित्करणमेव ज्ञापकं भविष्यतीति न दोष इत्याहुः ।

तदनुवृत्तिर्व्यर्था सती तज्ज्ञापिकेत्युक्तं तन्न। अन्तरङ्गाणामप्यपवादबाध्यत्वेन तद्विषये तदप्रवृत्तेः।

वस्तुत इदं ज्ञापकं वार्तिकरीत्यैव भाष्यरित्या तु वाचनिक एवायमर्थ इत्याहुः। इयं "सुपो धातु" (२-४-७१) इति लुग्विषयैवेति केचित्। "एङ्ह्रस्वात्सम्बुद्धेः" (६-१-६९) "न यासयोः" (७-३-४५) इति सूत्रस्थाकरप्रामाण्येन लुङ्मात्रविषया। आद्ये हे त्रप् इत्यादावनेन न्यायेन लोपं बाधित्वा लुग्भवतीति भाष्ये उक्तम्। अन्त्ये-

भैरवी।

त्वात तदसम्भवेन। *तज्ज्ञापिका* "अन्तरङ्गानपि"इति न्यायस्य ज्ञापिका। *अपवादबाध्यत्वेनेति*। अपवादस्य " प्रत्ययोत्तरपदयोः " इत्यस्य विषये तवादेरप्रवृत्तेर्मपर्यन्तस्य सम्भवेनाधिकव्यवच्छेदाय मपर्यन्तानुवृत्तिः कार्य्येति तद्रीत्या ज्ञापकत्वासम्भव इति भावः।

ननु यथा "उत्सर्गसमानदेशा अपवादा" इति न्यायो वार्त्तिककारमते तथा युष्माकाद्यादेशविधानमपि तद्रीत्यैवास्तु भाष्यकारमते तु ज्ञापकत्वनिर्वाहः कथमत आह—*वस्तुत इति। इदम्*। मपर्य्यन्तग्रहणानुवर्तनम्।

तथाच—यत्तर्हि मपर्य्यन्तग्रहणमनुवर्तयतीति भाष्यमपि वार्तिकरीत्यैव यद्यपीत्यादिना-सूचिताशयकमेतत्। *भाष्यरीत्यापि*। सत्यपि सम्भवे बाधनं भवतीति भाष्यरीत्येत्यर्थः। *आहुरिति*। एतेनारुचिर्बोधिता। यदि लुकोऽन्तरङ्गपरनित्यबाधकता सर्वमेष्यते तदास्त्वस्य वाचनिकत्वम्। अन्तरङ्गविषय एव चेदस्य न्यायस्य प्रवृत्तिस्तदा वचनाङ्गीकारो व्यर्थ एव। अन्तरङ्गपरिभाषाया अनित्यत्वेनेष्टसिद्धेरिति। *इयम्*। अन्तरङ्गानपीति परिभाषा। केचिदित्यनेन सूचितामरुचिं प्रकटयति—एङित्यादिना*। *आ करेति*। कैयटादिमतसंग्रहायाकरपदम्। *आद्ये*। "एङ्ह्रस्वात् सम्बुद्धेः" इतिसूत्रे। *अनेन न्यायेनेति*। अत्रान्तरङ्गबहिरङ्गभाव इत्थमुपपादनीयः। प्रसक्तादर्शनमात्रस्य लोपसंज्ञा भवतीति लोपसंज्ञान्तरङ्गा लुक्संज्ञा तु प्रसक्तप्रत्ययादर्शनस्येति सा बहिरङ्गेति।

परे तु तत्र भाष्येऽपृक्तसम्बुद्धिलोपाभ्यां लुग्विप्रतिषेधेनेनेतिवार्त्तिकप्रत्याख्यानपरभाष्येऽयं न्याय उपन्यस्तस्तस्यायं भावः अन्तरङ्गानपि विधिन् बाधते लुक्। अपिशब्दात् परनित्ययोरपि संग्रहः। एतेन लुकः सर्वबाधकतया तद्विषये विप्रतिषेधोपासो न युक्तोऽतुल्यबलत्वादित्यत्र तस्य भाष्यस्य अतात्पर्यमिति लभ्यते। एवञ्चलुग्लोपयोरन्तरङ्गबहिरङ्गभावचिन्तनमनुचितमित्याहुः। लुङ्मात्रेत्यत्र मात्रशब्दकात्स्न्‍र्ये। *अन्त्ये*। "न यासयोः" इति सूत्रे।

तत्वप्रकाशिका।

*व्यर्था सेति *। मपर्य्यन्तानुवृत्तिरित्यर्थः।

ननु "प्रत्ययोत्तर" इत्यस्य "तवममौ ङसि" इतिनोत्सर्गः। किन्तु बाध्यसामान्यचिन्तया ऽऽत्वयत्वादयोऽपि तथाचानुवृत्त्यभावे कदाचिदन्त्यस्यापि त्वमौ स्यातां मपर्यन्तानुवृत्तौ तु नेति फलभेदः स्यादिति चेन्न मपर्यन्तावृत्तिज्ञापकपरभाष्यप्रामाण्येन "प्रत्ययोत्तरपदयोश्च" इति सूत्रविषये बाध्यविशेषचिन्ताया आश्रयणेन "प्रत्ययोत्तरपदयोः" इति तवममावित्यस्यैवापवादकं नत्वात्वयत्वयोरित्यभ्युपगमात् तत्रोत्सर्गसमानेति न्यायेन सिद्धेऽनुवृत्तिर्व्यर्था सती ज्ञापिकेति बोध्यम्।

* वाचनिक एवेति * । केचित्तु "तुभ्यमह्यौ ङयि" अवृत्ताविति सूत्रकरणेन "तवममौ ङसि" इत्यत्रावृत्तावित्यनुवृत्त्या सिद्धेः "प्रत्ययोत्तरपदयोश्च" इति सूत्रमेव ज्ञापकम् नचातितवेत्यत्र दोषः, अवृत्तेरितिन्यासेन वृत्त्यनवयवे ङसादावित्यर्थेनादोषादित्याहुः।

ऽन्तरङ्गांश्च विधीन् सर्वोऽपि लुग्बाधते न तु सुब्लुगेव। अत एव "सनीस्रंस" इत्यादौ नलोपो न भवति। पञ्चभिः खट्वाभिः क्रीतः पञ्चखट्व इत्यादावेकादेशात् प्रागेव टापो लुक्। अन्यथा कृतैकादेशस्य लुक्यकारश्रवणं न स्यादिति कैयट उक्तम्। एतद्विरोधाद्यत् "तद्राजस्य" (२-४-६२) इति सूत्रे कैयटेनोक्तमङ्गानतिक्रान्तो ऽत्यङ्ग इत्यत्र सुपो लुकि बहुवचनपरत्वाभावात् "तद्राजस्य" इति लुक् न स्यादिति शङ्कापरभाष्यव्याख्यावसरेऽन्तरङ्गानपीति न्यायेनायं लुक् सुब्लुको बाधकः स्यादित्याशङ्क्य सुब्लुक एवानेन बलवत्त्वं बोध्यत इत्युक्तं तत् प्रौढ्येति द्रष्टव्यम्। लुगपेक्षया लुको बलवत्त्वस्य वक्तुमशक्यत्वादिति तदाशङ्कासमाधानं वक्तु

भैरवी।

*सर्वोऽपीति*। एतेन "यङोऽचि च"इत्यस्यापि संग्रहः। *टापो लुक्*। "लुक्तद्धितलुकि" इति टापो लुक्। *एकादेशस्य लुक्*। परादिवद्भावेनाकारस्य स्त्रीप्रत्ययत्वादिति। *एतद्विरोधादिति* उक्तसूत्रद्वयस्थाकरविरोधादित्यर्थः। अयं विरोध एव "तद्राजस्य" इति सूत्रस्थोपपादनं प्रौढ्येत्यत्र हेतुः। "तद्राजस्य" इति सूत्रभाष्ये बहुवचने परतो यः तद्राजस्तस्य लुगित्यर्थेऽबहुत्वे लुग्वचनम्। अबहुत्वे लुग्वक्तव्यः। अतिक्रान्तोऽङ्गानत्यङ्ग इत्यत्रान्यथा लुङ् न स्यादिति दूषणमुक्त्वा ततो भाष्ये शङ्कितम्। न बहुवचन इत्येव सिद्धम्। बहुवचन इत्युच्यते, न चात्र बहुवचनं पश्यामः। प्रत्ययलक्षणेन भविष्यति। नलुमता तस्मिन्निति प्रत्ययलक्षणस्य प्रतिषेध इति। अत्र अङ्ग अस् इत्यस्यातिसु इत्यनेन समासे कृतेऽपि बहुवचन इत्येव सिद्धमिति प्रतीकमुपादाय कैयटेन शसमेवाश्रित्यान्तरङ्गत्वात्पूर्वं तद्राजस्य लुक्करिष्यते न चात्रेति। अन्तरङ्गानपि विधीन् "सुपो धातुप्रातिपदिकयोः" इत्ययं लुक् "प्रत्ययोत्तरपदयोश्च" इतिज्ञापकादस्यैवात्र सम्भवाद्बाधत इति भाव इत्युक्तम्। *तदाशङ्केति*। सचासावशङ्केति समासः। यद्यपि भाष्यकैय्यटरीत्या ज्ञापकस्य सामान्यापेक्षत्वं, तथापि ज्ञापकासाजात्यात् लुग्भिन्नकार्यनिमित्तविनाशकलुको लुग्भिन्नकार्य्यापेक्षया बलवत्त्वबोधकोऽयं

तत्त्वप्रकाशिका।

"प्रत्ययोत्तर"इतिसूत्रस्थभाष्यस्यायम्भावः—एतत्सूत्रंलाघवाद्बाधकबाधनार्थं "त्वमौ" इतिविहितयोरनुवादकं "वनोरच" इतिवत् इति तेनैव मपर्यन्तस्यादेशे सिद्धे तदनुवृत्तिर्व्यर्था सती ज्ञापिकेति। न च मपर्यन्तानुवृत्तिरनुवादत्वार्थाऽन्यथा सर्वादेशार्थतया विधायकत्वापत्तिरिति वाच्यम्? "द्विगुरेकवचनम्" इत्यस्यापि तद्धितार्थद्विगौ विधायकत्वापत्तेः।

अन्येतु "प्रत्ययोः" इतिसूत्रमेव ज्ञापकम्। नच त्वद्धितमित्यादौ तवादिबाधनार्थन्तदिति वाच्यम् वृत्त्यनवयवे विभक्तावित्यर्थकावृत्तरितिन्यासेन सिद्धेः। न च युष्मत्सुन्दरपुत्र इत्यत्र यथान्यासे प्रवृत्त्यभाव उक्तन्यासे प्रवृत्तिरिति फलभेद इति वाच्यम् इदानीमन्तरङ्गेतिन्यायाभावेनान्तरङ्गत्वात्त्वमावित्यस्य प्रवृत्तेरित्याहुः। *इत्युक्तमिति*। वस्तुतोऽपिघटितपाठाभावेनान्तरङ्गापेक्षया बहिरङ्गलुक एव प्राबल्यबोधनेन कैयटोक्तं युक्तमेव। न च हे त्रपु इत्यत्र लुकः परत्वाद्गुणः स्यात्, नित्यत्वेन लुकः पूर्वं प्रवृत्त्या दोषाभावात्।

केचित्तु अपिघटित एव पाठः स्वनिमित्तविनाशकलुङ्मात्रस्य चानया प्राबल्यं बोध्यते, अतएव ब्रह्मिष्ठः इति सिध्यति, अन्यथा लुकं बाधित्वा परत्वाट्टिलोपे तस्याभीयत्वेनासिद्धत्वात्पुनष्टिलोपाप्राप्त्या तदसिद्धिः स्पष्टैव। उपसंजनिष्यमाणन्यायेन पूर्वं लुकोऽप्राप्त्या तदर्थं "त्यदादिभ्यश्च" इति वार्तिकमावश्यकम्। "अलिङ्गे युष्मदस्मदी" इत्युक्त्या त्वत्कुलमित्यादौ न दोषः। "तुह्यो" रितिविषयसप्तम्याश्रयणेन सेरेव तातङिति भवतादित्यादौन

युक्तम्। अनेन न्यायेनान्तरङ्गनिमित्तविनाशकलुकस्तत्प्रयोजकसमासादीनां च प्राबल्यं बोध्यत इति अन्यत्र विस्तरः॥ ५२॥

नन्वेवं सौमेन्द्रेऽन्तरङ्गत्वात् "आद्गुणे" पूर्वपदात् परेन्द्रशब्दाभावेन "नेन्द्रस्यपरस्य (७-३-२२) इति वृद्धिनिषेधो व्यर्थः, अन्तादिवद्भाव-

भैरवी।

न्याय इति भावः। ज्ञापकसाजात्यमेव दर्शयति—*अनेनेति*। अनेन, अन्तरङ्गानपीत्यनेन। *लुकः*। लुङ्मात्रस्य। यथा पञ्चभिः खट्वाभिः क्रीतः पञ्चखट्व इत्यत्रान्तरङ्गैकादेशस्य यन्निमित्तं तद्विनाशः। अन्तरङ्गनिमित्तविनाशकेऽत्यर्थं प्रमाणन्तु भाष्यमेव। तथाहि—"ङ्या-प्प्रातिपदिकात्" इतिसूत्रे प्रातिपदिकग्रहणं किमर्थमिति प्रघट्के "अनुदात्तादेर्ञ्चः" इत्यस्य प्रातिपदिकविशेषणत्वं यथा स्यात् समर्थविशेषणत्वं माभूत्" अनुदात्तादेरञ् " भवति इह प्रसज्येत "वाचो विकारस्त्वचो विकार" इति एतद्धि समर्थमनुदात्तादि। "सावेकाच" इति विभक्तेस्तत्वात्। इह न स्यात् सर्वेषां विकार इति।

यद्यप्युञ्छादिषु पाठात् सर्वशब्दोऽन्तोदात्तस्तथापि "सर्वस्य सुपि" इत्याद्युदात्तमेतत् पदम्। "नौव्यचष्ठन्" इहैव स्यात् वाचा तरति त्वचा तरति इह न स्यात् घटेन तरति पटेन तरतीति। यद्यनेन न्यायेनान्तरङ्गनिमित्तविनाशकलुको बलवत्वं बोध्यते, तदा सार्वे इत्यत्र सत्यपि लुकि सौवर्य्यः सप्तम्यस्तदन्तसप्तम्य इति सिद्धान्ताद्विशिष्टस्य कार्य्यितया "न लुमता" इति निषेधाप्राप्त्या प्रत्ययलक्षणेन तस्य सौलभ्यादन्तरङ्गनिमित्ताविघटकत्वेनैतद्विषये लुको बलवत्वाभावेन लुक्प्रवृत्तेः प्रागन्तरङ्गत्वादाद्युदात्तत्वं "सर्वस्य सुपि" इत्यनेन स्यात्तथा च समर्थविशेषणत्वेऽनुदात्तादित्वं समर्थस्य नास्तीत्यञ् न स्यादिति सङ्गच्छते। यदि त्वन्तरङ्गनिमित्तविनाशकेति विशेषणमनुपादाय 'सर्वविधिभ्यो लुग्विधेः बलवत्वं' तदा लुग्विषये पूर्वमाद्युदात्ताप्राप्त्या समर्थस्यानुदात्तादित्वाद्भाष्यासङ्गतिः स्पष्टैवेति।

ननु एवमपि गोमत्प्रिय इत्यादौ समासात् प्राङ्नुमादयः स्युर्न हि तदा लुग् प्रासिरत आह—*तत्प्रयोजकेति*। तस्य लुकः प्रयोजकं यत्समासादि तेषामित्यर्थः। आदिना तद्धितपरिग्रहः। एवञ्च समासस्य बलवत्वात् समासविषये पूर्वमपि नुमादिर्न भवति अस्मिन्नर्थेऽप्युक्तं यदन्तरङ्गानपीति न्याये ज्ञापकं तदेवं ज्ञापकमन्यथोक्तन्यायाङ्गीकारो व्यर्थ एव स्यात्। नह्येकेनैकमेव ज्ञाप्यते किन्तु यावता विना अनुपपत्तिस्तस्य सर्वस्य ज्ञाप्यत्वमिति स्वीकारात्॥ ५२॥

*एव*। पूर्वोक्तज्ञापकेन पूर्वोक्तस्थले दोषपरिहारेऽपि। *सोमेन्द्र इति*। इत्यादिलक्ष्ये इत्यर्थः। *व्यर्थ इति*। बोध्यार्थाभावेन लक्ष्यासाधकत्वादिति शेषः। नन्वन्तादिद्भावेन तस्य ततः परत्वमस्त्वित्यत आह—*अन्तादीति*। विरुद्धाभ्यां पूर्वपरशब्दाभ्यामन्तादिशब्दाभ्याञ्च विरोधस्य पुरःस्फूर्तिकत्वाद्विरुद्धातिदेशद्वयस्य चैकत्रैकदातिदेशासम्भवेन "उभयत आश्रयणेनान्तादिवत" इत्यस्य सिद्धिः। यथा लोके यस्तुल्यबलयोरेकः प्रेष्यस्तमुभौ युगपत्प्रेषयतो नानादिक्षु च कार्य्ययोः प्रसक्तिस्तदा स यद्यविरोधार्थी तदोभयोः कार्य्यं न करो-

तत्त्वप्रकाशिका।

दोष इत्याहुः। *स्पष्टैवेति*। एतत्फलम् ऊर्णुहि राजपुत्रीति। आद्ये "उतश्च प्रत्ययात्" इति-लुकः गुणनिमित्तविनाशकत्वाभावेनान्तरङ्गत्वाद्गुणे संयोगपूर्वकत्वेन लुङ्न भवति, अन्त्ये "ञ्नित्यादेर्नित्यम्" इत्याद्युदात्तस्य ङीनः निमित्तविनाशकत्वस्य लुक्यभावेनान्तरङ्गत्वान्ङीप्याद्युदात्तयोः पश्चात्समासस्वरेणान्तोदात्तत्वं सिध्यतीति॥ ५२॥

*अन्तरङ्गत्वादिति*। न च समर्थग्रहणेन कृतसन्धिकार्यात्प्रत्ययोत्पत्याऽन्तरङ्गकथनमयुक्तम्, तस्यान्तरङ्गपरिभाषानुवादकत्वेनादोषात्।

स्तूभयतआश्रयणे निषिद्धः ।

किञ्च वृद्धिरप्यत्र न प्राप्नोत्यन्तादिवत्त्वोभयाभावेऽपि पूर्वान्तवत्त्वे-नैकादेशविशि॰ पूर्वपदत्वेन न्द्रशब्दस्यैकदेशविकृतन्यायेन उभयत आश्रयणे नान्तादिवदित्यस्याभावन तदाश्रयणे चोत्तरपदत्वेऽपि तस्यानच्कत्वादेक स्यैकादेशेन परस्य नित्येन "यस्य" ( ६-४-१४८ ) इति लोपेनापहारात् ।

न च परादवद्भावेनैकादेशशिष्टस्योत्तरपदत्वमेवास्त्विति तत्सम्भव इति वाच्यम ? उत्तर पदाद्यच्स्थानिकत्वात् वृद्धेस्तदभावेन अप्राप्तेस्ताद्रू-प्यानतिदेशात् । अन्यथा खट्वाभिरि[illegible]ऽपि पूर्वान्तवत्त्वेनादन्तत्वे भै[illegible]ां ।

तीति दृश्यते तद्वत् ।

ननु उभयत आश्रयणमिह नाङ्गीक्रियते किन्तु पूर्वान्तवद्भावेनेकारविशिष्टे पूर्वपदत्वमस्तु एकदेशविकृतमनन्यवदितिन्यायेनोत्तरपदत्वं न्द्रशब्दस्यास्त्विति "नेन्द्रस्य" इति निषेधश्च-रितार्थ इत्यत आह—*किञ्चेति* । *अत्र* । सोमेन्द्र इत्यत्र । "देवताद्वन्द्वे च" इत्यनेन यत्रोभयोर्देवतावाचकयोरुपलब्धिस्तत्रैव निषेधस्य प्रवृत्तेः । *एकदेशविकृतन्यायेनेति* । अ-स्योत्तरपदत्वेऽपीत्यत्रान्वयः । एवञ्च उभयत आश्रयणाभाव एवेति भावः । प्रकारान्तरमाह—*उभयत इत्यादि* । अयं भावः—अयं निषेधो निर्मूलः वृत्तिघटितातिदेशस्याहार्य्यारोपरू-पत्वेन तस्य विरुद्धद्वयविषयेऽपि सम्भवात् । न चैवमभैयादित्यत्र "एर्ताल्लिङि" इतिह्रस्वत्वापत्ति रिति वाच्यम् ? उभयत आश्रयणेऽपि पौर्वापर्य्यरूपव्यपवर्गाभावेन ह्रस्वत्वाप्राप्तेः । "उपस-र्गस्यायतौ" "अन्तादिवच्च" इत्यादिसूत्रभाष्ये तस्य निषेधस्योल्लेखस्तु एकदेशिन इति बो-ध्यम् । *तदाश्रयणे वा* । अन्तादिवत्त्वोभयाश्रयणे वा । *तस्य* । न्द्रशब्दस्य । अनच्-कत्वमुपपादयति—*एकस्येति* । इकारस्येत्यर्थः । *परस्य* । अकारस्य । *तत्सम्भवः* । वृद्धिप्राप्तिसम्भवः । *उत्तरपदाद्यजिति* । प्रत्यासत्याश्रयणादयमर्थो लभ्यते । "प्राचां ग्रा-मनगराणाम्" इत्यस्य प्राग्ग्रामनगरवाचकाद्यावयवस्याचो वृद्धिरित्येवार्थः । एवं "देवता-द्वन्द्वे च" इत्यस्यापि समासात् प्राग्ये देवतावाचकास्तेषां द्वन्द्वे पूर्वोत्तरपदाद्यावयवाचो वृद्धि-रित्यर्थ इति भावः । *तदभावेन* । आदित्वाभावेन । नन्वादित्वस्याप्यतिदेशोऽस्त्वित्यत आह—*ताद्रूप्येति* । *ताद्रूप्यम्* । वर्णमात्रवृत्तिधर्म्मस्तस्यानतिदेशादित्यर्थः । पृथगव-स्थिताभ्यामाद्यन्तघटिताभ्यां ये व्यवहाराः प्रातिपदिकत्वप्रत्ययत्वसुबन्तत्वादयस्ते कृतैका-देशस्यापि भवन्तीत्यर्थं भाष्यस्य तात्पर्य्यात् । तदुक्तं भाष्ये—वर्णाश्रये विधावन्तादिवद्-भावप्रतिषेधो वक्तव्यः, न वा अताद्रूप्यातिदेशादिति । *अन्यथा* । ताद्रूप्यस्याप्यतिदेशे ।

तत्त्वप्रकाशिका ।

* अनतिदेशादिति* । नच क्षीरपणेत्यत्र "एकाजुत्तरपदत्वस्यातिदेशाय स्ववृत्तित्व स्ववृत्ति-वर्णत्वव्याप्यत्व स्वस्थानिकादेशावृत्तित्व त्रितयसम्बन्धनान्तादिवर्णविशिष्टधर्मघटितधर्मान-तिदेश इत्यर्थस्यावश्यमवक्तव्यत्वेन सोमेन्द्रे उत्तरपदाद्यच्त्वघटकाच्त्वे स्वस्थानिकादेशवृत्ति-वृत्तित्वस्य सत्वात्ताद्रूप्याभाव इति वाच्यम् स्वस्थानिकादेशवृत्तित्व स्वनिष्ठाभेदसम्बन्धाव-च्छिन्नप्रकारतावच्छेदकतावच्छेदकत्वैतदुभयसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्व स्व-वृत्तित्व स्ववृत्तिवर्णत्वव्याप्यत्व त्रितयसम्बन्धेन स्वविशिष्ट धर्मघटितधर्मानतिदेशात् । क्षीर-पणेत्यत्र एवृत्त्यच्त्वे स्वस्थानिकादेकवृत्तित्वस्य उत्तरपदनिष्ठविशेष्यतानिरूपिताज्निष्ठाभेद-सम्बन्धावच्छिन्नप्रकारतावच्छेदकतावच्छेदकत्वस्य च सत्वाच्च ताद्रूप्यम् । प्रकृते चैकारे स्वस्थानिकादेशवृत्तित्वस्य सत्वेऽपिद्वितीयसम्बन्धाभावेन एकसत्वेऽपि द्वयं नास्तीतिप्रतीत्या

भिस ऐस्त्वापत्तिरिति भाष्ये स्पष्टम् ।

अत एव पूर्वेषुकामशम इत्यादावतरङ्गत्वादाद्गुणे वृद्धिर्न स्यादित्याशङ्कितम् । तदेकदेशमात्रस्य विकाराभावाच्च । तदुक्तं भाष्ये इन्द्रे द्वावचावेको यस्येति लोपेनापहृतोऽपर एकादेशेन ततोऽनचूक इन्द्रशब्दः सम्पन्नस्तत्र कः प्रसङ्गो वृद्धेरिति । मरुदादिभिरिन्द्रस्य द्वन्द्वे इन्द्रस्यैव पूर्वनिपातोऽत आह—

पूर्वोत्तर पदनिमित्तकार्यात्पूर्वमन्तरङ्गोऽप्येकादेशो न ॥ ५३ ॥

अत्र च "नेन्द्रस्य" ( ७-३-२२ ) इति निषेध एव ज्ञापक इति "अन्तादिवच्च" ( ६-१-८५ ) "विप्रतिषेधे परम्" ( १-४-२ ) इति सूत्रयोर्भाष्ये स्पष्टम् ॥ ५३ ॥

भैरवी ।

*भिस ऐस्त्वापत्तिरिति* । विश्वपाभिरित्यादिव्यावृत्त्यर्थन्तु तपरत्वमिति भावः । अत्रार्थे भाष्यमपि मानमित्याह—*अतएवेति* । *पूर्वेषुकामशाम इत्यादाविति* । पूर्वा चासाविषुकामशमी च तस्यां भव इत्यर्थेऽणि पूर्वा इषुकामशमी अ इति स्थिते इषुकामशमीशब्दस्य प्राग्ग्रामवाचित्वेन "प्राचां ग्रामनगराणाम्" इति योत्तरपदवृद्धिस्तस्यास्तद्धितनिमित्तकत्वेन बहिरङ्गतया अन्तरङ्गत्वादाद्गुणे वृद्धिर्न स्यादुत्तरपदाद्यचोऽभावादित्यर्थः । *आशङ्कितमिति* । आशङ्काभिप्रायस्तूक्त एव, समाधानन्तु वक्ष्यमाणपरिभाषायाः प्रवृत्त्या सूत्रस्य प्रवृत्तिरिति ।

ननु सौमेन्द्रे यथैकदेशविकृतन्यायेन मान्तस्य पूर्वपदत्वं तथैकादेशविशिष्टस्योत्तरपदत्वमपि स्यादत आह—*तदेकदेशमात्रस्येति* । गुणरूपविकारस्योभयस्थानिकत्वेनोत्तरपदैकदेशमात्रविकाराभावादित्यर्थः । अस्याः परिभाषाया लोकन्यायसिद्धतया लोके यस्यावयविन एवावयवो विकृतो भवति यदा तदा तदवयविवाचकशब्दस्य प्रवृत्तिर्दृश्यते तथेह कल्प्यमिति भावः । तदेकदेशेत्यत्रत्यतत्पदेनोत्तरपदं परामृश्यते । एवञ्च एकादेशविशिष्टे उत्तरपदत्वमेकदेशविकृतन्यायेनातिदेष्टुमशक्यमिति भावः । *तदुक्तमिति* । तदेतत् सर्वमभिप्रेत्योक्तमित्यर्थः । *भाष्ये* । "अन्तादिवच्च" इति सूत्रभाष्ये ।

ननु मरुच्छब्देन्द्रशब्दयोर्यत्र समासस्तत्रैकादेशाभावेन तस्मात् तद्धिते उत्तरपदस्य वृद्धिनिषेधविधायकतया सूत्रं सार्थकमत आह—*मरुदादिभिरिति* । *इन्द्रस्यैवेति* । न च सौमेन्द्रेऽप्यजाद्यन्तत्वमितीन्द्रशब्दस्यैव पूर्वनिपातापत्तिरिति वाच्यम् । अत्र सोमशब्दस्य महेश्वरवाचकत्वेनाभ्यर्हितत्वात् । *भाष्ये इति* । इन्द्रे द्वावचावित्युक्त्वा एको यस्येति लोपेनापहृतः पर एकादेशेनातोऽनच्क इन्द्रशब्दः सम्पन्नस्तत्र कः प्रसङ्गो वृद्धेरित्यनन्तरं पश्यति त्वाचार्यः पूर्वोत्तरपदयोः तावत्कार्य्यम्भवति नैकादेश इति ततो "नेन्द्रस्य"इतिनिषेधं शास्तीत्युक्तम् ॥ ५३ ॥

तत्त्वप्रकाशिका ।

उभयसम्बन्धावच्छिन्नप्रतियोगितकाभावसत्वान्न दोषः ।

यद्वा स्ववृत्तित्व स्ववृत्तिवर्णत्वव्याप्यत्व स्वविषयकशाब्दबोधजनकशक्तिज्ञानीयविशेष्यतावच्छेदकश्च यो धर्मस्तद्घटितधर्मानतिदेश इत्यर्थेन "एकाजुत्तरपदे" एकार्थीभावसत्त्वेनाच् अचूपदवाच्य इतिशक्तिज्ञानस्यान्यथासिद्धत्वेन शाब्दबोधाजनकत्वादच्त्वे शाब्दबोधजनकशक्तिज्ञानीयविशेष्यतावच्छेदकत्वाभावात् । शक्यार्थबोधमन्तरा लक्ष्यार्थबोधासम्भवेन "अ-

नन्वेवमपि प्रधाय प्रस्थायेत्यादावन्तरङ्गत्वात् हित्वादिषु कृतेषु ल्यप् स्यादत आह—

**अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यप् बाधते ॥ ५४ ॥**

"अदो जग्धिः" ( २-४-३६ ) इति सूत्रे क्तितीत्येव सिद्धे ल्यब्ग्रहण-मस्या ज्ञापकमिति "अदो जग्धिः" इत्यत्र भाष्ये स्पष्टम् ॥ ५४ ॥

नन्वेवमपीयायेत्यादौ द्वित्वे कृतेऽन्तरङ्गत्वात् सवर्णदीर्घत्वेन तदसिद्धि-रत आह—

**वार्णादाङ्गम्बलीयो भवति ॥ ५५ ॥**

तेनान्तरङ्गमपि सवर्णदीर्घं बाधित्वा वृद्धिरिति तत्सिद्धिः । "अभ्यास-स्यासवर्णे" ( ६-४-७८ ) इतीयङ्विधायकसूत्रस्थमसवर्णग्रहणमस्या ज्ञाप-कम् । तद्धीषतुरित्यादावियङादिव्यावृत्त्यर्थम् । एतत्परिभाषाभावे त्वीष-तुरित्यादावन्तरङ्गेण सवर्णदीर्घेण बाधात्तद्व्यर्थम् । इयङुवङौ ह्यभ्याससम्ब-

भैरवी

*एवमपि* । पूर्वोक्तस्थलत्रये निर्वाहेऽपि । *अन्तरङ्गत्वात्* । अनेकपदाश्रयसमासापे-क्षल्यबादेशापेक्षयान्तरङ्गत्वादित्यर्थः । हित्वं हि प्रकृतिप्रत्ययमात्रमपेक्षम् । आदिपदाभ्यां प्रखाय प्रखन्येत्यस्य "जनसनखनाम्" इत्यात्वस्य च परिग्रहः ।

ननु "स्थानिवदादेश" इति सूत्रे भाष्यकारेणतस्यैव ल्यब्ग्रहणस्याल्लाश्रयकार्ये कर्तव्ये स्थानिवद्भावाभावे ज्ञापकतोक्ता सा विरुध्येत । एतज्ज्ञापकतया तस्य चारितार्थ्यादिति चेन्न यावता विनानुपपत्तिस्तस्य सर्वस्य ज्ञाप्यत्वात् ॥ ५४ ॥

*एवमपि* । ल्यब्विषये निर्वाहेऽपि । *अन्तरङ्गत्वात्* । पूर्वोपस्थितनिमित्तत्वेनान्तर-ङ्गत्वात् । *तदसिद्धिः* । इयायेत्यस्यासिद्धिः । *वार्णादाङ्गं बलीयः* । वर्णस्यायं वार्णो वर्णनिमित्तक इति यावत् । *आङ्गम्* । अङ्गाधिकारपठितसूत्रविधेयम् । *तेन* । वार्णादाङ्ग-मिति वचनेन । द्वित्वात् प्रागेव वृद्धिस्तु न "द्विर्वचनेऽचि" इतिनिषेधात् । ईषतुरित्यादावित्या-दिनोखतुरित्यस्य इयङ्दीत्यादिपदेनोवङः परिग्रहः । *अभ्याससम्बन्धेनेति* । न च संज्ञाकृये

तत्त्वप्रकाशिका ।

तोभिस ऐस्" इत्यादौ ह्रस्वाकारो अत्पदवाच्य इतिशक्तिज्ञानस्य शाब्दबोधजनकत्वेनात्वे स्वविषयकशाब्दबोधजनकशक्तिज्ञानीयविशेष्यतावच्छेदकत्वमस्त्येवेति न दोषः ।

किञ्च "अन्तादिवच्च" इत्यनेन शास्त्रीयधर्मस्यैवातिदेशेनोत्तरपदत्वस्य तथात्वाभावात् । अचूत्वरूपशास्त्रीयधर्मघटितत्वेनोत्तरपदाद्यच्त्वस्य शास्त्रीयत्वात् ॥ ५३ ॥

* बाधत इति * । धर्मिग्राहकमानेनान्तरङ्गनिमित्तविनाशक इति भावः । अत एवा-भिवाद्येत्यादौ णिज्निमित्तकवृद्धौ लघुपूर्वत्वाभावेन णेरयादेशो न ।

ननु ल्यब्विषयेऽन्तरङ्गं नेत्येव ज्ञाप्यतां "नल्यपि" इति न कार्यमिति चेन्न निरेष्यगत इत्यत्र लघूपधगुणस्याप्यप्रवृत्त्याऽयादेशापत्तेः, सङ्क्रीत्येत्यादावीत्वानापत्तेश्च । ल्यब्निमित्तक कार्यन्नेत्यर्थे णिलोपानापत्तिः । अन्तरङ्गनिमित्तविनाशकल्यब्विषय इत्यर्थं तु "न ल्यपि" इत्यस्यावश्यकतया न किञ्चिल्लाघवम् । *भाष्य इति* । यत्तु "न ल्यपि" इतिसूत्रमस्या ज्ञापकमन्यथाऽन्तरङ्गत्वादीत्वे तद्वैयर्थ्यं स्पष्टमेवेति तन्न, उत्सर्गस्यापवादविषयपरिहारेण प्रवृत्तेः पूर्वमीत्वाप्रवृत्तेः ॥ ५४ ॥

* परिग्रह इति * । ननु ईयतुरित्यत्र यणसवर्णदीर्घयोर्येन नाप्राप्तिन्यायेन "दीर्घ इणः

न्धनिमित्तकत्वाद्बहिरङ्गौ ।

न चेयङादिरपवादो "येन नाप्राप्ति"न्यायेनेयर्तीत्यादिसकललक्ष्यप्राप्तय-णपवादत्वस्यैव निर्णयादिति प्राञ्चः ।

भैरवी ।

तबहिरङ्गत्वानङ्गीकारादिदमयुक्तमिति वाच्यम् । अभ्याससंज्ञाकृतबहिरङ्गत्वेऽस्य न तात्पर्यम्, किन्तु अभ्यासावयवस्यादेशविधानादभ्याससंज्ञाप्रवृत्त्युत्तरमस्य प्रवृत्तिः सवर्णदीर्घस्य तु पूर्वमेवेति पूर्वकालिकप्रवृत्तिकत्वेऽस्य तात्पर्यात् । अत एवोक्तम्—*सम्बन्धेति* । अभ्यासपदमभ्याससंज्ञापरम् । सम्बन्धः प्रवृत्तिः ।

तत्त्वप्रकाशिका–

क्किति"इत्यनेनानवकाशत्वाद्दीर्घे उत्तरखण्डे "इणो यण्" इति यणि स्थानिवत्त्वेन तत्रेयङ्वारणार्थमसवर्णग्रहणमावश्यकमितिचेन्न "ओः पुयण्जि" इतिसूत्रारम्भसामर्थ्येनाभ्यासस्य कार्ये कर्तव्ये "अचः परस्मिन्" इत्यस्याप्रवृत्तिरिति सामान्येन ज्ञापनात् ।

किञ्च ईयतुरित्यत्र स्थानिवद्भावेनेयङ्प्रवृत्तौ "दीर्घ इणः किति" इत्यत्र युगितिन्यासेनाभीष्टरूपसिद्ध्या दीर्घग्रहणस्य वैयर्थ्येन इयङोऽप्रवृत्तिरितिकल्पनात् । न च "अत आदेः" इत्युत्तरार्थं दीर्घग्रहणमिति वाच्यम् ? व्याख्यानादा आदेरितिच्छित्वाऽभ्यासस्यादेरत आकारविधानेनोत्तरत्र प्रयोजनाभावात । यद्वा अभ्यासइवर्णस्येयङचि नत्विणधातावित्यर्थकेनाभ्यासस्यानिणीतिन्यासेन पूर्वोक्तदोषनिवृत्तेरसवर्णग्रहणवैयर्थ्यस्य तादवस्थ्यमित्याशयादिति दिक् ।

*अस्य तात्पर्यादिति* । केचित्तु अभ्यासकार्याणामभ्याससंज्ञाप्रयोजकीभूतप्रत्ययनिमित्तकत्वस्याङ्गीकारेणादोषात् । अत एव "ह्वः सम्प्रसारणम्" "अभ्यस्तस्य च" इति योगविभागः सार्थकः । अन्यथा अजूहवदित्यादौ "अभ्यस्तस्य च" इत्येव सिद्धे "ह्वः सम्प्रसारणम्" इतियोगविभागवैयर्थ्यं स्पष्टमेव । अत एव प्रजिह्वायिकयिषतीत्यादौ "अभ्यस्तस्य च" इति सम्प्रसारणञ्च ।

नच निरुक्तज्ञापकेनाभ्यस्तकार्याणामेव तत्संज्ञाप्रयोजकप्रत्ययनिमित्तकत्वमेवकल्प्यत इति पुनरपि प्रकृतग्रन्थासङ्गतिरितिवाच्यम् ? "असति बाधके प्रमाणानां सामान्ये पक्षपातः" इति न्यायेन षाष्टद्वित्वप्रकरणीयसंज्ञाकार्याणां तत्संज्ञाप्रयोजकप्रत्ययनिमित्तकत्वकल्पनेनादोषात् । अत एव प्रद्युद्योतकीयिषति प्रसुस्वापयिषति प्रजिहनर्नायिषतीत्यादौ "द्युतिस्वाप्योः" इतिसम्प्रसारणम् "अभ्यासाच्च" इतिकुत्वञ्च न भवति स्पष्टं चेदम् "अभ्यासाच्च" इति सूत्रे काशिकायामित्याहुः ।

अन्ये तु यद्यपि संज्ञाकृतस्य बह्वपेक्षत्वरूपस्य वा बहिरङ्गत्वस्यानाश्रयणन्तथापि अङ्गपदस्य प्रत्यये परतो विधानावच्छादित्वे शक्त्या प्रत्ययनिमित्तकत्वात्तत्त्वं बोध्यम् । अभ्यासेत्युक्तिः प्राचीनवासनयेति वदन्ति । *यणपवादत्वादिति* । ननु ऋ ऋ तीतिदशायामित्वेन यण् सवर्णदीर्घयोस्तक्रन्यायेन बाधादित्वप्रवृत्त्युत्तरं न यण्विषयतेति कथं यणपवादत्वमितिचेन्न, ऋतीतिस्थिते शब्गुणयोः प्राप्तौ नित्यत्वस्योभयोस्तुल्यत्वेन परत्वाद्गुणे पश्चाच्छपि श्लौ "अर्" शब्दस्य द्वित्वे "अर्तिपिपर्त्योश्च" इतीत्वे ततो यणः प्राप्तावित्वयणोर्युगपत्प्राप्त्यभावेनोक्तन्यायाविषयत्वेनेयङो यणपवादत्वस्य ध्रौव्यात् । एतेनाभ्यासविकारेषु बाध्यानां पूर्वम्प्रवृत्त्या उरदत्वे पश्चादित्वे यणस्सकललक्ष्यप्राप्तत्वेऽपि चक्रकापत्तेर्दुर्वारत्वम् । तथाहि–ऋ ऋ तीतिदशायां यण्सवर्णदीर्घत्वात्वानां प्राप्तौ यणम्बाधित्वाऽपवादत्वात्सवर्णदीर्घः प्राप्तस्तं प्रतिपदविधित्वादित्वम्बाधित्वा प्राप्तं तद्बाधित्वाऽभ्यासविकारेषु बाध्यस्य पूर्वम्प्रवृत्त्याऽत्वम् प्राप्तं तद्बाधित्वा ह्रस्वः तम्बाधित्वा पूर्वोपस्थितिनिमित्तकत्वेनान्तरङ्गत्वात्सार्वधातुकेतिगुणः तं लघूपधगुणस्तं चान्तरङ्गत्वाद्यण् इत्यपास्तम् ।

परे त्वेतत्परिभाषाभावे "अभ्यासस्य" इति सूत्रमेव व्यर्थम्। न चेयेषेयायेत्यादौ चरितार्थम्। तयोरपि पूर्वप्रवृत्तगुणस्य पूर्वप्रवृत्तवृद्धेश्च "द्विर्वचनेचि" ( १-१-५६ ) इति रूपातिदेशेनापहारे द्वित्वे कृते पुनः प्राप्ते गुणवृद्धी बाधित्वान्तरङ्गत्वात्सवर्णदीर्घापत्तेः। न चेयर्तीत्यादौ तच्चरितार्थम्। तावन्मात्रप्रयोजनकत्वे उरित्येव ब्रूयात्। य्वोरित्यनुवर्त्तते। "इणो यण्" इतिसाहचर्याद्व्याख्यानाच्च ऋधातोरेव ग्रहणम्। अर्तेरिवर्णस्येयङ्ङि-

भैरवी।

कैयटहरदत्ताद्युक्तिं खण्डयति—*परेत्वित्यादिना*। इयर्तीत्यादाविति*। अत्र हि ऋ ऋतीतिस्थिते न प्राप्तिरिकाराभावात् किन्तु "अर्तिपिपर्त्योश्च" इतीत्वे कृते सतीयङः प्राप्तिस्तत्र न सवर्णदीर्घस्य प्राप्तिरित्याशयः। *उरित्येवेति*। ऋवर्णस्येयङित्यर्थः। नन्वेवमारेत्यत्रापि स्यादत आह—*य्वोरित्येवेति*।

ननु एतावतापि ऋवर्णान्तं यदङ्गं तदवयस्यैवर्णस्येत्यर्थापत्तौ ऋ अकरोदित्यत्र च्व्यन्ते रीङादेशे दोषापत्तिरत आह—*इणोयणीति*। सूत्रान्तरसाहचर्य्यं न व्यवस्थापकमत आह—*व्याख्यानादिति*। धातावेवैतत्सूत्रप्रवृत्तिसम्पादकशिष्टकृतव्याख्यानादित्यर्थः। *धातोरेवेति*। धातुग्रहणानुवृत्त्या धातारेवेत्यर्थः।

अन्ये तु य्वोरित्यस्यानुवृत्तावपि ऋवर्णान्ते धातावित्येव किं न स्यात्। इष्टापत्तिरिति चेद्भानुऋतीयितृशब्दादाचारक्विबन्ताल्लटि भानुऋतीयितरतीत्यत्रातिप्रसङ्ग इत्यत आह—*ऋधातोरेवेत्याहुः। तथासति यादृशः सूत्रार्थस्तमाह—*अर्तेरिवर्णेति*। अन्योक्तं खण्ड-

तत्त्वप्रकाशिका।

ननु इयङंशे यणपवादत्वेऽप्युवङ् सवर्णदीर्घस्यैवापवाद"उपसंजनिष्यमाणन्यायात्" न चोवोखेत्यादावन्तरङ्गत्वात्सवर्णदीर्घेण लघूपधगुणस्य बाधान्नोवङोऽनुवृत्तिरितिवाच्यम् "अचिश्नु" इतिसूत्रे प्रत्येकं स्वरितत्वप्रतिज्ञाया वैयर्थ्यापत्तेः। एवञ्चोखतुरित्याद्यर्थमसवर्णमप्यावश्यकमितिकथं ज्ञापकन्तदिति चेन्न अनाविविनिन्यासेनोखतुरित्यादेः सिध्द्याऽसवर्णग्रहणस्य वैयर्थ्यध्रौव्यात्।

किञ्च नव्यनये विशिष्टे एव स्वरितत्वस्वीकारेणोवोखेत्यादावन्तरङ्गत्वेन लघूपधगुणस्य सवर्णदीर्घेण बाधादुवङोऽननुवृत्तेरदोषात्। प्राञ्चइति*। इयर्तीत्यादौ श्लुना प्रत्ययापहारेणाक्षेपासम्भवादङ्गाभ्यासेत्येतदुभयसंज्ञानिमित्तकप्रत्यय इत्यर्थाभावेनेषतुरित्यादावुभयोस्तुल्यनिमित्तत्वेन परत्वात्प्राप्तेयङ्वारणायासवर्णग्रहणमावश्यकमिति न तज्ज्ञापकमित्यस्वरसः॥

ननु यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तिस्तन्निमित्तसम्पत्तये सर्वत्रातिदेशस्य स्वीकारेणात्र चक्रे इत्यादाविव सत्स्वपि गुणादिषु द्वित्वनिमित्तैकाच्त्वविघाताभावेनातिदेशाप्रवृत्तेरियायेयेषेत्यादौ सूत्रं चरितार्थमित्याह—नचेयेषेति। रूपातिदेशेनेति*। धातुसंज्ञाया(१)अक्तपरिमाणनिष्ठतया गुणवृध्द्योरनन्तरं धातुत्वातिदेशमन्तरा द्वित्वाप्राप्त्याद्वित्वनिमित्तवैकल्येन रूपातिदेशस्यापि प्रवृत्तिरिति भावः। पुनः प्राप्त इति*। अतिदिष्टरूपस्य निवर्तकवचनान्तरानुपलम्भेन तद्रूपस्य तादवस्थ्यात्पुनः प्राप्तिरिति भावः। नच द्वित्वे कर्तव्ये इति कालावधारणं व्यर्थमिति वाच्यम्। गुणादीनां पुनः प्रवृत्त्यभ्यनुज्ञानार्थतया तच्चारितार्थ्यात्। अन्यथा रूपातिदेशे गुणादीनां बाध एव स्यात्, नच लक्ष्यभेदाभावात्कथं पुनः प्राप्तिः, द्विर्वचन इत्यस्यावृत्त्या द्वित्वे कर्तव्ये इत्यर्थाश्रयणसामर्थ्येनैतद्विषये तदप्रवृत्तेः। *धातुग्रहणानुवृत्त्येति। "अचि-

( १ ) अक्तपरिमाणत्वञ्चेति। संख्यात्वपरिमाणत्वान्यतरव्याप्ययत्किञ्चिज्जातिव्यापकाभावप्रतियोगित्वमक्तपरिमाणत्वम्। व्यापकत्वघटकाधिकरणता च स्वाश्रयाश्रयत्वस-

त्यर्थः। अभ्यासस्यार्त्तावित्यभ्यासस्यार्त्तरिति वा गुरुत्वान्न युक्तम्। न च ए ऐ ओ औ शब्देभ्य आचारक्विबन्तेभ्यो लिटीयिङ्कायर्थं तत्सूत्रमावश्यकं तथा ओणधातोरण्वुलन्तादिच्छाक्यजन्तात्सन्युवोणकीयिषतीत्याद्यर्थमावश्यकमिति वाच्यम्। षाष्ठप्रथमाह्निकान्तस्थभाष्यप्रामाण्येन तेषामनभिधानात्। अन्त्ये द्वितीयद्विर्वचनस्यैव सत्त्वेन त्वदुक्तप्रयोगस्यैव दुर्लभत्वात्। एवं च सम्पूर्णसूत्रस्यैव ज्ञापकता युक्ता।

यद्यपि भाष्ये "यदयमभ्यासस्यासवर्णे इत्यसवर्णग्रहणं करोति" इति ग्रन्थेन असवर्णग्रहणस्य ज्ञापकता लभ्यते तथापि न ह्यन्तरेण गुणवृद्धी असवर्णपराभ्यासो भवतीति तदुपपादनग्रन्थे न सम्पूर्णसूत्रस्यैव ज्ञापकता लभ्यते। अग्रेऽपि नैतदस्ति ज्ञापकमत्यर्थमेतत् स्यादित्यनेन सूत्रसार्थक्यमेव दर्शितमसवर्णग्रहणस्यैव ज्ञापकत्वे तु तद्वैयर्थ्यप्र-

भैरवी।

यति—*अभ्यासस्येति*। "अभ्यासस्यासवर्णे" इति सम्पूर्णसूत्रस्य चरितार्थत्वात् न ज्ञापकत्वं किन्तु असवर्णग्रहणमेवेत्याशङ्कां निराचष्टे-*न चेत्यादिना*। अत्र मूल एकारादेरसन्दिग्धोपलब्धिसत्वप्रदर्शनाय सन्धिर्न कृतः। *तथा*। उक्तस्थल इव आदिपदेन इयेजकीयिषतीत्यस्य सङ्ग्रहः। *षाष्ठेति*। दाश्वान्साह्वानिति सूत्रस्थेत्यर्थः।

अत्र हि—"द्विर्वचनाद्गुणवृद्धी भवतो विप्रतिषेधेन" इत्येतन्निरूपणावसरे द्विर्वचनावकाशो बिभिदतुर्बिभिदुरिति। गुणवृद्ध्योरवकाशः चेता गौः इहोभयं प्राप्नोति। इयाय इययिथेत्युक्तम्। ततोऽन्यत्र द्विर्वचने परस्य गुणवृद्धी भविष्यत इति परेण शङ्कितेऽन्तरङ्गत्वात् सवर्णदीर्घः स्यात्। तस्याद्वार्णादाङ्गं बलीयो भवतीति गुणवृद्ध्योः प्रवृत्तिरित्युक्त्वा तस्यां परिभाषायां मूलोक्तरीत्याभ्यासस्येत्यस्य ज्ञापकत्वोपपादनावसरे अत्यर्थमेतत् स्यादित्यनेन ऋधातावेव चारितार्थ्यमुक्तं नत्वे शब्दादिविषये तेन तेषामनभिधानमित्यर्थः। *अन्त्ये*। ओणधातोरित्यादिनोक्ते। *द्वितीयद्विर्वचनेति*। न च यथेष्टं नामधातुषु इत्यनेन प्रथमैकाचोऽपि स्यादिति वाच्यम्। नामधातुपदस्य सुबन्तप्रकृतिकधातुसंज्ञाप्रयोजकप्रत्ययान्तधातुपरतया तस्याजादेरित्येकवाक्यतया प्रवृत्तेर्द्वितीयतृतीयैकाचो द्वित्वविधायकतयोक्तप्रयोगस्य सत्वात्। *यद्यपि भाष्येति*। दाश्वान् साह्वानिति सूत्रस्थोक्तभाष्येत्यर्थः। लभ्यते इति। विशिष्योपादानादिति शेषः *अत्यर्थमेतदिति*। अनेन प्रागुक्तानामनभिधानं लभ्यते।

ननु ऋधातावेव तस्य सूत्रस्य चारितार्थ्यप्रदर्शनमयुक्तम्। इणधातोरिटिकटकटीत्यत्र वीगतीत्यत्र वा प्रश्लिष्टादिकारात्मकधातोर्वा थे "ऋतो भारद्वाजस्य" इति सूत्रेणेड्विकल्पे इयःयिथ इयेथेति रूपद्वयम्भवति तत्रेडभावपक्षे द्विर्वचनात् परत्वाद्गुणे एशब्दस्यैव द्विर्वचनं न तु

तत्त्वप्रकाशिका।

श्नुधातोः" इत्यत इतिशेषः। तत्सूत्रमावश्यकमिति*। नच "इजादेः" इत्याम् स्यात्, अनृच्छ इति पर्युदासेनौपदेशिकेजादिधातावेव तत्प्रवृत्तेः। परत्वाद्गुणे इति*। नच

---

त्वन्धावच्छिन्ना बाध्या। यथा—संख्यात्वव्याप्या जातिः पञ्चत्वत्वं स्वाश्रयाश्रयत्वसम्बन्धेन तदधिकरणं पञ्चाक्षरावयवकः समुदायस्तन्निष्ठाभावे जरात्वाभावाभावो तस्यादपितु घटत्वाद्यभावः तदीयप्रतियोगितावच्छेदकं घटत्वत्वम्, अनवच्छेदकं जरात्वाभावत्वं तद्वत्त्वरूपव्यापकत्वं जरात्वाभावस्य तत्प्रतियोगित्वं जरात्वस्येति लक्षणसमन्वयः इति दिक्।

दर्शनेन तत्सार्थक्यमेव दर्शितं स्यात् ।

न चाकृतव्यूहपरिभाषयेयेषेत्यादौ सवर्णदीर्घप्राप्तिर्यदि दीर्घो न स्यात्तर्हि गुणः स्यादिति सम्भावनायाः सत्वेन परिभाषाप्रवृत्तेः सूपपादत्वादिति कथं सम्पूर्णसूत्रस्य ज्ञापकतेति वाच्यम् । तस्या असत्त्वात् । सत्त्वे वैतद्भाष्यप्रामाण्येन यत्रान्तरङ्गकार्य्यप्रवृत्तियोग्यकालोत्तरमेव तन्निमित्तविनाशकबहिरङ्गविधेः प्राप्तिस्तत्रैव तत्परिभाषाप्रवृत्तिस्वीकाराच्च ।

न चान्तरङ्गत्वाद्दीर्घेऽपीयायेत्यादौ पूर्वान्तवत्त्वेनाभ्यासत्वादिवर्णत्वाच्च णल्यसवर्ण इयङ्विधानेन सूत्रं चरितार्थम् । न च "अचि श्नु" (६-४ ७७) इत्यनेन सिद्धिः, वृद्धिबाधनार्थत्वादिति वाच्यम् । प्रत्यासत्त्यासवर्णपदेना-

भैरवी

तत्र "द्विर्वचनेऽचि" इत्यस्य प्राप्तिः द्विर्वचननिमित्ताच्परत्वाभावात्ततोऽभ्यासस्य ह्रस्वत्वेऽसवर्णपराभ्याससम्भव इति कथं सम्पूर्णसूत्रस्य ज्ञापकत्वम् । एतेन उरितीण उपलक्षणमित्यपास्तम् ।

किञ्च उक्तोदाहरणान्तरस्यापि सम्भवादर्त्यर्थमेतत् स्यादितिशङ्कोत्तरं नैकमुदाहरणं योगारम्भं प्रयोजयतीत्युत्तरितं तद्विरुध्यत इति चेन्न, एतद्भाष्यप्रामाण्यादेव प्रागुक्तानामिव इयेषेत्यस्याप्यनभिधानं कल्पनीयमित्याशयात् । न च भारद्वाजनियमबलाद्यः पक्षे इडभावस्तस्य योग्यतासत्वात्तादृशं रूपं दुर्वारमिति वाच्यम्, एतद्भाष्यबलादेव भारद्वाजसूचितविकल्पस्य व्यवस्थितविभाषात्वकल्पनेन प्रकृते इडभावस्याप्रवृत्तिकल्पनादित्याहुः ।

कौस्तुभोक्तरीत्या शङ्कते—*न चेति* । गुणेत्युपलक्षणम्, वृद्धेरपि प्राप्तेः । तेनादिपदग्राह्यस्य इयायेत्यस्य संग्रहः । अकृतव्यूहपरिभाषाप्रवृत्तिमुपपादयति—*यदीति* । *तस्याः* । अकृतव्यूहपरिभाषायाः । एतत्तत्वं तन्निरूपणावसरे स्फुटीभविष्यति । अभ्युपेत्याह—*सत्त्वेवेति* । *एतद्भाष्येति* । न ह्यन्तरेणेत्येतद्भाष्ये इत्यर्थः । वाकारोऽनास्थायाम् । *कालोत्तरमेव* । इत्येवकारः प्रसिद्धत्वद्योतकः । *तन्निमित्तविनाशकेति* । अन्तरङ्गनिमित्तविनाशकेत्यर्थः । तथा सेदुष इत्यत्रान्तरङ्गेडागमप्रवृत्त्युत्तरं सम्प्रसारणस्यान्तरङ्गेडागमनिमित्तवलादित्वविनाशकस्य प्राप्तिः । न चेयायेत्यत्रान्तरङ्गदीर्घोत्तरमप्यन्तरङ्गनिमित्तविनाशकस्य "अचोञ्णिति" इत्यस्य प्राप्तिरस्तीति वाच्यम् । अत्राप्यन्तरङ्गे सवर्णदीर्घे कृते नान्तरङ्गनिमित्तविनाशकत्वं वृद्धेः । सवर्णदीर्घे हि सवर्णात्परकत्वावच्छिन्नं निमित्तं तच्च तदा नास्त्येवेत्याशयात् । *न चान्तरङ्गत्वादिति* । अत्रान्तरङ्गत्वं पूर्वोपस्थितनिमित्तकत्वरूपम् । *सिद्धिरिति* । इयङ इति शेषः । वृद्धिबाधनार्थत्वात् "अचिश्नु" इतीयङ्बाधकवृद्धिबाधनार्थम्

तत्त्वप्रकाशिका ।

"इ लिट्" इत्यवस्थायां सिबादेशात्परत्वाद्द्वित्वेऽन्तरङ्गत्वात्सवर्णदीर्घो दुर्वार एव, नच तत्रापि परत्वात् गुणः, "असंयोगात्" इति किन्त्वेन तदप्राप्तेः, अपिदितिनिषेधस्तु स्थानिवत्त्वेन प्राप्तकित्वस्य निषेधेन चरितार्थ इति वाच्यम् । अपिदिति पर्युदासेन पित्वयोग्यादेशभूतस्यैव लिटो ग्रहणेन लावस्थायां तदप्राप्तेः । अन्यथोवाचेत्यादौ सम्प्रसारणं दुर्वारम् । अनभिधानमिति* । ह्रस्वापेक्षयाऽन्तरङ्गत्वादयादेशे इयेषेत्यस्य दुर्लभत्वात् । दीर्घो न स्यादिति* । नच यदि गुणो न स्यात्तर्हि दीर्घः स्यादिति सम्भावनया गुणस्याप्यप्रवृत्त्या न दोष इति वाच्यम् । गुणस्यान्तरङ्गत्वाभावेन तत्रैतदप्रवृतेः । अनयाऽन्तरङ्गकार्यस्य प्रतिबध्यमानतयाऽन्तरङ्गप्रवृत्तेः अनयाऽन्तरङ्गकार्यस्य प्रतिबध्यमानतयाऽन्तरङ्गप्रवृत्तेः प्रागन्तरङ्गनिमित्तस्य बहिरङ्गेण यत्र विनाशसम्भावना तत्रैतत्प्रवृत्तेः ।

भ्यासोत्तरखण्डसम्बन्ध्यसवर्णाच एव ग्रहणाच्छास्त्रबाधकल्पनापेक्षया परिभाषाज्ञापकत्वस्यैवौचित्याच्चेत्याहुः ॥

सा चेयं धर्मिग्राहकमानादाङ्गवार्णयोः समानकार्य्यित्व एव ।

भैरवी ।

अभ्यासस्यासवर्णे" इत्यस्य सत्वादिति भावः । *अभ्यासोत्तरखण्डेति । न च शङ्कोक्तरीत्या दीर्घस्याभ्यासत्वात् णलस्तदुत्तरत्वादेवमपि दोषतादवस्थ्यमिति वाच्यम् । यदपेक्षया पूर्वत्वमादायाभ्याससंज्ञा प्रवर्तते तत्सम्बन्धी योऽच् तस्मिन्नित्यर्थात् ।

ननु न "अभ्यासस्य"इतिशास्त्रेण परिभाषा ज्ञाप्यत इति वदामः । किन्तु बहिरङ्गगुणादिनान्तरङ्गस्य सवर्णदीर्घस्य बाधं कल्पयाम इति चेन्न । साक्षाच्छास्त्रस्य बाधकल्पनापेक्षया बहुलक्ष्यसंस्कारानुरोधेन परिभाषाज्ञापनस्यौचित्यात् ।

ननु प्रत्यासत्त्या "अभ्यासस्य" इति सूत्रस्य विलक्षणार्थकत्वमाश्रित्य परिभाषाज्ञापकतया चारितार्थ्यकल्पनापेक्षया "अचिश्नु" इति सूत्रबाधक"अचोऽञ्णिति" इति सूत्रबाधकतया सार्थकत्वमस्त्वित्यत आह—*शास्त्रेति* । वृद्धिशास्त्रेत्यर्थः ।

किञ्चप्रत्यासत्तिन्यायापेक्षया व्यापिन्यायस्य प्राबल्यात् परिभाषाज्ञापनमेवोचितमिति भावः ।

किञ्चेयायेत्यादिकतिपयलक्ष्यलाभेऽपीयेषेत्यादिलक्ष्यासंग्रहः परिभाषां विना स्यादित्यपि बोध्यम् । *सा चेयमिति* । या सम्पूर्णसूत्रज्ञाप्यत्वेनोक्ता सेयं परिभाषेत्यर्थः । *धर्म्मिग्राहकमानेति* । धर्म्मः वार्णकार्य्यापेक्षयाङ्गस्य बलवत्वबोधकत्वम् तदाश्रयग्राहकं ज्ञापकं यन्मानम् "अभ्यासस्य" इति सूत्रं तस्मादित्यर्थः। *समानकार्य्यित्वे एवेति* । वार्णकार्य्यस्य यत्कार्य्यि तत्कार्य्यिकत्वं यत्राङ्गस्य तत्रैवेयं प्रवर्त तेइत्यर्थः। अत एव च्यवन्ते प्लवन्ते इत्यादौ नित्यत्वाद्वर्णमात्रापेक्षत्वेनान्तरङ्गत्वाच्च "अतो गुणे" इत्येकादेशे कृते पिदपितोरेकादेशस्य परादिवद्भावेनापित्वाद्गुणाभावापादनपरं भाष्यं सङ्गच्छते । अत्र हि समानकार्य्यित्वाभावः स्फुट एव । यदि एतादृशनियमो न स्यात् तदाङ्गत्वात्पररूपात् पूर्वं गुणस्य प्रवृत्त्या रूपस्य सिद्धौ निर्बाधायां "सार्वधातुकमपित्" इति सूत्रे पर्य्युदासपक्षे यद्गुणाभावापादनं तद्विरुध्येत । "अचः परस्मिन्" इत्यनेन तस्य सिद्धिरिति त्वन्यत् ।

ननु समानकार्य्यित्व एवेति नियमस्य भाष्यसङ्गमनरूपफलसत्वेऽपि लक्ष्यसिद्धिरूपं फलं किमिति चेत्, गाते गाथे गाताम् गाथामिति गृहाण । एष हि गा अ आतामित्यादिस्थितौ सवर्णदीर्घस्य "आतो ङित" इतीयादेशस्य च प्राप्तावन्तरङ्गो दीर्घ एव भवति न त्वन्तरङ्ग इयादेशः । सामान्यत एतत्परिभाषाप्रवृत्तौ तु आङ्गत्वादियादेशस्य प्रवृत्तौ रूपासिद्धिः

तत्त्वप्रकाशिका ।

यत्कार्यि* । यः स्थानी । तत्रैव* । ननु समाननिमित्तकत्वे समानोद्देश्यकत्वे वेति भावः । तत्वञ्च वार्णशास्त्रीयस्थानितावच्छेदकपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिकस्थानिताकत्वम् । वार्णशास्त्रीयस्थानितावच्छेदकपर्याप्त्यनुयोगितावच्छेदको यो धर्मस्स एवाङ्गशास्त्रस्याप्यपेक्षित इति भावः । यथा–इयायेत्यादौ वार्णशास्त्रम् "अकस्सवर्णे" इति तच्छास्त्रीयस्थानितावच्छेदकः पूर्वत्वं परत्वञ्च तत्र परत्वस्य पर्याप्त्यनुयोगितावच्छेदको धर्मः उत्तरेकारवृत्ति तद्व्यक्तित्वरूपो धर्मस्स एवाङ्गशास्त्रस्य "अचोञ्णिति "इत्यस्येति समन्वयः । अत एव चच्छावित्यादावन्तरङ्गत्वात्तुकि अजन्तत्वाभावात् ह्रस्वो न स्यादित्याशङ्क्य वैयधिकरण्यान्वयेन समाधानपरभाष्यं सङ्गच्छते । अन्यथा समानोद्देश्यकत्वेनाङ्गत्वात्पूर्वं ह्रस्वे तदसङ्गतं स्यात् । निरुक्तानुगमे तु तुक आगमत्वेन वार्णशास्त्रीयस्थानितैव नास्तीति न दोषः । अत एव युच्छतीत्यादौ गुणो न । *रूपासिद्धिः स्फुटैव* । अत एव

यत्तु समाननिमित्तकत्वरूपसमानाश्रयत्व एवैषेति तन्न। ज्ञापितेऽपीयायेयेषेत्याद्यसिद्धेः सूत्रवैयर्थ्यस्य तदवस्थत्वाच्च। स्योन इत्यत्र तु वक्ष्यमाणरीत्यास्या अनित्यत्वादप्रवृत्तौ गुणादन्तरङ्गत्वाद्यणादेशः।

न चैवमपीयायेत्यादावियङ् दुर्लभस्तत्र कर्त्तव्ये वृद्ध्यादेः स्थानिवत्त्वेन अ-

भैरवी

स्फुटैव। नियमव्यवच्छेद्यं प्राचीनमतं निरसितुमाह—*यत्त्विति*। *समाननिमित्तकत्वे*। आङ्वर्णयोरेकनिमित्तकत्वे, एतदुदाहरणमियाय कुम्भकार इत्यादि। अत्रान्तरङ्गोऽपि यणादेशो बहिरङ्गाङ्वृद्धेः पूर्वं न प्रवर्तते। समवायिकारणातिरिक्तस्य निमित्तकारणत्वेन प्रसिद्धत्वात् यत्र तादृशं समानं तत्रैवैतत्प्रवृत्तौ भवत्सम्मतस्य इयायेत्यस्यैवासिद्धिरितिरीत्या दूषयति—*तन्नेत्यादिना*। अत्र वार्णसवर्णदीर्घस्याङ्वृद्धिगुणयोः समाननिमित्तकत्वाभावः स्पष्ट एव।

किञ्च समाननिमित्तकत्व इति नियमस्वीकारे ऊषतुरूचे इत्याद्यसिद्धिः। अत्र हि ह्रस्वत्वस्यभ्यासोद्देश्यकत्वेनोरदत्ववत्प्रत्ययो निमित्तम्। सवर्णदीर्घस्य तु न तथेति समाननिमित्तकत्वाभावाद्वार्णपरिभाषाया अप्रवृत्तौ सवर्णदीर्घे ह्रस्वत्वापत्तेः। समानकार्य्यित्व एवेति नियमस्वीकारे तु आङमुभयत्र कार्य्यीति पूर्वं ह्रस्वत्वे आङ्गे कृते ततः सवर्णदीर्घं विकारकृतभेदाभावेन "लक्ष्ये लक्षणं सकृदेव" इतिन्यायेन ह्रस्वत्वाप्रवृत्तौ रूपसिद्धिः।

न च सि ऊ न इति स्थितेऽन्तरङ्गस्य यणादेशस्य प्रवृत्तिरिष्यते सा च समानकार्य्यित्ववदाङ्गुणेन बाधान्न प्राप्नोतीति वाच्यम् वक्ष्यमाणज्ञापकेनास्या अनित्यत्वात्। न चैतन्मत एवानित्यत्वाश्रयणमिति भ्रमितव्यम्। एषा समाननिमित्तकत्वे प्रवर्तते इति वादिमतेऽपि गात इत्यादिरूपाणां शपमादाय दीर्घयादेशयोः समाननिमित्तकत्वसत्त्वादसिद्ध्यापत्तेरन्यथानुपपत्त्यानित्यत्वाश्रयणस्यावश्यकत्वात्।

इयांस्तु विशेषः—समाननिमित्तकत्वे प्रवर्तत इति वादिमतेऽनित्यस्यापि बहुषु अप्रवृत्तिकल्पना, समानकार्य्यित्ववादिमते तु क्वचिदेवेति लाघवमिति। *एवमपि* । वार्णपरिभाषया एकादेशात् प्राग्गुणवृद्धिप्रवृत्तावपि। *तत्र*। इयपि। *स्थानिवत्त्वेनेति*। "अचः परस्मि-

तत्त्वप्रकाशिका।

गान इत्यादौ "आनेमुक्" इतिमुग्न। अन्यथा गा अ आन इतिस्थिते आङ्त्वान्मुकि गामान इति स्यात्। अत एवादादिकोऽयमितिहरदत्तादयः। फलेतु न भेद इति ग्रन्थश्च सङ्गच्छते।

ह्रस्वत्वाप्रवृत्तौरूपसिद्धिरिति*। केचित्तु वार्णशास्त्रघटकसप्तम्यन्तपञ्चम्यन्तान्यतरपदप्रयोज्यविषयतापर्याप्त्यनुयोगितावच्छेदकीभूतो यो धर्मस्तद्धर्मावच्छिन्नानुयोगिताकपर्याप्तिकाङ्गपदविशिष्टविशेष्यताकत्व समाननिमित्तकत्वम् वैं० स्वप्रयोज्यत्व स्वप्रयोज्यविशेष्यतानिरूपितप्रकारत्वासामानाधिकरण्योभयसम्बन्धेन। इयायेत्यादौ वार्णम्"अकः सवर्णे" इतिशास्त्रं तद्घटकं सप्तम्यन्तमचीतितत्प्रयोज्यविषयतापर्याप्त्यनुयोगितावच्छेदकीभूतो धर्म उत्तरेकारे तद्व्यक्तित्वम् तद्धर्मावच्छिन्नानुयोगिताकपर्याप्तिकाङ्गपदविशिष्टविशेष्यता निर्दिश्यमानत्वावच्छिन्ना विशेष्यतातत्कत्वम् "अचोञ्णिति" इत्यस्येति न दोषः। विशेष्यतायामाङ्गपदवैशिष्ट्यदानेन गाते गान इत्यादौ न दोषः। अन्यथा "आतो ङितः" इतिशास्त्रघटकात्पदप्रयोज्यविषयतायाम् "आने मुक्" इत्येतद्घटकात्पदप्रयोज्यविषयतायाश्च "अकः सवर्णे" इत्येतद्घटकाच्चपदप्रयोज्यविषयतापर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिकस्य सत्त्वाद्दोषो दुर्वारस्स्यात्। एवं चच्छौ युच्छतीत्यत्राप्यूह्यम्। अत एव "स्योन" इत्यादावन्तरङ्गत्वाद्यणितिभाष्यं सङ्गच्छते। अन्यथाऽऽङ्गत्वाद्गुणो दुर्वारःस्यादिति वदन्ति। तन्न कारक इत्यादौ निरुक्तसमाननिमित्तकत्वाभावेनान्तरङ्गत्वाद्यणापत्तेः।

सवर्ण इति प्रतिषेधादिति वाच्यम्। सूत्रारम्भसामर्थ्यादेव स्थानिवत्त्वाप्रवृत्तेः।

भैरवी।

नू" इत्यनेनेत्यादिः। *सूत्रारम्भेति*। "अभ्यासस्यासवर्णे" इति सूत्रारम्भेत्यर्थः। अभ्यासस्येयङुवङादेशे कर्त्तव्ये तदुत्तरखण्डादेशस्य स्थानिवत्वं न इत्येतत्परित्यज्याधिकलक्ष्याणां

तत्त्वप्रकाशिका–

इतिलाघवमिति*। केचित्तु–अनित्यत्वज्ञापनं न युक्तमननुगमात्। "पुगन्त" इत्यत्र पुगन्तसाहचर्येण लघूपधांशे हलन्ताङ्गे एव प्रवृत्तिस्वीकारेण "स्योन" इत्यत्र गुणाप्राप्तेश्च। भाष्ये यणगुणयोरन्तरङ्गत्वादिविचारस्त्वेकदेशिनः उणादिष्वव्युत्पत्तिपक्षस्यैवाङ्गीकारात्। नच वारिणीत्यादावन्तरङ्गत्वान्नुमम्बाधित्वा सवर्णदीर्घापत्तिः, "इकोऽचि" इत्यस्यानवकाशत्वेन सन्धिकार्यापवादत्वात्। चंच्छम्यत इत्यत्रान्तरङ्गत्वात्तुक्यपि यदागमपरिभाषयाऽच्छब्दस्य "नुगत" इत्यत्रत्यात्पदेन ग्रहणान्नुक्सिद्धिः। एवञ्च नव्यमतेऽनित्यत्वाकल्पनमितिमहल्लाघवमितिवदन्ति।

असवर्ण इति प्रतिषेधादिति*। नच आय् इत्यत्र सवर्णाच्त्वबुद्धावपि तद्घटकाकारे असवर्णाच्त्वस्य सत्वेन इयङः सुलभत्वम्। नच स्थानिनि सति यन्न भवति तदादेशेऽपि न भवति स्थानिनि सति यद्भवति तदादेशेऽपि भवतीत्यर्थकरणेन इयङ् दुर्लभ एवेतिवाच्यम्। देवयतेः क्विपि दयूरित्यादौ अयादेशानापत्तेः। स्थानिनि णौ सत्यभवतो यादेशस्य आदेशेऽपि दुर्लभत्वात्। तस्मादादेशे स्थानिवृत्तिधर्मसम्भावनायां यद्भवति तद्भवति यन्न भवति तन्न भवतीत्यर्थस्यावश्यकत्वेन इयायेत्यादौ सवर्णाच्त्वसम्भावनायामपि तद्घटकाकारमादायेयङ् भवत्येव। अतएव "अचः परस्मिन्" इति भाष्यस्थे परस्मिन्निितिकिं युवजानिः नैतदस्ति प्रयोजनं स्थानिवद्भावेऽपि आदेशघटकनकारमादाय लोपो भविष्यतीति संगच्छत इति वाच्यम्। स्थानी न निवृत्तः आदेशो न जातः इतिसम्भावनायां यद्भवति तद्भवति यन्न भवति तन्न भवतीत्यर्थकरणेन शङ्कायाः सङ्गतेः। अतएव एषो गमयतीत्यादौ "एतत्तदोः" इति सुलोपो न।

*सूत्रारम्भसामर्थ्यादिति*। नन्वियेथेत्यत्र पूर्वं गुणे ततो द्वित्वे ह्रस्वे च तस्य स्थानिभूतादचः पूर्वत्वेन दृष्टत्वाभावात्स्थानिवद्भावाप्राप्तेः चारितार्थ्यमिति चेन्नाभ्यासस्यानणीत्येव सिद्धे असवर्णग्रहणस्य वैयर्थ्यात्। ज्ञापिते त्वियर्तीत्यत्रोत्तरखण्डस्य स्थानिवद्भावाप्राप्त्याऽकारेऽनणीतिनिषेधापत्तेस्तथान्यासो दुष्टः। न चेयायेत्यत्र "इ ऐ अ" इत्यत्र स्थानिवद्भावेनासवर्ण इति प्रतिषेधादियङोऽप्राप्तावपि पूर्वमायादेशे तस्मिन्निकारनिष्ठसवर्णत्वातिदेशेऽपि तदवयवाकारेऽसवर्णत्वस्य सत्वादनणीतिन्यासेऽपि न सिद्धिरिति वाच्यम्। "यून" इति "रिन" इति वान्यासेन इधातोर्ऋधातोश्चावयवीभूतो य इकारस्तस्येयङ्क्त्यर्थकेनोक्तफलसिध्या सूत्रवैयर्थ्यध्रौव्यात्।

नच सूत्रवैयर्थ्यादित्यस्य "ओः पुयण्जि" इतिसूत्रवैयर्थ्यादित्यर्थः। अन्यथा अबीभवदित्यादौ णावच आदेशो न स्याद्द्वित्वेकर्त्तव्ये इति भूशब्दस्य द्वित्वे वृद्धौ आवादेशे ह्रस्वे स्थानिवद्भावेन अवर्णपरकपवर्गाद्यभावेन तद्वैयर्थ्यस्य स्पष्टत्वादिति वाच्यम्? प्रतिपदविधित्वात्पूर्वं "णौ चङि" इति ह्रस्वे पश्चाद् "ह्रस्व" इत्यनेन ह्रस्वे स्थानिभूतादचः पूर्वत्वेन दृष्टत्वस्याभावेन स्थानिवद्भावस्याप्रवृत्या सूत्रवैयर्थ्यस्याभावात्।

नचस्थानिवद्भावेन लघुपरकाभ्यासाभावेन सन्वद्भावाप्राप्त्या सूत्रवैयर्थ्यं स्पष्टमेवेति वाच्यम्। भूधातोः क्विपि नपुंसकह्रस्वे तस्माण्णिचि चङि द्वित्वे ह्रुग्यादिषु तेषां स्थानवद्भावाल्लघूपरकाभ्यासत्वेन सन्वद्भावे "दीर्घोलघोः" इति दीर्घे तत्रस्थानिभूतादचः पूर्वत्वाभावेन

तच्च सामान्यापेक्षमभ्यासकार्ये तदुत्तरखण्डादेशस्य तत्कार्य्यप्रतिबन्धकीभूतं स्थानिवत्त्वं नेति । अत एवारतीत्यादौ यणादेशस्य स्थानिवत्त्वादभ्यासस्य "ढ्रलोप" इति दीर्घो दुर्लभ इत्यपास्तम् । दीर्घविधौ तन्निषेधाच्च । अरिरियादित्यत्र स्थानिवत्त्वेनेयङ् भवत्येव । तस्य स्थानिवत्त्वस्याभ्यास-

भैरवी ।

संप्रदायाह—*तच्चेति* । *तच्च* । "अभ्यासस्य" इति सूत्रञ्च । *सामान्यापेक्षमिति* । अस्य ज्ञापकमिति शेषः । एवं सति यथा वचनस्य निष्पत्तिस्तथाह—*अभ्यासेत्यादिना* । एवं वचननिष्पत्तौ प्रकृते अभ्यासस्य कार्य्यमियङुवङावेतत्सूत्रविधेयौ तत्र कर्त्तव्ये "अचः परस्मिन्" इत्यस्याप्रवृत्त्या असवर्णपरत्वसत्वाद्भवति सूत्रस्य प्रवृत्तिः। *तदुत्तरखण्डेति* । अभ्यासोत्तरखण्डेत्यर्थः । *तत्कार्येति* । अभ्यासकार्येत्यर्थः । *अत एव* । सामान्यापेक्षज्ञापकाश्रयणादेव । *आरतीति* । यङ्लुगन्तस्येदं रूपम् । अत्र हि—ऋधातोः "सूची" इत्यादिना यङि तस्यानैमित्तिके लुकि लटि उरदादेशे प्रत्ययलक्षणेन यङन्तत्वात् द्विर्वचनेऽभ्यासस्योरदत्वे रुगागम उत्तरखण्डस्य यणादेशे "रोरि" इतिलोपे "ढ्रलोप" इति दीर्घ इति बोध्यम् । अत्र दीर्घे कर्त्तव्ये स्थानिवत्त्वं न भवति । क्वचिदत्र दीर्घविधौ तन्निषेधादिति पाठस्स तु न युक्तः, लोपरूपाजादेशस्य सिद्धान्ते स्थानिवत्त्वनिषेधस्य एषु कर्तव्येषु स्वीकारात् यथाश्रुतसूत्ररीत्या वोपपादनीयः ॥

प्रतिबन्धकीभूतेति विशेषणस्य फलमाह—*अरिरियादिति* । तस्यैव लिङि रिगागमे ऋ इत्यस्योत्तरखण्डस्य रिङादेशेऽपि तस्य स्थानिवद्भावादियङादेशः सिध्यति । तस्य स्थानिवद्भावस्याभ्यासकार्य्यसाधकत्वात् । इदमत्र बोध्यम् । यदि त्वत्रान्तरङ्गत्वाद्रिङादेशात् पूर्वमेवेयङित्युच्यते तदा प्रतिबन्धकीभूतेति विशेषणस्य वैयर्थ्यम् ।

किञ्चैतद्विशेषणदानेऽपि "काण्यादीनांवा" इति ह्रस्वत्वाभावे अचकाणदित्यत्रोत्तरखण्डस्य स्थानिवद्भावात् सन्वद्भावे इत्त्वापत्तिरत अभ्यासस्य कार्यंत्यत्राभ्यासपदमभ्यासत्वपर्य्याप्त्यधिकरणपरम् उत्तरखण्डपदञ्च उत्तरखण्डावयवाच्परम् । एवञ्चाभ्यासत्वपर्य्याप्त्यधिकरणोद्देश्यककार्ये तदव्यवहितोत्तरखण्डादेशस्य स्थानिवत्त्वन्नेति फलितम् । एवञ्च सन्वद्भावस्याभ्यासत्वपर्य्याप्त्यधिकरणोद्देश्यकत्वात्, तत्र कर्तव्ये स्थानिवत्त्वनिषेधो भवत्येव । पर्य्याप्त्यधिकरणत्वनिवेशादेवारियृति ऊरिग्रियादित्यत्र यलोपे कर्तव्ये यण्डिरङोः स्थानिवत्त्वं भवत्येव । यलोपात्मककार्य्यस्याभ्यासत्वपर्य्याप्त्यधिकरणोद्देश्यकत्वाभावात् । एवञ्च प्रतिबन्धकीभूतेति विशेषणस्य वैयर्थ्यमेव । अरिग्रियादित्यत्रेयङादेशस्याभ्यासत्वपर्य्याप्त्यधिकरणोद्देश्यकत्वाभावेन तस्मिन् कर्तव्ये स्थानिवत्त्वनिषेधाप्रवृत्तेः ।

तत्त्वप्रकाशिका ।

स्थानिवद्भावाप्राप्त्या सूत्रसार्थक्यस्य स्पष्टत्वादितिदिक् । अभ्यासकार्येति* । तेन निन्यतुरित्यादौ नलोपे कर्तव्ये "अचः परस्मिन्"इतिस्थानिवद्भावनिषेधो न,"अनिदिताम्"इतिलोपस्याभ्यासकार्यत्वाभावात् । उत्तरखण्डादेशस्येति*। तेन वव्रश्चेत्यादौ "न सम्प्रसारणे" इति निषेधे कर्तव्ये उरदत्वस्य स्थानिवत्यप्रतिषेधो न तस्योत्तरखण्डादेशत्वाभावात् । *विशेषणस्य वैयर्थ्यमिति । तत्सत्वेतु ईयतुरित्यादौ यणापत्तिः । स्थानिवद्भावस्य यणस्साधकत्वेन प्रतिबन्धकत्वाभावात् । नच "अकस्सवर्ण" इत्यनेन "इको यणचि" इत्यत्र सवर्णाज्भिन्नत्वेन सङ्कोचाद्यणः प्राप्तिरेव नेतिवाच्यम् । स्वप्रवृत्तियोग्यस्वोद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वेन सङ्कोचेन प्रकृते सवर्णदीर्घप्रवृत्तियोग्यत्वाभावेन यणो दुर्वारत्वात् । पूर्वस्यैव विधौ स्थानिवद्भावेन सवर्णदीर्घे कर्तव्ये स्थानिवत्त्वस्याभावात् । नचाभ्यासकार्ये इत्यस्य अभ्यासत्वावच्छिन्नोद्देश्यताककार्ये इत्यर्थः । अत एव जहावित्यादौ "अत उपधाया" इति वृद्धिर्न, नच यण अ-

कार्य्यप्रतिबन्धकत्वाभावात्। इयं चाङ्गसम्बन्धिन्याङ्ग एवेति "स्वरितो वा" (८-२-६) इति सूत्रे भाष्ये।

भैरवी।

एतेन "नपदान्त" सूत्रव्याख्यानावसरे मनोरमायां यातिरित्यत्र यङ्वयवाकारलोपस्य स्थानिवद्भावात्पुनरालोपो न शङ्क्यः चिणोलुङ् (१)न्यायेनाल्लोपस्यासिद्धत्वात् स्थानिवद्भावाच्चेत्युक्तन्तन्न युज्यते। तत्राल्लोपस्य यः स्थानिवद्भावस्तस्याभ्यासकार्य्यप्रतिबन्धसम्पादकतयानेन वचनेन निषेधो भविष्यतीति स्थानिवद्भावादित्यसङ्गतमित्यपास्तम्। प्रतिबन्धकीभूतेतिविशेषणं परित्यज्य पर्य्याप्त्यधिकरणत्वस्य निवेशेनाल्लोपात्मककार्य्यस्य अभ्यासत्वपर्य्याप्त्यधिकरणोद्देश्यकत्वाभावेन अनेन वचनेन स्थानिवद्भावनिषेधाप्रसक्तेः।

अत्र केचित्--समाननिमित्तकत्व एवैषा प्रवर्तत इति न नियमः नङो ङित्त्वाज्ज्ञापकात् तद्धि विश्न इत्यत्र गुणाभावार्थम्। यदि समाननिमित्तकत्व एवेति नियमस्तदा तुकि छकारो गुणे तु प्रत्ययो निमित्तमिति व्याश्रयत्वादस्याः परिभाषाया अप्रसक्त्यान्तरङ्गे तुकि कृते गुणाप्रसक्तेः, नङो ङित्वं व्यर्थं स्यात्। व्याश्रये असमाननिमित्तकत्वेऽपि परिभाषा प्रवृत्तौ तु वार्णतुकः पूर्वमाङो गुणः स्यादिति तच्चरितार्थम्। व्याश्रये प्रवृत्तिफलञ्च च्यवन्ते प्लवन्त इति। अत्र शब्देकादेशमन्तरङ्गं बाधित्वा पूर्वं गुणस्य सिद्धिः। न च यदीयं व्याश्रयेऽपि तदा प्रश्न इत्यत्र टुगागमम्बाधित्वा सम्प्रसारणापत्तिरितिवाच्यम्। "प्रश्ने चासन्नकाल" इतिनिपातनेन सम्प्रसारणाभावस्य कल्पनादित्याहुः।

वस्तुतस्तु "स्वरितो वा" इतिसूत्रस्थभाष्यप्रमाण्येन यत्र प्रवर्तते तदाह-*इयञ्च अङ्गेत्यादिना*। तत्र ह्युदात्तानुदात्तयोरेकादेश आन्तरतम्यात् स्वरितस्य स्थाने "एकादेश उदात्तेनोदात्त" इत्यनेनोदात्त आदेशः क्रियते इति मते एकादेशस्वरोऽन्तरङ्गः। एकादेशस्वरोऽन्तरङ्गः सिद्धो वक्तव्यः, किं प्रयोजनम् अयवायावेकादेशशतृस्वरैकाननुदात्तसर्वानुदात्तार्थमित्येतन्निरूपणावसरे आय्,कुमार्य्या इदम् किशोर्या इदम्। अत्र कुमारी ए इति स्थिते आडागमे कृते उदात्तनिवृत्तिस्वरेणान्तोदात्तकुमारीशब्दस्य यणादेशे "उदात्तयणो हल्पूर्वात्"इत्याट उदात्तत्वे कृते आडिकारयोरुदात्तानुदात्तयोर्वृद्धिरेकादेश उदात्तस्तस्योदात्त आयादेशो यथा स्यादित्युक्तम्। यद्येकादेशस्वरोऽसिद्धः स्यात्तदा "उदात्तयण" इत्युदात्तस्याटः सुप्त्वेनानुदात्तस्यैकारस्यान्तरतम्यात् स्वरित आय् स्यादिति तद्भावः। "नैतदस्ति प्रयोजनम्। एकादेशे कृते "उदात्तयणो हल्पूर्वात्" इत्युदात्तो भविष्यति। आडेकारयोरनुदात्तयोः प्रागेकादेशः पश्चाद्विभक्त्युदात्तत्वमिति। इदमिह सम्प्रधार्य्यम्। उदात्तत्वं क्रियतामेकादेश इति किमत्र कर्तव्यम्। परत्वादुदात्तत्वम्। नित्य एकादेशः कृते उदात्तत्वे प्राप्नोत्यकृतेऽपि। अनित्य एकादेशः, अन्यथा स्वरस्यकृते उदात्तत्वे प्राप्नोत्यन्यथा स्वरस्याकृते, "स्वरभिन्नस्य प्राप्नुवन् विधिरनित्योभवति"। अन्तरङ्गस्तर्ह्येकादेशः। कान्तरङ्गता। वर्णावाश्रित्यैकादेशः पदस्योदात्तत्वम्। विभक्तेरुदात्तविधानादिति कैयटः।

तत्त्वप्रकाशिका।

भ्यासत्वावच्छिन्नोद्देश्यकत्वाभावेन प्रतिबन्धकीभूतेतिनिवेशाभावेऽपि ईयतुरित्यादौ यण् दुर्वार एवेतिवाच्यम्। सन्निपातपरिभाषयैव वृद्धिवारणेनाभ्यासत्वावच्छिन्नेतिनिवेशो फलाभावात्। आदन्तमङ्गं निमित्तीकृत्य जातस्यौकारादेशस्य तदविघातकत्वात्। *आङ्ग एवेति*।

---

(१) चिणोलुङ्न्यायेनेति। यथाऽपाचितरामित्यत्र चिणः परस्य तशब्दस्य लुकि पुनस्तरपस्तरप्य लुङ् न भवति प्रथमलुकोऽसिद्धत्वेन व्यवधानादित्यर्थः।

तत्र हि-कुमार्यै इत्यादौ यणुत्तरमाडुक्तः । इयं चानित्या "च्छ्वोः" (६-४-१९) इति सतुग्निर्देशात् । अन्यथाकृत्वात् पूर्वं तुकः शादेशे तुकोऽप्राप्त्या तद्वैयर्थ्यं स्पष्टमेवेत्यन्यत्र विस्तरः ॥ ५५ ॥

नन्वेवं सेदुष इत्यादौ क्वसोरन्तरङ्गत्वादिटि ततः सम्प्रसारणेऽपीटः श्रवणापत्तिरिति चेत् । अत्र केचित्—

## अकृतव्यूहाः पाणिनीयाः ॥ ५६ ॥

भैरवी ।

पदत्वसम्पादकबहिर्भूतविभक्तिसम्बन्धित्वेन बहिरङ्गत्वमिति भावः । इदमिह सम्प्रधार्य्य-माट् क्रियतामुत्तत्वमिति । परत्वादाडागमः नित्यमुदात्तत्वम् । कृतेऽप्याटि प्राप्नोति अकृतेऽपि, अनित्य आट् अन्यथा स्वरस्य कृते 'उदात्तत्वे प्राप्नोत्यन्यथा स्वरस्याकृते "स्वरभिन्नस्य प्राप्नुवन् विधिरनित्यः"। "शब्दान्तरस्य प्राप्नुवन्विधिरनित्यः" इति उदात्तत्वमपि अनित्यम् आटिकृतेऽन्तरङ्ग एकादेशः पूर्ववत् । तस्मात् नार्थः सिद्धत्ववचनेन । एतेन प्रवृत्तेन यणुत्तरमाटः प्रवृत्तिरिति वक्तव्यम् । सा च वार्णपरिभाषाया आप्राप्तावेव सम्भवति । सामान्यतः परिभाषाप्रवृत्तौ तु द्वयोरपि समुम्बायपदसिन्धत्वेन परिभाषाप्रवृत्तिः स्यादिति यणादेशस्य परिभाषायाः पूर्वमप्रवृत्तिः स्यादेवेति । तदेवोक्तम्—*इयञ्चेति*। *आडुक्त इति*। "उदात्तयण" इत्युदात्तेन सह सम्प्रसारणं कृत्वा परत्वादाडुक्त इत्यर्थः । एवं कथं पूर्वं यणादेशे सत्येव सा न भवतीति भावः । एवञ्च धर्मिग्राहकमानाल्लाघवादङ्गसम्बन्धिन्याङ्ग एवैषा प्रवर्तते इत्येव कल्प्यते न तु समानकार्यित्व एवेति समाननिमित्तकत्व एवेति वा अनिष्टस्थले प्रवृत्तिस्त्वनित्यत्वादेव सम्पाद्या इत्याशयेनाह--*इयञ्च अनित्येति* । *पूर्वन्तुकः* । छनिमित्तकतुकः पूर्वम् । यत् तु सतुक्निर्देशेन ज्ञापकेन समानाश्रयत्वे एवैषा प्रवर्तते इति कल्प्यते न त्वस्याऽनित्यत्वमिति तन्न । 'स्योनः' इत्यत्र गुणयणादेशयोः समानाश्रयत्वसत्त्वाद्गुणात् पूर्वमन्तरङ्गस्य यणादेशस्य प्रवृत्त्यभावापत्तेः ।

किञ्च समानाश्रयत्वसत्व एवेति नियमस्वीकारे च्यवन्ते प्लवन्त इत्यत्र गुणस्य शबेकादेशस्य च समानाश्रयत्वविरहादस्याः परिभाषाया अप्रवृत्त्यान्तरङ्गादेशः पूर्वं प्रवर्तेत ततश्च गुणो न स्यात् अङ्गसम्बन्धिन्याङ्ग इति स्वीकारे तु गुणस्याङ्गसम्बन्धित्वाद् भवति प्रवृत्तिरिति दिक् ।

नन्वेवमपि अध्यैयातामित्यस्यासिद्धिर्लावस्थायामडागम इति पक्षस्य भगवता कथनेन तदानीमडागमे इयङो निमित्ताभावादप्राप्त्या वार्णपरिभाषायास्त्वाङ्गवार्णयोर्युगपत्प्राप्त्यभावेनाप्राप्त्या वृद्ध्यापत्तेरिति चेन्न । लावस्थायामडागमप्रवृत्तिस्वीकारपरभाष्यप्रामाण्येन "अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते" इति परिभाषाघटकलुक्पदस्य लुक्प्रयोजकस्यापि संग्राहकत्ववत्प्रकृतेऽप्याङ्गपदमाङ्गप्रवृत्तिप्रयोजकादेशस्यापि बोधकम् । एवञ्च लावस्थायामडागमेऽपि वृद्धिस्तदानीं न प्रवृत्तिः । किन्तु लादेशस्य वृद्धेः प्राक् प्रवृत्तिस्ततोऽङ्गसम्बन्धिन आङ्गस्येयङादेशस्य प्रवृत्तिस्ततो वृद्धेरिति स्वीकारात् ॥ ५५ ॥

*नन्वेमिति* । उक्तस्थलेष्वेवान्तरङ्गपरिभाषाया अप्रवृत्तिस्वीकारे । *अन्तरङ्गत्वात्* । पूर्वोपस्थितनिमित्तकत्वेनान्तरङ्गत्वात् । सम्प्रसारणस्य तु विभक्त्युत्पत्त्यनन्तरं प्राप्तिरित्याशयः । *अत्र* । उक्तपूर्वपक्षे । *केचित्* । दीक्षितप्रभृतयः । आहुरिति परेणान्वयः । *अ-

तत्त्वप्रकाशिका ।

चिन्त्यमिदम् । ज्ञाने इत्यस्यासिध्यापत्तेः। इयादेशस्याङ्गसम्बन्धित्वाभावेनान्तरङ्गत्वादवृद्धौ ततः इयादेशे रूपासिद्धेः ॥ ५५ ॥

न कृतो विशिष्ट ऊहो निश्चयः शास्त्रप्रवृत्तिविषयो यैरित्यर्थः । भाविनिमित्तविनाश इत्यध्याहारः । बहिरङ्गेणान्तरङ्गस्य निमित्तविनाशे पश्चात्सम्भाविते ऽन्तरङ्गं नेति यावत् । अत्र च ज्ञापकं "समर्थानां प्रथमात्" ( ४-१-८२ ) इतिसूत्रे समर्थानामिति । तद्धि सुस्थितादिभ्यः कृतदीर्घेभ्यः प्रत्ययोत्पत्त्यर्थम् ।

अन्यथान्तरङ्गत्वाद्दीर्घे कृत एव प्रत्ययप्राप्त्या तद्व्यर्थता स्पष्टैव । तत्र हि भाविन्यादिवृद्ध्या सवर्णाच्त्वविनाशः स्पष्ट एव । न चात्रैकादेशप्रवृत्तिसमये वृद्ध्यप्राप्त्यैकादेशे कृते आदेशे वृद्धेः प्राप्तावपि तन्निमित्तविनाशाभाव इति वाच्यम् । तद्द्वारैव तन्निमित्तविनाशसत्त्वेनाक्षतेः । न च सौस्थितौ बहिरङ्गतया वृद्धेरसिद्धत्वान्न तन्निमित्तविनाश इति वाच्यम् । समर्थग्रहणेनैतद्विषये तस्या अप्रवृत्तेरपि ज्ञापनात् ।

यत्तु समर्थग्रहणेन अन्तरङ्गपरिभाषाया अनित्यत्वमेव ज्ञाप्यत इति तन्न । असिद्धपरिभाषया समकालप्राप्तबहिरङ्गस्य पूर्वजातबहिरङ्गस्य च अन्तरङ्गे कर्त्तव्येऽसिद्धत्वं बोध्यते न तु जातेऽन्तरङ्गे तस्य तत्त्वं बोध्यते मानाभावात्

भैरवी ।

तव्यूहा इति । ऊहपदार्थं व्याचष्टे—*निश्चय इति* । *विशिष्टः* । अन्तरङ्गशास्त्रस्य पूर्वकालिकप्रवृत्तिनिरूपितविषयिताविशिष्टः । एतदेवाह—*शास्त्रप्रवृत्तिविषय इति । यैः* । पाणिनिप्रोक्तशास्त्राध्येतृभिः । निमित्तं विनाशोन्मुखं दृष्ट्वा इत्यस्य लाभायाह-*भाविनीत्यादि* । *अत्र* । उक्तपरिभाषायाम् । ज्ञापिते चारितार्थ्यमाह—*तत्र हीति* । अस्या ज्ञापित्वेहीत्यर्थः । *सवर्णाच्त्वविनाशः* । सवर्णाच्त्व एको विनाशः । स्वविषये चारितार्थ्यं विघटयति-*न चेति* । *अत्र* । सुस्थितादिशब्दे । *वृध्यप्राप्त्येति* । निमित्ताभावादित्यादिः । *आदेशे* । दीर्घे कृते सतीति शेषः । *तन्निमित्तेति* । दीर्घनिमित्तभूतस्य ह्रस्वसवर्णाचो विनाशाभाव इत्यर्थः। *तद्द्वारा* । आदेशविनाशद्वारा पुनरपि समर्थग्रहणस्य परिभाषाज्ञापकत्वविधानशङ्कयामाह-*नचेति* । पदस्य विभज्यान्वाख्यामिति पक्षे सु उत्थित इति स्थितेऽकृतव्यूहपरिभाषाया यदन्तरङ्गस्य सवर्णदीर्घस्य निमित्तं तदेव निमित्तमित्येतद्दृष्ट्या बहिरङ्गवृद्धेरसिद्धत्वान्निमित्तस्य विनाशोन्मुखत्वबुद्ध्यभावात् स्वविषये प्रवृत्त्यभावेन अचारितार्थ्यात् समर्थग्रहणस्य ज्ञापकत्वासम्भव इति भावः । *एतद्विषये* । अकृतव्यूहपरिभाषाविषये । *तस्याः* । अन्तरङ्गपरिभाषायाः । अपिना अकृतव्यूहपरिभाषायाः समुच्चयस्तथा च यावता विनेतिन्यायेन उभयं ज्ञाप्यत इति सिद्धम् ।

समर्थग्रहणमन्तरङ्गपरिभाषाया अनित्यत्व एव ज्ञापकं न त्वकृतव्यूहपरिभाषायामिति मतं निरस्यति—*यत्त्विति* । *तस्य* । बहिरङ्गस्य । *तत्त्वम्* । असिद्धत्वम् । *मानाभावादिति* । असिद्धपरिभाषायां यज्ज्ञापकं प्रागुक्तद्वयं तेन मानेन तथैव कल्प्यते न तु

तत्त्वप्रकाशिका ।

*विनाशाभाव इत्यर्थः*। सवर्णदीर्घेणैव तस्य कृतत्वादिति भावः। *आदेशविनाशद्वारेति*। तथाचायं परिभाषार्थः निष्पन्नः बहिरङ्गेणान्तरङ्गनिमित्तविशिष्टविनाशे सम्भाविते पूर्वमन्तरङ्गं न भवतीति भावः। वै० स्वप्रतियोगिकत्व स्वस्थानिकादेशप्रतियोगिकत्व एतदन्यतरसम्बन्धेन । सेदुष इत्यादौ निमित्तविनाशे स्वप्रति योगिकत्वं सौस्थितिरित्यादौ स्वस्थानिकादेश प्रतियोगिकत्वमिति विवेकः । *एतद्दृष्ट्या* । अकृतेतिपरिभाषादृष्ट्या । *स्वविष-

फलाभावाच्च। एवं च सूत्थितादावेकादेशस्य परिभाषासाध्यत्वाभावेन तद्-नित्यत्वज्ञापनासम्भवात्। "अन्तरङ्गानपि विधीन्" इत्यादेरप्यस्यामेवान्तर्भावः। एतत्प्रवृत्तौ च निमित्तविनाशसम्भावनापि निमित्तम्। अत एव गोमद्दण्डीत्यादौ "हल्ङ्यादि" लोपो न। अन्यथा हल्ङ्यादिलोपकाले सामासिकलुकोऽप्राप्त्या तदुत्तरं चापहार्याभावादप्राप्त्या लोपस्यैवापत्तेः। अस्ति चात्रापि यदि लोपो न स्यात्तर्हि लुक् स्यादिति सम्भावना। "अल्लोपोऽनः" (६-४-१३४) इतिसूत्रस्थतपरकरणं तु परिभाषानित्यत्वज्ञापनेन चरितार्थम्। तद्धयान इत्यादौ लोपवारणाय। अन्यथा दीर्घाभावे लोपसम्भावनयैतत्परिभाषाबलाद्दीर्घप्राप्तौ तद्वैयर्थ्यं स्पष्टमेवेत्याहुः।

"समर्थानाम्"इति सूत्रे कैयटस्तु समर्थवचनेनेयं परिभाषा ज्ञाप्यते"अकृतव्यूहाः पाणिनीयाः" इति,तेन पपुष इत्यादायन्तरङ्गत्वात्पूर्वं कृतोऽपीडागमो निवर्तत इति वदन् न कृतो व्यूहो विशिष्टस्तर्को निमित्तकारणविनाशेऽपि कार्यस्थितिरूपो यैरित्यर्थमभिप्रैति। "निमित्तापाये नैमित्तिकस्याप्यपायः" इति यावत्। सूत्थितादिज्ञि वृद्धौ दीर्घनिवृत्तौ सावुत्थितिर्माभूदिति सम-

भैरवी।

अन्तरङ्गे कृते पश्चात् प्राप्तं बहिरङ्गं नेति परिभाषार्थो मानाभावात्। *फलाभावादिति*। अनन्यथासिद्धलक्ष्यसिद्धिरूपफलाभावादिति भावः। *एवञ्च*। अन्तरङ्गे कर्तव्ये जातं तत्कालप्राप्तिकं बहिरङ्गमसिद्धमित्येव बहिरङ्गपरिभाषार्थस्थितौ च। *साध्यत्वाभावेन*। यदा दीर्घस्य प्राप्तिस्तदा वृद्धेरप्राप्तेर्निमित्ताभावादिति भावः। अकृतव्यूहपरिभाषास्वीकारे लाघवमपीत्याह-*अन्तरङ्गानपीति*। *अन्तर्भाव इति*। यत् तस्याः फलं गोमत्प्रिय इत्यादि तदनयैव सिध्यति। नुमादिनिमित्तस्य विनाशोन्मुखत्वात् तेषां पूर्वमप्रवृत्तेरिति भावः।

ननु संदुप इत्यादौ साक्षान्निमित्तविनाशस्थलेऽस्याश्चारितार्थ्येन सूत्थितादौ साक्षान्निमित्तविनाशाभावेन अस्या अप्रवृत्तौ स्वविषये चारितार्थ्याभावान समर्थग्रहणस्य ज्ञापकत्वासम्भव इत्याशङ्कायामाह--*एतत्प्रवृत्ताविति*। एवञ्च सूत्थितादौ निमित्तविनाशसम्भावनात्वस्ति यदि पूर्वसवर्ण दीर्घो न स्यात्तदावृद्ध्या तन्निमित्तविनाशः स्यादिति। अत्र सम्भावनापीत्यनेन यत्र साक्षान्निमित्तविनाशस्तत्र सुतरां प्रवृत्तिरिति सूचितम्। *अत एव*। अन्तरङ्गनिमित्तविनाशसम्भावनाया अप्येतन्निमित्तत्वाङ्गीकारादेव। *आपत्तेरिति*। तथा सति प्रत्ययलक्षणेन नुम् स्यादिति भावः।

ननु 'अकृत' इतिपरिभाषाङ्गीकारे "अल्लोपोऽनः" इति सूत्रे तपरकरणं व्यर्थमत आह—*"अल्लोपोऽन" इतीति। आन इति*। अनधातोः क्विप्। न चानुनासिकस्येति दीर्घे कृतेऽन्त्वाभावात् कथं तपरत्वाभावे आकारलोपस्य प्राप्तिरिति वाच्यम्। स्थानिवद्भावेनाम्बुद्धिसम्भवात्। *अन्यथा*। एतदनित्यत्वाभावे। "अकृतव्यूहा" इतिपरिभाषायाः कैयटादिसम्मतार्थान्तरमाह-*समर्थेत्यादिना*। कैयट इत्यस्याभिप्रैतीत्यत्रान्वयः। एतत्पक्षे समर्थपदस्य चारितार्थ्यादाह-*सूत्थितादितीति*। *दीर्घनिवृत्ताविति*। एतादृशी परम्पर-

तत्त्वप्रकाशिका।

ये*। परिभाषया विषयभूते लक्ष्ये। *विनाशसम्भावनेति*। अन्तरङ्गशास्त्रप्रवृत्त्यभावसम्भावनाप्रयोज्या या बहिरङ्गशास्त्रप्रवृत्तिसम्भावना। तत्प्रयोज्यान्तरङ्गनिमित्तविनाशसम्भवनायामन्तरङ्गो न प्रवर्तत इत्यर्थः। तदुपपादयति—*अस्तीति*। *अनित्यत्वज्ञाप-

र्थानामिति । लोकन्यायसिद्धश्चायमर्थः । तथा हि-लोके निमित्तं द्विविधं दृष्टम् । कार्य्यस्थितौ नियामकं तदनियामकं च । आद्यं यथा न्यायनयेऽपेक्षाबुद्धिस्तन्नाशे द्वित्वनाशाभ्युपगमात् । वेदान्तिनये प्रारब्धस्य विक्षेपस्थितिनियामकत्वं च प्रसिद्धमेव । द्वितीयं यथा दण्डादि, तन्नाशेऽपि घटनाशादर्शनात् । शास्त्रे लक्ष्यानुरोधाद्व्यवस्था । भाविनिमित्तविनाशे पूर्वमनुत्पत्तौ तु न कश्चिन्न्यायो नापि संप्रतिपन्नो दृष्टान्तः । समर्थानामित्यस्यापि लोकसिद्धार्थज्ञापनेन चारितार्थ्यसम्भवे लोकासिद्धापूर्वतादृशार्थज्ञापकत्वे मानाभाव इति तदाशय इति बोध्यम् ।

परे तु सेदुष इत्यादौ पदावधिकेऽन्वाख्याने सेद्वस् अस् इति स्थिते इट्सम्प्रसारणयोः प्राप्तयोः प्रतिपदविधित्वात्पूर्वं संप्रसारणे वलादित्वाभा-

भैरवी ।

या तन्निमित्तविनाशत्वेनेतत्प्रवृत्तौ एकादेशो न स्यादत आह—*सावितिः* । न च "समर्थानाम्"इत्यस्योपादानेऽपि पूर्वोक्तरीत्या कैयटसम्मतार्थकपरिभाषायाः प्रवृत्तौ कथं सौत्थितीति रूपस्य सिद्धिरिति वाच्यम् ? समर्थवचनसामर्थ्यादेतद्विषये जातस्यानिवृत्त्यङ्गीकारादिति भावः । कैयटसम्मतपरिभाषार्थस्य ज्ञापनापेक्षत्वेन लाघवमपीत्याह—*लोकन्यायेति । अपेक्षाबुद्धिरिति* । नानैकत्वावगाहिनी बुद्धिरपेक्षाबुद्धिः सा द्वित्वादिसंख्यां प्रति हेतुः सा यावदस्ति तावद्द्वित्वादिस्थितिः अपेक्षाबुद्धिविनाशे द्वित्वादिविनाश इति हि नैयायिकसरणिः । *वेदान्तेति* । तथेत्यादिः । *विक्षेपः* । संसारः ।

ननु लोकेऽस्तु तथात्र शास्त्रे वैपरीत्यं कुतो नेत्यत आह—*शास्त्र इति* । तथा च-लक्ष्यानुरोधात् क्वचित्कारणनिवृत्तौ कार्य्यनिवृत्तिः क्वचित्कार्यानिवृत्तिश्च । क्वचित्कारणनिवृत्तौ कार्यनिवृत्तिश्च सेदुष इत्यादौ प्रसिद्धैव । कारणनिवृत्तावपि कार्य्यानिवृत्तिश्च पट्व्या मृद्व्येत्यादौ द्रष्टव्या । *न कश्चित् न्याय इति* । न च प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति न्यायो लोके दृश्यत इति वाच्यम् । अनेन न्यायेन निमित्तविनाशे भाविनि कार्य्यकारणस्यालाभात् । किन्तु अनेन न्यायेन कार्य्यं कृत्वा पश्चात्तस्य निवर्तनापेक्षया कार्य्याकरणे लाघवमित्येव प्रतिपाद्यते । *सम्प्रतिपन्न इति* । युक्त इत्यर्थः । ननु ज्ञापकवशात् सोऽर्थः कल्प्यते इत्यत आह—*समर्थानामिति* । *तदाशय* । कैयटाशयः । स्वसिद्धान्तमाह—*परे त्वित्यादिना* । *पदावधिकेति* । तथा च लक्ष्यानुरोधात् परिभाषाविषये पदावधिकमन्वाख्यानमेव कल्प्यते न तु क्रमेणेति भावः । पदावधिकेत्यस्य पदस्य विभागपूर्वकं स्थापनं कृत्वेत्यर्थः । *प्रतिपदविधित्वादिति । एकाजाद्यर्थापेक्षत्वेन "वस्वेक" इति सूत्रार्थोपस्थि-

तत्त्वप्रकाशिका ।

तेनेति* । दाशृशानृभ्यां क्विपि तु न चारितार्थ्यम् , अर्थविशेषे सनो विधानेनार्थान्तरे नित्यण्यन्तत्वेन तत्र णिलोपस्य स्थानिवत्वेनाल्लोपाप्राप्तेः । *इत्येव प्रतिपाद्यत इति*। वस्तुतस्तु सामान्येन निमित्तविनाशस्य कार्यनाशनियामकत्वे मानाभावाद्दृष्टान्तासिद्धेः । दीक्षितोक्तमेतदपेक्षया सम्यगितिभावः ।

ननु विधिमुखेन नियमशास्त्राणामप्रवृत्तिरितिकल्पे "वस्वेकाजात्" इत्यस्यैव विधायकत्वेन प्रतिपदविधित्वमुभयत्र तुल्यमत आह—*एकाजाद्यर्थापेक्षत्वेनेति* ।

अयम्भावः—"वस्वेकाच्" इत्यत्र कृतद्विर्वचनैकाचोऽपेक्षितत्वेन द्वित्वादितः पूर्वं नास्य प्रवृत्तिरिति विलम्बोपस्थितिकत्वम् , सम्प्रसारणस्य तु द्वित्वादिनिरपेक्षत्वेन शीघ्रोपस्थितिकत्वम् ।

वादिटः प्राप्तिरेव नेति तत्सिद्धिरिति "समर्थानाम्" इतिसूत्रे कैयटे "असिद्धवत्" सूत्रे च कैयटे स्पष्टमेतत् ।

यद्यपि प्रतिपदविधित्वमनवकाशत्वे सत्येव बाधकत्वे बीजम्, तथापि पूर्वप्रवृत्तौ सावकाशत्वेऽपि नियामकं भवत्येवेति तदाशयः । निरूपितं चैतद्बहुशः शब्देन्दुशेखरे । "समर्थानाम्" इतिसूत्रस्थसमर्थग्रहणं तु विष्णु इत्यादावकृतसन्धेः प्रत्ययदर्शनेन सर्वत्र तथा भ्रमवारणाय न्यायसिद्धार्थानुवाद एव । ध्वनितं चेदं "विप्रतिषेध" सूत्रे भाष्ये । तत्र हि-वैत्तमाणिरि-

भैरवी ।

त्यपेक्षया "वसोः सम्प्रसारणाम्" इत्यस्यार्थस्य शीघ्रोपस्थितिकत्वादित्यर्थः। न च प्रतिपद्विधित्वस्य बलवत्त्वप्रयोजकत्वे इयायेत्यत्र वृद्धेः प्राक् "इणो यण्" इति स्यादिति वाच्यम् । प्रतिपदित्यत्र पदशब्दोच्चारणेन पदसंज्ञाप्रयोजकसुप्प्रकृतिबोधकशब्दविशेषमुच्चार्य्य तदुद्देशेन विहितत्वरूपस्य प्रतिपदविधित्वस्य विवक्षितत्वात् । अस्ति ह्येतादृशं प्रतिपदविधित्वं "वसोः सम्प्रसारण" इत्यस्य वसुपदस्य तदन्तपरतया भाधिकारेण च तादृशस्य तत्र सम्भवात् । पदसंज्ञा च तत्तद्विधिलक्ष्याधिकरणिका ग्राह्या । एवञ्च "इणो यण्" इत्यस्य अतथात्वाददोष इत्याशयः ।

न च पपुषस्तस्थुष इत्यादौ सम्प्रसारणविधिलक्ष्याधिकरणकपदसंज्ञाया भसंज्ञया बाधात् प्रकृतासिद्धिरिति वाच्यम् । पदसंज्ञाप्रयोजकत्वयोग्यताया विवक्षितत्वात् । न च पूर्वं सम्प्रसारणेऽपि अन्तरङ्गपरिभाषया जातसम्प्रसारणस्यासिद्धत्वादिट् स्यादिति वाच्यम् । तस्या अनित्यत्वात् । प्रतिपदविधित्वस्यापवादसमकक्षत्वेनान्तरङ्गादपि प्राबल्यकल्पनाच्च । अत एव "प्रत्ययोत्तरपदयोः" इति सूत्रस्थकैयटग्रन्थे परनित्यान्तरङ्गप्रतिपदविधयोर्विरोधिसन्निपाते तेषां मिथः प्रसङ्गे परबलीयस्त्वमिति पाठो दृश्यते ।

अपवादत्वसमकक्षत्वमेव ध्वनयति—यद्यपीत्यादिना* । सत्येवेति* "शेषाद्विभाषा" इति सूत्रभाष्यसम्वादात् । *तदाशयः* । कैयटाशयः । यदि तु प्रतिपदविधित्वं शीघ्रोपस्थितिकत्वमेव यथाश्रुतमस्तु । इयायेत्यत्र "इणो यण्" इत्यस्य तु न प्राप्तिः, अस्य सूत्रस्य "इको यण्" इत्येतद्बाधकस्य बाधनायारम्भात् । यथा यन्तीत्यत्र "इको यण्" इत्येतद्बाधकस्येयङादेशस्य तेन बाधः । एवञ्च उत्सर्गसमकक्षत्वेनेयायेत्यत्र "इको यण्" इत्येतद्बाधकेयङादेशबाधकस्य "एरनेकाच" इत्यस्य बाधकं यद् "अचो ञ्णिति" इतिसूत्रं तदेव "पूर्वं ह्यपवादा अभिनिविशन्त" इति प्रकल्प्येति वा न्यायेन भवतीत्यनेकाज्विषयकत्वञ्च तस्य "इणो यण्" इत्यस्य, किन्त्वेकाज्विषयकत्वमेवेतिविभाव्यते तदा इयायेत्यत्र नास्य प्राप्तिरिति स्पष्टमेव । ईयतुरित्यत्रेण्धातोरुत्तरखण्डस्यानेकाच इति यण् इयायेति रूपसिद्धिस्तु पूर्वोक्तरीत्या "इको यण्" इत्येतद्बाधकेयङादेशबाधकयणादेशबाधकवृद्धिशास्त्रस्यैव प्रवृत्तिस्ततो "अभ्यासस्यासवर्णे" इतीयङादेश इति रीत्या ।

नन्वेवं समर्थग्रहणानर्थक्यापत्तिरत आह—समर्थानामिति* । अकृतसन्धेः प्रत्ययदर्शनेनेत्यनेन सूत्रकारस्य लक्ष्यैकचक्षुष्कत्वं ध्वनितम् । तथा भ्रमवारणाय* । अकृतसन्धेरपि प्रत्ययः इत्येतद्भ्रमवारणाय । अत एव पदस्य विभज्यान्वाख्याने कृतसन्धेरपि प्रत्ययः स्यादिति कैयटः ।

ननु यदि विभज्यान्वाख्यानं स्वीक्रियते तदा "सौत्थितिः" इत्यत्र अन्तरङ्गपरिभाषाविषयत्वसत्वात् तदनित्यत्वे ज्ञापकमेव समर्थग्रहणमस्तु न तु तस्यानुवाद इत्यत आह *ध्वनितमिति । इदम्* । समर्थग्रहणस्य प्रत्याख्यानम् । अत एवोक्तम्—*सिद्धार्थानुवाद

ति अन्तरङ्गपरिभाषोदाहरणमुक्तम् ।

किञ्च विभज्यान्वाख्याने सु उस्थित अस् इ इति स्थिते "वार्णादाङ्गं बलीय" इति प्राप्तवृद्धिवारणाय समर्थग्रहणमित्यत्रैव सूत्रे कैयटे स्पष्टम् । अत एव असिद्धवत्सूत्रे-'वसोः सम्प्रसारणमजिविधौ सिद्धं वक्तव्यं वपुष इत्यादौ वसोः सम्प्रसारणे कृते आतो लोपो यथा स्यात्' इति भाष्ये उक्तम् । पदस्य विभज्यान्वाख्याने पूर्वोक्तकैयटरीत्या पूर्वं संप्रसारणे इटोऽप्राप्त्या उसन्निमित्तक एव अतो लोप इति तदाशयः । अन्यथा अन्तरङ्गत्वादिटि तन्निमित्तक एव अतो लोप इति तदसङ्गतिः । अत एव चौ प्रत्यङ्गस्य प्रतिषेध इति वचनं वार्त्तिककृतारब्धं भाष्यकृता च न प्रत्याख्यातम् । प्रत्यङ्गमन्तरङ्गम् । अस्यां परिभाषायां सत्यां तु तद्वैयर्थ्यं स्पष्टमेव । अत एव "च्छ्वोः" ( ६-४-१९ ) इति सूत्रेऽवश्यमत्र तुगभावार्थो यत्नः कार्य्योऽन्तर-

भैरवी

इति* । 'बहिरङ्गान्तरङ्गयोरन्तरङ्गं बलीय' इत्येतत्सिद्धानुवाद इत्यर्थः । तथाच-समर्थग्रहणस्य प्रत्याख्यान एव विप्रतिषेधसूत्रस्थभाष्यतात्पर्य्यम् । तदेतदाह-*तत्र हीति* ।*वेक्षमाणिरिति* अत्र हि वि ईक्षमाण इति स्थितेऽन्तरङ्गसवर्णदीर्घत्वन्तावद्भवति । वार्णपरिभाषात्वनित्यत्वान्न प्रवर्तत इति तद्भाष्याशयः । समर्थग्रहणप्रत्याख्याने तद्भाष्यतात्पर्य्यस्य यदि कृतसन्धेरेव प्रत्ययोत्पत्तिस्तदा दीर्घप्रवृत्तिसमये वृद्ध्याप्राप्तेरसङ्गतिः स्पष्टैव ।

वार्णपरिभाषाप्रवृत्तिमभ्युपेत्याप्याह-*किञ्चेति । अत्रैव* । "समर्थानाम्" इति सूत्र एव । एवञ्च वार्णपरिभाषाया अनित्यत्वादप्रवृत्तौ समर्थग्रहणस्य प्रत्याख्यानं यदि तु तत्प्रवृत्तिस्तदा वृद्धेर्वारणाय समर्थग्रहणमस्तु न तु अकृतव्यूहपरिभाषाज्ञापनायेति भावः । *अत एव* । अकृतव्यूहपरिभाषाया असत्वादेव । *पूर्वोक्तेति* । प्रतिपदविधेर्बलवत्वादिति कैयटरीत्येत्यर्थः । *उस्निमित्तक एवेति* । एवञ्च समानाश्रयत्वमस्तीत्यसिद्धवत्सूत्रस्य विषयतास्तीति सूचितम् । *अन्यथा* । पूर्वोक्तकैयटरीत्यनङ्गीकारे । *तन्निमित्तक इति* । इड्निमित्तक इत्यर्थः । एवञ्च उस्निमित्तकत्वमाकारलोपस्य नास्तीति "वसोः सम्प्रसारणमजूविधौ" इति वार्तिकस्य तद्भाष्यस्य चासङ्गतिः स्यादिति भावः ।

अत्र केचित्—पपुषः तस्थुष इत्यादाविड्निमित्तकोपधाकारलोपः स्यात्तदा जातोकारलोपो वसोः सम्प्रसारणे वलो निवृत्तेरिटोनिवृत्तौ निमित्तविनाशान्निवर्त्तेत । पुनराकारलोपस्तु लक्ष्ये लक्षणमितिन्यायेन अनुपपन्न इतोष्टरूपासिद्ध्या इड्निमित्तकाकारलोपाङ्गीकारो नोचित इति तन्न । अस्य ग्रन्थस्य इड्निमित्तकलोपप्रवृत्त्या रूपसिद्धिर्भविष्यतीत्येतत्तात्पर्य्यकत्वाभावात् ।

किन्तु इड्निमित्तको लोपो यदि स्यात्तदा भवदुक्तरीत्या रूपासिद्धिः स्यादेवेति यदिष्टरूपसाधकस्य वसोः सम्प्रसारणनिमित्तकस्य लोपस्य सिध्यर्थं "वसोःसम्प्रसारणमजूविधौ सिद्धं वक्तव्यम्" इति वार्तिकं तदसङ्गतमेव स्यादित्यत्र तात्पर्य्यम् । *अत एव* । अकृतव्यूहपरिभाषाया असत्वादेव । *चौप्रत्यङ्गस्येति* । चौलुप्ताकारनकारेऽञ्चतौ प्रत्यङ्गस्य । *अन्तरङ्गस्य* । यथा प्रतीच प्रतीचेत्यत्र प्राप्तस्यापि अन्तरङ्गयणादेशस्य भान्तिसम्प्रसारणविषये प्रतिषेधमाहुरिति वचनेन बोधितः । *न प्रत्याख्यातमिति* । एनामाश्रित्य न प्रत्याख्यातमित्यर्थः । नैष दोषः एतदेव ज्ञापयत्याचार्य्यो न चौप्रत्यङ्गं भवतीति । यदयं चौदीर्घत्वं शास्तीति युक्त्या यत्प्रत्याख्यानं तत्त्वन्यत् । *तद्वैयर्थ्यमिति* । अनया परिभाषया तत्प्राप्तेरेव अभावादिति भावः । अत एव उक्तोऽर्थः । *यत्नः* । सतुक्कनिर्देशरूपः । अकृतव्यूहपरि-

ङ्गत्वाद्धि तुक् प्राप्नोतीति भाष्ये उक्तम्। एतत्सत्त्वे तु तुकोऽप्राप्त्या यत्ना-वश्यकत्वकथनमसङ्गतमिति स्पष्टमेव। न चैतदनित्यत्वज्ञापनार्थमेव तदिति तदाशयः, अवश्यमत्रेत्यक्षरस्वारस्य भङ्गापत्तेः।

किञ्च अनयैव "प्रत्ययोत्तरपदयोश्च" (७-२-९८) "अदो जग्धिर्ल्यप्ति किति" (२-४-३६) इत्यनयश्चारितार्थ्येन तज्ज्ञापकत्वशाल्लुग्ल्यपोरन्तर-ङ्गबाधकता भाष्योक्ता भज्येत।

किञ्चैषा भाष्ये न दृश्यते। तदुक्तमसिद्धवत्सूत्रे कैयटेन। "निमित्ता-पाये नैमित्तिकस्याप्यपाय" इति परिभाषाया भाष्यकृतानाश्रयणादिति। पदसंस्कारपक्षे हरिरित्यादौ विसर्गे कृते ततो गच्छतीत्यादिसम्बन्धे हरिः गच्छतीत्याद्येव साधु। तद्विषये पदसंस्कारपक्षानाश्रयणं वेति दिक्॥ ५६॥

भैरवी।

भाषासत्त्वे दोषान्तरमप्यस्तीत्याह—*किञ्चेति। अनयैव*। अकृतेत्यनयैव। यद्यपि तयो-रत्रैव अन्तर्भावसम्भवः सम्भवति। तथापि विशिष्यज्ञापकप्रदर्शनपूर्वकं तयोर्व्युत्पादनवैयर्थ्यं दुर्वारमित्यत्र तात्पर्य्यम्।

ननु अकृतव्यूहपरिभाषाया अभावे तस्थावित्यादौ पूर्वप्रवृत्तेः पदुत्वस्यानिवृत्तौ रूपासिद्धिः। न चैतदर्थमकृतेत्यस्याः स्वीकारे प्राप्तजीविक इत्यादिबहुव्रीहौ "गोस्त्रियोः" इति ह्रस्वत्वे इत्यस्य श्रवणानापत्तिरिति वाच्यम्। "अचः परस्मिन्" इति सूत्रभाष्ये ऐनेय इत्यत्र एनीश-ब्दाद्ढकि "यस्य" इत्यनेनेकारलोपे सन्नियोगशिष्टन्यायेन नकारस्यापि निवृत्तिमाशङ्क्य वि-धिशब्दस्य भावसाधनत्वमाश्रित्य पूर्वस्य विधौ भाव इत्यर्थाश्रयणात् स्थानिवद्भावाश्रयणेन सन्नियोगसत्वान्नकारान्निवृत्तिसूचकभाष्येणोभयोरनित्यत्वस्यैव ध्वननात्। एवञ्च प्राप्तजीविक इत्यादाविकारस्य श्रवणं सुलभमेवेति चेन्न। "स्तौति स्तोभति" इतिनिर्देशेन सपादसप्ताध्या-यीस्थकार्य्यप्रवृत्तियोग्ये विषये त्रैपादिकस्य पूर्वमप्रवृत्तेः सूचनेन अदोषात्।

दोषान्तरमाह-*किञ्चेति*। न दृश्यते*। फलतोऽपि न दृश्यते। तदाह-*तदुक्तमिति* ननु परिभाषाया अस्वीकारे पपुष इत्यादिसिद्धिः पदसंस्कारपक्षमाश्रित्योक्तरीत्या साध्यते चेदनिष्टस्याप्यापत्तिरत आह—*पदसंस्कारेति* । तथा प्रयोगादर्शनात् पक्षान्तरमाह— *तद्विषय इति*। अत्र वाक्यसंस्कारपक्षस्यैव आश्रयणमिति भावः।

वस्तुतः पपुषः इत्यादौ जातस्यापीटः सम्प्रसारणोत्तरं यणि सम्प्रसारणस्य बहिरङ्गत्वेना-सिद्धत्वाद्वलि लोपे इष्टरूपस्य सिद्धिरित्यपि बोध्यम्। *दिगिति* । दिगर्थस्तु "च्छ्वोः"

तत्त्वप्रकाशिका।

केचित्तु वलादेरित्यनुवर्त्य तत्सामर्थ्यादिटोऽप्रवृत्तिरित्याहुः।

अन्येतु नियमशास्त्राणां निषेधमुखेन प्रवृत्तिमभ्युपेत्येदम्। विधिमुखेन प्रवृत्तौ तु सत्यपि इटि ततः सम्प्रसारणे यणि सम्प्रसारणस्यासिद्धत्वाद्वलीति यलोपे रूपसिद्धिः। किञ्च सम्प्र-सारणस्य कृताकृतविधित्वेन नित्यत्वात्पूर्वं प्रवृत्तौ ततो वलादित्वाभावादिटनेत्याहुः।

*तथाप्रयोगादर्शनादिति*। "विसर्जनीयस्य स" इतिसूत्रस्थभाष्यविरोधाच्चेत्यपि बो-ध्यम्। तत्राह भाष्ये-"खरीति" नानुवर्तते फलाभावात् नचोभयत्र सत्वप्रसङ्गः विसर्गविधेः वैयर्थ्यापत्तेः। नचावसाने एव सत्वापत्तिः "शर्परे विसर्जनीयः" इति ज्ञापकेन खर्येव तस्य प्रवृत्तेरित्युक्तम्। त्वन्मते हरिः गच्छतीत्यत्र जिह्वामूलीयवारणाय कुप्वोरित्यत्र खरीत्यनुवृत्तो-रावश्यकत्वेन तदसङ्गतं स्यात। *पक्षस्यैवाश्रयणमिति*। अहिरहिर्बुध्न्यस्त्वेत्यादौ "पूर्वत्रा-सिद्धीयमद्वित्व" इत्यस्यानित्यत्वात्पूर्वं द्वित्वं पश्चाद्रुत्वेनेष्टसिद्धिः। स्थाता स्नातेत्यादौ तु

# अन्तरङ्गादप्यपवादो बलीयान् ॥ ५७ ॥

तत्रापवादपदार्थमाह—

## येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति ॥ ५८ ॥

प्राप्त इति भावे क्तः । येन नाप्राप्त इत्यस्य यत्कर्तृकावश्यप्राप्ताविलयर्थो नञ्द्वयस्य प्रकृतार्थदार्ढ्यबोधकत्वात् । एवं च विशेषशास्त्रोद्देश्यविशेषधर्मावच्छिन्नवृत्तिसामान्यधर्मावच्छिन्नोद्देश्यकशास्त्रस्य विशेषशास्त्रेण बाधः ।

भैरवी ।

इति सूत्रे न हीदं वचनं नापि न्याय इति हरदत्तोक्तस्य संग्रहः । एवं स्थिते एनां परिभाषां स्वीकृत्य अस्या अनिष्टविषये प्रवृत्त्यर्थेन नित्यत्वं स्वीकुर्वन्तो गौरवपराहता इति ॥ ५६ ॥

*अन्तरङ्गादपीति* । अत्र अपिना परादिसमुच्चयः । तत्र* । पूर्वोक्तसंग्राहकवाक्ये । घटकत्वं सप्तम्यर्थः । परिभाषाघटकप्राप्तपदे कर्माद्यर्थस्य अनुपयोगादाह—*प्राप्त इतीति । येनेति कर्तरि तृतीया । सतीत्यस्य अध्याहारः । प्राप्तिरित्येव वा क्वचित्पाठः । अवश्येत्यस्य लाभायाह—*नञ्द्वयस्येति* । अत एव येन प्राप्त इत्येव नोक्तम् । येनेत्यत्र यच्छब्दार्थश्चोत्सर्ग एव । तत्कर्तृकप्राप्तेरावश्यकत्वञ्च—अपवादविषये उत्सर्गप्राप्तेरपि सम्बन्धित्वम्, लोकेप्येव दृश्यते, सर्वेभ्यो ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेत्यत्रापवादतक्रदानविषयेऽपि दधिदानस्य प्रसक्तेः । *एवञ्च* । तादृशस्य शब्दार्थस्य व्यवस्थितौ च । विशेषेत्यादिफलितार्थकनम्, विशेषशास्त्रोद्देश्यभूतं यद्विशेषधर्मावच्छिन्नं तद्वृत्तिर्यः सामान्यधर्मस्तदवच्छिन्नोद्देश्य-

तत्त्वप्रकाशिका ।

"स्थादिष्वभ्यासेन" इत्यादिनिर्देशेन त्रैपादिककार्यप्रतिबन्धकसपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यतायाम् त्रैपादिकस्याप्रवृत्त्या न टवर्गादिश्रवणम् ।

वस्तुतस्तु "अकृत" इति परिभाषाश्रयणमेव लघु, अनेकवचनकल्पनापेक्षयाऽनुगतैकवचनकल्पनाया लाघवात् । अत एव वैभाजित्रम् इति सिध्यति । अन्यथाऽन्तरङ्गत्वाद्यादेशे पश्चाद्विभाजयितुरिति णिलोपेऽपि अन्त्यस्य यकारस्य लोपे तदसिद्धिः स्पष्टैव । नच विभाजयितुर्यलोपे इति वक्तव्ये णिलोपकथनं सर्वलोपार्थमिति वाच्यम् । एवमपि घटसेदुषोरित्यसिद्ध्यापत्तेः । पदावधिकेऽन्वाख्याने प्रथमान्ताद् द्वन्द्व इति सिद्धान्तेन घटसु सदवसु ओसिति स्थितेऽन्तरङ्गत्वात्समासात्प्रागेव एत्वाभ्यासलोपयोरिटि च तस्य श्रवणं दुर्वारमेव । अत एव "वसुसम्प्रसारणमज्विधौ सिद्धं वक्तव्यम्" इति वार्तिकं सङ्गच्छते । एतत्परिभाषाया अभावे अन्तरङ्गत्वादिटि तन्निमित्तक एव पपुष इत्यादावालोपसिद्धेस्तद्वैयर्थ्यं स्पष्टमेव । न च "अकृत" इतिपरिभाषास्वीकारे "च्छ्वोः" इति सूत्रे सतुक्कनिर्देशस्यानित्यत्वज्ञापकत्वेन चारितार्थ्यं वाच्यं तच्चावश्यमत्र तुगभावार्थः यत्नः कर्त्तव्य इति भाष्याद्विरुद्धमिति वाच्यम् ? भवन्मतेऽपि वार्णपरिभाषास्वीकारेऽवश्यमित्यक्षरस्वारस्य भङ्गस्य तुल्यत्वात् । अकृतसन्धेरित्युक्त्या विपुण इत्यत्राकृतसन्धेः प्रत्ययोत्पत्तावपि अन्यत्र तथोत्पत्तौ प्रमाणाभावेन समर्थग्रहणस्य वैयर्थ्यापत्तेश्च ॥ ५६ ॥

*बलीयानिति* । अपवादत्वादिति शेषः । *नाप्राप्त इति* । नशब्दस्याप्राप्त इत्यनेन "सुप्सुपा" इति समासः । *अवश्यप्राप्ताविति* । मान्तसमानार्थकावश्यशब्देनात्र समासः । अत एव "अवश्यकाधमर्ण्ययोः" इति निर्देशः सङ्गच्छते । अन्यथा मान्तस्य योपधत्वाभावाद्वुञोऽप्राप्त्या निर्देशासङ्गतिः स्यात् ।

एतेन "लुम्पेदवश्यम" इत्यस्याप्राप्त्या ऽवश्यप्राप्ताविति चिन्त्यमित्यपास्तम् । *विशेषशास्त्रेण बाध इत्यर्थः इति* । ननु सामान्यधर्मे विशेषशास्त्रोद्देश्यविशेषधर्मावच्छिन्नविशेषणं

भैरवी

कस्य इत्यर्थः। अत्र सामान्यपदस्य व्यापकत्वार्थकतया विशेषशास्त्रोद्देश्यतावच्छेदकव्यापकधर्मावच्छिन्नोद्देश्यकस्येत्येव सिद्धेऽधिकोपादानं स्पष्टार्थम्। अत्र विशेषसामान्येत्युपादानेन तयोरेव परस्परापेक्षत्वेन बाध्यबाधकभावविचारो न त्वेतादृशयोरन्यापेक्षयेत्यर्थादेवोक्तम्। एतदुदाहरणं यथा—"होढ" इति शास्त्रस्य "दादेर्धातोर्घः" इति। अत्र विशेषशास्त्रोद्देश्यतावच्छेदकं झल्परत्वपदान्तत्वान्यतरविशिष्टदादिधात्ववयवत्वविशिष्टतत्वं तदवच्छिन्नवृत्तिर्यः सामान्यधर्मस्तादृशहत्वं तदवच्छिन्नोद्देश्यकस्य "होढ" इत्यस्य "दादेर्धातोः"इत्यनेन बाध-

तत्त्वप्रकाशिका।

विफलम्, सामान्यधर्मो विशेषशास्त्रोदेश्यविशेषधर्मावच्छिन्नवृत्तित्वमन्तरा व्याप्यव्यापकभावरूपसामान्यविशेषभावस्यैवानुपपत्तेरितिचेन्मैवम्। उद्देश्यतावच्छेदकतावच्छेदकसम्बन्ध एव व्याप्यतावच्छेदको व्यापकतावच्छेदकश्च इति भ्रमो मा भूदित्येतदर्थं तद्विशेषणसार्थक्यात्।

अन्यथा प्रथमैकाच्त्वद्वितीयैकाच्त्वयोः उद्देश्यतावच्छेदकतावच्छेदकसम्बन्धेन समानाधिकरण्यमेव नास्तीतिव्याप्यव्यापकभावकथा दूरे, इति द्वितीयद्विर्वचनेन प्रथमद्विर्वचनबाधो न स्यात्। तथा च–उद्देश्यतावच्छेदकतानवच्छेदकेन स्वावच्छिन्नाव्यवहितोत्तरत्वसम्बन्धेन प्रथमैकाचत्वं द्वितीयैकाचि वर्त्तत इति तेन सम्बन्धेन प्रथमैकाच्त्वे व्यापकत्वं, स्वरूपसम्बन्धेन द्वितीयैकाच्त्वे व्याप्यत्वं च सङ्गच्छते। स्यादेतत्, उद्देश्यतावच्छेदकधर्मयोर्व्याप्यव्यापकभावो बाधप्रयोजको वा उद्देश्यदलप्रविष्टधर्मयोर्वा. नाद्यः, "नेमौ रहौ कार्यिणौ किं तर्हि निमित्तं द्विर्वचनस्य" इति भाष्यविरोधात्। यत्त्वस्योद्देश्यतावच्छेदकत्वेऽपि रत्वस्योद्देश्यतावच्छेदकत्वेनोद्देश्यतावच्छेदकत्वविरहात्, नाप्यन्त्यः, "अनुशतिकादिषु पुष्करसच्छब्दपाठसामर्थ्यनादिवृद्धिरन्त्योपधावृद्धी बाधत" इति भाष्यविरोधात् उद्देश्यदलप्रविष्टयोः तद्धितत्वञ्णित्प्रत्ययत्वयोः व्याप्यव्यापकभावापन्नत्वेन न्यायेनैव बाधोपपत्तौ ज्ञापकाश्रयणस्यासङ्गत्यापत्तेरितिचेन्मैवम्, विशेष्यविशेषणभावापन्नश्चङ्गलोपनिबद्धयावत्पदार्थसङ्कुचितोद्देश्यदलप्रविष्टयोर्व्याप्यव्यापकभावो बाधप्रयोजक इतिस्वीकारेणादोषात्। अजव्यवहितोत्तरत्वविशिष्टयत्त्वे व्यापकत्वस्याजव्यवहितोत्तरत्वविशिष्टं यरव्यवहितपूर्वत्वविशिष्टं च यद्रत्वं तत्र व्याप्यत्वस्य च सत्त्वेन "नेमौ रहौ" इतिभाष्यविरोधाभावात्, अदुपधाङ्गाव्यवहितोत्तरत्वविशिष्टञ्णित्प्रत्ययत्वस्य अजन्ताङ्गाव्यवहितोत्तरत्वविशिष्टञ्णित्प्रत्ययत्वस्य सुश्रुतापत्यं सौश्रुत इत्यादावभावेन यत्किञ्चिदङ्गाव्यवहितोत्तरत्वविशिष्टञ्णित्तद्धितत्वस्य च तत्र सत्त्वेन तयोर्व्याप्यव्यापकभावाभावेन अनुशतिकादिषु पुष्करसच्छब्दपाठसामर्थ्यादित्यादिभाष्यविरोधाभावाच्च।

नच संकुचितयोः प्रथमैकाच्त्वद्वितीयैकाच्त्वयोः व्याप्यव्यापकभावाभावेन द्वितीयद्विर्वचनेन प्रथमद्विर्वचनस्य बाधो न स्यादितिवाच्यम् द्वितीयैकाजव्यवहितपूर्वत्वविशिष्टादित्वविशिष्टाच्त्वव्याप्यतायाः प्रथमाजघटकाच्त्वे व्यापकतायाश्च सत्वेन दोषाभावात्। अथवा शाब्दबोधीयविषयतयोरेव व्याप्यव्यापकभावो बाधप्रयोजक इति न कोऽपि दोषः। व्याप्यतावच्छेदके व्यापकतावच्छेदकश्च विषयतात्वमेव, व्यापकतावच्छेदके व्याप्यतावच्छेदकश्च सम्बन्धः स्वरूपमेवेतिपूर्वकल्पापेक्षया महालाघवम्। विषयता च विशेषणेन विशेष्येण इतरबाधादिना च स्वत एव संकुचिता भवतीति न पूर्वोक्तमपि विरोधः। तथा च बाधकत्वेन जिघृक्षितशास्त्रीयोद्देश्यदलीयविषयतानिरूपितव्यापकतावद्विषयताप्रयोजकपदघटितत्वं बाध्यत्वे बीजम्। प्रथमद्विर्वचनद्वितीयद्विर्वचनस्थले च अजादेरित्येतद्घटकाच्पदप्रयोज्यविषयताव्यापकत्वम् एकाच्इत्येतद्घटकाच्पदप्रयोज्यविषयतायामस्तीतिलक्षणसमन्वयः। स्यादेतत् "अकः सवर्णे

भैरवी।

दीर्घ" इत्येतन्निरूपितं बाध्यत्वम् "इको यणचि" "आद्गुण" इत्येतयोर्न स्यात् अक्पदप्रयोज्यविषयताव्यापकत्वस्य "आद्गुण" इत्येतद्घटकात्पदप्रयोज्यविषयतायाम् "इको यणचि" इत्येतद्घटकेक्पदप्रयोज्यविषयतायाश्चा(१)भावात्। न चेक्पदप्रयोज्यविषयतायामात्पदप्रयोज्यविषयतायां चान्यतरत्वेन अक्पदप्रयोज्यविषयताव्यापकत्वस्य सत्वान्न दोष इति वाच्यम् "आमिसर्वनाम्नः सुट्" इत्येतद्बाध्यत्वस्य "ह्रस्वनद्यापो नुट्" "बहुवचनेझल्येत्" इत्यनयो-

तत्त्वप्रकाशिका।

रप्यापत्तेः "ह्रस्वनद्यापोनुट्" इत्येतद्घटकह्रस्वपदप्रयोज्यविषयतायां "बहुवचने झल्येत्" इत्येतद्घटकात्पदप्रयोज्यविषयतायां च अन्यतरत्वेन "आमि सर्वनाम्न" इत्येतद्घटकात्पदप्रयोज्यविषयताव्यापकत्वस्य सत्वात् इति चेन्मैवम् बाधकत्वेन जिघृक्षितशास्त्रोयोद्देश्यदलीयविषयताविशिष्टान्यतमत्ववद्विषयताप्रयोजकपदघटितत्वं बाध्यत्वे बीजमितिस्वीकारेणादोषात्। वैशिष्ट्यञ्च स्वनिष्ठव्याप्यतानिरूपितव्यापकतावच्छेदकत्व स्वनिष्ठव्याप्यतानिरूपितव्यापकतावच्छेदकविशिष्टाभावत्व एतदुभयसम्बन्धेन। व्यापकतावच्छेकवैशिष्ट्यञ्च स्वाभाववद्वृत्तित्वस्वाधिकरणवृत्त्यत्यन्ताभावाप्रतियोगित्व एतदुभयसम्बन्धेन "ह्रस्वनद्याप" इति ह्रस्वपदप्रयोज्य "बहुवचनेझल्येत्"इत्येतद्घटकात्पदप्रयोज्यविषयताद्वयवृत्त्यन्यतमत्वे "आमि सर्वनाम्नः सुट्"इत्येतद्घटकात्पदप्रयोज्यविषयताव्यापकतावच्छेदकत्वस्य सत्वेऽपि आत्पदप्रयोज्यविषयताव्यापकतावच्छेदकं यत्ह्रस्वपदप्रयोज्यविषयतामात्रवृत्त्यन्यतमत्वं निरुक्तोभयसम्बन्धेन तद्वैशिष्ट्यस्यैव सत्वान्न दोषः, ह्रस्वपदप्रयोज्यविषयतामात्रवृत्त्यन्यतमत्वाभाववति विषयतयोः ह्रस्वपदप्रयोज्ययोः यदन्यतमत्वं तत्रास्यासत्वात् ह्रस्वपदप्रयोज्यविषयतामात्रवृत्त्यन्यतमत्वाधिकरणवृत्त्यत्यन्ताभावाप्रतियोगिकत्वाच्च निरुक्तविषयताद्वयवृत्यन्यतमत्वस्य। अत एव येन नाप्राप्तिन्यायेन "विसर्जनीयस्य सः" इत्यस्यापवादोऽयम् नतु "शर्परे विसर्जनीयः" इत्यस्येतिकौमुदीग्रन्थः सङ्गच्छते। "कुप्वोः ᳲकᳲपौच" इतिशास्त्रघटककुपुपदप्रयोज्यविषयताव्यापकतावच्छेदक "विसर्जनीयस्य स" इत्येतद्घटकखर्पदप्रयोज्यविषयतामात्रवृत्त्यन्यतमत्वस्य निरुक्तोभयसम्बन्धेन "शर्परेविसर्जनीयः" इत्येतद्घटकखर्पदप्रयोज्य "विसर्जनीयस्य" इत्येतद्घटकखर्पदप्रयोज्यविषयताद्वयवृत्त्यन्यमत्वे वैशिष्ट्यस्यैव सत्वेन तदभावस्याभावात्। नच "उरृत्"इररारामपवाद इति न सङ्गच्छते। "ऋतइद्धातोः" इत्येतद्घटकऋत्पदप्रयोज्य"मृजेर्वृद्धि"रित्येतद्घटकपदप्रयोज्य "पुगन्तलघूपधस्यच" इत्यत्रत्यइक्पदप्रयोज्यविषयमात्रवृत्यन्यतमत्वे "ऋत इद्धातो"रित्यत्रत्यऋत्पदप्रयोज्यपुगन्तलघूपधस्येत्यत्रत्य—इक्पदप्रयोज्यविषयताद्वयवृत्त्यन्यतमत्वस्य निरुक्तोभयसम्बन्धेन वैशिष्ट्यस्यैव सत्वादिति वाच्यम्, व्यापकतावच्छेदकवैशिष्ट्ये स्वाश्रयव्यधिकरणविषयतावृत्तित्वस्यापि सम्बन्धस्य दानेनादोषात। निरुक्तविषयताद्वयवृत्यन्यतमत्वाश्रयपुगन्तेत्यत्र इक्पदप्रयोज्यविषयतासमानाधिकरणविषयतावत्वस्यैव निरुक्तविषयतात्रितयवृत्यन्यतमत्वे सत्वेन स्वाश्रयव्यधिकरणविषयतावृत्तित्वस्याभावात्। नचैवं येन नाप्राप्तिन्यायेत्यादिकौमुदीविरोधः, "विसर्जनीयस्य" इत्येतद्घटकखर्पदप्रयोज्यविषयतामात्रत्वाश्रयविषयताव्यधिकरणविषयतावृत्तित्वस्य "शर्पर" इत्येतद्घटकखर्पदप्रयोज्य "विसर्जनीयस्य स" इत्येतद्घटकखर्पदप्रयोज्यविषयताद्वयवृ-

(१) स्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वंव्यापकत्वं सामानाधिकरण्यञ्चात्र विषयतासम्बन्धेन। एवञ्चाकः विषयतयाऽधिकरणं यद्दैत्यारिरिति, तत्र "इकोयणचि"इतीक्पदीयविषयताया अभावात्प्रतियोगित्वमिक्पदे इत्यव्यापकत्वम् "इको यणचि"इत्यस्य। एवं "आद्गुण" इत्यस्य श्रीश इत्यादौ विषयता नास्तीति तत्वम्।

तदप्राप्तियोग्येऽचारितार्थ्यं ह्येतस्य बाधकत्वे बीजम् ।

भैरवी ।

इति । नच "उर्ऋत इति ऋभाव इररारामपवाद इति सर्वसम्मतं तत्र विशेषशास्त्रोद्देश्यवृत्तिसामान्यधर्म्मावच्छिन्नोद्देश्यकत्वं न कस्यापीरादिविधायकस्येतिसूत्रत्रयापवादत्वव्यवहारानुपत्तिरिति वाच्यम् । तत्रापि ङिच्छिन्नधातुविहितप्रत्ययपरकाङ्गावयत्वविशिष्टोपधाभिन्नऋत्त्वस्य तादृशधर्मस्य सम्भवात् । एवमेव अन्यत्रापि बाध्यसामान्यचिन्तायामूहनीयम् । अपवादशास्त्रस्य उत्सर्गशास्त्रबाधकतायां बीजमाह—*तदप्राप्तीति* । सामान्यशास्त्राप्राप्तियोग्ये विषये इत्यर्थः । एतेन उत्सर्गस्य प्रवृत्त्युत्तरमपवादत्वेनाभिमतस्य प्रवृत्तिसम्भव

तत्त्वप्रकाशिका ।

त्यन्यमत्वे अभावादिति वाच्यम्, इष्टत्वात् ।

नच "शर्परे विसर्जनीयः" इत्येतद्विषयेऽपि ऽऽकऽऽपौ स्यातामिति वाच्यम्? "कुप्वोऽऽकऽऽपौ च" इत्यस्यासिद्धत्वेन "शर्परे विसर्जनीय" इत्यस्यैव प्रवृत्तेः। "विसर्जनीयस्य स" इत्येतद्दृष्ट्या असिद्धत्वबाधमन्तरा "कुप्वोः ऽऽकऽऽपौच" इत्यस्य चारितार्थ्यसम्भवेन तद्दृष्ट्याऽसिद्धत्वबाधेनैवोपपत्तौ "शर्परे विसर्जनीय" इत्येतद्दृष्ट्या असिद्धत्वबाधे मानाभावादिति दिक् । *तदप्राप्तियोग्येऽचारितार्थ्यमिति* । बाधकत्वे पञ्चबीजानि, तथाहि—तदप्राप्तियोग्ये अचारितार्थ्यं, तदप्राप्तियोग्येऽचारितार्थ्यविशिष्टं कृते चारितार्थ्यम् । तदप्राप्तियोग्येऽचारितार्थ्यविशिष्टं कृते चारितार्थ्याभावः, तदप्राप्तियोग्येऽचारितार्थ्यविशिष्टं कृते चारितार्थ्याभावविशिष्टोत्सर्गशास्त्रप्रवृत्तिसम्भावनाप्रयोज्यापवादशास्त्रवैयर्थ्यम् । उत्सर्गशास्त्रप्रवृत्त्यभावसम्भावनाप्रयोज्यापवादशास्त्रप्रवृत्तिसम्भावना चेति । नच द्वितीयबीजमनुपपन्नम्, यदि कृते चारितार्थ्यं र्तर्हि न तदप्राप्तियोग्ये अचारितार्थ्यं, यदि यदप्राप्तियोग्ये अचारितार्थ्यं तर्हि न कृते चारितार्थ्यमिति विप्रतिपिद्धत्वादिति वाच्यम् स्वविधेयाऽघटितं यत्स्वाप्राप्तियोग्यं तत्राचारितार्थ्यविशिष्टं कृते चारितार्थ्यबीजमिति स्वीकारणाद्दोपात् । तत्र प्रथमबीजं यत्र तत्र स्वप्रवृत्तियोग्यातिरिक्तत्वेन सङ्कोचः । यथा—हे रमे इत्यादौ रमास् इति स्थिते "हल्ङ्याब्" इत्यप्रवृत्तियोग्ये चारितार्थ्याभावस्य "सम्बुद्धौ च" इत्यस्य सत्वेन "सम्बुद्धौ च" इत्येतत्प्रवृत्तियोग्यं यत्सम्बुध्यव्यवहितपूर्वत्वविशिष्टं आबन्तमङ्गं तदतिरिक्तत्वेन संकोचः ।

यत्र तु द्वितीयं बीजं तत्र स्वप्रतियोग्यतिरिक्तत्वेन स्वविधेयघटितातिरिक्तत्वेन च संकोचः तदप्राप्तियोग्ये अचारितार्थ्यस्य कृते चारितार्थ्यस्य चेति बीजद्वयस्य सत्वात् । यथा सुट्नुट्स्थले, सुट्प्रवृत्तियोग्यं यत् अदन्तसर्वनामाव्यवहितोत्तरत्वविशिष्ट आम् तदतिरिक्तत्वेन सुट्घटितातिरिक्तत्वेन च नुड्विधायके सङ्कोच इति सुटः पूर्वं न नुट् ।

यत्र तृतीयं बीजं तत्र स्वप्रवृत्तियोग्यो यः स्वीयोद्देश्यतावच्छेदकावच्छिन्नः तदतिरिक्तत्वेन सङ्कोचः, तदप्राप्तियोग्ये अचारितार्थ्यरूपबीजेन स्वप्रवृत्तियोग्येत्यस्य कृते चारितार्थ्याभाव इति बीजेन स्वीयोद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वेत्यस्य च लाभेन मिथोविशेष्यविशेषणभावं कृत्वा विशिष्टातिरिक्तत्वेन सङ्कोचात् । यथा याडामूस्थले स्वप्रवृत्तियोग्यो यः स्वीयोद्देश्यतावच्छेदकावच्छिन्नः आबन्ताङ्गाव्यवहितोत्तरत्वविशिष्टङित्वावच्छिन्नः आम्प्रवृत्तियोग्यश्च तदतिरिक्तत्वेन "याडापः" इत्यत्र सङ्कोचः आम्प्रवृत्त्युत्तरं आम्प्रवृत्तियोग्यताया आमा बाधाद्याट्सिद्धः तदेतत्पठ्यते "क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते" इति अयज इ इन्द्रमित्यादौ सवर्णदीर्घप्रवृत्तियोग्यताया सत्वेऽपि सवर्णाजव्यवहितोत्तरत्वविशिष्टसवर्णाच्त्वस्याभावात्सवर्णाजव्यवहितोत्तरत्वविशिष्टसवर्णाजतिरिक्ताच्परत्वमस्त्येवेति अन्तरङ्गत्वादाद्गुणो भवत्येवेत्यत "अपवादो यद्यन्यत्र चरितार्थस्तर्हि अन्तरङ्गेण बाध्यत"इति ।

चतुर्थबीजं यत्र तत्र द्वितीयबीजवत्सङ्कोचः । यथा—आमूलुक्स्थले लुगप्राप्तियोग्ये अचा-

अत एव "आयादयः" (३-१-३१) इतिसूत्रे गोपायिष्यतीत्यादावायादीन् बाधित्वा परत्वान् स्यादयः प्राप्नुवन्तीत्याशङ्क्यानवकाशा आयादयः। गोपायतीत्यादावपि शप्स्यादिः प्राप्नोति। न च सति शप्यसति वा न विशेषः, अन्यदिदानीमिदमुच्यते नास्ति विशेष इति। यदुक्तमायादीनां स्यादिभिरव्याप्तोऽवकाश इति स नास्त्यवकाश इति भाष्ये उक्तम्। एवमत्र तत्प्रवृत्त्युत्तरं चारितार्थ्येऽपि तदव्याप्तोऽवकाशो नास्तीति सममेव।

किञ्चानेन न्यायेन तत्प्रवृत्त्युत्तरमपि चारितार्थ्येऽपि तद्बाधबोधनम्। अन्यथानवकाशत्वेनैव बाधे सिद्धे एतत्कथनस्यैव वैयर्थ्यापत्तेस्तक्रकौण्डिन्य-

भैरवी।

एव बाध इति ध्वनितम्। *अत एव*। सामान्यशास्त्राप्राप्तियोग्ये विषये चारितार्थ्यस्य बाधकत्वबीजत्वादेव। *आयादय इतीति*। "तस्मिन्" सूत्रे आर्द्धधातुक इत्यस्य परसप्तमीत्वपक्षे कथमिदं विज्ञायते आयादिभ्यो यदार्द्धधातुकं तस्मिन्नवस्थिते वा आयादीनां निवृत्तिर्भवतीति आहोस्विदायादिप्रकृतेर्यदार्द्धधातुकं तस्मिन्नवस्थिते वा आयादीनामुत्पत्तिर्भवतीति विचारितम्। निवृत्तिशब्द उत्पत्तिशब्दो वा अध्याहर्तव्यः "गुपूधूप" इत्यारभ्य यत्सूत्रत्रयं तस्य अयं योगः शेषस्तदा सर्वत्रानैमित्तिकत्वेन पूर्वमुत्पन्नस्यायादेः श्रवणम्। यत्र त्वार्द्धधातुकस्य श्रवणं तत्र वा आयादीनां निवृत्तिरिति प्रथमः पक्षः।

यदा त्वेकवाक्यता आर्द्धधातुक इत्यस्यायादय इत्यस्य च तदा द्वितीयः पक्षः। तत्र प्रथमपक्षे गुप्सिर्जुगोपेति न सिध्यति, पूर्ववाक्यप्राप्तायप्रत्ययान्तादप्रत्ययादित्यकारेण क्तिनो बाधनात्। गोपा गोपायाञ्चकारेति प्राप्नोति। द्वितीयपक्षे यद्यपि गुप्सिर्जुगोपेति सिध्यति तथापि गोपायाञ्चकार गोपाया इत्येतत् न सिध्यति। पूर्वमायप्रत्ययाभावेन प्रत्ययान्तत्वविरहादाम् अकारप्रत्ययश्च न स्यादिति भावः। एवम्प्रकारेण पक्षद्वयेऽपि दूषणमभिधाय अविशेषेणायादीनां वा विधिमुक्त्वा सार्वधातुके नित्यमिति वक्ष्यामि इत्युक्तम्। एतत्पक्षे स्यादिबलीयस्त्वं विप्रतिषेधेन स्यादीनामवकाशः करिष्यति हरिष्यति, आयादीनामवकाशः गोपायति धूपायति। गोपायिष्यतीत्यत्र परत्वात् स्यादयः प्राप्नुवन्ति। न वैष दोषः आयादिविधानस्य अनवकाशत्वात्।

ननु चेदानीमवकाशः प्रक्लृप्तः गोपायति धूपायति, अत्रापि शप्स्यादिर्भवति नास्ति विशेषः सति वा शप्सति वा, अन्यदिदानीमुच्यते नास्ति विशेष इति।

यत्तु तदुक्तमायादीनां स्यादिभिरव्याप्तोऽवकाशः स नास्त्यवकाशः। पर्जन्यवल्लक्षणं प्रवर्तते इति न्यायात्। एवं रीत्या आयादीनामपवादत्वाद्विप्रतिषेधात् स्यादीनां बलवत्त्वं प्राप्नोति दूषणं परिहृतम् अन्यदिदानीमित्यनेन बाध्यसामान्यचिन्तया बाध्यप्रवृत्त्युत्तरञ्चारितार्थ्येऽपि बाधकत्वमिति स्पष्टमेव लभ्यते। इदञ्च अपवादत्वं न्यासभेदेन विकरणवन्नित्यं विहितानामायादीनामुक्तम्। एतेन लिड्यायादीनां चारितार्थ्येन अनवकाशा आयादय इत्यसङ्गतमित्यपास्तम्। "आर्द्धधातुक" इत्यस्य विषयसप्तमीत्वेन सर्वदोषोद्धार इति त्वन्यत्।

ननु विशेषशास्त्रस्य अचारितार्थ्यं इत्येव सिद्धे तद्प्राप्तीत्यादिव्यर्थमत आह—*किञ्चेति*। अनेन न्यायेन इत्यादिना। *तत्प्रवृत्त्युत्तरम्*। सामान्यशास्त्रप्रवृत्त्युत्तरम्। *चारितार्थ्येऽपि*। अपवादत्वाभिमतस्य चारितार्थ्येऽपि। अत्रापिर्भिन्नक्रमः। तेन तत्प्रवृत्त्युत्तरमपि चारितार्थ्यमित्यस्य लाभः। एवञ्च सामान्यशास्त्रप्रवृत्त्युत्तरं पूर्वं वा यस्य स्वारसिकी प्राप्तिस्तस्यापवादत्वेन सामान्यशास्त्रबाधकत्वमित्युक्तं भवति। *अन्यथा*। उत्सर्गप्रवृत्त्युत्तरमपि चारितार्थ्याभावे। *एतत्कथनम्*। भाष्येऽपवादत्वेन बाधकत्वकथनम्।

ननु अनेन सर्वथा अनवकाशत्वेनैव बाधः प्रकाश्यत इत्येव किं न स्यादत आह—*तक्र-

न्यायप्रदर्शनस्यापि वैयर्थ्यापत्तेश्च । यथा प्रथमद्विर्वचनस्य तदुत्तरं सावकाशेनापि द्वितीयद्विर्वचनेन बाधः । यथा चादेरपि प्रवृत्त्या चरितार्थेन "आदेः परस्य" ( १-१-५४ ) इत्यनेन "अलोऽन्त्यस्य" ( १-१-५२ ) इत्यस्य बाधः । तदुक्तं "मिदचोऽन्त्यात्" ( १-१-४७ ) इति सूत्रे भाष्ये-सत्यपि सम्भवे बाधनं भवतीति । अन्यथा ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेत्यत्र तक्रदानेन दधिदानस्य बाधो न स्यात् । तद्दानोत्तरं तत्पूर्वं वा तद्दानस्य चारितार्थ्यसम्भवात् ।

अत एव विषयभेदेऽप्यपवादत्वम् । अत एवाचिरादेशेन नुटोऽपि अपवादत्वाद्बाधमाशङ्क्य "न तिसृ" ( ६-४-४ ) इति ज्ञापकेन समाहितं तृज्वद्भैरवी ।

कौण्डिन्येति* । अत्र यथा तक्रदानस्य दधिदानोत्तरञ्चारितार्थ्येऽपि बाधकत्वम् दृश्यते । अस्यैव अर्थस्य दृष्टान्तद्वयमाह—*यथाप्रथमेति च* । *आदेरपीति* । अत्रापिशब्दो भिन्नक्रमः । चरितार्थ्येनेत्यनन्तरं द्रष्टव्यः । उक्तार्थे भाष्यसम्मतिमाह—*तदुक्तमिति* । *अत एव* । सत्यपि सम्भवे बाधाङ्गीकारादेव ।

अत्रार्थे मानं दर्शयति—*अत एवेति* । विषयभेदेऽपि बाधाङ्गीकारादेव । एतच्च यथा प्रथमेत्यादिना दृष्टान्तद्वयेन प्रदर्शितं यथा वा रुधधातोर्विहितेन श्नमा विषयभेदेऽपि शप्प्रवृत्त्युत्तरं चरितार्थेन शपो बाधनम् । *अत एव* । विषयभेदेऽप्यपवादत्वादेव । *बाधमाशङ्क्येति* । बाध्यसामान्यचिन्तयेत्यादि । अत्रेदं बोध्यम्—तिसृणाञ्चतसृणामित्यत्र अचिरादेशस्य बाध्यसामान्यचिन्तया गुणदीर्घोत्वबाधकत्ववत् नुड्बाधकत्वमपि स्यादिति या शङ्का सा तस्य निरवकाशत्वेनापवादत्वपक्षे, न तु येन नाप्राप्तन्यायेन नुट्प्रवृत्त्युत्तरं रादेशाप्राप्तेः । विषयभेदेऽपि अपवादत्वं भवतीत्यत्र तु दृष्टान्तता बोध्या । उक्तार्थसाधनं विपरीतार्थकल्पनेन

तत्त्वप्रकाशिका—

रितार्थ्यस्य लुकि कृते चारितार्थ्याभावस्य अमि कृते यदि लुक् स्यात्तदा "अतोऽम्" इत्यस्य वैयर्थ्यस्य च सत्त्वेन "अतोऽम्" इत्येतत्प्रवृत्तियोग्यातिरिक्तत्वेन "अतोऽम्" इत्येतद्विधेयघटितातिरिक्तत्वेन च "स्वमोर्नपुंसकात्" इत्यत्र सङ्कोचेन सोः पूर्वं अमनन्तरञ्च न लुक् ।

यत्र पञ्चमबीजन्तत्र अपवादविषयातिरिक्तत्वेन सङ्कोचः । यथा—दधतीत्यादौ "झोऽन्त" इत्येतत्प्रवृत्त्यभावसम्भावनायां "अदभ्यस्तात्" इत्येतत्प्रवृत्तिसम्भावनायाः सत्त्वेन "अदभ्यस्तात्"परत्वेन सम्भावितो यो यः तदतिरिक्तत्वेन "झोऽन्त" इत्यत्र सङ्कोचः । अत्रेदं बोध्यम् प्रथमबीजस्य रमेत्यादौ प्रतिपदोक्तत्वादेत्वे पश्चाद्धल्ङ्यादिलोप इति शेखरादिलापनमन्तरेण नान्यत्प्रयोजनम् । रमेत्यत्र पूर्वं हल्ङ्यादिलोपे पश्चादेत्वेऽपि क्षतिविरहादिति दिक् ।

*"आदेः परस्य" इत्यनेनेति*—चिन्त्यमिदम् । अप्रधानानुरोधेन प्रधानावृत्तेरन्याय्यत्वेन "उदःस्थास्तम्भो" रित्यादौ "अलोन्त्यस्य" इत्येतत्प्रवृत्त्या आकाङ्क्षायाः शान्तत्वेन च "आदेः परस्य" इत्यनेन निरवकाशत्वेनैवालोन्त्यस्येत्यस्य बाधात् । *सत्यपि सम्भव इति* । कृते चारितार्थ्यसम्भवेऽपीत्यर्थः । *अत एवेति* । तदप्राप्तियोग्ये अचारितार्थ्यस्य बाधबीजस्य स्वीकारादेवेत्यर्थः । परत्वात्स्यादयः प्राप्नुवन्ति इदञ्च "आयादयो वा" "सार्वधातुके नित्यम्" इति न्यासपरतया प्रवृत्तम्भाष्यम् । नच सैद्धान्तिकन्यासे गोपायिष्यति गोपिष्यति गोप्स्यतीति रूपत्रयम्भवति, इदानीं तत्र न्यासे सार्वधातुके नित्यमिति अपवादत्वान्नित्यमेवायादिः स्यादिति वाच्यम् "आयादयो वा आर्धधातुके" अत्रार्धधातुक इति विषयसप्तमी; इदं च बाधकबाधनार्थन्ततः सार्वधातुके नित्यमिति न्यासपरतया भाष्ययोजनेनादोषात् ।

त्सूत्रे भाष्ये । तेन विषयभेदेऽपवादत्वाभाव एव बोध्यत इति कश्चित् तन्न । विन्मतोर्लुका टिलोपमात्रस्य बाधानापत्तेः ।

यत्तु "दयतेर्दिगि" ( ७-४-९ ) इति सूत्रे द्वित्वोत्तरं दिग्यादेशस्य चारितार्थ्यं कैयटेनोक्तं तत्प्रौढया । ध्वनितं च तेनापि तस्य तथात्वं तदुत्तरग्रन्थेन । 'असम्भव एव बाधकत्वं विरोधस्य तद्बीजत्वात्' इति वार्त्तिकमतं तु भाष्यकृता दूषितत्वान्न लक्ष्यसिद्ध्युपयोगि ।

तक्रकौण्डिन्यन्यायोऽपि तद्प्राप्तियोग्येऽचरितार्थविषयो विधेयविषय

भैरवी ।

कश्चित् खण्डितवांस्तन्मतं निरसितुमाह—*तेनेति* । *टिलोपमात्रस्य* । "नस्तद्धित" इति "टेः" इति वा सूत्रेण प्राप्तस्य टिलोपस्य । तेन स्र्वेऽ.तीत्यत्रोभयोरपि अप्रवृत्तिः ।

स्वोक्तार्थे कैयटविरोधशङ्कानुत्थानायाह—*यत्त्विति* । *कैयटेनोक्तमिति* । एवं हि तत्र सूत्रे भाष्यम् दिग्ये दिग्यात इत्यादौ दिग्यादेशे कृते द्विर्वचनं प्राप्नोति अतस्तत्र साभ्यासस्येति वाच्यम् । ननु द्विर्वचने कृते साभ्यासस्य दिग्यादेशो भविष्यति । एवञ्च पूर्वं साभ्यासस्येति न वाच्यमिति भावः । न सिध्यति । किं कारणम् । दिग्यादेशस्य परत्वात् । तस्मात् साभ्यासस्येति वक्तव्यमेवेति । अत्र यत्परत्वादित्येतदुपपादनावसरे द्विर्वचनस्यावकाशः पपाचेति । कृते द्विर्वचने दयतिसद्भावाद्दिग्यादेशस्य ।

एवञ्च अनवकाशत्वाभावेन अकृते द्विर्वचने उभयप्रसङ्गे परत्वाद्दिग्यादेशः । अत्र भाष्ये परत्वाद्दिग्यादेश इत्यस्य वक्ष्यमाणरीत्या सावकाशत्वेऽपि अपवादतया एकदेश्युक्तित्वेनैतदुक्तिभाववर्णनपरस्य कृते द्विर्वचने दिग्यादेशस्य चारितार्थ्यकथनस्य प्रौढिवादत्वमेव युक्तं तदाह—*तत्प्रौढ्येति* । सत्यपि सम्भवे बाधनं भवतीति भाष्यविरोधादिति भावः । *ध्वनितमिति* । विप्रतिषेधस्यायुक्तत्वाभिप्रायेण, विप्रतिषेधश्च द्वयोः सावकाशयोर्भवति । इह पुनरनवकाशो दिग्यादेशो द्विर्वचनं बाधिष्यते इति भाष्ये उक्तम् । पूर्वं सामान्यविशेषभावमनाश्रित्योभयोः सावकाशत्वमुक्तम् । इदानीन्तु सामान्यविशेषाश्रयणेन नाप्राप्ते द्विर्वचने आरभ्यमाणस्य दिग्यादेशस्य अपवादत्वमुच्यते इति ग्रन्थेन ध्वनितमित्यर्थः । पूर्वभाष्यं त्वेकदेश्युक्तिरिति तात्पर्य्यम् ।

नन्वेवं वार्तिकमते लक्ष्यासिद्धिरत आह—*असम्भव एवेति* । प्रागुक्तमेव द्रढयितुमुपसंहरति—*तक्रकौण्डिन्येति* । न्यायोऽपीत्यपिना येन नाप्राप्तन्यायसमुच्चयः । एतेन उभयोर्न्याययोरेकविषयत्वलाभः । *तद्प्राप्तीति* । उत्सर्गप्राप्तियोग्ये विषये चारितार्थ्यमित्यर्थः । *विधेयविषय इति* । विधेयत्वाख्यालक्षणाजन्यशाब्दबोधीया विषयता ययोः सामान्यविशे-

तत्त्वप्रकाशिका।

*तत्प्रौढ्येति* वस्तुतस्तु लिङ्निमित्तादेशो तक्रन्यायस्यानित्यत्वेनेयं प्रौढ्युक्तिः, अत एव पिप्ये शुशावेत्यादौ प्यादेशसंप्रसारणाद्युत्तरं द्वित्वं सिध्यतीति दिक् ।

*विधेयविषयश्चेति* । विभिन्नविभिन्नविधेयतानिरूपितोद्देश्यदलीयविषयतयोर्यत्र व्याप्यव्यापकभावस्तद्विषय इत्यर्थः । अथवा विधेययोर्यत्र व्यापकभावस्तद्विषय इत्यर्थः । अत एव अपवादो नुक्दीर्घत्वस्येत्यादिव्यवहारस्सङ्गच्छते, अन्यथा नुक्शास्त्रीयविषयतापवाद इति वक्तव्यं स्यात् । उद्देश्यस्य उद्देश्यतावच्छेदकस्य उद्देश्यतावच्छेदकतावच्छेदकादेर्वा विधेयेन सार्कं यः सम्बन्धः तत्तुल्यविनिवेशो यः संबन्धः स एव व्याप्यतावच्छेदकव्यापकतावच्छेदकश्चसंबन्धः यथा सुट्नुट्स्थले सुटा हि आमः संबन्धः । एवं नुटापि तत्तुल्यविनिवेशश्च सम्बन्धः स्वनिष्ठाद्यवयवतानिरूपकत्वम् । तथाच यत्र यत्र स्वनिष्ठाद्यवयवतानिरूपकत्वसम्बन्धेन सुट् तत्र तत्र स्व-

तत्त्वप्रकाशिका।

निष्ठाद्यवयवतानिरूपकत्वसम्बन्धेन नुडितिव्याप्यव्यापकभावः स्पष्ट एव । एवं "नेमौ रहौ कार्यिणौ" इत्यत्रापि रेफस्य स्वाव्यवहितोत्तरकर्मकत्वं विधेयेन सम्बन्धः एवम् "अनचि च" इत्यत्रापि स्वकर्मकत्वं यरो विधेयेन साकं सम्बन्धः। तत्तुल्यविनिवेद्यौ च स्वनिरूपितकर्मतावद्यरव्यवहितपूर्वत्व—स्वनिरूपितकर्मतावत्वसम्बन्धौ । तथाच यत्र यत्र स्वनिरूपितकर्मतावद्यरव्यवहितपूर्वत्वसम्बन्धेन "अचोरहाभ्याम्" इति द्वित्वम्, तत्र तत्र स्वनिरूपितकर्मतावत्वसम्बन्धेन "अनचिच" इति द्वित्वमिति व्याप्तिः स्पष्टा । एवं प्रथमद्विर्वचनस्थलेऽपि अजादेः विधेयेन सहाव्यवहितोत्तरैकाचकर्मकत्वं सम्बन्धः, एकाच इत्यादेश्च स्वनिरूपितकर्मतावत्वं सम्बन्धः, तत्तुल्यविनिवेद्यौ च स्वनिरूपितकर्मतावदेकाजव्यवहितपूर्वत्वस्वनिरूपितकर्मतावत्वसम्बन्धौ। अजादेरित्यत्र बहुव्रीहिः तथाच यत्र यत्र स्वनिरूपितकर्मतावदेकाजव्यवहितपूर्वत्वसम्बन्धेन द्वितीयद्विर्वचनं तत्र तत्र स्वनिरूपितकर्मतावत्वसम्बन्धेन । प्रथमद्विर्वचनमिति व्याप्यव्यापकभावस्सुलभः। आदेशविषये च सर्वत्र स्वनिष्ठादेशतानिरूपितस्थानितावत्वमेव व्याप्यतावच्छेदको व्यापकतावच्छेदकश्च सम्बन्ध इति दिक्।

परेतु तदप्राप्तियोग्येऽचारितार्थ्यविशिष्टं कृत्वे चारितार्थ्यरूपबाधबीजमपि न कल्प्यते तद्बीजभूततक्रन्यायोऽपि न स्वीक्रियते। नच द्वितीयद्विर्वचनेन प्रथमद्विर्वचनबाधो न स्यात्, एवं स्रजयतीत्यादौ 'विन्मतोर्लुका' टिलोपमात्रस्य बाधो न स्यादितिवाच्यम्। परत्वेन द्वितीयद्विर्वचनटियादेशाभ्यां बाधे सकृद्गतिन्यायेन पुनः पूर्वशास्त्राप्रवृत्त्या, प्रतिपदोक्तत्वात् परत्वाच्च एवं टिलोपे पश्चाद्विन्मतोर्लुकि असिद्धवदत्रेत्यनेन पुनः टिलोपाप्राप्त्या दोषाभावात्। नचैवमपि अजेत्यादौ टापा ङीषा बाधो न स्यादितिवाच्यम् अत इत्यस्यावृत्या अजादेरपि विशेषणत्वस्वीकारेण ङीषि कृते लिङ्गविशिष्टपरिभाषया अजादित्वेऽपि अदन्तत्वाभावेन निरवकाशत्वेनैव बाधात्।

यत्तु "रहाभ्याम्" इति साक्षाच्छ्रुतेन निमित्तत्वेन कार्यित्वबाधस्तक्रन्यायेनेति तदसत्, तक्रन्यायेन व्याप्यविषयताश्रयातिरिक्तत्वेन व्यापकविषयताश्रये सङ्कोचन प्रकृते अजव्यवहितोत्तरत्वविशिष्टो यरव्यवहितपूर्वत्वविशिष्टश्च यो यर् तस्यैव व्याप्यविषयताश्रयत्वमिति तदतिरिक्तत्वेन यरपदार्थे सङ्कोचेऽपि मद्रह्रद भद्रह्रद इत्यादौ द्वित्वस्य दुर्वारत्वेन भाष्यासङ्गतेः, ब्राह्मणाः भोज्यन्तां माठरकौण्डिन्यौ परिवेविषातामिति पृथङ्न्यायप्रदर्शनासङ्गतेश्च, तस्माद्यत्र विषयतयोर्व्याप्यव्यापकभावस्तत्र तक्रन्यायः' यत्र धर्मयोर्व्याप्यव्यापकभावस्तत्र माठरपरिवेषणन्यायः। अत एव "इको यणचि" इत्यादौ "तस्मादित्युत्तरस्य" इतिनिर्देशेन माठरन्यायस्यानित्यत्वेन स्थानित्वेन न निमित्तत्वबाध इति कैयटोक्तं सङ्गच्छते।

तथाच-एकविनियोगोद्देशेन प्रयुक्तवाक्यकदम्बघटकव्यापकधर्मावच्छिन्नबोधकपदार्थतावच्छेदकावच्छिन्ने तद्वाक्यकदम्बघटकव्याप्यधर्मावच्छिन्नबोधकपदार्थतावच्छेदकावच्छिन्नातिरिक्तत्वेन सङ्कोचः। प्रकृते च द्वित्वं विनियुञ्जानि इत्युद्देशेन प्रयुक्ते "अनचि च" यणो मयो द्वे" "अचोरहाभ्याम्" इति वाक्यकदम्बघटकव्यापकधर्मावच्छिन्नबोधकं यद्यत्पदं यरपदं तदर्थताव च्छेदकावच्छिन्ने तद्वाक्यकदम्बघटकं मव्याप्यधर्मावच्छिन्नबोधकरपदं तदर्थतावच्छेदकावच्छिन्नातिरिक्तत्वेन सङ्कोच इति मद्रह्रद इत्यादौ रेफस्य "यणो मय" इति न द्वित्वम् तत्रैव रेफस्य "अचोरहाभ्याम्" इति न द्वित्वम्, इयंनुभव इत्यादौ रेफस्य "अनचि च"इति न द्वित्वमिति सकलेष्टसिद्धिः।

नचैवमपि सुटा नुटो बाधो न स्यादिति वाच्यम्, "आमि सर्वनाम्न" इत्यत्र आकार प्रश्लेषेण आकारादेरामः सुड्विधानेन अर्थाधिकाराश्रयणेन तादृशस्यैवामो नुड्विधानेन च नुटः प्राक् सुटः, सुटः प्राक् नुटो वा अप्रवृत्तेः। अत एव स इत्यादौ सत्वेन त्यदाद्यत्वस्य अनड्वान् अनड्वन् इत्यादौ अमामूभ्यान्तत्रैव नुमा च इयमित्यादौ यादेशमादेशाभ्याञ्च

एव चेति "तद्धितेष्वचामादेः" (७-२-११७) "धातोरेकाचः" (३-१-२२) इत्यादिसूत्रेषु भाष्ये स्पष्टम्। क्वचित्तु सर्वथानवकाशत्वादेव बाधकत्वं, यथा-ङेरामो याडादिबाधकत्वम्। न हि याडादिषु कृतेषु "ङेराम्" प्राप्नोति निर्दिश्यमानस्य व्यवधानात्। तत्र स्वस्य पूर्वं प्रवृत्तिरित्येव तेषां बाधः। तत्र बाधके प्रवृत्ते यद्युत्सर्गप्राप्तिर्भवति तदा भवत्येव यथा तत्रैव याडादयः।

भैरवी

षयोरेव अनया परिभाषया बाध्यबाधकभावस्य कल्पना भवति न त्वनुवाद्ययोः। अत एव विशेषविहितेन सामान्यविहितं बाध्यत इत्युद्घोषः। *तद्धितेष्वचामादेरिति*। 'क्रोष्ट्रो जागत' इत्यादावान्त्योपधावृद्ध्योर्निषेधमुक्तोक्तन्यायेन तयोरादिवृद्ध्या बाधमाशङ्क्य सौश्रुत इत्यादौ तयोरप्राप्त्या आदिवृद्धेर्नानवकाशत्वमित्यभिप्रायेण भाष्यकृता इह तदभाव इत्युक्तम्। सामान्यविशेषभावो बाधहेतुः स चेह नास्ति इति कैयटः। अपवादत्वाभावे च पूर्वोक्तदोषनिरासायानुशतिकादिगणे पुष्करसच्छब्दपाठस्य तयोर्बाधे ज्ञापकत्वमुक्तम्। *"धातोरेकाच" इति*। यद्यपि एतत्सूत्रभाष्ये विशिष्य किञ्चिन्नोक्तं तथाप्यस्य सामान्यशास्त्रत्वात् सामान्यस्य च विशेषेण बाधदर्शनादस्यापि "अजादेर्द्वितीयस्य" इति सूत्रापवादसदृशत्वादेतदुक्तिः, अत एवादिपदम्, तेन "नित्यं कौटिल्य" इति सूत्रस्य लाभः। तत्र हि—"अथैतेभ्यः क्रियासमभिहारे यङ् भवितव्यमिति प्रश्न, उत्तरयोर्विग्रहेण विशेषासम्प्रत्ययान्नित्यग्रहणानर्थक्यम् क्रियासमभिहारे च नैतेभ्यो यङ् भवितव्यमिति" भाष्यकृतोक्तम् द्वितीयवार्त्तिके चकारेण विशेषासम्प्रत्ययादित्यस्यानुकर्षणाय चकारः कृतः क्रियासमभिहारे यत्र यङ् तत्र तदन्ताद्विशेषस्य भृशं जयन्तीत्याद्यर्थविशेषस्य अप्रतीतिः स न भवति।

यद्यनुवादेऽपि एतत्न्यायसञ्चारः स्यात्तदा न्यायेनैवप्रथमसूत्रस्य बाधे सिद्धे विशेषासम्प्रत्ययादित्यनुकर्षकचकारोपादानवैयर्थ्यापत्तिरिति प्रतिपत्तव्यम्। अत एव "मिदचोऽन्त्यात्परः" इति सूत्रभाष्ये विधेयविषय एव विशेषस्य बाधकत्वप्रदर्शनाय सर्वेभ्यो ब्राह्मणेभ्यो दधि दीयतामित्युपन्यासः कृत इति द्रष्टव्यम्। विशेषविहितेन सामान्यविहितस्य बाधने न्यायद्वयम्।

"येन नाप्राप्त" इत्यादि "निरवकाशो विधिरपवाद" इति च तत्राद्यस्य न्यायस्य यत्र प्रवृत्तिर्भवति तद्दर्शितं द्वितीयस्य तस्य विषयमाह—*क्वचित्त्विति*। अत्र तु शब्दः पूर्वोक्तन्यायाद्वैलक्षण्यसूचनाय सर्वथा तद्प्राप्तियोग्ये विषये तत्प्रवृत्त्युत्तरमपि च। अत एव एवकार उक्तः। तत्र दृष्टान्तमाह—*यथेति*। *ङेराम इति*। ङेःस्थाने विहितस्यामादेशस्य याडाद्यागमबाधकतायां द्वितीय एव न्यायः। तदेतदुपपादयति—*न हीत्यादिना*। *निर्दिश्येति*। ङेरित्यर्थः व्यवधानादिनेति शेषः। द्वितीयन्यायस्थले पूर्वस्माद्विशेषमाह—*तत्रेति स्वस्य*। आमादेः पूर्वम्। याडादिभ्य इत्यादिः। *तत्र*। द्वितीयन्यायसञ्चारस्थले। अत्रैव

तत्त्वप्रकाशिका-

"हल्ङ्यादि" लोपस्य बाधो न भवति। नच "इदमो मः" इति ज्ञापकेन तक्रन्यायानित्यत्वकल्पनान्न दोष इति वाच्यम्। अननुगतानित्यत्वकल्पनापेक्षया फलाभावेन अस्मिन् शास्त्रे स न्यायो नाश्रीयत इति कल्पनाया एव न्याय्यत्वात्। अत एव पिप्ये शुशावेत्यादौ प्यादेशसम्प्रसारणाभ्यां द्वित्वस्य बाधो नेति दिगित्याहुः।

*विरोधस्य तद्बीजत्वादिति*। वस्तुतस्तु विरोधाभावे तक्रन्यायेनापि न बाधः, 'विरोधे हि बलीयसा दुर्बलं बाध्यत' इति न्यायात्। अत एव संज्ञासु परस्परं न बाध्यबाधकभावः। अत एव "आकडारादेका संज्ञा" इति सूत्रं सङ्गच्छते। *भवत्येवेति*। स्वप्रवृत्तियोग्ये यः

अप्राप्तौ तु न यथा पचेयुरित्यादौ दीर्घबाधके निरवकाश इयादेशे दीर्घा-भावः ॥ ५८ ॥

तदेतत्पठ्यते—

## क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशत इति ॥ ५९ ॥

अपवादशब्दोऽत्र बाधकपरः । तदुक्तं "गुणो यङ्लुकोः" ( ७-४-८२ ) इत्यत्र भाष्ये । अभ्यासविकारेषु अपवादा उत्सर्गान्न बाधन्ते । अजीगणत् । अत्र गणेरीत्वमपवादत्वाद्धलादिः शेषं बाधते । न गणेरित्वं अपवादत्वाद्धलादिशेषं बाधते । किं तर्हि । अनवकाशत्वादिति ग्रन्थेन । गणरूपाभ्यासान्त्यणस्येत्वमित्यर्थे हलादिःशेषेण तन्निवृत्तौ तदनवकाशमीत्वे तु कृते न तस्य प्राप्तिरन्त्यहलोऽभावात् । अभ्यासविकारेषु बाध्यबाधकभावाभावेन च साधितम् । तस्मिंश्च सति लोपे कृते सामर्थ्याच्छिष्टस्यान्त्यस्येत्वमिति न दोषः । न च येन नाप्राप्तिन्यायेन अपवाद-

भैरवी ।

दृष्टान्तद्वयमाह—*यथेत्यादिना* । *दीर्घाभावः* । "अतो दीर्घो यञि" इति दीर्घाभावः॥५८॥

*तदेतदिति* । बाधकप्रवृत्त्युत्तरकालिकोत्सर्गकर्तृकं भवनमेव । *पठ्यते* । शब्देनाभिधीयते। लौकिकैरिति शेषः । *अत्र* । उक्तवाक्ये । *बाधकपरः* । सर्वथा निरवकाशपरः । सदिति निर्देशोऽत्र साधकः । अत्र हि-वृद्धिबाधकस्य पूर्वसवर्णदीर्घस्य "नादिचि" इत्यनेन निषेधे पुनर्वृद्धिर्भवति । पूर्वसवर्णदीर्घो हि बाध्यसामान्यचिन्तया वृद्धियण्सवर्णदीर्घाणान्निरवकाशत्वाद्बाधकः, यद्यत्र पूर्वन्यायसञ्चारः स्यात्तदा वृद्धिर्नस्यादिति । अस्मिन्नर्थे भाष्यमपि उपष्टम्भकमित्याह—*तदुक्तमिति* । "अभ्यास" इत्यादि परिभाषाया उदाहरणमजीगणदित्यादि प्रथमतो दर्शितम्, ततो येन नाप्राप्तन्यायेन गणेरीत्वं हलादिः शेष इति विहितस्य बाधकमिति कश्चिद्भ्राम्येतातस्तन्निरासायाह—*न गणेरीत्वमित्यादिना* । अनेन ग्रन्थेन उभयोर्भेदः स्पष्टतरः प्रतीयते, "अभ्यासविकारे" इति परिभाषा तु 'डोढौक्यत' इत्याद्यर्थमवश्यं स्वीकार्य्या ।

अत्र हि—ह्रस्वदीर्घयोरन्यत्र चरितार्थयोः परत्वाद्दीर्घं औकारस्यौकारे एव ततो ह्रस्वत्वे कृते ततो "गुणो यङ्लुकोः" इति गुणेनैतस्य सिद्धिः । अन्यथा 'येन नाप्राप्तन्यायेन" दीर्घस्य ह्रस्वबाधकतया दीर्घे कृते ह्रस्वानापत्तावुक्तरूपासिद्धिः स्यात् । न च "अभ्यासविकार" इति परिभाषास्वीकारे परत्वादित्येतद्विरुद्धमिति वाच्यम् । अभ्यासविकारादन्यत्र परस्य पूर्व प्रवृत्तिर्दृष्टा तत्सादृश्यादस्यापि लक्ष्यानुसारात् पूर्वं प्रवृत्तिर्न तु बाधकत्वाभिप्रायेणैतादृशे विषये तथाभिधानस्य सर्वसम्मतत्वादिति । "ई च गण" इत्यस्यानवकाशत्वेन "हलादिः शेष" बाधकतोक्ता, तामुपपादयति-*गणरूपेत्यादिना* । "ईचगणः" इत्यस्य "अलोऽन्त्यस्य"इत्यनेनैकवाक्यतयैतादृशार्थलाभः ।

नन्वीत्वे कृतेऽपि तस्य स्थानिवत्वेन हलत्वाद्धलादिः शेषेण तन्निवृत्तौ पुनर्गकाराकारस्येत्वे रूपसिद्धिः स्यादत आह—*ईत्वे कृते इति* । *अन्त्यहल इति* । न ह्यत्र स्थानिवत्वमल्विधित्वात् । इदञ्च वस्तुगतिमनुरुध्य । न ह्यत्रानन्त्यस्य हलो निवृत्तिः साक्षादुक्ता ।

तत्त्वप्रकाशिका ।

स्वीयोद्देश्यतावच्छेदकावच्छिन्नस्तदतिरिक्तत्वेन सङ्कोचादिति भावः ॥ ५८ ॥

*इति ग्रन्थेनेति* । तथाचापवादशब्दस्य तत्तन्न्यायमूलकबाधकत्ववति रूढिरिति भावः ।

त्वमप्यस्य सुवचं, तस्य चरितार्थविषयताया उक्तत्वात्। "इको झल्" (१-२-९) इत्यत्र भाष्येऽपि ध्वनितमेतत्। तत्र हि "अज्झन" (६-४-१६) इति दीर्घेण गुणोत्तरं फलाभावेन अनवकाशत्वाद् गुणे बाधिते दीर्घोत्तरं गुणः स्याद्दीर्घविधानं तु मिनोतेर्दीर्घे कृते "सनि मीमा" (७-४-५४) इत्यत्र मीग्रहणेनग्रहणेऽर्थवत्तत्र पश्चात्प्राप्तगुणबाधनार्थम् "इको झल्" इति कित्त्वमित्युक्तम्। अन्यथापवादत्वेन बाधे तद्विषये उत्सर्गाप्रवृत्तेर्भाष्यस्य सूत्रस्य चासङ्गतिरिति स्पष्टमेव।

यत्तु काञ्चनीत्यादावपवादमयड्विषयेऽप्यण् भवति क्वचिदपवादविषयेऽपीति न्यायादिति तन्न। "अण् कर्मणि च" (३-३-१२) इति सूत्रस्थभाष्यविरोधात्। तत्र ह्यणः पुनर्वचनमपवादविषयेऽनिवृत्त्यर्थं गोदायो व्रजतीत्याद्युक्तम्। काञ्चनीत्यादौ काञ्चनेन निर्मितेत्यर्थे शैषिकोऽण् बोध्यः।

भैरवी।

*अस्य*। ईत्वस्य। *तस्य*। येन नाप्राप्तिन्यायस्य। *उक्तत्वादिति*। प्रकृते तु गणरूपाभ्यासान्त्यस्य णस्येत्यर्थे हलादिः शेषे सति नेत्वस्य चरितार्थत्वमिति भावः। *एतदिति* उक्तन्यायस्य चरितार्थविषयकत्वमित्यर्थः। *तत्र हीति*। अस्य सूत्राभावे चिचीषतीत्यादाविति शेषः। *अनवकाशत्वादिति*। यदि दीर्घोत्तरं गुणः स्यात्तर्हि दीर्घविधानमनर्थकं स्यादित्यतोऽनवकाशत्वमिति भावः। *गुणे बाधित इति*। पूर्वमप्रवृत्ते इत्यर्थः। एतस्य अग्रे उक्तमिति शेषः। एतेन निरवकाशत्वेन बाधके प्रवृत्ते बाध्यस्य सति सम्भवे प्रवृत्तिर्ध्वनिता। *अन्यथा*। सर्वथा अनवकाशस्थलेऽपि येन नाप्राप्तन्यायस्वीकारे। *तद्विषय इति*। अपवादत्वेन बाधविषय इत्यर्थः। *उत्सर्गाप्रवृत्तेरीति*। सिद्धान्तित्वेनेति शेषः। प्राचीनोक्तं खण्डयति—*यत्त्विति*। काञ्चनीत्यादावित्यादिपदेन "प्रदीयतां दाशरथाय मैथिली" इत्यस्य रामायणप्रयोगस्य उपसंग्रहः। *अपवादमयडिति*। "नित्यं वृद्ध" इतिसूत्रविहित इत्यर्थः।

यत्तु "अत इञ्" इति" सूत्रे विकल्पानुवृत्तेरिञोऽप्रवृत्तोऽपत्यार्थकोऽणप्रत्यय इति तन्न, यत्रोत्सर्गापवादयोर्वैकल्पिकत्वं तत्रापवादाभावे यत्नं विना उत्सर्गस्याप्रवृत्तेः सिद्धान्तिसम्मतत्वात्।

यत्तु काञ्चनशब्दादनुदात्तादिश्रेञ्प्रत्यय इति तन्न, काञ्चनशब्दस्य ल्युडन्तत्वेन लित्स्वरेण "नञ्विषयस्य" इति वा आद्युदात्तत्वात्। *अपवादविषये*। अपवादस्य "अतोऽनुपसर्गे" इति कप्रत्ययस्य विषये। तर्हि काञ्चनीत्यस्यासिद्धिरेवेत्यत आह—*काञ्चनीत्यादाविति*। *शैषिक इति*। "शेषे" इतिसूत्रस्य दार्षदाः सक्तव इत्यादिसिद्ध्यर्थं विधित्वस्यापि स्वीकारात्। न च "शेष" इतिसूत्रं बाधित्वा "वृद्धत्वाच्छः" स्यादिति वाच्यम्। "राष्ट्रावार" इति यो विहितो घस्तदारभ्य ये प्रत्यया विशिष्य तेषु तेषु अर्थेषु विहितास्तेषां स्वस्वविषये प्राप्तानां शैषिकाण्बाधकत्वात्। यश्चार्थो जाताद्यन्यो विशिष्यानुपात्तस्तस्मिन्नर्थे "शेष" इतिसूत्रेण प्राप्तस्याणो बाधे मानाभावात्। "वृद्धाच्छ" इति छप्रत्ययोऽपि घाद्यन्तर्गतः। अत एव नि-

तत्त्वप्रकाशिका।

*मीग्रहणेन ग्रहणेऽर्थवदिति*। नच मीग्रहणेन ग्रहणभावेऽपि "मीनातिमिनोति" इत्यात्वे "सनिमीमा"इत्यत्र मीग्रहणेन ग्रहणम्भविष्यतीति पुनरपि भाष्यासङ्गतिरिति वाच्यम्। एज्निमित्तत्वं निमित्तीकृत्य जायमानस्य आत्वस्य एज्निमितत्वविघातक "हलन्ताच्च" इति कित्वसम्पादक इत्यादेशे प्रत्यनिमित्तत्वात्। *शैषिकोऽणिति*। "शेषः" इति आवृत्तविधायकशास्त्रेणेत्यर्थः। अत्रेदं बोध्यम्-"येन नाप्राप्त" न्यायघटकतस्येत्यस्य यदि स्वेतरस्येत्यर्थः,

अत्रेदं बोध्यम् "येन नाप्राप्त" इत्यत्र येनेत्यस्य यदि स्वेतरेणेत्यर्थस्तदा स्वविषये स्वेतरद्यद्यत् प्राप्नोति तद्बाध्यंविध्यन्तराप्राप्तविषयाभावात् । इयमेव बाध्यसामान्यचिन्तेति व्यवह्रियते । अनवकाशत्वेन बाधेऽप्येषा वक्तुं शक्या यद्युदाहरणमस्ति विनिगमनाविरहात् ।

यदि तु येनेत्यस्य येन लक्षणेनेत्यर्थो येन कार्येणेत्यर्थो वा तदा बाध्यविशेषचिन्ता । अनवकाशत्वेन बाधेऽप्येतद्बाधेन सार्थक्यमुत तद्बाधेनेत्येवं विशेषचिन्ता सम्भवति यद्युदाहरणमस्तीति ॥ ५९ ॥

तत्र कार्येणेत्यर्थे पररूपत्वावच्छिन्ने कार्ये आरभ्यमाणाया वृद्धेस्तद्बाध-

भैरवी ।

मित इत्यस्यार्थस्य विशिष्योपादानम् ।

यदा तु काञ्चनस्येयमित्यर्थविवक्षा तदा छप्रत्ययो भवत्येव । एवं दाशरथायेत्यपि दशरथेन पुनः पुनः स्मृताय इत्यर्थे साधुः । यदि तु दशरथापत्यायेत्यर्थविवक्षा तदात्वार्षत्वादिति बोध्यम् । बाधकशास्त्रे विशेषं वक्तुमादौ व्यवस्थामाह-*अत्रेदमित्यादिना* । स्वमपवादः, एवञ्च अपवादेतरत्वान्वयितावच्छेदकधर्मावच्छिन्नकर्तृकावश्यकप्राप्तिलाभः । तद्बाध्यमित्यत्र विहितस्य तच्छब्देन परामर्शविवक्षया तच्छब्दे वीप्साभावः । *इयमेव* । स्वेतरसकलशास्त्रबाधरूपैव, *एषा* । बाध्यसामान्यचिन्ता, यदीत्यनेन तदलाभो ध्वनितः । *विनिगमनाविरहादिति* । "येन नाप्राप्तिन्यायेन" यत्र बाधकत्वं तत्रैव बाध्यसामान्यचिन्ता यत्र त्वनवकाशत्वेन तत्र विनिगमकयुक्त्यभावादित्यर्थः ।

अत एव शक्यत्वम् लक्षणेन शास्त्रविशेषेण कार्य्यस्य विधीयमानत्वेन प्राधान्यादाह-*कार्य्येणेति* । *यद्युदाहरणेति* । अत्रापि यदिशब्दोपादानेन उदाहरणासम्भवो बोधितः । न च अनवकाशत्वेन बाधकत्वम् "अचिर ऋत" इत्यस्यास्ति तत्र बाध्यसामान्यचिन्ताप्यस्तीति पूर्वोक्तं यदीत्यनुपपन्नमिति वाच्यम् । तत्र स्वेतरशास्त्रसामान्यस्य न ग्रहणम् । नुड्विधायकशास्त्रबाधस्यादर्शनात्, किन्तु ऋत इत्युपादानसामर्थ्यात् सर्वबाधकत्वमित्याशयात् । यदि तु "ऋत"इत्युपादानेनानवकाशत्वेन बाधस्थलेऽपि बाध्यसामान्यचिन्तास्तीत्येवं कल्प्यते तदा तत्रापि तथास्तु । यदीत्येतद्घटितमसन्दिग्धे सन्दिग्धवचनन्तु प्रतिपाद्यस्यार्थस्य दार्ढ्याय। शास्त्राणि चेत् प्रमाणानीतिवत् अस्तीत्यत्रेतिशब्दस्तद्विषयकविचारसमाप्तिबोधकः॥५९॥

*तत्र* । पूर्वोक्तार्थत्रयमध्ये ।*वृद्धेः* । "एत्येधत्यूठ्सु" इतिवृद्धेः । *तद्बाधकत्वे* । पररूप-

तत्त्वप्रकाशिका ।

तदा बाध्यसामान्यचिन्ता तक्रन्यायविषयेऽपि इदं वक्तुं युक्तम् । *यद्युदाहरणमस्ति* । इयमेव बाध्यसामान्यचिन्तेत्युच्यते । यदि येननाप्राप्तवाक्यघटकतस्येत्यस्य लक्षणस्य कार्यस्येति वार्थः, तदा बाध्यविशेषचिन्ता, तक्रन्यायविषयेऽपीदं वक्तुं युक्तं यद्युदाहरणमस्ति इयमेवबाध्यविशेषचिन्तेत्युच्यते । मूलोक्तं तु न युक्तम् बाध्यविशेषचिन्ताविषये येनेत्यस्य लक्षणेन कार्येण वेत्यर्थः । "एत्येधत्यूठ्सु" एतद्विषये "एङि पररूपम्" इत्यस्य "ओमाङोश्च" इत्यस्य वा नाप्राप्तेरभावेन पररूपबाधकत्वस्यैवानापत्त्या बाध्यसामान्यचिन्तायां वा बाध्यविशेषचिन्तायां वा येनेत्यस्य स्वेतरेणेत्यर्थस्यावश्यं वक्तव्यत्वात् । निरवकाशत्वेन बाधेऽप्येषा वक्तुं शक्या यद्युदाहरणमस्तीत्यपि चिन्त्यमेव । तक्रन्यायस्योदाहरणस्यैव दुर्लभत्वेन विशेषसामान्यचिन्तयोस्सुतरामुदाहरणस्य दुर्लभत्वात् ॥ ५९ ॥

तत्र तस्येत्यस्य लक्षणस्य वाक्यार्थस्य वेत्यर्थे पररूपत्वावच्छिन्नविधायकशास्त्रत्वावच्छिन्ने पररूपत्वावच्छिन्ने कार्ये वा नाप्राप्ते आरभ्यमाणाया वृद्धेस्तद्बाधकत्वे

कत्वे निर्णीते किंशास्त्रविहितस्येत्येवं तद्विशेषचिन्तायामाह—

**पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान् ॥६०॥**

अवश्यं स्वपरस्मिन् बाधनीये प्रथमोपस्थितानन्तरबाधेन चारितार्थ्ये पश्चादुपस्थितस्य ततः परस्य बाधे मानाभावः । आकाङ्क्षाया निवृत्तेर्विप्रतिषेधशास्त्रबाधे मानाभावाच्चेति तस्य बीजम् ॥ ६० ॥

"नासिकोदरौष्ठजङ्घादन्त" ( ४-१-५५ ) इत्यस्यौष्ठाद्यंशे ङीषूनिषेधत्वावच्छिन्नबाधकत्वे निर्णीते किंविहितस्येत्याकाङ्क्षायामाह—

**मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान् ॥ ६१ ॥**

तेनौष्ठादिषु पञ्चसु "असंयोगोपधात्" इति प्रतिषेध एव बाध्यते, न तु "सहनञ्विद्यमान" लक्षण इति "नासिकोदर" ( ४-१-५५ ) इत्यत्र भाष्ये स्पष्टम् । पूर्वोपस्थितबाधेन नैराकाङ्क्ष्यमस्या बीजम् ॥ ६१ ॥

ननु "वा छन्दसि" ( ३-४-८८ ) इत्यनेन "सेर्ह्यपिच्च" ( ३-४-८७ )

भैरवी ।

त्वावच्छिन्नबाधकत्वे । *विहितस्येति* ।पररूपस्येतिशेषः । अत्र चैषा एजाद्योरेत्येधत्योर्वृद्धिस्तस्याः पररूपत्वावच्छिन्नाप्राप्तियोग्ये विषये चरितार्थ्याभावो ऽस्ति यद्यपि, तथापि पररूपे कृते चारितार्थ्यं नास्तीति न येन नाप्राप्तिन्यायसञ्चार इत्याशयेनाह-*वस्तुत इति* । "पुरस्तात्" इति न्यायो युक्तिसिद्ध इत्याशयेन आह-*अवश्यं स्वपरस्मिन्निति* । परशब्दोऽत्रान्यवाची । प्रथमोपस्थितानन्तरेत्यत्रानन्तर्य्यमुपस्थितिकृतमेव विवक्षितं न त्वाष्टाध्यायीपाठेन । "एङि पररूपम्" इत्यस्याष्टाध्यीयपाठकृततथात्वविरहात् । *ततः परस्य* । "ओमाङोश्च" इत्यस्य । *आकाङ्क्षेति* । बाध्यस्येत्यादिः । किं बाध्यं किं न बाध्यमित्याकाङ्क्षाया एकबाधकत्वज्ञानेनापि निवृत्तेरिति भावः । यदि व्यवहितस्यापि बाध्यत्वेनाकाङ्क्षा कल्प्यते तदा विप्रतिषेधशास्त्रस्य बाधकल्पनाया आपत्तिरपि भवतीत्याह-*विप्रेति*। *तस्य* । एतस्य न्यायस्य ॥ ६० ॥

मध्येऽपवादन्यायं वक्तुमाह-*नासिकेति* । नासिकोदरयोःसंयोगोपधत्वं नास्तीत्यत आह-*ओष्ठाद्यंश इति* । येन कार्य्येणेति प्रागुक्तार्थमादाय आह-*ङीषूनिषेधत्वावच्छिन्नेति* । *तेन* । मध्येऽपवादन्यायस्वीकारेण । अत्र न्याये साधकमाह-*पूर्वोपेति ॥ ६१ ॥

*विकल्पः स्यादिति* । "वाच्छन्दसि" इत्यनेन पक्षे भावो बाध्यते अभावज्ञाने च प्रतियोगिज्ञानस्य कारणत्वात् सम्पूर्णस्य "सेर्ह्यपिच्च" इत्यस्योपस्थितौ तेनोभयविधानादुभयेऽपि

तत्त्वप्रकाशिका-

निर्णीते कस्य शास्त्रस्य कस्य वा पररूपस्य इति विशेषजिज्ञासायामाह-*पुरस्तादपवादा इति* । तत्र कार्येणेत्यर्थे इति चिन्त्यमिदम् । उक्तयुक्तेः ॥ ६० ॥

*ङीषूनिषेधत्वावच्छिन्नबाधकत्व इति* । नच "कुप्वोः ≍क≍पौच" इत्यस्य सकललक्ष्यप्राप्त "विसर्जनीयस्य स" इत्येद्बाधकत्ववत्प्रकृते सकललक्ष्यप्राप्त "असंयोगपूर्वात्" इत्येद्बाधकत्वमेवोष्ठाद्यंशे स्यान्नतु "सहनञ्" लक्षणस्येत्यस्येतिवाच्यम् । इष्ठको नाप्राप्तयोरारभ्यमाणस्य ऋष्यणः कस्य प्रत्ययस्य बाधकत्वमित्यवतरणस्य दातुं शक्यत्वात् । ननु "सहनञ्विद्यमान"लक्षण इति-इदमुपलक्षणम्, आत्रेय इत्यादौ परत्वाड्ढगेव नतु अपवादो ऋष्यण् इत्यस्य ॥ ६१ ॥

इत्यनन्तरस्यापित्वस्यैव हेरति विकल्पः स्यात्। तथा "नेटि" (७-२-४) इति निषेधोऽनन्तरहलन्तलक्षणाया इव सिचिवृद्धिमृजिवृद्धयोरपि स्यात्। अत उक्तन्यायमूलकमेवाह।

## अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति ॥ ६२ ॥

अत एव "संख्याव्ययादेः" (४-१-२६) इति ङीब्ग्रहणं चरितार्थम्। तद्ध्यनन्तरस्य ङीषो विध्यभावाय। "नक्किचि" (६-५-३७) इति सूत्रे दीर्घग्रहणञ्च चरितार्थम्। तध्यनन्तरस्य "अनुदात्तोपदेश" (६-४-३७) इत्यस्यैव निषेधाभावाय। मध्येऽपवादन्यायाद्यपेक्षयानन्तरस्येति न्यायः प्रबल इति "अष्टाभ्य" (७-१-२१) इति सूत्रे कैयटः। प्रत्यासत्तिमूलको-

भैरवी।

विकल्पः स्यादिति भावः। *तथा*। पूर्ववत्। *उक्तन्यायेति*। अनन्तरे प्रथमोपस्थितस्येति न्याये इत्यर्थः। तेन पश्चादुपस्थितस्य न निषेध इति फलितम्। व्यवहितस्य अनन्तरस्येति न्यायस्वीकारादेवेत्यर्थः। विध्यंशोदाहरणमाह—*संख्येति*। निषेधांशमाह—*नक्किचीति*। *अनन्तरस्येति*। अनेनानुनासिकस्येत्यस्य ग्रहणं न स्यादिति सूचितम्। तथा च "अनन्तरस्य" इति न्यायानङ्गीकारे अनन्तरस्य "अनुदात्तोपदेश" इत्यस्य निषेधव्यवहितस्य दीर्घस्यापि निषेधः सिद्धः। न्यायाङ्गीकारे त्वनुनासिकलोपस्यैव निषेधः स्यादिति दीर्घग्रहणं सफलमिति। एवञ्च तत्सूत्रस्थं दीर्घग्रहणमेवास्यां परिभाषायां ज्ञापकमिति सिद्धम्। *अष्टाभ्य इतीति*। तत्र सूत्रे—"औशद्याविति वक्तव्यम्। किमिदमद्याविति, अनुत्तरपद इति। किं प्रयोजनम्। इह माभूत्। अष्टपुत्रः अष्टाभार्य्यः। एवं शङ्कायामस्तु लुक् तत्र। अस्त्वत्रौश्त्वं लुग् भविष्यति। षड्भ्योऽप्येवं प्रसज्यते। इहापि तर्हि प्राप्नोति अष्टौ तिष्ठन्ति अष्टौ पश्येति। अपवादः। अपवादत्वादत्र औशत्वं लुकं बाधिष्यते। इहापि तर्हि बाधते, अष्टपुत्रः अष्टभार्य्यः यस्य विषये। यस्य लुको विषये औशत्वन्तस्यापवादः। यो वा तस्मादनन्तरः। अयं वा अनन्तरस्य लुको बाधकं भविष्यति। कुत एतत्। अनन्तरस्य विधिर्भवति प्रतिषेधो वेति" भाष्ये उक्तम्। अवश्यं लुकि प्राप्ते औशादेशविधानाद्बाध्यसामान्यचिन्तया औशादेशः "सुपो धातु" इति लुकमपि बाधेतेत्यभिप्रायेण "औशधौ" इति वार्त्तिकारम्भः। ततोऽस्तु लुगित्यस्य प्राप्नोत्वत्रौश्त्वम् लुग् भविष्यतीत्यस्य लुग्बाधको भविष्यतीत्यत्र तात्पर्य्यम्। षड्भ्य इति। यथा यत्र लुक् तथा "षड्भ्य" इति लुगप्यौशादेशं बाधेतेत्यर्थः। पुनरपि बाध्यसामान्यचिन्तयैव आह—अपवाद इति। बाध्यविशेषचिन्तयाह—यस्य विषय इति। एतेन येन कार्य्यंणावश्यं प्राप्त इति न्यायेन "षड्भ्य" इति लुक् एवापवादः। "सुपो धातु" इति लुक् तु स्यादेवेति भावः। यो वा तस्मादन्तर इति। "अनन्तरस्य" इति न्यायेन "षड्भ्यो लुक्" इत्यस्यैव लुक् औशादेशो बाधक इत्युक्तम्। तत्र मध्ये ऽपवादन्यायेन द्वितीयाध्यायविहितस्य लुको बाधा प्राप्नोतीत्याशङ्क्य नैष दोषः यत्र द्वावपि व्यवहितौ पूर्वोत्तरौ तत्र पूर्वानुभवाहितसंस्कारोपजनितस्मृत्युपारूढस्य पूर्वस्य युक्तो बाधः। इह त्वनेकाध्यायव्यवहितो द्वितीयाध्यायविहितो लुग् महता यत्नेन स्मर्तव्यः। अनन्तरस्त्वनुभवनीय इति स एव बाध्यते। एतेन "अनन्तरस्य" इति न्यायस्य प्रा-

तत्त्वप्रकाशिका।

*ङीषो विध्यभावायेति*। नच ङीपोऽनुवृत्तौ सूत्रवैयर्थ्यापत्त्या व्यवहितङीप एवानुवृत्तिर्भवतीतिज्ञापितेऽपि स्वांशे चारितार्थ्यं नेतीतिवाच्यम्। ङीपोनुवृत्तावपि ऊधःशब्दान्तात्परि-

ऽयम्। लक्ष्यानुरोधाच्च व्यवस्थेत्यपि पक्षान्तरम्। तत्र तत्र क्वचित् स्वरितत्वप्रतिज्ञासामर्थ्येन बाध्यतेऽयं न्यायः। यथा "टिड्ढा" (४-१-१५) इति सूत्रेण डापा व्यवहितस्यापि ङीपो विधिः। "नषट्" (४-१-१०) इत्यादिना द्वयोरपि टाब्ङीपोः प्रतिषेधः। इयञ्च "शि सर्वनामस्थानम्"

भैरवी

बल्यमर्थादुक्तम्। यस्तूत्तरस्तस्य स्मरणं न सम्भवति अनुभवाभावेन संस्काराभावादिति मध्येऽपवादन्यायलाभः। अत्र कैयटेन न्यायद्वयमध्ये "अनन्तरस्य" इति न्यायस्य प्रवृत्तौ युक्तिः प्रदर्शिता तेन प्राबल्यमनन्तरस्येति न्यायस्य तेनोक्तमित्याशयेन मध्येऽपवादन्यायापेक्षयानन्तरस्येति न्यायः प्रबल इति कैयट इत्युक्तम्।

केचित्तु सामान्यतः प्राबल्यं तस्य न्यायस्य तदभिमतम्। मध्येऽपवादन्यायस्य युक्तिमूलकत्वादनन्तरस्येति न्यायस्य तु ज्ञापकसाध्यत्वादित्येवं कैयटाशयं कल्पयित्वा कैयट इति कथनेनारुचिः सूचिता। द्वयोरपि न्याययोर्ज्ञापकसाध्यत्वेनार्द्धजरतीयस्यानौचित्यरूपा। मध्येऽपवादन्याये ज्ञापकं "परिमाणाख्यायां सर्वेभ्य" इति सूत्रे सर्वग्रहणं तत्र हि परिमाणाख्यायामित्यंश एकस्तण्डुलनिचाय इत्यत्र "ग्रहवृद" इत्यपो निचाय इत्यत्र "एरच्" इत्यचो बाधनार्थः। "ग्रहवृद" इति सूत्रम् "परिमाणाख्यायामेरच्" इति तु निश्चय इत्यत्र चरितार्थम्। तत्रादावकर्तरीत्यस्य प्राप्तिस्तयोराभ्यां सूत्राभ्यां बाधस्य प्रसक्तिस्तामपि परिमाणाख्यायामिति बाधत इति "परिमाणाख्यायाम्" इति सूत्रस्य स्वविषयप्राप्तसर्वबाधकत्वात्सर्वापवादत्वेनाकर्तरीत्येतदपवादत्वमपि।

यद्यपि विधेयस्यैकत्वमस्ति तथापि "परिमाणाख्यायाम्" इति सूत्रविषये तत्प्रवृत्त्या तदपवादत्वव्यवहारः। तत्र सर्वग्रहणं तस्य सर्वधातुभ्यो घञ्विधायकत्वतात्पर्य्यकम्। तच्च "परिमाणाख्यायाम्" इत्यस्य सर्वबाधकत्वाभावशङ्कायाम् "एरच्" इत्यस्यैव बाधो न किन्तु "ऋदोरप्" इत्यस्य "ग्रहवृदनिश्चि" इत्यस्यापीत्येवमर्थं कृतं, तेन द्वौ कारो द्वौ पाकाविति सिद्धम्। एतच्च मध्येऽपवादन्यायसद्भावे सति उपपद्यत इति वदन्ति। पक्षान्तरमाह—*प्रत्यासत्तीति*। "यो वा अनन्तर" इति भाष्यस्य प्रत्यासत्तावेव तात्पर्य्यमिति भावः।

नन्वेवमुभयोरपि न्याययोः समत्वेन व्यवस्था कथमत आह—*लक्ष्यानुरोधेनेति*। अत्रेदं बोध्यम्—यद्यपि कैयटस्य यो वेति भाष्यस्य द्विविधव्याख्यानमभिमतं तथापि प्रत्यासत्तिमूलक इति व्याख्यानेन निर्भरः। एतच्च लुकः समकक्षत्वमभ्युपगम्योक्तं भिन्नकक्षत्वेतौ लुकौ एकस्य सर्वत्र प्राप्त्या परस्य सर्वत्र अप्राप्तयेति तेन कथनात्। *एकस्य*। "षड्भ्य" इत्यस्य, अपरस्य "सुपो धातु" इत्यस्य, सर्वत्रेत्यभिधानेन येन नाप्राप्तन्यायेन तदपवादत्वमेवौशादेशस्य, "सुपोधातु" इति यो लुक् स तु "अन्तरङ्गानपि" इति न्यायेनौशादेशस्य बाधक इत्यत्र तात्पर्य्यमिति। तत्र। तत्सूत्रस्थकैयटे। तत्र—पूर्वोक्तव्यवस्थासिद्धौ। स्वरितत्वप्रतिज्ञानात्—स्वरितेनाधिकं कार्य्यमित्यर्थकात् स्वरितत्वात्। तत्र दृष्टान्तमाह—यथेति। यद्यपि ङीबितिपदे स्वरितत्वमुत्तरसूत्रेषु सम्बन्धार्थं तथाप्येतादृशस्यापि तत्सूत्रार्थस्य अन्यत्र दर्शनादिह तथा आश्रीयत इति भावः। सामर्थ्येनेत्यस्य उदाहरणमाह—*न षडित्यादिनेति*। षट्संज्ञकेभ्यः स्वस्रादिभ्यश्च यत्प्राप्तं तन्नेति व्याख्यानसामर्थ्यादित्यर्थः। *इयम्*। 'अनन्तरस्य' इति परिभाषा। अत्रेदं तत्त्वम्—अनन्तरस्यानन्तरोपस्थितिविषयस्य इत्यर्थः। तत्र "सङ्ख्याव्ययादेः" इति सूत्रघटकङीप्पदसादृश्यात् पदमात्रनिष्ठमेवानन्तरोपस्थितिविषयत्वमभिप्रेतमिति न आग्रहः, किन्तु पदसमुदायनिष्ठमपि

तत्त्वप्रकाशिका-

च्छेदकादेश्चेत्सङ्ख्यादेरेव असत्त्ववाचकादेर्निरुक्तबहुव्रीहेश्चेदव्ययादेवेतिसूत्रस्य नियामकत्वेन

( १-१-४१ ) इत्यादौ भाष्ये स्पष्टेत्यन्यत्र विस्तरः ॥ ६२ ॥

ननु दधतीत्यादावन्तरङ्गत्वादन्तादेशेऽल्विधौ स्थानिवत्त्वाभावाददादेशो न स्यादिति तद्वैयर्थ्यापत्तिरत आह—

## पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः ॥ ६३ ॥

लक्षणैकचक्षुष्को ह्यपवादविषयं पर्य्यालोच्य तद्विषयत्वाभावनिश्चये उत्सर्गेण तत्तल्लक्ष्यं संस्करोति । अन्यथा विकल्पापत्तिरित्यर्थः । अभिनि-

भैरवी ।

"नक्किचि" इति सूत्रस्थदीर्घग्रहणस्य "अनुदात्तोपदेश" इतिसम्पूर्णसूत्रस्यैव निषेधाभावज्ञापकत्वात् । तेनापिदित्यस्य पदसमुदायस्याप्यनन्तरपदेन संग्रह इति "अनन्तरस्य" इति न्यायापेक्षया "येन नाप्राप्त" इति न्यायः प्रबलः । "अनन्तरस्य" इति न्यायस्याष्टाध्यायीपाठलक्ष्यदर्शनोभयसापेक्षत्वात् । "येन न" इत्यस्य पाठापेक्षत्वादित्याशयेनाह—*अन्यत्रेति* ॥ ६१ ॥

अपवादप्रसङ्गादाह—*नन्विति* । *अन्तरङ्गत्वात्* । द्विर्वचनानपेक्षत्वेनान्तरङ्गत्वात् । न चैतादृशशङ्कायां "पूर्वं ह्यपवादा" इत्यस्यावतारणमयुक्तम् । यद्यपि दधतीत्यत्र द्वित्वोत्तरमद्भावस्य प्राप्तिस्तथापि जक्षतीत्यत्र द्वित्वानपेक्षत्वेन समत्वमेवेति अद्भावस्य तत्र येन नाप्राप्तन्यायेनान्तादेशापवादस्य चरितार्थतया अपवादोऽपि यद्यन्यत्र चरितार्थ इति न्यायेनान्तरङ्गान्तादेशाबाध एव स्यादिति वाच्यम् । अन्तरङ्गत्वादित्यस्य विकरणापेक्षयापरनिमित्तकत्वेन अन्तरङ्गत्वादित्यर्थात् । एवञ्च अपवादो यदीत्यस्याविषयोऽयमिति बोध्यम् । विकरणे तस्य श्लौ द्विर्वचनेऽद्भावस्य प्राप्तिरन्तादेशस्य तु पूर्वमेव प्राप्तिरित्याशयः । *तद्वैयर्थ्येति* । "अदभ्यस्तात्" इति सूत्रस्य वैयर्थ्यमित्यर्थः । न च जक्षतीत्याद्यर्थम् "अदभ्यस्तात्" इत्यावश्यकमिति वाच्यम् । तेष्वपि पूर्वोपस्थितनिमित्तकत्वेन पूर्वस्थितनिमित्तकत्वेन चान्तरङ्गत्वादन्तादेशः प्रथमतः स्यात्तथा च तत्र झत्वाभावेनाद्भावो न स्यादिति तस्य सूत्रस्य वैयर्थ्यमित्याशयात् । न चाद्ग्रहणमात्मनेपदेषु अतत इत्यर्थमावश्यकमिति वाच्यम् । तावतापि सम्पूर्णसूत्रस्य वैयर्थ्यमेवेत्यर्थात् । "पूर्वं ह्यपवादा" इत्यत्र हिशब्दो निश्चितत्वसूचकः । द्वौ न्यायौ भाष्ये तत्र तत्रोपनिबद्धौ तत्र व्यवस्थामाह—*लक्षणैकेत्यादिना* । *अन्यथा* । अपवादशास्त्रस्य यो विषयस्तद्विषयकत्वस्याप्युत्सर्गशास्त्रे स्वीकारे । *विक-

तत्त्वप्रकाशिका ।

आढकोध्नी अग्रेवणोध्नीत्यादौ ङीषभावाय सूत्रस्य सार्थक्यात् ॥ ६२ ॥

*तद्वैयर्थ्यापत्तिरिति* । नच जक्षतीत्यादौ अदादेशस्य चारितार्थ्यमितिवाच्यम् । आयन्नादिपूपदेशिवद्वचनमिति सूत्रे उपदेशिवद्भावेनात्रापि पूर्वमेवान्तादेशप्रवृत्त्या तद्वैयर्थ्यस्य स्पष्टत्वात् । नचैवमपि अत्रापि उपदेशिवद्वचनमस्तीतिसूत्र एव अन्तादेशं बाधित्वा अदादेशो भवतीत्यवतरणासङ्गतिरितिवाच्यम् । आयन्नादिपूपदेशिवद्वचनं स्वरसिद्ध्यर्थमितिवार्त्तिके स्वरसिद्धिरूपप्रयोजनोपन्यासेन अभ्यस्तविषये अभ्यस्तानामादिरितिस्वरप्रवृत्त्या आद्युदात्तरूपप्रयोजनाभावेन तद्वार्तिकाप्रवृत्तेः । *विकल्पापत्तिरिति* । अयंभावः असति बाधके उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वय इतिसिद्धान्तः । अवच्छेदकावच्छेदेन विधेयान्वय इत्यस्य उद्देश्यतावच्छेदकव्यापकत्वं विधेये विधेयतावच्छेदकसंसर्गमपदिश्यानियमतो भासत इतीत्यर्थः । तथाच-अपवादशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वेन उत्सर्गशास्त्रीयोद्देशतावच्छेदकावच्छिन्ने सङ्कोचाभावे अपवादोत्सर्गयोरुभयत्रापि उद्देश्यतावच्छेदकत्वस्य विधेये

विशन्त इत्यस्य बुद्ध्यारूढा भवन्तीत्यर्थः। "अपवादो यद्यन्यत्र चरितार्थः" (पृ० ६६) इति न्यायस्य तु नात्र प्राप्तिरन्तादेशाप्राप्तिविषये चारितार्थ्याभावात्॥ ६३॥

लक्ष्यैकचक्षुष्कस्तु तच्छास्त्रपर्यालोचनं विनापि अपवादविषयं परित्यज्योत्सर्गेण लक्ष्यं संस्करोति तस्यापि शास्त्रप्रक्रियास्मरणपूर्वकप्रयोग एव धर्मोत्पत्तेः तदाह—

**प्रकल्प्य चापवादविषयं तत उत्सर्गोऽभिनिविशते॥ ६४॥**

तत इत्यस्यापवादशास्त्रपर्यालोचनात् प्रागपीत्यर्थः। प्रकल्प्येत्यस्य परित्यज्येत्यर्थः।

अत एव प्रातिपदिकार्थसूत्रे भाष्ये इदं द्वयमप्युक्त्वा न कदाचित्तावदुत्सर्गो भवत्यपवादं तावत् प्रतीक्षत इत्यर्थकमुक्तम्।

एतन्मूलकमेव नवीनाः पठन्ति—

भैरवी।

ल्पापत्तिरिति*। अस्य तस्मिन् विषये इत्यादिः। शास्त्रे उद्देश्यतावच्छेदकव्यापकप्रवृत्तिकत्वं न्याय्यमिति भावः। *बुद्ध्यारूढा इति*। एवञ्च अपवादस्य प्राथमिकबुद्धिविषयत्वेऽप्युत्सर्गस्य विषयेऽपवादविषयभिन्नत्वनिश्चये सत्युत्सर्गशास्त्रोद्देश्यतावच्छेदकस्य विलक्षणस्य व्यापिका एतत्प्रवृत्तिरिति न विकल्पापत्तिरिति। एवञ्चोत्सर्गप्रवृत्तौ अपवादज्ञानं कारणमिति भावः। एवञ्च अपवादोऽपीति न्यायस्याविषयोऽयमित्याह—*अपवादोऽपीति। यथाकथञ्चिदपवादविषयत्वं ज्ञात्वा तत उत्सर्गबुद्धिर्निवर्तते अन्यत्र तु सा कर्तव्येऽपि फलति। *अत्र*। दधतीत्यत्र न॥ ६२॥

द्वितीयमवतारयति-*लक्ष्यैकेति*।*तच्छास्त्रेति*। अपवादशास्त्रेत्यर्थः। ननु यदि लक्ष्यैकचक्षुष्कस्य लक्षणापेक्षैव न, तदोत्सर्गेण संस्कारकरणं किमर्थमत आह-*तस्यापीति*। अपिशब्देन लक्षणैकचक्षुष्कसङ्ग्रहः। "एकः शब्दः सम्यग्ज्ञातः शास्त्रान्वितः स्वर्गे लोके च कामधुग् भवतीति शास्त्रान्वितत्वेन भाष्यकृता प्रतिपादनादिति भावः। उक्तरीत्या न्यायद्वयस्य विषयभेदात् यत्कश्चिदपवादेनोत्सर्गस्य बाधाविशेषादेकेनैव सिद्धे पक्षद्वयोपन्यासोऽनुचित इत्याह-तन्निरस्तमिति बोध्यम्। "प्रकल्प्य" इति वचने ल्यपउच्चारणेनैवानन्तर्यस्य लाभे तत इत्यस्य वैयर्थ्यमत आह-*तत इत्यस्येति। तच्छब्दस्य प्रक्रान्तपरामर्शकत्वादेतादृशार्थलाभः। *अभिनिविशते*। प्रवर्तते। एवञ्च नैत्रादिः कर्त्ता अपवादविषयं स्वयमेव त्यक्त्वोत्सर्गेण लक्ष्यं संस्करोति। एवञ्च एतावानत्र विशेषः। लक्षणैकचक्षुष्केण पूर्वन्यायविषये सर्वत्र प्राप्तस्योत्सर्गस्यापवादेन बुद्ध्यारूढेन विषयविशेषात् निवृत्तिः सम्पाद्यतेऽत्र तु प्रागेव तादृशी बुद्धिरिति॥ ६३॥

*अतएव*। न्यायद्वयस्योक्तरीत्या विशेषार्थबोधकत्वेऽपि फलतो विलक्षणार्थतात्पर्यकत्वादेव। *तावत्। आदौ। इत्यर्थकमिति*। वाक्यान्तरमिति शेषः यथा न तावदत्र तिङादेशो भवति अपवादौ तावच्छतृशानचौ प्रतीक्षेते इति। यदि द्वयोर्न्याययोर्भिन्नार्थत्वं स्यात्तदोपसंहारद्वयं कुर्यादिति भावः। *एतन्मूलकमेव*। फलितमूलकमेव। ऋष्यसम्मतत्वज्ञापनाय-*नवीना इति*। दीक्षितादय इत्यर्थः, दधतीत्यस्य साधनायेति शेषः। द्वितीयवचनस्य

तत्त्वप्रकाशिका।

नियमतो भानेन अन्यतरत्वादिना व्यापकतावच्छेदकत्वेतिविकल्पोपपत्तिरिति। *चारितार्थ्याभावादिति*। अत्रापि शङ्कासमाधानादिकं पूर्ववद्बोध्यम्॥ ६३॥

## उपसंजनिष्यमाणनिमित्तोऽप्यपवाद उपसंजातनिमित्तमप्युत्सर्गं बाधत इति ॥ ६५ ॥

यत्तु अभ्यस्तसंज्ञासूत्रे कैयटेन प्रकल्प्य चेति प्रतीकमुपादाय यथा "न सम्प्रसारणे" (६-१-३७) इति परस्य यणः पूर्वं सम्प्रसारणं पूर्वस्य तु तन्निमित्तः प्रतिषेध इत्युक्तं तत्तु तत उत्सर्ग इत्याद्युत्तरानानुगुणम्।

यत्तु अपवादवाक्यार्थं विना नोत्सर्गवाक्यार्थ इति तदर्थ इति तन्न। अभिनिविशतेऽपवादविषयमित्यादिपदस्वारस्य भङ्गापत्तेः। पदजन्यपदार्थोपस्थितौ वाक्यार्थबोधाभावे कारणाभावाच्च। यत्र त्वपवादो निषिद्धस्तत्रापवादविषयेऽप्युत्सर्गः प्रवर्त्तत एव। यथा वृत्तावित्यत्र "नादिचि" (६-१-१०४) इति पूर्वसवर्णदीर्घनिषेधनात् प्रवर्तमानस्य वृद्धिबाधकत्वाभावाद्वृद्धिः प्रवर्त्तते। अतएव "तौ सत्" (३-२-१२७) इत्यादि सङ्गच्छते। अत एव निर्देशाद्ध् भ्रष्टावसरन्यायस्यात्र शास्त्रेऽनाश्रयणम्। ध्वनितं चेदं "इको गुण" (१-१-३) इति सूत्रे भाष्ये इति भाष्यप्रदीपोद्द्योते निरूपितम्। अत्र देवदत्तस्य हन्तरि हते देवदत्तस्य उन्मज्जनं नेति न्यायस्य

भैरवी।

अन्यकल्पितमर्थं निरस्यति-*यत्त्विति*। एतन्मते प्रकल्प्येत्यस्यापवादविषयकल्पनां कृत्वा तथोत्सर्गशास्त्रं प्रवर्तते यथापवादस्य प्रवृत्तिः स्यादित्यर्थः। *इतीति*। इति बुद्धिस्थे सतीत्यर्थः। *सम्प्रसारणमिति*। प्रवर्तते इति शेषः। एवञ्च विद्ध इत्यादावन्त्यस्य यणः पूर्वं सम्प्रसारणं भवतीति सिद्धम्। *तत्तु*। कैयटोक्तन्तु। *अननुगुणमिति*। एतच्च स्पष्टमेव। आदिना वेत्यस्य प्रकल्प्येत्यस्य च परिग्रहः। किञ्च भगवता "न सम्प्रसारणे सम्प्रसारणम्" इति ज्ञापकादन्त्यस्य यणः पूर्वं सम्प्रसारणं भवतीत्ययमर्थो बोधितो न तु न्यायेनेत्यस्य तादृशार्थकत्वं न युक्तमिति भावः। द्वितीयवचनस्य अन्यकृतमर्थान्तरं निरस्यति-*यत्र त्वपवादेति*। एतादृशस्यार्थस्य सम्भव एव नेत्याह-*पदजन्येत्यादिना*। एवञ्च उपात्ताक्षरार्थाभावेऽपि तत्तात्पर्यार्थोऽपि नेति फलितम्। उक्तन्यायद्वयस्थलेऽपवाद विषयता फलोपहिता विवक्षितेति वक्तुमाह-*यत्रेति*। *अतएव*। फलोपहितापवादविषयताया आश्रयणादेव। *अत एव निर्देशात्*। "तौ सत" इत्यादिनिर्देशात्। एतेन उक्तार्थे सूत्रकारस्य सम्मतिर्दर्शिता। भाष्यकारस्यापि सम्मतिं दर्शयति-*ध्वनितमिति*। तत्र हि वृद्धिग्रहणाभाव अभैत्सीदित्यत्र हलन्तलक्षणवृद्धेर्बाधकत्वेऽकोषीदित्यादौ प्रथमप्राप्तगुणस्य स्वबाधकवृद्धिविषयेऽपि प्रवृत्तिः। "तौ सत्" इति निर्देशोपपादनेन कृता वृद्धेस्तु बाध्यसामान्यचिन्तापक्षे "सिचि वृद्धिः" इति सूत्रविहिताया बाधकहलन्तलक्षणाया नेटीति प्रतिषेध इत्युक्तम्। देवदत्तस्य हन्तरि हते देवदत्तस्य न उन्मज्जनमित्यस्य तु विषय एव नास्तीत्याह-*अत्र देवदत्तस्येति*। प्रतिपदोक्तस्य बलवत्त्वं सामान्येन कश्चिदाह तन्न युक्तं किन्तु स्थलविशेष एवेति

तत्त्वप्रकाशिका।

*उपसञ्जनिष्यमाणनिमित्त इति*। उत्सर्गशास्त्रप्रवृत्त्यभावसम्भावनाप्रयोज्यापवादशास्त्रप्रवृत्तिसभावनाबाधकत्वे बीजम्। अनेन च भविष्यदपवादविषयातिरिक्तत्वेन सङ्कोचो भवति। तथाच-अभ्यस्तात्परत्वेन संभावितो यो यः तदतिरिक्तस्यैव झस्य अन्तादेश इति दधतीत्यादौ न दोषः। *अनाश्रयणमिति*। वस्तुतस्तु भ्रष्टावसरन्यायस्य नात्रविषय इति लेखनीयम्। शास्त्रस्यावसरो नाम तदीयोद्देश्यतावच्छेदकाक्रान्तिः। तथाच-वृक्ष औ

विषय एव नास्ति। हते देवदत्त उन्मज्जनं न। देवदत्तहननोद्यतस्य तु हनने भवत्येवोन्मज्जनम्। प्रकृतेऽपि न पूर्वसवर्णदीर्घेण वृद्धेर्हननं किन्तु हननोद्यमसजातीयं प्रसक्तिमात्रं प्रसक्तस्यैव निषेधात्। प्रतिपदोक्तत्वमपि निरवकाशत्वे सत्येव बाधप्रयोजकम्। स्पष्टं चेदं "शेषाद्विभाषा" (५-४-१५४) इति सूत्रे भाष्ये। तत्र हि-शेषग्रहणमनर्थकं ये प्रतिपदं विधीयन्ते ते बाधका भविष्यन्तीत्याशङ्क्यानवकाशा हि विधयो बाधका भवन्ति समासान्ताश्च कबभावे सावकाशा इत्युक्तम्। क्वचिदनवकाशत्वाभावेऽपि परनित्यादिसमवधाने शीघ्रोपस्थितिकत्वेन पूर्वप्रवृत्तिप्रयोजकं बलवत्त्वं प्रतिपदविधित्वेनापि। परनित्यान्तरङ्गप्रतिपदविधयो विरोधिसन्निपाते तेषां मिथःप्रसङ्गे परबलीयस्त्वमिति "प्रत्ययोत्तरपदयोश्च" (७-२-९८) इति सूत्रे कैयटेन

भैरवी।

सिद्धान्तस्तं दर्शयति-*प्रतिपदोक्तत्वमपीति*। अत्र प्रतिपदोक्तत्वं पदविशेषमुच्चार्य विहितत्वमात्रं न तु प्रागुक्तम्। यथा ऋग्भिन्ने स्त्र्यर्थे चरितार्थस्य "पादोऽन्यतरस्याम्" इत्यस्य ऋच्यभिधेयायां प्राप्तस्य "टाबृचि" इत्येनेन बाध इति। एवञ्च सूत्ररीत्या ऋग्भिन्ने स्त्र्यर्थे द्विपदी द्विपादित्येव, भाष्यकृता तु "टाबृचि" इत्यस्य प्रत्याख्यानं ध्वनितम्।

तथाहि-ङ्याब्ग्रहणं किमर्थमिति प्रघट्टके कुञ्चा देवविशेति ङ्याब्ग्रहणस्य प्रयोजनमुक्त्वा अत्रापि आकारान्तादेव टाप् तत्रापि पूर्वान्तवद्भावेन सिद्धमित्यनेन तत्खण्डने कृते "पादोऽन्यतरस्याम्" "टाबृचि" इति प्रयोजनमुक्त्वा पादशब्दसमानार्थकाकारान्तपदशब्दमाश्रित्य तत्प्रत्याख्यातम्। न चैवं द्विपदेत्यस्य सिद्धावपि द्विपदी द्विपादित्यपि प्राप्नोतीति वाच्यम्। फलभेदे प्रत्याख्यानासम्भवेन "टाबृचि" इत्यस्यारम्भेऽपि तत्र अन्यतरस्यामित्यनुवर्त्य रूपत्रयं बोध्यमिति। स्पष्टञ्चेदमिति*। निरवकाशत्वम् एव बाधकत्वप्रयोजकं तदिति स्फुटमित्यर्थः। एतेन प्रतिपदोक्तत्वस्य भवदुक्तरीत्या बाधप्रयोजकत्वस्वीकारे प्रागुक्तेषु अस्या पाठान्न्यूनतेति निरस्तम्। अपवाद एवान्तर्भावात्। *शेषग्रहणमिति*। समासान्तापेक्षया शेषत्वस्य ग्रहणमित्यर्थकं शेषग्रहणमित्यर्थः। *सावकाशा इति*। ननु तत्र चारितार्थ्येऽपि येन नाप्राप्तन्यायस्य यद्बीजं तदप्राप्तियोग्ये विषये चारितार्थ्यं तत्त्वस्त्येवेति भाष्यासङ्गतिरिति चेन्न। अस्मादेव भाष्यात् प्रतिपदोक्तत्वस्य येन नाप्राप्तन्यायमूलकापवादत्वे नान्तर्भावः, किन्तु निरवकाशत्व एवेति कल्पनात्।

ननु प्रतिपदोक्तस्य नित्यस्य बाधकत्वमस्तु वैकल्पिकस्य तस्य तु बाधकत्वाभाव एव प्राप्नोति, स्वाभावे प्राप्तस्य कपस्तेनावारणादत आह-*क्वचिदनवेति*। एवञ्च प्रतिपदविधित्वेन शीघ्रोपस्थितिकत्वं तेन तस्य पूर्वं प्रवृत्तिरित्येव कल्प्यते। अत्र मानमाह-*परनित्येति। विरोधिसन्निपात इति*। विरोधिनोः शास्त्रयोः सन्निपात एकत्र लक्ष्ये युगपत्प्राप्तौ परादिक्रमेण ते भवन्तीति शेषः। *तेषाम्*। परादीनाम्। संग्राहकवाक्यपठितानामेव युगपत्प्राप्तावित्यर्थः। *परबलीयस्त्वमिति*। सङ्ग्राहकवाक्यपाठेन येषां परत्वं तेषां बलीयस्त्वमित्यर्थः।

ननु कैयटेन तथा पाठेऽपि भाष्यात् प्रतिपदविधित्वस्य पूर्वप्रवृत्तिनियामकत्वं न लब्ध-

तत्त्वप्रकाशिका।

इत्यस्यां दशायां "वृद्धिरेचि" इत्येतदुद्देश्यतावच्छेदकाक्रान्तेः सत्त्वेन अवसरभ्रंशाभावात्। *कैयटेन पाठादिति*। वस्तुतस्तु अपवादस्थाने प्रतिपदविधिपाठेन नायं कैयटोऽर्थसाधकः।

पाठात् । अत एव रमे इत्यादौ प्रतिपदोक्तत्वात् पूर्वमेत्व आकारप्रश्लेषाद्धल्ङ्याादिलोपो न प्राप्नोतीत्याशङ्क्य "एङ्ह्रस्वात्" (६-१-६९) इति लोपेन समाहितम् ॥ ६५ ॥

नन्वयजे इन्द्रमित्यादावन्तरङ्गस्यापि गुणस्यापवादेन सवर्णदीर्घेण बाधः स्यादत आह—

## अपवादो यद्यन्यत्र चरितार्थस्तर्ह्यन्तरङ्गेण बाध्यते ॥ ६६ ॥

निरवकाशत्वरूपस्य बाधकत्वबीजस्याभावात् । एवं च प्रकृतेऽन्तरङ्गेण गुणेन सवर्णदीर्घः समानाश्रये चरितार्थो यणगुणयोरपवादोऽपि बाध्यते । पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्गत्वविषय इदम् ।

यत्तु आगमादेशयोर्न बाध्यबाधकभावो भिन्नफलत्वादत एव ब्राह्मणेभ्यो दधि दीयतां कम्बलः कौण्डिन्यायेत्यादौ कम्बलेन न दधिदानबाध इति "च्छ्वोः" (६-४-१९) इति सूत्रे कैयटस्तन्न । अपवादो नुग्दीर्घत्वस्येति

भैरवी ।

मिति भाष्यानुग्रह एवेत्यत आह-*अतएवेति* । प्रतिपदोक्तत्वस्य पूर्वप्रवृत्तिनियामकत्वादेव । *प्रतिपदोक्तत्वादिति* । सम्बुद्धिपदोपादानेन अस्य तत्त्वम् ॥ ६५ ॥

*अन्तरङ्गस्य* । पूर्वोपस्थितनिमित्तकत्वेनान्तरङ्गस्य । एतेन पूर्वसङ्गतिलाभः । *अपवादेन* । बाध्यसामान्यचिन्तयापवादेन अनवकाशत्वरूपापवादत्वविशिष्टेनेत्यर्थः । *समानाश्रये* । दण्डाग्रम्, दधीदमित्यादौ ।

अयं भावः-अत्र समाने स्थानिनि निमित्ते च सर्वथा अनवकाशत्वेन यण्गुणौ बाधित्वा सवर्णदीर्घं तयोरुभावपि भिन्नस्थानिनिमित्तकेऽयज इ इन्द्रमित्यादौ कृतेऽपि यणादेशे स्थानिवत्त्वेन दीर्घस्य प्राप्त्या न सर्वथा अनवकाशत्वमिति तद्प्राप्तियोग्ये विषयेऽचारितार्थ्यरूपापवादत्वमेव यस्य बीजं तस्य येन नाप्राप्तन्यायस्य यद्यपि सम्भवस्तथापि अन्तरङ्गेण बाध्यते "विप्रतिषेध"सूत्रे भाष्यकृता तुल्यस्थानिनिमित्तकयोरेव परस्परबाध्यबाधकभावस्याङ्गीकारात् । *एवञ्च* । तादृशबीजाभावे च । *प्रकृते* । अयज इ इन्द्रमित्यादौ । *पूर्वोपस्थितेति* । एतेन यत्रान्तरङ्गत्वमन्यादृशं तत्रापवादेनैव बाध इति भावः ।

कैयटमतं निरसितुमाह—*यत्त्विति* । *भिन्नफलत्वादिति* । फलमत्र यदर्थशास्त्रप्रवृत्तिस्तद्रूपं ग्राह्यं, तच्च नैतयोः आदेशो हि स्थानिनिवर्त्तकः, आगमस्तु नागमिनिवर्त्तकः । यथा दृष्टान्ते दधिदानस्यौदनसंस्कारः फलं कम्बलदानस्य तु शीतनिवारणमिति भिन्नफलत्वं

तत्त्वप्रकाशिका ।

*पूर्वमेत्व इति* । तद्प्राप्तियोग्ये अचारितार्थ्यरूपबाधबीजस्य "सम्बुद्धौ च" इत्यत्र सत्वादितिभावः ॥ ६५ ॥

*गुणस्यापवादेनेति* । नचातिदित्यादौ यणि कर्तव्ये सिज्लोपस्यासिद्धत्वेन यणोऽप्राप्त्या तत्र सवर्णदीर्घं चारितार्थ्यमितिवाच्यम् । "सिज्लोप एकादेश"इति वार्त्तिके एकादेशपदं यणोऽप्युपलक्षणमितिस्वीकारेणापवादत्वस्य सुस्थत्वात्, "इट ईटि" इत्येव सिद्धे "अकः सवर्णे" इतिसामान्यसूत्रकरणेन यण्गुणापवादत्वस्य निर्णेतुं शक्यत्वात् । *बाधकत्वबीजस्याभावादिति* । चिन्त्यमिदम्—निरवकाशत्वरूपबाधबीजाभावे त्वस्यैव भङ्गापत्तेः । अत्रेदन्तत्वम्

"दीर्घोऽकितः" ( ७-४-८३ ) इति सूत्रस्थभाष्यविरोधात् ॥ ६६ ॥

ननु अजीगणदित्यादौ गणेरीत्वं निरवकाशत्वाद्धलादिः शेषं बाधते तत्राह—

**अभ्यासविकारेषु बाध्यबाधकभावो नास्ति ॥ ६७ ॥**

"दीर्घोऽकितः" ( ७-४-८३ ) इत्यकिद्ग्रहणमस्या ज्ञापकम् । अन्यथा यंयम्यत इत्यत्र नुकि कृतेऽनजन्तत्वाद्दीर्घाप्राप्तौ तद्वैयर्थ्यं स्पष्टमेव । इयं परान्तरङ्गादिबोधकानामप्यबाधकत्वबोधिका । तेन अचीकरत्, मीमांसत इत्यादिसिद्धम् । आद्ये सन्वद्भावस्य परत्वाद्दीर्घेण बाधः प्राप्नोति । अन्त्ये

भैरवी ।

प्रसिद्धम् । आगमादेशयोः प्रयोगसिद्धिरूपैकफलमादाय समानफलकत्वञ्चेत् दृष्टान्तेऽपि शरीररक्षणरूपैकफलमादाय समानफलत्वात् दृष्टान्तासङ्गतिः स्यात् । *"च्छ्वोः" इति सूत्र इति* । तत्र हि—भाष्ये ऊठ्ष्टित्वाभिप्रायेण अथ ऊडादिः कस्मात् न भवति । आदिष्टिद्भवतीति प्राप्नोति कस्य पुनरादिर्विकारस्य, अस्तु वकारस्यादिः । का प्रतिपत्तिः "लोपोव्योर्वलि" इति लोपो भविष्यति । नैवं शङ्क्यम् । "ज्वरत्वर" इति द्वौ ऊठौ स्यातामित्युक्तम् । एतद्भाष्योक्तस्य वर्णनसमये यद्यादेशागमयोरपि बाध्यबाधकभावः स्यात्तदा नाप्राप्ते वलो लोपे आरभ्यमाण ऊडागमस्तस्य बाधको भविष्यतीत्युक्तम् । यद्यागमस्यापवादत्वेन वलोपबाधकता स्यात्तदा वलोपो भविष्यतीति ग्रन्थस्यासङ्गतिः स्यादत आगमादेशयोर्न बाध्यबाधकभाव इति । आगमादेशयोरपि "दीर्घोऽकितः" इति सूत्रस्थभाष्यप्रामाण्येन तत्त्वं स्वीक्रियत एव । "च्छ्वोः" इति सूत्रस्थभाष्यन्तु पूर्वपक्ष्युक्तत्वात् न लक्ष्यसंस्कारकमिति सिद्धान्ताशयेनाह—*तत्रेति* ॥ ६६ ॥

अपवादप्रसङ्गादाह—*ननु अजीगणदित्यादि* । *निरवकाशत्वादिति* । अलोऽन्त्यपरिभाषैकवाक्यतया गणरूपाभ्यासान्त्यणस्येत्वमित्यर्थकस्य च "गण" इति सूत्रस्य निरवकाशत्वादित्यर्थः । *अभ्यासविकार इत्यादि* । न च दीर्घस्य नुकश्च युगपत्प्रवृत्तेः सम्भवोऽस्त्येवेत्यकिद्ग्रहणञ्चरितार्थमिति वाच्यम् । एवमपि दीर्घाप्राप्तियोग्ये विषयेऽचारितार्थ्यमस्त्येवेति तस्य ज्ञापकत्वसम्भवात् । *अनजन्तत्वादिति* । "अचश्च" इति परिभाषयाऽजन्तस्यैव दीर्घविधानादिति भावः । अस्यां परिभाषायां बाध्यबाधकभावपदं न प्रक्रान्तापवादत्वप्रयुक्तबाध्यबाधकभावपरं किन्तु अन्यपरमपीत्याशयेन आह—*इयं चेति* । *परान्तरङ्गादीति* । अत एवाभ्यासविकारेषु अपवादा उत्सर्गान् न बाधन्त इति नोक्तम् । *आद्ये* । अचीकरदित्यत्र । *सन्वद्भावेत्यादि* । सन्वद्भावावकाशः, अचिक्षणत् सन्वद्भावविषये विधीयमानस्य दीर्घस्य तु अदीदयदित्यत्र चारितार्थ्यम् । *बाध इति* । यदि पूर्वं दीर्घः स्यात्तदा सकृद्गतिन्यायेन सन्वद्भावबाधेन निमित्ताभावादित्वं न स्यात् । न च पुनः प्रसङ्गविज्ञानेन सन्वद्भावो भविष्यतीति वाच्यम् । एवमपि "सन्यत" इति तपरत्वेनेत्वं न स्यादिति भावः ।

तत्त्वप्रकाशिका ।

अन्तरङ्गपरिभाषादिबाधमकृत्वा केवलोत्सर्गबाधेन यत्रापवादशास्त्रस्य चारितार्थ्यं सम्भवति तत्रान्तरङ्गपरिभाषाबाधे मानाभावोऽस्या बीजम् । अथवा तदप्राप्तियोग्ये अचारितार्थ्यकृते अचारितार्थ्यमितिबीजद्वयसत्त्वेन स्वप्रवृत्तियोग्यो यः स्वीयोद्देश्यतावच्छेदकावच्छिन्नः तदतिरिक्तत्वेन सङ्कोचे क्रियमाणेऽपि यद्युत्सर्गप्राप्तिरस्ति तर्हि सम्भवत्येवेत्येतत्परिभाषायां बीजम् ॥ ६६ ॥

अकिद्ग्रहणमस्यां ज्ञापकमिति* । नच यंयम्यत इत्यादौ अकिद्ग्रहणाभावे दीर्घं बाधित्वा

"मान्बध" ( ३-१-६ ) इति दीर्घेणान्तरङ्गत्वादित्त्वस्य बाधः प्राप्तः ।

यत्तु यत्रैकैकप्रवृत्त्युत्तरमपि सर्वेषां प्रवृत्तिस्तत्रैवैतत्प्रवृत्तिरिति "अत एक" (६-४-१२०) इति सूत्रे कैयटस्तन्न। नुकि कृते दीर्घाप्राप्त्या धर्मिग्राहकमानविरोधान्मान्बधादीनां दीर्घे कृते इत्त्वाप्राप्त्या "गुणो यङ्लुकोः" (७-४-८२) इति सूत्रस्थभाष्योक्ततदुदाहरणासङ्गतेश्चेति अन्यत्र विस्तरः॥६७॥

ननु तच्छीलादितृन्विषये ण्वुलपि स्यात् । न च तृन्नपवादोऽसरूपा-

भैरवी ।

*दीर्घेणान्तरङ्गत्वादिति* । सन्प्रत्ययसन्नियोगेन विधानाद्दीर्घस्यान्तरङ्गत्वम् । न च एकसूत्रेण उभयोर्विधानेऽप्यभ्यासाभावेन दीर्घाप्राप्त्या कथमत्रान्तरङ्गत्वमिति वाच्यम् । अभ्याससंज्ञाप्रवृत्तिपर्यन्तं तदप्राप्तावपि दीर्घस्यापरनिमित्तकत्वेनान्तरङ्गत्वम् , इत्वन्तु सनि परतो विधानाद्बहिरङ्गम् । *एकैकेति* । उत्सर्गस्यापवादस्य वा । यथा नवर्तीत्यत्रोरदत्वरुगादीनाम् । रुगादिषु चोरदत्वस्य । *एतत्प्रवृत्तिः* । अभ्यासविकार इति वचनस्य प्रवृत्तिः । ज्ञापकसिद्धत्वेनासार्वत्रिकत्वादेतत्परिभाषाया अप्रवृत्तौ परत्वादुरदत्वेनात्र रुकोऽबाध इति त्वन्यत् । *"अत एक"इति सूत्र इति*। तत्सूत्रभाष्ये णकारषकारादेरेत्वं लिटि वक्तव्यम्। नेमतुः नेमुः । सेहे सेहाते । किं पुनः कारणं न सिध्यति। अनादेशादेरिति प्रतिषेधः प्राप्नोति तत् तर्हि वक्तव्यम् । न वक्तव्यम् लिटा अत्र आदेशादि विशेषयिष्यामः । लिटि य आदेशादिः तदादेर्नेति । अस्त्यन्यल्लिड्ग्रहणस्य प्रयोजनं पक्त्वा पक्तुम् । नैतदस्ति । क्ङितीति वर्त्तते । एवमपि पक्तः पक्ववानित्यत्र प्राप्नोति । अभ्यासलोपसन्नियोगेन एत्वमुच्यते, न चात्राभ्यासलोपं पश्यामः, एवमपि पापच्यतेऽत्र प्राप्नोति। दीर्घत्वमत्र बाधकं भविष्यति । नाप्राप्तेऽभ्यासविकारे एत्वमारभ्यते। तद्यथा—अन्यानभ्यासविकारान् बाधते एवं दीर्घत्वमपि बाधेत । अभ्यासविकारेषु अपि ज्येष्ठमध्यमकनीयांसः प्रकारा भवन्ति । ह्रस्वहलादिः शेषावुत्सर्गौ । तयोर्दीर्घत्वमपवाद एवञ्चेत्याद्युक्तम् । *दीर्घत्वमात्रेति* । 'अभ्यासविकारेषु बाधका न बाधन्ते' इत्येतत्तु यत्र सर्वेषां प्रवृत्तिस्तत्राश्रीयत इति कैयटः । एत्वाभ्यासलोपयोः कृतयोर्दीर्घत्वाप्रसङ्ग इति विरुद्धत्वादबाधकत्वाभाव इति । *धर्मिग्राहकमानेति* । बाध्यबाधकभावाभावबोधकत्वं धर्म्मः सोऽस्ति यस्मिन् वचने तद्ग्राहकम् यन्मानं, तद्विरोधादित्यर्थः । एवमेवान्यत्र व्याख्येयम् । ननु पूर्वोक्तभाष्यान्यथानुपपत्त्या तथार्थः कल्प्यते इति चेत् ज्ञापकसिद्धस्यासार्वत्रिकत्वाभिप्रायेण भाष्ये तथोक्तिसम्भवादिति ॥ ६७ ॥

अपवादप्रसङ्गादाह—*ननु ताच्छीलादीति* । *तृन्नपवाद इति* । अर्थविशेषे विधानेन

तत्त्वप्रकाशिका ।

नुक्यपि पश्चाद्दीर्घवारणायाकिद्ग्रहणं चरितार्थमितिवाच्यम्, तदप्राप्तियोग्येऽचारितार्थ्यविशिष्टकृते चारितार्थ्यस्य नुकि सत्वेन तक्रकौण्डिन्यन्यायेन दीर्घबाधे पुनर्दीर्घाप्रवृत्त्या अकिद्ग्रहण. वैयर्थ्यात् । नच दीर्घे कृते अत इति तपरकरणेन नुकोऽप्राप्त्या कृते चारितार्थ्यं नास्तीतिवाच्यम्, अभ्यासे सर्वत्र ह्रस्वे तपरकरणवैयर्थ्येन तस्य औपदेशिकदीर्घे व्यावृत्तेरव बाभाम्यत इत्यादौ फलत्वेन कृते चारितार्थ्यस्य सत्वात् ।

यत्तु अनेनाकिद्ग्रहणेन अभ्यासविकारेषु वैयधिकरण्यान्वयोऽपि ज्ञाप्यत इति, तन्न, परिभाषाज्ञापनेन चारितार्थ्येन वैयधिकरण्यान्वयज्ञापनासम्भवात् । न च परिभाषाज्ञापनं वैयधिकरण्यान्वयो वेत्यत्र विनिगमनाविरहादुभयमपि ज्ञाप्यत इतिवाच्यम्, वैयधिकरण्यान्वयज्ञापनेऽपि तक्रन्यायेन नुका दीर्घबाधेऽकिद्ग्रहणवैयर्थ्यस्य तदवस्थत्वात् । नच

पवादस्य विकल्पेन बाधकत्वात् । अत आह—

**ताच्छीलिकेषु वासरूपविधिर्नास्ति ॥ ६८ ॥**

ण्वुलि सिद्धे "निन्दहिंसादि" सूत्रेणैकाजभ्यो वुञ्विधानमत्र ज्ञापकं तत्र ण्वुल्वुञोः स्वरे विशेषाभावात् । ताच्छीलिकेष्विति विषयसप्तमी । तेन ताच्छीलिकैरताच्छीलिकैश्च वासरूपविधिर्नेति बोध्यम् ॥

नन्वेवं कम्रा कमनेत्याद्यसिद्धिः "नमिकम्पि" ( ३-२-१६७ ) इति रेण "अनुदात्तेतश्च हलादेः" ( ३-२-१४९ ) इति युचो बाधादिति चेत् न । "सूददीपदीक्षश्च" ( ३-२-१५३ ) इत्यनेन दीपेर्युञ्निषेधेनोक्तार्थस्यानित्यत्वात् ॥ ६८ ॥

नन्वेवं हसितं छात्रस्य हसनमित्यादौ घञिच्छति भोक्तुमित्यत्र लिङ्लोटावीषत्पानः सोमो भवतेत्यत्र खल् प्राप्नोतीत्यत आह—

**क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नास्ति ॥ ६९ ॥**

भैरवी ।

अस्य अपवादत्वं द्रष्टव्यम् । *ण्वुलि सिद्धे इति* । करणस्याधिकरणत्वविवक्षया सप्तमी । ननु ताच्छीलिकेषु इत्यधिकरणसप्तम्युपादानादुत्सर्गापवादयोरुभयोस्ताच्छीलिकत्वे एतत्परिभाषाप्रवृत्तिरुत अपवादस्यैव । आद्ये उक्तज्ञापकासङ्गतिः उत्सर्गस्य अताच्छीलिकत्वात् स्वविषये चारितार्थ्यासम्भवात् ।

किञ्च "पदेरनुदात्तेतश्च"इत्यनेन युचि सिद्धे "जुचङ्क्रम्य"इति सूत्रेण ताच्छीलिकेषु परस्परं वासरूपविध्यभावस्योक्तसाधनार्थं पदधातोर्विहितेन युचा ज्ञापनात्तेनैव सिद्धावस्य वैयर्थ्यापत्तिश्च ।

किञ्चाऽलङ्करिष्णुरितिवदलङ्कारक इत्यपि स्यादन्त्ये "जुचङ्क्रम्य" इति सूत्रे पदिग्रहणवैयर्थ्यापत्तिरुभयोस्ताच्छीलिकत्वादत आह—*ताच्छीलिक इत्यादिना* । ताच्छीलिकप्रत्ययविषयता च द्वयोर्न त्वेकस्यैव । एवञ्च प्रकृते उत्सर्गापवादयोर्यस्य कस्यचित्ताच्छीलिकत्वे वासरूपविध्यभाव इति सिद्धम् । *एवम्* । उभयोस्तत्त्वेऽपि वासरूपविध्यभावस्वीकारे । *इत्याद्यसिद्धिरिति* । एकस्य कम्प्रेत्यस्य सिद्धावपि उभयोरसिद्धिरित्यर्थः । आदिपदेन गन्ता गामुक इत्यस्य विकत्थी विकत्थन इत्यस्य च सङ्ग्रहः । आद्ये तृन्नुकञौ । अन्त्ये घिनुण्युचौ न स्याताम् । *रेणेति* । सर्वथाऽनवकाशेनेत्यादिः ॥ ६८ ॥

*एवम्* । ताच्छीलिकेष्वेव अनित्यवासरूपविधिनिषेधाङ्गीकारे । *छात्रस्येति* । मध्यमणिन्यायेनोभयत्र अस्यान्वयः । हसितमित्यादौ "नपुंसके भावे क्तः" "ल्युट् च" अनयोः प्रवृत्तिः । *भोक्तुमिति* । समानकर्तृकेषु तुमुन् । *लिङिति* । इच्छार्थेषु इति विहितौ । *ईषत्पान इति* । "आतो युच्" इति युच् । *क्तल्युडित्यादिः* । एतेषु घञादीनामपवाद-

तत्त्वप्रकाशिका—

परिभाषाज्ञापनेऽप्यकिद्ग्रहणं व्यर्थम् । नुक्यजन्तत्वाभावाद्दीर्घाप्राप्तेरितिवाच्यम्, वैयधिकरण्यान्वयपरिभाषयोरसत्त्वेऽपि नुकः प्राक् दीर्घवारणायाकिद्ग्रहणसामर्थ्येन किद्भाविभिन्नस्येत्यर्थस्यावश्यं स्वीकर्त्तव्यतया नुकः प्राग्दीर्घाप्रवृत्तये अकिद्ग्रहणस्य सार्थकत्वात् । नच दीर्घो नुक इत्येव सिद्धेऽकिद्ग्रहणेन वैयधिकरण्यान्वयो ज्ञाप्यत इति वाच्यम्, वनीवच्यते सनीस्रंस्यत इत्यादौ नीकः प्राग्दीर्घव्यावृत्तयेऽकिद्ग्रहणसार्थक्यात् ।

परिभाषार्थस्तु—अभ्यासत्वावच्छिन्नोद्देश्यताककार्येषु बाध्यं पूर्वं प्रवर्त्तत इति अभ्या-

इदं च वासरूपविधेरनित्यत्वात् सिद्धम्। तदनित्यत्वे ज्ञापकं च "अर्हे कृत्यतृचश्च" ( ३-३-१६९ ) इति।

तत्र हि चकारसमुच्चितलिङा कृत्यतृचोर्बाधा मा भूदिति कृत्यतृज्ग्रहणं क्रियते इति अन्यत्र विस्तरः। वासरूपसूत्रे भाष्ये स्पष्टा ॥ ६९ ॥

ननु श्वः पक्तेत्यत्र वासरूपविधिना लृडपि प्राप्नोति कृते आदेशे वैरूप्यादत आह—

## लादेशेषु वासरूपविधिर्नास्ति ॥ ७० ॥

आदेशकृतवैरूप्यवत्सु लकारेषु स नास्तीत्यर्थः। अत्र च "हशश्वतोर्लङ् च" ( ३-२-११६ ) इति लङ्विधानं ज्ञापकम्। अन्यथा "परोक्षे लिट्" (३-२-१५) इति लिटा लङः समावेशोऽसारूप्यात्सिद्ध इति किं लङ्विधानेन शत्रादिभिस्तिङां समावेशार्थं शतृविधायके विभाषाग्रहणानुवृत्तिः "लिटः कानज्वा" (३-२-१०६) इति वा ग्रहणं च कृतम्। तज्ज्ञापयति वासरूपसूत्रेऽपवाद आदेशत्वानाक्रान्तः प्रत्यय एव गृह्यत इति कैयटादौ ध्वनितम्।

भैरवी।

भूतेषु सत्सु तद्विषये वासरूपविधिर्नास्तीत्यर्थः। एवञ्चैतद्विषयेऽपवादस्योत्सर्गबाधकत्वमेवाङ्गीक्रीयत इति फलितम्। *इदम्*। क्तेति वचनम्। *ज्ञापकञ्चेति*। चस्त्वर्थे। *तत्र हि*। तस्मिन् सूत्रे हि कृत्यतृज्ग्रहणमिति। एतेन लिङ्विधानार्थं सूत्रस्यावश्यकत्वं ध्वनितम्। यदि वासरूपविधेरनित्यत्वं न स्यात्तदा वासरूपविधिनैव पक्षे कृत्यतृचोः सिद्धौ तयोर्ग्रहणं न कुर्य्यात्। *अन्यत्र विस्तर इति*। एतदनित्यत्वेनैवोक्तं वक्ष्यमाणञ्च सर्वं संगृहीतं भवतीति तद्वचनं न कार्य्यम्।

यदि तु "शकि लिङ्च" इति चकारेण कृत्यग्रहणानुकर्षणार्थं कृतेन वासरूपविधेरनित्यत्वं ज्ञाप्यते इति कल्प्यते तदा कृत्यतृज्ग्रहणं "प्रैषातिसर्ग" इति सूत्रं च न कार्य्यमिति सूचितम् ॥ ६९ ॥

वासरूपविधिप्रसङ्गादाह—*नन्विति*। *वासरूपविधिनेति*। "ननु अनुबन्धकृतमसारूप्यं" गृह्यत इति कथमेतदत आह—*कृत इति*। एवञ्च आदेशनिष्ठवैरूप्यस्य स्थानिन्यारोपाद्वासरूपविधेः प्राप्तिरिति भावः। *लादेशेष्वित्यादि*। लश्चासावादेशश्चेति कर्मधारयः। आदेशपदं च आदेशकृतवैरूप्यवल्लाक्षणिकम्, विशेषणबोधकस्यापि आदेशपदस्य पूर्वनिपातप्रकरणस्य अनित्यत्वात्कडारादित्वात् वा परनिपातः। एवञ्च यत्फलितं तदाह—*आदेशकृत इति*। *लङः*। "अनद्यतने लङ्" इतिविहितस्य लङः।

ननु लस्यादेशेष्विति षष्ठीतत्पुरुष एवास्तु लक्षणायां बीजाभावात् फलाभावाच्च इत्यत आह—*शत्रादिभिरिति*। आदिपदेन कानचः परिग्रहः। *शतृविधायके*। "लटः शतृशानचौ" इति विभक्तसूत्रे। *विभाषाग्रहणानुवृत्तिः*। "नन्वोर्विभाषा" इत्यतो विभाषाग्रहणानुवृत्तिः। *कृतमिति*। भाष्यकृतेति शेषः। "सदादिभ्यो बहुलमिङ्धातोः" इति वार्त्तिकप्रत्याख्यानाय हि भाष्यकृता विभाषाग्रहणानुवृत्तिः कृता। अत्रार्थे सूत्रकारस्यापि सम्मतिमाह—*लिट इति*। *प्रत्यय एवेति*। आदेशत्वानाक्रान्त एवेति। एवकारस्य भि-

तत्त्वप्रकाशिका।

सत्वावच्छिन्नोद्देश्यतेत्युक्त्या ऊखतुरित्यादौ ह्रस्वात्प्राक् न सवर्णदीर्घः, अन्यथा बाध्यस्य सवर्णदीर्घस्य पूर्वं प्रवृत्तौ पश्चाद्ह्रस्वे तदसिद्धिः स्पष्टैव।

तत्फलं तु सदादिभ्यो भूतसामान्ये लिटः क्वसुरेव न तु पक्षे तिङ् इति बोध्यम् ॥ ७० ॥

ननु "ङमो ह्रस्वात्" ( ८-३-३२ ) इत्यादौ ङमः परस्याचोऽचि परतो ङमः इति वेति सन्देहः स्यादत आह—

## उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् ॥ ७१ ॥

अचीति सप्तमीनिर्देशस्य "मय उञः" ( ८-३-३३ ) इत्युत्तरत्र चारि-

भैरवी ।

त्रक्रमत्वकल्पनेन । *न तु पक्षे तिङ इति* । अन्यथा वासरूपविधिना पक्षे तेऽपि स्युरिति शेषः । एवंच अनेनैव प्रकारेण लादेशविषये वासरूपविध्यभावः सिद्ध इति पूर्वोक्तवचने षष्ठी-तत्पुरुषाश्रयणमनर्थकमिति पूर्वोक्तकर्मधारयलभ्यार्थकमेव लादेशेषु इति वचनमिति भावः । क्वसुरेवेत्येवकारेण कानचः परिग्रहः तस्याः स्वरितत्वेन तन्त्रासम्बन्धात् ॥ ७० ॥

अपदादस्य बलवत्वेन तत्प्रसङ्गादन्यस्यापि बलवतो निरूपणार्थमाक्षिपति—*ननु ङम इत्यादि* । उभयनिर्देश इत्यादि । *बलीयानिति* । तस्य बलवत्वंच स्वार्थपरत्वमेव । एवंच उभयोः सप्तमीपञ्चम्योरेकत्र निर्देशे पञ्चमी निर्दिश्यमाना सप्तम्याः षष्ठीकल्पने समर्था, न तु सप्तमीनिर्देश एव पञ्चम्यन्तस्य षष्ठ्यन्तत्वकल्पकः, यथा "आमि सार्वनाम्नः सुट्" इत्यत्र। "आज्जसेः" इत्यत्रादिति पञ्चमी "त्रेस्त्रयः" इत्यत्रामीति सप्तमी चरितार्था । एवमुभयोश्चरितार्थत्वात् "तस्मिन्" इति सूत्रात् "तस्मादित्" इत्यस्य सूत्रस्य परत्वाद्व्यवस्था, यत्र तु उभयोरचारितार्थ्यं तत्रापि पञ्चमीनिर्देशस्यैव बलवत्त्वम् । यथा "ङःसि धुट्" इत्यत्र ।

एवञ्च नेदं वचनमपूर्वं, किन्तु परत्वानवकाशत्वप्रयुक्तबलवत्त्वानुवादकमेव । अनुवादसामर्थ्यादेव उभयोरचरितार्थ्येऽपि पञ्चम्याः बलवत्वम् । यत्र तु सप्तम्येवाचरितार्था तत्र सप्तमीनिर्देशस्यैव बलवत्वम् "आने मुग्" इत्यत्र यथा, अत्र "अतो येयः" इत्यत्र अत इति पञ्चमी चरितार्था, क्वचित्तु सप्तमीनिर्देशचरितार्थत्वेऽप्यचरितार्थपञ्चमीनिर्देशापेक्षयाबलत्वम् "दीर्घात्पदान्ताद्वा" इत्यत्र यथा अत्र हि पञ्चम्या अचरितार्थत्वेऽपि "सेनासुराच्छाया" इति ज्ञा-

तत्त्वप्रकाशिका-

यत्तु अभ्यासविकारेषु बाध्यबाधकयोर्यथा समावेशः स्यात्तथा कर्त्तव्यमितिपरिभाषार्थं इति तन्न, बोभूयते इत्यादौ पूर्वं ह्रस्वे पश्चाद्गुणप्रवृत्त्या पूर्वं गुणेऽपि पश्चाद्ध्रस्वप्रवृत्त्या च कदाचिद्गुणोत्तरं ह्रस्वप्रवृत्तेर्दुर्वारत्वाद् ॥ ६७ ॥

संदेहः स्यादिति* । नच "ङमो ह्रस्वात्" इत्यादौ परिभाषाद्वयोपस्थितावपि अजादि-पदाव्यवहितपूर्वत्त्वविशिष्टः ह्रस्वाव्यवहितोत्तरत्वविशिष्टो यो ङम् तदन्तं यत्पदं तदव्यवहितोत्तरत्वविशिष्टो यः कश्चनोदासीनस्तस्य ङमुडितिसूत्रार्थः सम्पत्स्यत इतिसंदेह एव तावन्नावतरतीतिवाच्यम्, "तस्मिन्" इति "तस्मात्" इतिपरिभाषाद्वयेऽपि अव्यवहितत्वं पूर्वत्वं षष्ठ्यंशः अव्यवहितत्त्वमुत्तरत्वंषष्ठ्यंशश्चेतिप्रत्येकमंशत्रयस्य सत्वेन तत्र योंऽशः सिद्धो वा बाधितो वा भवति तदंशरहितयोरेवानयोरुपस्थितिरितिसंदेहस्य सुस्थत्वात् । तथाहि यदि "तस्मिन्" इतिपरिभाषा अंशत्रयवती उपतिष्ठेत तदा षष्ठ्यंशविकला तस्मादित्युपतिष्ठेत षष्ठ्यंशस्य सिद्धत्वात् । तथाच-"तस्मात्" इतिपरिभाषोपस्थापिताव्यवहितोत्तरत्वस्य श्रुतानुमितपरिभाषया श्रुतेऽच्येवान्वयो नत्वनुमिताव्यवहितपूर्वत्वविशिष्टे, एवं च ङमव्यवहितोत्तरत्वविशिष्टो योऽच्चेदव्यवहितपूर्वत्वविशिष्टस्य ङमुडिति ङमो ङमुट्प्राप्तः ।

यदितु "तस्मादित्युत्तरस्य"इतिपरिभाषांशत्रयवत्युपतिष्ठेत, तदा "तस्मिन्"इतिपरिभाषा षष्ठ्यंशविकला उपतिष्ठेत तदा पूर्वोक्तदिशा अजव्यवहितपूर्वो यो ङम् तदव्यवहितोत्तरस्य ङमु-

तार्थ्यात् । पञ्चमीनिर्देशोऽनवकाश इति "तस्मादित्युत्तरस्य" ( १-१-६७ ) इत्यस्यैव प्रवृत्तिः ।

यत्र तु "ङः सि धुट्" (८-३-१०) इत्यादावुभयोरप्यचारितार्थ्यं तत्र "तस्मिन्" (१-१-६६) सूत्रापेक्षया "तस्मादित्युत्तरस्य" (१-१-६७) इत्यस्य परत्वात्तेनैव व्यवस्था । एवमुभयोश्चारितार्थ्येऽपि, यथा "आमि सर्वनाम्नः" (७-३-५२) इत्यादौ तत्रामीति सप्तमी "त्रेस्त्रय" इत्यत्र चरितार्था । आदिति पञ्चमी "आज्जसेरसुक्" (७-१-५०) इत्यत्र चरितार्थेति स्पष्टं "तस्मिन्" इति सूत्रे भाष्ये कैयटे च ॥ ७१ ॥

ननु "अतः कृकमि" ( ८-३-४६ ) इति सत्वमयस्कुम्भीत्यत्र न स्यात् कुम्भशब्दस्यैवोपादानादत आह—

## प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् ॥ ७२ ॥

सामान्यरूपेण विशेषरूपेण वा प्रातिपदिकबोधकशब्दग्रहणे सति लिङ्गबोधकप्रत्ययविशिष्टस्यापि तेन ग्रहणं बोध्यम् । अपिना केवलस्यापीत्यर्थः ।

भैरवी ।

पकबलाद् दुर्बलत्वम् । एवमुभयोश्चारितार्थ्येऽपि सप्तमीनिर्देशस्यैव क्वचिद् बलत्वम् । यथा "बहूर्जिनुम्प्रतिषेध" इत्यस्य प्रत्याख्यानाय "नपुंसकस्य झलचः" इति सूत्रेऽच इत्यस्य पञ्चम्यन्तत्वं कल्पयित्वा अचः परो यो झल् तदन्तस्येति व्याख्यानेऽच इति पञ्चम्याचरितार्थाया अपि "इकोऽचि" इतिसूत्रे सर्वनामस्थाने इत्यस्य "उगिदचाम्" इति सूत्रे चरितार्थसप्तम्यर्थकस्यानुवृत्त्या कुण्डानि वनानीत्याद्यर्थवाक्यभेदेन व्याख्यानपक्षे षष्ठ्यन्तत्वकल्पनम् ।

यद्यपि अत्रोभयोश्चारितार्थ्यं तथापि पञ्चम्या इक इति षष्ठ्यन्तसाहचर्याद् दुर्बलत्वम् कल्पितमेव एतत्सर्वमेतस्य वचनस्यापूर्वत्वाभाव एव सङ्गच्छते । न च भवदुक्तस्य सर्वस्यार्थस्य "तस्मिन्" इति सूत्रभाष्येऽनुक्तत्वात् स्पष्टं "तस्मिन्" इति सूत्रे भाष्ये इत्यसङ्गतमिति वाच्यम् । पञ्चमीनिर्देशस्य बलवत्वबोधकमेतद्वचनम् स्पष्टमित्यर्थात् । एवञ्च परत्वानवकाशत्वप्रयुक्तबाधद्वयानुवादकमेतद्वचनमिति दिक् ॥ ७१ ॥

इति बाधबीजप्रकरणम् ।

उभयनिर्देशप्रसङ्गादाह—*नन्वत इति* । प्रातिपदिकेत्यादि* । *सामान्यरूपेणेत्या-

तत्त्वप्रकाशिका ।

ङिति अचो ङमुट् प्राप्त इति, नचानयोः परिभाषयोरेकांशविकलयोर्न कुत्राप्युपस्थितिर्दृष्टेतिवाच्यम्, प्रत्ययविधौ पष्ठ्यंशस्य बाधितत्वेन उत्तरत्वांशस्य सिद्धत्वेन च केवलाव्यवहितत्वांशोपस्थितेः, "उदः स्थास्तम्भः" इत्यादौ पष्ठ्यंशस्य सिद्धत्वेनांशद्वयोपस्थितेः, "इको यणचि" इत्यादौ अंशद्वयोपस्थितेः, पलु इत्यादौ सकलांशोपस्थितेश्च दृष्टत्वात् । *बलीयानिति* । यत्र पञ्चमीनिर्देशसप्तमीनिर्देशयोस्सावकाशत्वं निरवकाशत्वं वा तत्र तस्मादिति अंशत्रयवती परत्वादुपतिष्ठते यत्र पञ्चमीनिर्देशः सावकाशः सप्तमीनिर्देशश्च निरवकाशः तत्र तस्मिन्निति परिभाषांशत्रयवती तस्मादिति षष्ठ्यंशविकला उपतिष्ठते । परिभाषायान्तु पञ्चमीनिर्देश इतिमल्लग्रामादिवद्भूयसा व्यपदेशः । "ङः सि धुट्" "आमिसर्वनाम्नः सुट्" "ङमो ह्रस्वात्" "शि तुक्" इत्युदाहरणानि ॥ ७१ ॥ इति बाधबीजप्रकरणम् ।

अथ तन्त्रशेषप्रकरणम् । *लिङ्गबोधकप्रत्ययविशिष्टस्येति* । वै० स्वघटितत्व स्वनिष्ठ-

अस्याश्च ज्ञापकं सामानाधिकरण्याधिकारस्थे "कुमारः श्रमणादिभिः" (२-१-७०) इति सूत्रे स्त्रीलिङ्गश्रमणादिशब्दपाठः। स्त्रीप्रत्ययविशिष्टश्रमणादिभिश्च कुमारीशब्दस्यैव सामानाधिकरण्यं न तु कुमारशब्दस्येति तदेतज्ज्ञापकम्। इयं च "द्विषत्परयोः" (३-२-३९) इत्याद्युपपदविधौ समासान्तविधौ, महदात्त्वे, ञ्नित्स्वरविधौ, राजस्वरे ब्राह्मणकुमारयोः, "बहोर्नञ्वदुत्तरपदभूम्नि" (६-२-१७५) इत्यादौ समाससङ्घातग्रहणेषु

भैरवी।

दि*। प्रातिपदिकत्वात्मकसामान्यधर्मप्रकारकोपस्थितिजनकशब्दोच्चारण इत्यर्थः। अत एव ङ्याप्सूत्रभाष्ये प्रातिपादकग्रहणेनैव सिद्धिमाश्रित्य ङ्याप्ग्रहणवैयर्थ्यमाशङ्कितम्। विशेषरूपेणेत्यस्य प्रातिपादिकत्वव्याप्यधर्मविशिष्टबोधकशब्दोच्चारण इत्यर्थः। अत एव वक्ष्यमाणज्ञापकसङ्गतिः। एवं च भाष्यप्रामाण्यादुभयत्र एतत्परिभाषाप्रवृत्तिः। एतेन ज्ञापकसाजात्याद्विशेषरूपेणेत्येव उचितमित्यपास्तम्।

लिङ्गविशिष्टस्य इत्यत्र लिङ्गपदस्य वाचकयोः तादात्म्याल्लिङ्गबोधकटाबादिप्रत्ययपरत्वम्। तेन प्रातिपदिकत्वतद्व्याप्यान्यतरविशिष्टबोधकशब्देन ग्रहणं बोधनमित्यर्थः। *स्त्रीलिङ्गश्रमणादिशब्दपाठः*। स्त्रीत्वबोधकप्रत्ययविशिष्टस्य पाठः। *सामानाधिकरण्यमिति*। एकार्थप्रतिपादकत्वमित्यर्थः।

यद्यपि भाष्ये "युवा खलति" इतिसूत्रे जरतीग्रहणस्य एतत्परिभाषाज्ञापकतोक्ता तथापि परिभाषाज्ञापनेऽपि युवतीशब्दस्य जरतीशब्दसामानाधिकरण्यानुपपत्तिस्तदवस्थैवेति युवत्यां जरतीधर्मदर्शनमूलकजरतीत्वारोपस्य आवश्यकत्वेन परिभाषाभावेऽपि यूनि जरतीत्वारोपेण सामानाधिकरण्योपपत्तिर्भवति प्रकृते तु परिभाषाज्ञापनेन आरोपस्य अपेक्षेति श्रमणाशब्दस्यैव ज्ञापकत्वमुक्तम्।

न चात्रापि कुमारे श्रमणत्वारोपेण समानाधिकरण्यात् समासस्य उपपत्तिः सम्भवतीति कथमेतज्ज्ञापकमिति वाच्यम्। भिन्नलिङ्गानामजहल्लिङ्गातिरिक्तानामौपचारिकमपि समानाधिकरण्यं न प्रतीयते शब्दशक्तिस्वभावादित्याशयात्। अतिप्रसङ्गभङ्गाय घटघटीग्रहणेन एतस्या अनित्यत्वं कल्पनीयं, तेन न सर्वत्र प्रवृत्तिरित्याह—*इयञ्चेति*। *द्विषत्परयोरिति*। तेन "द्विषत्परयो" इत्यनेन द्विषन्तप इत्यत्रैव द्विषतीताप इत्यत्र खच् न। *समासान्तविधाविति*। तेन मद्रराज इत्यत्रैव मद्रराज्ञीत्यादौ "राजाह" इति टच् न। *महदात्व इति*। तेन महाप्रिय इत्यत्रैव महतीप्रिय इत्यत्र "आन्महत" इति न, एवं महती ब्राह्मणीति स्थिते परत्वात् पुंवद्भावं बाधित्वा स न। *ञ्नितस्वरविधाविति*। तेन दाक्षिरित्यत्रैव दाक्षीत्यत्राहिचुम्बकायनिरित्यत्रैवाहिचुम्बकायनी इत्यत्र च "ञ्नित्यादिर्नित्यम्"इति स्वरो न। *राजस्वरे ब्राह्मणकुमारयोरिति*। ब्राह्मणकुमारयोः परयोर्यो "राजा च" इति सूत्रेण विधीयमानः पूर्वपदप्रकृतिस्वरस्तस्मिन्नित्यर्थः। स स्वरो यथा राजब्राह्मणो राजकुमार इत्यत्र च भवति तथा राजब्राह्मणी राजकुमारीत्यत्र न भवति। *बहोर्नञ्वदुत्तरपदभूम्नीत्यादाविति*। "बहोर्नञ्वदुत्तरपदभूम्नि"इत्यनेनोत्तरपदार्थबहुत्वे वर्त्तमानात् पूर्वपदभूतबहुशब्दात्परं यदुत्तरपदं तदन्ते बहुव्रीहौ नञ्वत्स्वरो भवतीत्यर्थकेन योऽतिदेशः स यथा बहवो गोमन्तोऽस्मिन् बहुगोमानित्यत्र भवति नञ्वत्स्वरश्च नञ्सूत्राभ्यामित्यन्तोदात्तत्वम् तथा बहवो गोमन्तोऽस्यां सा बहुगोमती इत्यत्र न भवति। *समाससङ्घातग्रहण इति*। इदं पूर्वान्वयि, न तु पृथक्,

तत्त्वप्रकाशिका—

विधेयतानिरूपितोद्देश्यताश्रयघटितत्त्व स्वविशिष्टाघटितत्त्व एतद्द्वितयसम्बन्धेन, स्ववै० स्वाघटकत्व स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयाघटकत्व एतदुभयसम्बन्धेन। *समास·

च न प्रवर्त्तते इति ङ्याप्सूत्रे भाष्ये स्पष्टम्। विभक्तिनिमित्तककार्य्ये च नेत्यपि तत्रैव। तत्र समासान्तविधाववयवग्रहण एव न, समाससङ्घातग्रहणे तु प्रवर्त्तत एव, स्वरविधावेव समाससङ्घातग्रहणे तत्र दोषोक्तेः। "बहुव्रीहेरूधसः" (४-१-२५) इति सूत्रभाष्याच्च। एतावत्सु एवानित्यत्वादप्रवृत्तिर्दोषाः खल्वपि साकल्येन परिगणिता इति भाष्योक्तेः।

नन्वेवं "बहुव्रीहेरूधसो ङीष्" (४-१-२५) सूत्रस्थभाष्यासङ्गतिः। तत्र हि—कुण्डोध्नीत्यत्र "नद्यृतश्च" (५-४-१५६) इति कपापादितो नद्यन्तबहुव्रीहेरित्यर्थात्। नद्यन्तस्य बहुव्रीहित्वाभावात्तदसङ्गतिः। नद्यन्तानां यः समास इत्यर्थेन च परिहृतम्। नद्यन्तप्रकृतिकसुबन्तोत्तरपदकः समास इतीति चेत्। न। अनया परिभाषया स्त्रीप्रत्ययसमभिव्याहारे तद्रहिते दृष्टानां प्रातिपदिकत्वतद्व्याप्यधर्माणां विशिष्टेऽपि पर्य्याप्तत्वमतिदिश्यत इत्याशयात्॥ ७२॥

भैरवी

तेन "कुसूलकूपकुम्भशालम्बिले" इत्यनेन बिलशब्दे परतो विधीयमानं कुसूलादीनामन्तोदात्तत्वं समाससङ्घातग्रहणेऽपि यथा कुसूलबिलमित्यत्र भवति तथा कुसूलीबिलमित्यत्र न भवति। *विभक्तिनिमित्तकेति*। तेन "उगिदचाम्" इति नुम् गोमानित्यत्रेव गोमतीत्यत्र न। *समासान्तेति*। एतदुदाहरणं मद्रराज्ञीत्यादि प्रागुक्तमेव। *समाससङ्घातेति*। तेन "शेषाद्विभाषा" इति कप् बहुगोमत्का इत्यत्रेव बहुखट्वका इत्यत्रापि भवति।

यदुक्तं स्वरविधावेव समाससङ्घातग्रहणेऽप्रवृत्तिरिति तत्र भाष्यमुपष्टम्भकमित्याह—*बहुव्रीहेरिति*। एतच्चानुपदमेव स्फुटीभविष्यति। *एतावत्सु एवेति*। तत्तत्सूत्रीयभाष्यव्याख्यानेनैवं कल्पनात्। पूर्वोक्तार्थं द्रढयितुं शङ्कते—*नन्विति*। *एवम्*। "प्रातिपदिकग्रहण" इति परिभाषाया उक्तार्थकत्वे। *इत्यर्थादिति*। इत्यर्थं परिकल्प्येति ल्यब्लोपे पञ्चमी। *नद्यन्तस्येत्यादि*। बहुव्रीहित्वस्य सुबन्तसमुदायधर्मत्वेनान्यतररूपेण ग्रहणाभावादित्यभिमानः। सर्वत्र समासान्तविधावेतत्परिभाषाया अप्रवृत्तावेतद्भाष्यीयशङ्काया असङ्गतिः स्पष्टैव। तादृशार्थमभ्युपेत्यापि समाधत्ते—अनयेति*। *स्त्रीप्रत्ययसमभिव्याहार इति*। अस्य विशिष्टेऽपीत्यत्रान्वयः। *इत्याशयात् इति*। शङ्काशयात्।

वस्तुतस्तु नद्यन्तानां बहुव्रीहीत्यर्थ एवोचितोऽत एव करभोरूरित्यत्र नित्यः कप् न। एवञ्च कुण्डोध्नीत्यत्र प्राप्तिरेव न। शङ्करीत्या समाधानाशयस्तु प्रातिपदिकत्वव्याप्यं बहुव्रीहित्वं सुबन्तसमुदायनिष्ठमपि भवत्येव॥ ७२॥

तत्त्वप्रकाशिका।

संघातग्रहणेचेति*। तेन कुसूलीबिलंकुसूलबिलमित्यादौ "कुसूलकूपकुम्भशालं बिले" इत्यादिस्वरः प्रवर्तत एव। *प्रवर्तत एवेति*। अत एव अतिशयिताः भ्रातरो यस्यां नागर्याम्, अतिभ्रात्री, अः अतिभ्रात्री यस्यां नगर्यां सा आतिभ्रात्रिः, अतिशयितः श्रेयांसो यस्यां नगर्यां सा अतिश्रेयसी, अः अतिश्रेयसी यस्य स अतिश्रेयसिः, कियतः समीपे उपकियतम् तस्माण्ण्यन्तात्क्विप् "उगितश्च" इति ङीप् अः उपकियती यस्य ओपकियत इत्यादौ "वन्दिते भ्रातुः" इति कप्निषेधः शरदादित्वाट्टच्, अनया परिभाषया भ्रातृशब्दान्तबहुव्रीहित्वस्य ईयसन्तोत्तरपदबहुव्रीहित्वस्य शरदाद्युत्तरपदकाव्ययीभावत्वस्य वातिदेशेन भवतः।

ननु लिङ्गबोधकप्रत्ययविशिष्टे आनुपूर्वीरूपाणां प्रातिपदिकत्वरूपसामान्यस्य चातिदेशाद्बहुव्रीहित्वस्यातथात्वेन "बहुव्रीहेरूधस" इतिसूत्रस्थभाष्यासङ्गतिरिति शंकते—*नन्वेवमिति*। *प्रातिपदिकत्वतद्व्याप्यानामिति*। स्यादेतत् कुमारत्वस्य "कुमार, क्रीडायाम्, इ-

नन्वेवं यूनः पश्येत्यत्रेव युवतीः पश्येत्यत्रापि "श्वयुव" (६-४-१३३) इति सम्प्रसारणं स्यादत आह—

## विभक्तौ लिङ्गविशिष्टाग्रहणम् ॥ ७३ ॥

भैरवी।

तस्य समुदायस्य प्रातिपदिकसञ्ज्ञाविधानादिति पूर्वोक्तार्थे शङ्कते—*नन्वेवमिति* । स्त्रीप्रत्ययसमभिव्याहारे विशिष्टे प्रातिपदिकत्वव्याप्यधर्मातिदेशे । प्रातिपदिकत्वव्याप्ययुवन्शब्दत्वस्य विशिष्टेऽतिदेशः स्यादिति भावः।

ननु मघवतेत्यत्र सम्प्रसारणवारणाय श्वादीनां सम्प्रसारणे नकारान्तग्रहणमनकारान्तप्रतिषेधार्थमिति वार्त्तिकस्य "अल्लोपोऽनः" इत्यतोऽन इत्यस्यानुवृत्तिं प्रदर्श्य प्रत्याख्यानं कृतमित्यन्नन्त एव सम्प्रसारणयोग्यता । अन्नन्तत्वस्यापि स्त्रीप्रत्ययसमाभिव्याहारेऽतिदेशस्तु वक्तुमशक्यः । अन्नन्तत्वस्य प्रातिपदिकत्वव्याप्यत्वादिति चेन्न । वक्ष्यमाणाया विभक्ताविति परिभाषाया गोमती यवमती नदीत्यत्र नुम्वारणायावश्यकर्त्तव्यतयैव युवतीः पश्येत्यत्र सम्प्रसारणवारणे अन इत्यस्य "श्वयुव" इत्यत्र सम्बन्ध एतदर्थमनावश्यक इत्याशयात्। विभक्तावित्यादिकार्य्ये कर्त्तव्य इत्यस्य अध्याहारः । एवञ्च विभक्तिनिमित्तककार्य्ये कर्त्तव्ये लिङ्गबोधकप्रत्ययविशिष्टस्य ग्रहणं नेत्यर्थः।

तत्त्वप्रकाशिका।

तिधातावपि सत्वेन कुमारत्वे प्रातिपदिकत्वव्याप्यत्वाभावेन ज्ञापकासङ्गतिः, नच समर्थकुमारत्वं प्रातिपदिकत्वव्याप्यमिति न ज्ञापकासङ्गतिरितिवाच्यम्, अदन्तप्रातिपादिकत्वस्यापि प्रातिपदिकत्वव्याप्यत्वेन रमाशब्दे तदतिदेशे इत्रापत्तेरिति चेन्मैवम्, प्रातिपदिकमात्रवृत्तिविषयताप्रयोजकपदप्रतिपाद्यतावच्छेदकधर्माणामतिदेशो भवति, विषयतायां प्रातिपदिकमात्रवृत्तित्वं च प्रातिपदिकवृत्तित्वे सति प्रातिपदिकेतरावृत्तित्वम् तत्र प्रातिपदिकेतरवृत्तित्वाभावश्च अभेदान्वयाऽप्रयोज्यो विवक्षित इति रमेत्यादौ अदन्तत्वस्य नातिदेशः। अतपदप्रयोज्यविषयतायां प्रातिपदिकेतरवृत्तित्वाभावस्य अभेदान्वयप्रयोज्यत्वात् कुमारपदं च समर्थकुमारप्रकृतिके लाक्षणिकमिति निरुक्तप्रातिपदिकमात्रवृत्तिविषयताप्रयोजकं जातमित्यदोषात्।

यद्वा, अनया परिभाषया पदप्रतिपाद्यानां प्रातिपदिकत्वव्याप्यधर्माणामतिदेशो भवति । एवञ्चादन्तप्रातिपदिकं पदप्रतिपाद्यं न भवतीति रमे इत्यादौ न दोषः। कुमारपदं च समर्थकुमारप्रकृतिके लाक्षणिकमिति समर्थकुमारत्वं पदप्रतिपाद्यं प्रातिपदिकत्वव्याप्यञ्च भवतीतितस्यातिदेशो भवतीति सर्वसामञ्जस्याच्च।

केचित्तु इयं परिभाषा न कर्त्तव्या प्रातिपदिकविशेषग्रहणेषु सर्वत्र "पुमान् स्त्रिया" इत्येकशेषेणायस्कुम्भीत्यादौ दोषाभावात्। न च प्रातिपदिकसामान्य ग्रहणे दोष इति वाच्यम् ? "अर्थवदधातुरसप् प्रातिपदिकम्" इतिसन्यासेनादोषात्, सबितिगुसिजुकिद्भ्यः सन्निति सशब्दादारभ्य सुपः पकारेण प्रत्याहारः। एवञ्च "कृत्तद्धित" इतिसूत्रे तद्धितग्रहणं "ङ्याप् सूत्रे" ङ्याप् ग्रहणं च न कर्त्तव्यं भवति । न च काशकृत्स्नेन प्रोक्तां मीमांसामधीते काशकृत्स्ना ब्राह्मणीत्यादौ प्रोक्तादध्येत्रर्थं जाते प्रोक्तप्रत्ययमात्रवृत्तितद्धादित्वानयनाय परिभाषा आवश्यकी, एवं शैब्या अपत्यं शैवायनिरित्यादौ "अणोद्व्यच" इति फिञर्थं च आवश्यकीति वाच्यम् "ङ्याब्" इतिसूत्रे ङ्यादाग्रहणञ्च क्रीयते तथा च प्रोक्तप्रत्ययान्तप्रकृतिकङ्यन्तावन्तात्प्रोक्तप्रत्ययान्तप्रातिपदिकाच्च परस्याध्येतृवेदितृप्रत्ययस्य लुक्। एवमण्णन्तप्रकृतिकौ यौ ङ्यापौ तदन्तादन्ताच्च प्रातिपदिकात् "द्व्यचो फिञ्" इति "प्रोक्ताल्लुक्" "अणोद्व्यच" इत्यादेरर्थकरणेनादोषादित्याहुः॥७२॥

*सम्प्रसारणं* स्यादिति* । न चात्र तत्वे प्रातिपदिकव्याप्यत्वस्य निरुक्तप्रातिपदिकमा-

**स्पष्टा चेयं "युवोरनाकौ" (७-१-१) इत्यत्र भाष्ये। घटघटीग्रहणेन लिङ्गविशिष्टपरिभाषाया अनित्यत्वात्तन्मूलैवेत्यन्ये ॥ ७३ ॥**

**ननु "तस्यापत्यम्" (४-१-९२) इत्येकवचननपुंसकाभ्यां निर्देशाद्गार्ग्यो गार्ग्यावित्याद्ययुक्तमत आह—**

## सूत्रे लिङ्गवचनमतन्त्रम् ॥ ७४ ॥

भैरवी।

अस्यां परिभाषायां मानमाह—*स्पष्टा चेयमिति*। एवञ्च भाष्यप्रामाण्यादेषा कल्पते न त्वत्र ज्ञापकापेक्षा। मतान्तरमाह—*घटघटीग्रहणेनेति*। घटघटीत्यत्र घटीग्रहणेनेत्यर्थः। "श्वयुव" इतिसूत्रे मघवतेत्यत्र सम्प्रसारणवारणायान इत्यस्य सम्बन्धो यदूह्यते तत्प्रधानफलमन्यथा न सिध्यतीत्यभिप्रायेण। युवतीः पश्येति तु न प्रधानमन्यथासिद्धत्वादिति ध्वनयितुम्। अन्य इत्यनेन अरुचिर्बोधिता। "युवोरनाकौ" इतिसूत्रभाष्येऽवश्यमेषा कर्त्तव्येति परिभाषात्वेन व्यवहारादस्य अतिरिक्तत्वमेवोचितमिति। ङ्याप्सूत्रस्थभाष्यं त्वेतल्लब्धार्थकथनपरमेव। अतएव विभक्तौ चोक्तं किमुक्तम् विभक्तौ लिङ्गविशिष्टाग्रहणादित्येव तत्रोक्तम्। *अत्र*। विभक्ताविति सप्तम्यप्तपदोपादानाद्विभक्तिनिमित्तकं यत्कार्य्यं तत्रैवास्याः प्रवृत्तिरिति तु विभक्तावित्यस्य विषयसप्तमीत्वात्। तेन शुना शुने इत्यत्रेव शून्यै इत्यत्रापि गौरादिङीषन्तशुनीशब्दस्यान्तोदात्तस्य यणादेशे "उदात्तयणो हल्पूर्वात्" इति प्राप्तस्य स्वरस्य "नगोश्वन्" इति प्रतिषेधो न भवति।

न च यदि विभक्तिस्थानिकार्य्येऽपि चेत्परिभाषा प्रवृत्तिस्तदा चित्रगवीणामित्यत्र कवर्गवदुत्तरपदकसमासत्वस्य ङीबन्तेऽभावात् णत्वं नस्यादिति वाच्यम्? "युवोरनाकौ" इति सूत्रस्थभाष्यप्रामाण्येन विभक्तेः प्राधान्येन यत्कार्य्यं तत्रापि प्रवृत्तिरित्यर्थस्यैव कल्पनात्, णत्वन्तु न प्राधान्येन विभक्तिस्थानिकम्, नकारस्यैव तत्र प्राधान्यात्। यदि त्वागमानामागमिधर्मवैशिष्ट्यमपि "यदागमा" इति न्यायेनेति कल्प्यत इति पक्षस्य आश्रयणेन नकारस्य विभिक्तित्वं प्राधान्यं च अस्तीति णत्वस्य प्रधान्येन विभक्तिस्थानिकत्वमप्यस्तीति लिङ्गविशिष्टपरिभाषाया निषेधः स्यादित्युच्यते तदा विभक्तिस्थानिककार्य्यविषये प्राधान्येन आश्रीयमाणस्य कार्य्यिणो विभक्तित्वेन यत्र आश्रयणं तत्रैव विभक्तावित्यस्य निषेधस्य प्रवृत्तिरिति स्वीकार्य्यम्। णत्वे तु प्रधानतया आश्रितस्य नस्य णत्वेन कार्य्यिता न तु विभक्तित्वेनेति क्षत्यभाव इति बोध्यम्।

यत्तु कश्चिदाह ङ्याप्सूत्रस्थङ्याबग्रहणेन लिङ्गविशिष्टपरिभाषाया अनित्यत्वं ज्ञाप्यते तेनैषा सिद्धेति तन्न। तत्रत्यङ्याप्ग्रहणस्य अन्यार्थकतया अन्यत्रोक्तत्वात् ॥ ७३ ॥

तत्त्वप्रकाशिका।

प्रवृत्तिविषयताप्रयोजकपदप्रतिपाद्यतावच्छेदकत्वस्य चाभावेन तस्यातिदेशो न भवतीत्यवतरणासङ्गतिरिति वाच्यम्? "श्वयुव" इतिसूत्रे श्वादेस्तदन्ते लाक्षणिकतया तदेकदेशभूते "अन" इत्येतस्य विशेषणत्वासम्भवेन 'गभीरायां नद्यां घोष' इतिवत् श्वादिपदस्य अन्नन्तस्वाद्यन्ते लक्षणाया "अन" इत्यस्य तात्पर्यग्राहकत्वस्य च स्वीकर्तव्यत्वेनादोषात् ॥७३॥

*इत्याद्ययुक्तमिति*। नच स्तोकं पचतीत्यादौ एकवचनअमाद्यर्थं "द्व्येकयोः" इत्यस्य एकत्वोत्तरसंख्यामबुबोधयिषितायामेकवचनं, "स्वमोर्नपुं सकादतोमित्यादेः" नपुंसकेतरलिङ्गेऽबुबोधयिषिते लुगमादि भवतीत्यर्थस्यावश्यवक्तव्यत्वेन तस्यापत्यमितिनिर्देशस्य नासङ्गतिरितिवाच्यम्, "समवायात्समवैति" "पक्षिमत्स्यमृगान्हन्ति" इत्यादौ बहुवचनपुँलिङ्गादिनिर्देशेन "समवायं समवैति" सामवायिकः मृगं मृगीं वा हन्ति मार्गिक इत्याद्युक्तमिति अवतरणदानसम्भवात्। *सूत्रे लिङ्गवचनमतन्त्रम्*। स्यादेतत् अतन्त्रमित्यस्य सूत्रघटक-

"अर्द्धं नपुंसकम्" (२-२-३) इति नपुंसकग्रहणमस्यां ज्ञापकम्। नित्यनपुंसकत्वार्थं तु न तदित्यन्यत्र निरूपितम्। धान्यपलालन्यायेन नान्तरीयकतया तयोरुपादानमिति "तस्यापत्यं" इत्यत्र भाष्ये स्पष्टम्। अत एव "आकडार" सूत्रे एकेति चरितार्थमिति अन्यत्र विस्तरः॥ ७४॥

भैरवी

लिङ्गबोधकप्रत्ययप्रसङ्गादाह-*नन्विति*। *अस्यां ज्ञापकमिति*। यदि सूत्रानिर्दिष्टलिङ्गवचनयोर्विवक्षा स्यात्तदा अर्द्धमितिनिर्देशादेव नपुंसकत्वस्य लाभेन नपुंसकग्रहणमनर्थकं स्यादिति भावः। *

ननु खण्डवाचकस्यार्द्धशब्दस्य नपुंसकत्वात् तद्व्यावृत्त्यर्थं नित्यनपुंसकस्य ग्रहणमिति वक्तव्यमिति तल्लाभार्थं सूत्रे नपुंसकशब्दोऽस्त्वित्यत आह-*नित्यनपुंसकेति*। *अन्यत्र निरूपितमिति*। "एओङ्" सूत्रभाष्ये एचो ह्रस्वशासनेऽर्द्धैकारार्द्धौकारयोर्विधानमाशङ्क्य नैव लोकेऽर्द्ध एकारोऽर्द्ध ओकारो वास्तीति समाधानपरभाष्येऽर्द्ध इति प्रयोगात् समांशवाचकस्यापि न नित्यनपुंसकतास्तीति निरूपितम्।

वस्तुतस्तु एषा युक्तिसिद्धैवेत्याह-*धान्येत्यादि*। यथा कश्चिदन्नार्थी शालिकलापं सतुषं सपलालमाहरति नान्तरीयकतया स ततो यावदादेयं तावदादाय तुषपलालान्युत्सृजति तथा नान्तरीयकतया लिङ्गवचनयोरुपादानमिति तस्य अविवक्षा उचितैव। आदावेतस्यां परिभाषायां नपुंसकग्रहणस्य ज्ञापकत्वमुक्तं तत्र कश्चिदाह—उक्तज्ञापकाल्लिङ्गाविवक्षास्तु वचनाविवक्षायान्तु न प्रमाणमिति तन्मतखण्डनाय सिंहावलोकनन्यायेन वचनाविवक्षायामपि मानमाह-*अत एवेति*। उपात्तस्यापि वचनस्याविवक्षासत्वादेवेत्यर्थः। यदि वचनस्यो-

तत्त्वप्रकाशिका।

पदजन्यबोधविषयत्वेन तात्पर्यविषयत्वभावो यद्यर्थः, तर्हि पूर्वोक्तप्रयोगेषु नत्वबहुवचनाद्यनुपपत्तिः पुंसि बुबोधयिषिते एव "तस्माच्छसो न" इति शास्त्रेण नकारादेशस्य, बहुत्वे बुबोधयिषिते बहुवचनमित्यनेन बहुवचनस्य च विधानादिति चेन्मैवम्, अतन्त्रेमित्यस्य शक्तौ अविवक्षितमित्यर्थस्वीकारेणादोषात्। शक्तौ अविवक्षितमित्यस्य बुद्धिविषयतावच्छेदकत्ववतशक्तौ उपलक्षणं, न तु विशेषणमिति भावः।

तथा च-आश्रयत्वसम्बन्धावच्छिन्नबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यताश्रयविशेषणानाम् बोधविषयतायां धर्मिपारतन्त्र्येण विशेषणत्वम्, तानि, विशेषणानीत्युच्यन्ते, येषां बोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यताश्रयविशेषणता तेषां बोधविषयतायां धर्मिपारतन्त्रेण विशेषणत्वम् तानि विशेषणानीत्युच्यन्ते येषां बोधविषयतासामानाधिकरण्यमात्रं तान्युपलक्षणानीत्युच्यन्ते। यथा तत्पदशक्तौ बुद्धिविषयताच्छेदकत्वं तथाच एकत्वविशिष्टनपुंसकत्वविशिष्टापत्यत्वावच्छिन्नं अणपदात्प्रत्येतव्यमिति शक्तौ तव्यप्रत्ययार्थविषयतायांयथा अपत्यत्वस्य स्वनिष्ठस्वरूपसम्बन्धावच्छिन्नावच्छेदकतानिरूपितावच्छेद्यतासम्बन्धेन विशेषणत्वम्, न तथा नपुंसकत्वैकत्वयोरिति अविवक्षते उपलक्षणे इत्याद्युच्येते। नच "तस्यापत्यम्" इतिशक्तिग्राहकशास्त्रेण एकत्वविशिष्टनपुंसत्वविशिष्टापत्यत्वावच्छिन्नोऽणपदवाच्य इति शक्तिज्ञानस्य जातत्वेनपुंस्त्वादिपुरस्कारेण अपत्यबोधो न स्यादिति वाच्यम्? अपत्यत्वावच्छिन्नोऽणपदवाच्य इति शक्तिज्ञानान्तर्येण तदादिपदेन स्वरूपतो घटत्वादिप्रकारकबोधवत् नपुंसकैकत्वाविषयकापत्यत्वविषयकबोधस्याप्युपपत्तेः। *नपुंसकग्रहणमिति*। नच स्वरूपतो घटत्वादिगतलिङ्गस्यैव वैयाकरणमते बोधेन "स्वंरूपम्" इति परिभाषया "अर्द्धंनपुंसकम्" इति सूत्रेऽर्द्धपदस्यैवोपात्तत्वेन तद्गतलिङ्गस्यैव भानं, नतु समांशगतलिङ्गस्येति नपुंसकग्रहणमावश्यकमिति वाच्यम्। "पूर्वापर" इतिसूत्रे अर्द्धशब्दपाठेनैव सिद्धे अर्द्धमितियोगविभागसामर्थ्येन समांशगतलिङ्गभानेन नपुंसकग्रहणवैयर्थ्यात्। *एकेतिचरितार्थमिति*। तत्र एकेत्यस्य

ननु "भृशादिभ्यो भुव्यच्वेः" ( ३-१-१२ ) इति विधीयमानः क्यङ्, क दिवा भृशा भवन्तीत्यत्रापि स्यादत आह—

**नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः ॥ ७५ ॥**

नञ्युक्तमिवयुक्तं वा यत्किञ्चिद्दृश्यते तत्र तस्माद्भिन्ने तत्सदृशेऽधिकरणे द्रव्ये कार्यं विज्ञायते, हि यतस्तथार्थगतिरस्ति । न हि अब्राह्मणमानयेत्युक्ते लोष्ठमानीय कृती भवति । अतश्च्व्यन्तभिन्ने च्व्यन्तसदृशेऽभूततद्भावविषये क्यङ्ङिति नोक्तदोषः । "ओषधेश्च विभक्तावप्रथमायाम्" इत्यादौ विभक्तिग्रहणं ह्येतन्न्यायसिद्धार्थानुवाद एव । एतेन विभक्तावित्याद्यस्या-

भैरवी ।

पात्तस्य विवक्षा स्यात्तदा संज्ञेत्यनेनैवैकत्वस्य लाभे सिद्धे एकग्रहणं व्यर्थं स्यादिति भावः ।

नन्वेवं "षड्भ्यो लुक्" "छुद्भ्यो लुङि" इत्यत्र वचनस्य अविवक्षा स्यात्तथा च प्रथमस्य प्राधान्य एव प्रवृत्तिरिति न लभ्यते द्वितीये बहुवचनोपादानाद्गणस्य लाभ इति च न स्यादिति चेन्न । एकवचन एवोच्चारणीये उभयत्र बहुवचनस्योपादानं विवक्षार्थमेव तत्सामर्थ्यात् प्रथमे प्राधान्यलाभो द्वितीये गणस्य लाभ इति स्वीकारात् । द्वितीये गणपाठसामर्थ्याच्च यत्र तु गणलाभार्थमादिशब्दस्यैव "नडादिभ्य" इत्यादावुपादानं तत्र बहुवचनमतन्त्रमेव ।

एवञ्च यत्र नान्तरीयकतया वचनविशेषोपादानं तत्र अविवक्षा यत्र तु विशेषार्थविवक्षया वचनविशेषोपादनं तत्र तु विशेषोपादानमेव विवक्षैवेति सिद्धम् ॥ ७४ ॥

गणनिर्देशप्रसङ्गादाह—*नन्विति । क्व दिवेति* । भृशा बहवो नक्षत्रादयो रात्रावुपलभ्यमानास्ते दिवा क्व भवन्तीत्यर्थः । *नञिवयुक्तमित्यादि* । अत्र यत्किञ्चित् दृश्यते यत्र तत्रेति शेषो बोध्यः । तथा च यत् फलितं तदाह—*नञित्यादि* । यत्किञ्चिदित्यनेन वाक्यग्रहणम् । *तथार्थेति । तादृशस्यैवार्थस्य गतिः लोके प्रतीतिरस्ति । एतदुदाहरणं लौकिकमाह—*न हि अब्राह्मणमिति । एतेनैषा लौकिकन्यायसिद्धेति ध्वनितम् । *लोष्ठम्* । मृत्पिण्डम् । एतस्याः परिभाषायाः प्रकृते प्रयोजनमाह—*अत इति* । एतत्परिभाषासत्वादित्यर्थः । लोके सादृश्यप्रयोजको धर्म्मश्च यथासम्भवं द्रष्टव्यः । प्रकृतोपयुक्तो यो धर्म्मस्तमाह—*अभूतेति* । अत्र—नञिवयुक्तमित्यत्र । योगपदार्थः सम्बन्धः, स च नैकवाक्यघट त्वरूपः, ब्राह्मणस्य विद्येव क्षत्रियस्येति वाक्याद् ब्राह्मणसादृश्यस्य क्षत्रियनिष्ठस्य अप्रतीतेः । एकवाक्यघटकत्वरूपस्य तस्याश्रयणे तु तस्यापि कदाचित् प्रतीतिः स्यात् ।

किन्तु स्वार्थनिष्ठविशेष्यतानिरूपितप्रकारतावदर्थतात्पर्य्यकत्वरूपोऽभिमतः ।

एवञ्च नञिवार्थनिष्ठविशेष्यतानिरूपितप्रकारतावदर्थप्रतिपादकं यच्छब्दरूपं तत्स्वाभिधेयातिरिक्ते सदृशेऽधिकरणे वर्तते । अधिकरणमत्र द्रष्टव्यम् । नञ्युक्तस्य लौकिकमुदाहरणमब्राह्मणमित्युक्तमेव । इवयुक्तोदाहरणं तत्र तस्येवेत्यादि बोध्यम् । अत्र इव युक्तोदाहरणं लोके प्रसिद्धमेव चन्द्र इव मुखमित्यादि । नञ्युक्तस्यापि सदृशे प्रयोगस्तु "न हि अब्राह्मणमानयेत्यादिभाष्यात" कल्प्यते ।

नन्वेवम् "ओषधेश्च विभक्तौ" इत्यादौ विभक्तावित्यादीनां वैयर्थ्यापत्तिरत आह—*ओषधेश्चेत्यादिना* । आदिना अकर्तरीत्यस्य परिग्रहः ।

यत्तु कश्चिदाह—तत्र विभक्तिग्रहणमेतत्परिभाषाया अनित्यत्वे ज्ञापकमिति तन्मतं ख-

तत्त्वप्रकाशिका ।

संज्ञान्तरामानविशिष्टा संज्ञा भवतीत्यर्थः । तादृशार्थलाभश्च संज्ञेत्येकवचनेनैव भविष्यतीति

नित्यत्वे ज्ञापकमिति वदन्तः परास्ताः, अनित्यत्वे भाष्यसम्मतफलाभावात् । अत एव "अकर्त्तरि च" ( ३-३-१९ ) इति सूत्रे कारकग्रहणं भाष्ये प्रत्याख्यातमिति बोध्यम् । स्पष्टा चेयं "भृशादिभ्यः" ( ३-१-१२ ) इति-सूत्रे भाष्ये । अत्र अन्यसदृशेत्युक्त्या सादृश्यं भेदाघटितमिति सूचयति । निरूपितं चैतन्मञ्जूषायाम् ॥ ७५ ॥

ननु व्याघ्री कच्छपीत्यादौ सुबन्तेन समासात्ततोऽप्यन्तरङ्गत्वाट्टाप्यदन्तत्वाभावाज्जातिलक्षणो ङीष् न स्यादत आह—

## गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः ॥ ७६ ॥

"उपपदम्" ( २-२-१९ ) इति सूत्रेऽतिङ्ग्रहणेन "कुगति" (२-२-१८) इत्यत्र तदपकर्षणेनातिङन्तश्च समास इत्यर्थात्तयोः सूत्रयोः "सुप्सुपा"

भैरवी ।

ज्ञयति—*एतेनेति* । एतेन वक्ष्यमाणेन हेतुना । तं हेतुमेवाह—*अनित्यत्व इति* ।

ननु अनित्यत्वफलमसूर्यम्पश्यानि मुखानीत्यादिसम्भवत्येवेत्यत आह—*भाष्यसम्मतेति* । शब्दशक्तिस्वभावात् तादृशस्थले सादृश्याप्रतीतिर्लोके प्रसिद्धा, न तु तत्र ज्ञापकापेक्षेति भावः ।

ननु अनित्यत्वसिद्धार्थानुवाद एव विभक्तिग्रहणादस्त्वित्यत आह—*अत एवेति* । भाष्यानभिमतत्वादेव । यदि तथा स्यात् तदा प्रत्याख्यानासङ्गतिः स्पष्टैव । *सादृश्यं* । सदृशादिपदशक्यतावच्छेदको धर्म्मविशेष इति अन्यत्र निरूपितम् । अत एवाह—*भेदाघटितमिति* । एतेन तद्भिन्नत्वे सति तद्गतधर्म्मवत्वं सादृश्यमिति वादिमतं न युक्तमिति सूचितम् ॥ ७५ ॥

अब्राह्मण इत्यादिप्रवृत्तिप्रसङ्गादाह—*नन्विति* । आदिपदेनाश्वक्रीतीत्यस्य परिग्रहः । *ततोऽप्यन्तरङ्गत्वादिति* । स्वार्थद्रव्यादीनां प्रतीतेः पूर्वं क्रमिकत्वं निरूपितम् , तत एव अन्तरङ्गत्वमिति भावः। *प्रागिति* । उत्तरपदे सुबुत्पत्तेः प्रागित्यर्थः । एतेन पूर्वपदे तु सुबुत्पत्तिरस्त्येवेत्युक्तम् । अत एव चर्मक्रीतीत्यादौ नलोपस्य सिद्धिः । अत्र सुबुत्पत्तेरित्युपलक्षणं स्त्रीप्रत्ययोत्पत्तेरित्यस्यापि । तेन पूर्वोक्तप्रयोजनोपपत्तिः । एतस्यां परिभाषायां बीजमाह—*उपपदमिति* । *कुगतीत्यत्रेति* । "गतिश्च" इति पृथक् सूत्रे इत्यर्थः । *इत्यर्थादिति* । "अतिङ्" इत्यस्य प्रथमान्तत्वात् समासपदस्यापि तत्वात्सामानाधिकरण्यस्य न्याय्यत्वादयमेवार्थ उचितः । अत्र समासस्य तिङन्तत्वासम्भवेन विशेषणसार्थक्याय तिङ्पदस्य तिङन्तघटिते लक्षणा द्रष्टव्या । तस्य च नञा तत्पुरुषेण तिङन्ताघटिते इत्यर्थः । अथवा तिङ्पदंशक्यार्थपरमेव नञा तु बहुव्रीहिः । *सुप्सुपेत्यस्य निवृत्त्येति* । समुदायनिवृत्तावस्य तात्पर्य्यम् । तृतीयान्तनिवृत्तिरेव तु विवक्षितेति प्राञ्चः ।

तत्त्वप्रकाशिका ।

एकेति व्यर्थमिति भावः ॥ ७४ ॥

*भाष्यसंमतफलाभावादिति* । एतेन "अनचि" इति पर्युदासेऽपि वागित्यादौ एतन्न्यायस्यानित्यत्वस्य द्वित्वसिद्धिः फलमित्यपास्तम् । भाष्ये प्रसज्यप्रतिषेधस्यैव स्वीकारेण भाष्यासंमतत्वात् । *भेदाघटितमिति* । अत एव, स्वस्य स्वेनापि सवर्णसंज्ञा भवतीति दिक् ॥ ७५ ॥

इत्यस्य निवृत्त्यैकदेशानुमत्या कारकांशे च सिद्धेयं तेनाश्वक्रीतीति सिद्धा। अन्यथा पूर्वं टाप्यदन्तत्वाभावात् "क्रीतात् करणपूर्वात्" ( ४-१-५० ) इति ङीष् न स्यात्। अस्या अनित्यत्वात् क्वचित् सुबुत्पत्त्यनन्तरमपि समा-

भैरवी।

वस्तुतस्तु उभयनिवृत्तिरेव "उपपदमतिङ्" इतिसूत्रस्थभाष्यात् प्रतीयते। तत्र हि—"अतिङ्" इतिकिमर्थम्? कारको व्रजति हारको व्रजति, अतिङिति शक्यमवक्तुम्. कस्मान्न भवति कारको व्रजति हारको व्रजतीति, सुप्सुपेति वर्त्तते, एवं तर्हि यदयमतिङिति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्य्योऽनयोर्योगर्निवृत्तं सुप्सुपेति, किमेतस्य ज्ञापने प्रयोजनम्, 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः" इत्येषा परिभाषा न कर्त्तव्या भवतीत्युक्तम्। अत्र भाष्ये अनयोर्योगयोरित्युक्तं, न तु विभक्तेः "गतिश्च" इति सूत्र एव निवृत्तिबोधनाय अत्र "सुप्सुपा" इति निवृत्तमित्युक्तं, तेन "उपपदमतिङ्" इति सूत्रेऽपि तन्निवृत्तिरभिमता, यदि तृतीयान्तानुवृत्तिरेवाभिमता स्यात्तदोपपदं सुबन्तमित्यर्थः स्यादेव, एवं सति कारको व्रजतीत्यादावुपपदस्य व्रजतीत्यस्य सुबन्तत्वाभावेन समासाप्रसक्तेरतिङ्ग्रहणस्य तद्द्वयावृत्तिप्रदर्शकत्वपरं भाष्यमसङ्गतमेव स्यादतः प्रथमान्तस्यापि निवृत्तिरित्यत्र तात्पर्यम्। इतोऽधिकं चन्द्रकलायां द्रष्टव्यम्। न चैवमुपपदस्यापि सुबुत्पत्तेः प्राक्समासः स्यात्, एवञ्च चर्मकार इत्यादौ नलोपानापत्तिरिति वाच्यम्। "उपपदम्" इति महासंज्ञाकरणेन विभक्त्यन्तस्यैवोपपदसंज्ञाप्रवृत्तेः। यद्यप्युपपादितरीत्या कारकस्य सुबुत्पत्तेः प्राक्समासो न लभ्यते, तथापि एकदेशानुमत्या कारकांशेऽप्येवं कल्प्यते, "कर्त्तृकरण" इति सूत्रे बहुलग्रहणेन वा कारकांशेऽप्येवं कल्प्यते। *अस्या अनित्यत्वादिति*। तत्र मानं तु "अम्बाम्ब" इति सूत्रे गवादिग्रहणम्, तद्धि गोष्ठ इत्यादौ "सुपिस्थ" इति कप्रत्ययान्तस्य समासे "सात्पदाद्योः" इति षत्वप्रतिषेधे प्राप्ते आरभ्यते। यदीयं नित्या तदा गोष्ठादिषु अपि सुबुत्पत्तेः प्रागेव समासो भविष्यतीति पदत्वाभावेन निषेधाप्राप्तेः षत्वस्य सिद्धौ

तत्त्वप्रकाशिका।

*ङीप्नस्यादिति*। नच उपसर्जनिष्यमाणन्यायेन व्याघ्रीकच्छपीत्यादौ अन्तरङ्गोऽपि टाप्न स्यादिति वाच्यम्। उपसर्जनिष्यमाणन्यायेन अपवादविषयातिरिक्तत्वेन सङ्कोचात्, घपशब्दयोरपवादविषयजातिवाचकातिरिक्तत्वेन टापो दुर्वारत्वात्। नच उपसर्जनिष्यमाणन्यायेन अपवादविषयघटकातिरिक्तत्वेन सङ्कोचः क्रियत इति प्रकृते टाप् न प्राप्नोतीति वाच्यम्। खट्वाक्रीतीत्यादौ खट्वाशब्दस्य अपवाद "क्रीतात्करणपूर्वात्" इत्येतद्विषयघटकत्वेन ततष्टाबनापत्तेः। नचैवमपि उपसर्जनिष्यमाणन्यायेन अपवादविषयान्तातिरिक्तत्वेन सङ्कोचः क्रियत इति व्याघ्री कच्छपीत्यादौ टाप् न भवति नापि खट्वया क्रीता खट्वाक्रीतीत्यादौ खट्वशब्दाट्टाबनापत्तिरिति वाच्यम्, घन इव कपिला घनकपिलेत्यादौ "अन्यतो ङीष्" इति ङीषापत्तेः, कपिलशब्दस्य "तत्पुरुषे तुल्यार्थ" इति पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वेन अपवादविषयान्तत्वात्, "अपवादो यद्यन्यत्र" इति परिभाषया व्याघ्रीत्यादौ टापो दुर्वारत्वाच्च।

परे तु कारकत्वतद्व्याप्यधर्मावच्छिन्नग्रहणे एव एषा परिभाषा प्रवर्त्तते, न चास्या विप्रतिषेधशास्त्रकर्तृकार्यव्यवस्थापकत्वेन विध्येकवाक्यत्वाभावात्कारकत्वव्याप्यधर्मावच्छिन्नग्रहणे एवेति वक्तुमशक्यमिति वाच्यम्? "स्त्रीप्रत्यये चानुपसर्जनेन" इति परिभाषाया लक्ष्ये एवोपस्थितिकल्पे स्त्रीप्रत्ययसामान्यग्रहणे विशेषग्रहणे वैषा नान्यत्रेतिवत् यत्र शास्त्रे कारकत्वव्याप्यधर्मावच्छिन्नग्रहणं तत्सुबुत्पत्तेः प्राक् प्रवर्तत इत्यादिवक्तुं शक्यत्वात्।

नच कुम्भकार इत्यादौ "यदा न षष्ठीसमासस्तदोपपदसमास" इति भाष्यविरोधः "षष्ठी" इतिसूत्रे कारकत्वव्याप्यधर्मावच्छिन्नग्रहणाभावादिति वाच्यम्, तस्यैकदेश्युक्तित्वेनादोषात्।

सो, यथा सा हि तस्य धनक्रीतेति।

अन्ये तु अनित्यत्वे न मानं तत्र अजादिरत्राष्टाबित्याहुः। अत एव-कुम्भकार इत्यादौ षष्ठीसमासोऽपि सुबुत्पत्तेः पूर्वमेव। षष्ठीसमासाभावे च उपपदसमासकृकातैर्थीभावः, इति न तत्र वाक्यमिति "उपपदम्" (२-२-१९) इति सूत्रे भाष्ये स्पष्टम्।

तत्र हि-'षष्ठीसमासादुपपदसमासो विप्रतिषेधेन' इति वार्तिकम्। अथवा विभाषा षष्ठीसमासो यदा न षष्ठीसमासस्तदोपपदसमास इति तत् प्रत्याख्यानं च।

यद्यपि उपपदसमासस्यान्तरङ्गत्वाभिप्रायकं न वा षष्ठीसमासाभावादु-

भैरवी।

तद्वैयर्थ्यं स्पष्टमेव। तस्मिन् सूत्रे स्थ इति प्रतिपदोक्तपरिभाषया "सुपिस्थ" इति सूत्रविहितकप्रत्ययान्तानुकरणं षष्ठ्यर्थे प्रथमा।

*न मानमिति*। अयम्भावः—दधिसेचावित्यादौ प्राक् सुबुत्पत्तेः समासे "सात्पदाद्योः" इतिसूत्रस्य प्रवृत्तिर्नस्यादतस्तेषु षत्वाभावसिद्धयर्थं पदादादिरितिपञ्चमीसमासस्यावश्यकत्वेन गवादिग्रहणस्य आवश्यकतयानित्यत्वे ज्ञापकत्वं न सम्भवतीति, धनक्रीतेत्यादौ तु बहुलग्रहणात् सुबुत्पत्त्यनन्तरमेव समास इति।

अन्ये त्वित्युपादानमरुचिबोधनाय, तद्बीजन्तु "न पदान्त" सूत्रे वैतस्यानित्यस्य सिद्धये पदान्तशब्दस्य पदेऽन्त इत्यर्थकत्वं स्वीकृतं, तत्पक्षे "गोचा" इत्यादौ प्राक् सुबुत्पत्तेः समासे पदपरत्वाभावेन निषेधाप्राप्तौ स्थानिवद्भावोऽल्लोपस्य स्यादिति रूपासिद्धिः स्पष्टैव। एतदपि धनक्रीतेत्येतत्तुल्यमेवेति चेद् बहुषु स्थलेषु बहुलग्रहणेन परिभाषाया अप्रवृत्तिकल्पनापेक्षया अनित्यत्वकल्पनमेव वरमिति, यदि तु "सात्पदाद्योः" इति सूत्रस्थपदशब्दस्य पदत्वयोग्यार्थकत्वं कल्प्यते तदा तत्र गवादिग्रहणस्य आवश्यकत्वेन ज्ञापकत्वं न सम्भवतीत्युच्यते तदा बहुलग्रहणादेव 'क्वचिदन्यदेव' इत्यर्थकात्परिभाषाया अनित्यत्वमिति। अत एव गतेरपि सुबुत्पत्त्यनन्तरं निर्गतः संयन्तेत्यादौ "कुगतिप्रादयः सह सुपा" इत्यस्य निवृत्तावपि सुबुत्पत्त्यनन्तरमेव समासो भवति। तेन रुत्वानुस्वारयोः सिद्धिः। प्राटितेत्यादौ पदान्तत्वात् पररूपं न भवति। *अत एवेति*। परिभाषायां कारकांशसत्त्वादेवेत्यर्थः। *षष्ठीसमासः*। कारकार्थकषष्ठ्यन्तस्य समासः। *तत्र हि*। "उपपदम्" इति सूत्रभाष्ये हि। *इति वार्तिकमिति*। एतेन विप्रतिषेधप्रदर्शकवार्त्तिकमपि कारकषष्ठ्यन्तस्य समासः सुबुत्पत्तेः प्रागित्यत्र मानमितिध्वनितम्। वार्त्तिकखण्डनाय भाष्ये आह—*अथवेति*।

ननुवार्त्तिकान्तरात् षष्ठीसमासस्य सुबुत्पत्त्यनन्तरमेव प्रवृत्तिरिति लभ्यत इत्याशयेन आह—*यद्यप्युपपदेति*। "षष्ठी" इतिसूत्रे सुपेति तृतीयान्तस्य सम्बन्धः। अत एव मातुः स्मरतीत्यादौ न समासः। इदञ्च वार्त्तिकं पूर्वविप्रतिषेधप्रदर्शकवार्त्तिकखण्डनाय प्रवृत्तम्। पूर्ववार्त्तिकाशयस्तु कुम्भकार इत्यादौ सूत्रद्वयबोध्यसमाससंज्ञा तत्पुरुषसंज्ञावत् स्थास्यति "उपपदम्" इति सूत्रस्यापि परत्वात् प्रवृत्तिः स्यादिति, न तु इदं वार्त्तिकं "विप्रतिषेधेपरं कार्य्यम्" इति सूत्रप्रवृत्तिप्रदर्शनपरम् विरोधाभावात्। यथा "उपपदम्" इतिसूत्रविहिता

तत्त्वप्रकाशिका।

तथाहि—कुम्भकार इत्यादौ वाक्याभावाय नित्यैकार्थीभावस्याङ्गीकर्तव्यतया महाविभाषया समाससंज्ञायाः विकल्पकत्वेन "यदा न षष्ठी समासस्तदोपपदसमास" इत्युक्ते व्यहितत्वेन एकदेशयुक्तित्वस्य स्पष्टत्वम्।

पपदसमास इति वार्त्तिककृतोक्तं तथापि तदुभयप्रत्याख्यानपरमथवेत्यादि भाष्यं परिभाषायां सामान्यतः कारकोपादानेन कारकविभक्त्यन्तेन कृद्भिः समासमात्रस्य सुबुत्पत्तेः पूर्वमेव लाभात् । एतेन एषा कारकतद्विशेषयोरुपादान एवेति परास्तम् । अस्या विध्येकवाक्यत्वाभावेन विप्रतिषेधादिशास्त्रवत्कार्य्यव्यवस्थापकमात्रत्वेनोपादान एवेत्यर्थालाभाच्च ॥ ७६ ॥

ननु उगिदचाम्" ( ७-१-७० ) इत्यत्र धातोश्चेदुगित्कार्य्यं तर्ह्यञ्चतेरेवेति नियमेनाधातोरेव नुमि सिद्धेऽधातुग्रहणं व्यर्थमत आह—

## साम्प्रतिकाभावे भूतपूर्वगतिः ॥ ७७ ॥

तत्तद्वचनसामर्थ्यन्यायसिद्धेयम् । तत्सामर्थ्याद्धातुभूतपूर्वस्यापीत्य-

भैरवी ।

समाससंज्ञा विग्रहत्वेन नित्या तथा षष्ठीति सूत्रविहिता तत्पुरुषसंज्ञापि, प्रकृतेषु अविग्रहत्वान्नित्यैव तृतीयान्तस्य तत्र असम्बन्ध इति । उपपदसमासस्यान्तरङ्गत्वं पूर्वस्थितनिमित्तकत्वेन । *तदुभयेति* । पूर्वपक्षसिद्धान्तरूपवार्त्तिकद्वयेत्यर्थः ।

ननु प्रत्याख्यानपरभाष्यस्य कथमिहोपपत्तिर्यावतोक्तरीत्योपपदसमासोऽन्तरङ्ग इत्यत आह—*परिभाषायामिति । कारकविभक्त्यन्तस्य* । कारकाधिकारीयसंज्ञाप्रयोज्यविभक्त्यन्तस्य । एतेन यद्यपि "षष्ठी" इतिसूत्रस्थोभयोः सुबन्तत्वे राजपुरुष इत्यादौ प्रवृत्तिस्तथापि प्रतिलक्ष्यं भेदकल्पनेन "कर्तृकर्म्मणोः" इतिसूत्रविहितषष्ठ्यन्तस्य समास एतत्परिभाषाबलादुत्तरपदे सुबुत्पत्तेः प्रागेवेति न अत्रोपपदसमासस्यान्तरङ्गत्वमिति भावः ।

एतेन षष्ठीसमासोऽपि सुबुत्पत्तेः प्रागिति यत्प्रतिज्ञातं तस्य सिद्धिः । न च समासयोर्भेदे स्वरभेदः । "गतिकारकोपपदात्" इत्यस्य उभयथापि प्रवृत्तेः, "षष्ठी" इति सूत्रस्य "कर्तृकर्म्मणोः" इति सूत्रविहितषष्ठ्यन्तस्थले उत्तरपदे सुबुत्पत्तेः प्राक् प्रवृत्तौ फलमप्यस्ति । तथाहि पतञ्जलिरित्यत्र, अञ्जलेः पतित इति विग्रहे मयूरव्यंसकादित्वात् "षष्ठी" इतिसूत्रेण वा समासे पृषोदरादित्वशब्दस्य लोपे तान्तस्य जश्त्वञ्चेति । "षष्ठी" इतिसूत्रस्य प्रवृत्तिपक्षे षष्ठ्यन्तस्य-राजदन्तादित्वं कल्प्यम् । "मयूर" इतिसूत्रस्य प्रवृत्तिपक्षे तु मयूरव्यंसकादित्वं कल्प्यमिति कल्पनायां न विशेषः । एतेन उक्तभाष्येण तादृशार्थस्य लाभोऽपि नेत्याह—*अस्या इति*। निराकाङ्क्षत्वेनेति शेषः । एतेनैषा लक्षणप्रवृत्तिव्यवस्थापकत्वेन परम्परया विप्रतिषेधशास्त्रवल्लक्ष्यसाधिकेति दर्शितम् ॥ ७६ ॥

गतिकारकसंज्ञाया धातुयोग एव सम्भव इति धातोः स्मृतत्वेन प्रसङ्गाह—*ननूगिदचामिति । साम्प्रतिकेत्यादि* । साम्प्रतिकस्य अभिप्रेततत्तत्कालिकलक्षणप्रवृत्तियोग्यस्य लक्ष्यस्याभावे भूतपूर्वस्य पूर्वकालिकतादृशबुद्धिविषयस्य ग्रहणमित्यर्थः । *तत्सामर्थ्यादिति* ।

तत्त्वप्रकाशिका ।

किञ्च "षष्ठी" इतिसूत्रेत्यनुवर्तत आहोस्विन्नवा यद्यनुवर्त्तते कुम्भकार इत्यादावपि सुबन्ते समासापत्तिः । यदि नानुवर्त्तते राजपुरुष इत्यादावपि सुबुत्पत्तेः प्राक् समासापत्तिः । अत एव षष्ठीसमासादुपपदसमासो विप्रतिषेधेन, अथवा विभाषा षष्ठीसमासः यदा न षष्ठी समासस्तदोपपदसमास इति वार्त्तिकद्वयं न वा षष्ठीसमासाभावादुपपदसमास इति सिद्धान्तिना प्रत्याख्यातमिति दिक् ॥ ७६ ॥

*नुम्सिद्धिरिति* । नुमविषय एव भूतपूर्वगत्याश्रयणम्, तेन गोमान् स्त्रीत्यत्र "उगितश्च" इति ङीप् न । नचाधातुग्रहणं धातोर्नुम् वारणाय, अचः परो यो झल् तदन्तान्नु-

थन गोमत्यतेः क्विपि गोमानित्यादौ नुम्सिद्धिः । "नामि" ( ६-४-३ ) इत्यादिसूत्रेषु भाष्ये स्पष्टा ॥ ७७ ॥

## बहुव्रीहौ तद्गुणसंविज्ञानमपि ॥ ७८ ॥

अपिना ऽतद्गुणसंविज्ञानम् । तेषां गुणानामवयवपदार्थानां संविज्ञानं विशेष्यान्वयित्वमिति तदर्थः । यत्र समवायसम्बन्धेन सम्बन्ध्यन्यपदार्थस्तत्र प्रायस्तद्गुणसंविज्ञानम् । अन्यत्र प्रायोऽन्यत् । लम्बकर्णचित्रगू उदाहरणे । "सर्वादीनि" ( १-१-२७ ) "जक्षित्यादयः" ( ६-१-६ ) इति च उदाहरणे सर्वनामसंज्ञासूत्रे भाष्ये स्पष्टा ॥ ७८ ॥

ननु "वदः सुपि क्यप् च" ( ३-१-१०६ ) इति चेनानुकृष्टस्य यतो "भुवो भावे" ( ३-१-१०७ ) इत्यत्राप्यनुवृत्तिः स्यादत आह—

## चानुकृष्टं नोत्तरत्र ॥ ७९ ॥

णमुल्यनुवर्त्तमाने "अव्ययेऽयथाभिप्रेत" ( ३-४-५९ ) इति सूत्रे पुनर्णमुल्ग्रहणमस्या ज्ञापकम् । अन्यथा क्त्वा चेति वदेत् । तद्धि उत्तरत्र उभयोः सम्बन्धार्थम् । उदाहरणानि स्फुटानि । इदमनित्यम् । अत एव "तृतीया

भैरवी ।

अधातुग्रहणसामर्थ्यादित्यर्थः । *गोमत्यतेः क्विपीति* । गोमन्तमिच्छतीत्यर्थे विहितक्यजन्तादित्यर्थः । *भाष्ये स्पष्टेति* । तत्र हि—"नामि" इति सनकारस्य ग्रहणं मास्त्विति शङ्कायां दीर्घे कृते नुट् न स्यादितिपरेणोक्ते अग्नीनामित्यत्रापि सर्वत्रान्तरङ्गत्वाद्दीर्घे कृते साम्प्रतिकाभावे भूतपूर्वह्रस्वान्तत्वमादाय नुड् भविष्यतीतिपरेणोक्ते नृणामित्यत्र दीर्घाभावपक्षे नुट्चरितार्थ इति शङ्कायां "नह्येकमुदाहरणम्" इतिरीत्या सनकारस्य ग्रहणं चरितार्थमित्यभिहितम् ॥ ७७ ॥

"उगिदचाम्" इति सूत्रस्य पूर्वोक्तत्वात्तस्य च बहुव्रीहिसंज्ञकत्वाद्बहुव्रीहिप्रसङ्गेनाह—*बहुव्रीहौ तद्गुणेति । तेषामित्यादिना वाक्यार्थं प्रदर्श्योभयोर्विभक्तेर्विषये प्रवृत्तिमाह—*यत्रेत्यादिना* । यद्यप्यन्यत्र संयोगसमवायान्यतरसम्बन्धनिवेशो दृश्यते, तथापि मञ्जूषायां पदार्थप्रयोजनमात्रस्यैव सम्बन्धत्वम्, संयोगस्तु स्वतोऽपि पदार्थ, इति न स सम्बन्ध इत्युक्तं, तदा येनात्र संयोगानुपादानेनाह—*समवायेति* । लम्बकर्णं भोजयेत्यत्र अन्यपदार्थस्य समवायेन विशेषणसम्बन्धित्वेऽपि व्यभिचारादाह—*प्राय इति* । लोहितोष्णीषा इत्यादौ । द्वितीयस्यापि व्यभिचारादाह—*प्राय इति* । लौकिकोदाहरणमुक्त्वा शास्त्रीयमाह—*सर्वादीनीति* ॥ ७८ ॥

समुच्चयार्थकापिशब्दोपादानप्रसङ्गादाह—*नन्विति । अनुवर्त्तमान इति* । "स्वादुमि" इत्यत इत्यादि । *अस्या* । चानुकृष्टमिति परिभाषायाः । "अव्यय" इति सूत्रस्थणमुल् ग्रहणस्य चारितार्थ्यमाह—*तद्धि उत्तरेति । उत्तरत्र* । तिर्यच्यपवर्गे इत्यादौ । स्फुटानीति* "रङ्कोरमनुष्येऽण्च" "दिक्पूर्वपदाट्ठञ्च" "संवत्सराग्रहायणीभ्यां ठञ्च" "पितुर्यच्च" इत्यादिः । आद्ये "कापिश्याः ष्फक्" इति ष्फको "सुप्राग्रुपाक्" इत्यत्र, द्वितीये "अर्द्धाद्यत्" इति यतो

तत्त्वप्रकाशिका ।

मित्यर्थस्य "अलच" इत्यनुवृत्त्याञ्चतेस्तदप्राप्तौ नलोपिनोऽञ्चतेरितिनियमाभावात् ॥ ७७ ॥

*चानुकृष्टमिति* । निवृत्त्यर्थकचकारानुकृष्टमित्यर्थः । अत एव "तृतीया चहोः" इत्यत्रा-

च ह्रोः" ( २-३-३ ) इत्यत्र चानुकृष्टाया अपि द्वितीयाया अन्तरान्तरेण इत्यत्र सम्बन्धः। "लुटि च क्लृपः" ( १-३-९३ ) इति सूत्रस्थेनानुवृत्त्यर्थकसकलचकारप्रत्याख्यानेन विरुद्धेयम्। व्याख्यानादेवानुवृत्तिनिवृत्त्योर्निर्वाह इति तदाशयः। "कुलिजाल्लुकूखौ च" ( ५-१-५५ ) इति सूत्रस्थभाष्यविरुद्धा च। तत्र हि-"द्विगोः ष्ठंश्च" ( ५-१-५४ ) इति सूत्रात् ष्ठनस्तत्र चेनाप्यनुकृष्टस्य "खोऽन्यतरस्याम्" इत्यस्य च अनुवृत्तिं स्वीकृत्य "लुक्खौ च" इति भाष्ये प्रत्याख्यातम्॥ ७९॥

ननु अनुदात्तादेरन्तोदात्ताच्च यदुच्यते तद्व्यञ्जनादेर्व्यञ्जनान्ताच्च न प्राप्नोतीत्यत आह—

**स्वरविधौ व्यञ्जनमविद्यमानवत्॥ ८०॥**

स्वरोद्देश्यके विधावित्यर्थः। "नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु" ( ६-२-१४२ ) इति सूत्रे पृथिव्यादिपर्युदासोऽस्या ज्ञापकः। अन्यथा पृथिव्यादीनामनुदात्तादित्वाभावादप्राप्तौ तद्वैयर्थ्यं स्पष्टमेव। धर्मि-

भैरवी।

"ग्रामजनपद" इत्यत्र, तृतीये "ग्रीष्मावरसमे" इति वुञो "व्यहरति" इत्यत्र, चतुर्थे "ऋतष्ठञ्" इति ठञो "गोत्रादङ्कवत्" इत्यत्रासम्बन्धः। एतत्परिभाषाया एव तत्र तत्र तस्य तस्यासम्बन्धनियामकत्वं भवतीति। *इदमनित्यमिति*। "एकाजुत्तरपदेण" इतिसूत्रे णग्रहणात्, तद्धि वाग्रहणासम्बन्धार्थम्, अस्या नित्यत्वे तु "प्रातिपदिकान्त" इतिसूत्रे चकारेणानुकृष्टस्य वेत्यस्यासम्बन्धे सिद्धे तद्वैयर्थ्यं स्पष्टमेव। *अत एव*। अस्याः परिभाषाया अनित्यत्वादेव। *द्वितीयाया इति*। द्वितीयापदमेव स्वरितत्वात् तत्र सम्बध्यते न तु तृतीयापदमस्वरितत्वात्। *अनुवृत्त्यर्थेति*। एतेन समुच्चयार्थं यश्चाकारस्तद्व्यावृत्तिः। *विरुद्धेति*। प्रात्याख्यानपक्षेऽनुवृत्त्यर्थचकारस्य न क्वापि सत्त्वं किन्तु अदृष्टार्थत्वमेव। *व्याख्यानादिति*। "स्वरितेनाधिकः कार" इति भाष्यकारीयव्याख्यानादित्यर्थः। *तदाशयः*। प्रत्याख्यानपरभाष्याशयात्। उक्तमेवार्थं द्रढयति—*कुलिजादिति। तत्र*। "द्विगोः" इति सूत्रे। *चेनाप्यनुकृष्टेति*। चेनानुकृष्टस्यापीत्यर्थः॥ ७९॥

बहुव्रीहिप्रसङ्गादाह—*ननु अनुदात्तादेरिति*। न प्राप्नोतीति*। स्वरस्याज्धर्मत्वेन व्यञ्जनादेस्तथात्वासम्भवादिति भावः। *स्वरविधावित्यादि*। स्वरविधावित्यत्र षष्ठीसमासः। सा च न कर्म्मणि "बिल्वादिभ्योऽण्" इतिसूत्रारम्भात्। तद्धि "अनुदात्तादेश्च"इत्यञ् बाधनार्थम्, किन्तु शेषे षष्ठ्यर्थः सम्बन्धश्च स्वरानुवादकशास्त्रविहितत्वमेव। तत्फलितमाह—*स्वरोद्देश्यक इति*। उद्देश्यकत्वञ्च तदनुवादकशास्त्रबोधितत्वमेव, धर्मिग्राहकमानात्। परिभाषायां ज्ञापकमाह—*नोत्तरेति*। अनेन सूत्रेण पृथिव्यादिवर्जितेऽनुदात्तादौ उत्तरपदे देवताद्वन्द्वे पूर्वोत्तरपदयोः प्रकृति स्वरो निषिध्यते। *अन्यथा*। व्यञ्जनस्याविद्यमानवत्वाभावे। *धर्मिग्राहकेति*। पूर्वोक्तस्यार्थस्यानुवादोऽयम्। एतेन पौनरुक्त्यं नाशङ्कनी-

तत्त्वप्रकाशिका।

नुवृत्त्यर्थकचकारानुकृष्टाया द्वितीयाया उत्तरत्रानुवृत्तावपि न क्षतिः। अत एवानुवृत्त्यर्थसकलचकारप्रत्याख्यानपर "लुटि च क्लृप" इति सूत्रस्थभाष्यविरोधो न। ये व्यवहितसूत्रस्थाश्चकारास्ते निवृत्त्यर्थकाः। अव्यवहितसूत्रस्थास्त्वनुवृत्त्यर्थकाः। अत एव "लुक्खौ च" इत्येतत्प्रत्याख्यानेन न विरोधः। एतेनेयमनित्येत्यपास्तम्॥ ७९॥

ग्राहकमानादेव च स्वरोद्देश्यकविधिविषयमिदम्। अत एव "शतुरनुमो न-द्यजादी" (६-१-१७३) "अचः कर्तृयकि" (६-१-१९५) इत्यादावजादी अच इत्यादेश्चारितार्थ्यम्। अत एव राजवतीत्यादौ नलोपस्यासिद्धत्वाद्-न्वतीशब्दत्वात् "अन्तोऽवत्याः" (६-१-२२०) इति स्वरो नोदश्वित्वानि-त्यत्र "ह्रस्वनुड्भ्याम्" (६-१-१७६) इति मतुबुदात्तत्वन्नेत्याकरः। स्प-ष्टं चेदं "समासस्य" (७-१-१३३) इति सूत्रे भाष्ये। "उच्चैरुदात्तः" (१-२-२९) इति सूत्रे कैयटस्तु इयमनावश्यकी समभिव्याहृताजुपरागेण हलोऽप्युदात्तादिवदवभासात्तदुपपत्तेरित्याह। तत्र भाष्येऽपि ध्वनितमेतत्॥८७॥

भैरवी।

यम्। *अत एव*। स्वरोद्देश्यकेति विशिष्यकथनादेव। सामान्यतोऽविद्यमानवद्भाव उदात्तत्वयोग्यविभक्तेरजादित्वाव्यभिचारादजादीति व्यर्थं स्यादिति भावः। *अत एव*। उक्तार्थत्वादेव। *उदश्वित्वानिति*। इदम्* कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तम्। न च "ह्रस्वनुड्भ्याम्" इति सूत्रेऽप्यन्तोदात्तादित्यस्यानुवृत्तेः स्वरोद्देश्यकत्वमस्त्येव तत्फलन्तु मात्वाविदद्विषुमानित्यत्रेष्धातोर्धान्ये निदित्यधिकारोऽयं यदिषेः "क्विप् च" इतिसूत्रविहितोऽण्प्रत्ययान्ताद्युदात्तेषु शब्दात्परस्य मतुप उदात्तत्वाभाव इति वाच्यम्। स्वरोद्देश्यकेत्यादेस्तत्तद्विशेषणाविशिष्टस्वरनिष्ठावच्छेदकताकज्ञानमात्रनिष्ठकारणताकप्रवृत्तिप्रतिबन्धकंव्यञ्जनमित्यर्थात्। तच्च ज्ञानमयाद्यनुदात्तक इत्यादिद्रष्टव्यम्। प्रतिबध्यस्य प्रसिद्धिस्तु प्रतिबन्धकाभावविशिष्टा, अर्जुन इत्यत्राजुप्रत्यये घटवान् पटवानित्यादौ मतुपि च द्रष्टव्या। आद्येऽर्जुनस्य तृणाख्या चेदित्यन्तोदात्तस्य अर्जुनशब्दस्य ज्ञानमज्प्रत्ययप्रवृत्तौ कारणमित्यादित्वविशेषणविशिष्टानुदात्तत्वनिष्ठावच्छेदकताकतज्ज्ञाननिष्ठकारणताकप्रवृत्तित्वमज्प्रत्ययप्रवृत्तौ एवं मतुपि घटवानित्यादावन्तत्वविशिष्टोदात्तत्वज्ञानं "ह्रस्वनुड्भ्याम्" इत्यस्य प्रवृत्तौ कारणमिति तद्वर्त्तते, कापोतं मायूरमित्यादौ तु आदित्वविशिष्टानुदात्तत्वविषयकज्ञाननिष्ठताहशकारणताकप्रवृत्तित्वमज्प्रत्ययप्रवृत्तिनिष्ठमिति तत् प्रतिबन्धकत्वं ककारमकारयोः प्राप्तमित्यविद्यमानवद्भावो भवति, उदश्वित्वानित्यत्र तकारस्तु नैतादृशः अस्य ह्रस्वान्तत्वज्ञानप्रतिबन्धकत्वस्यापि सत्त्वादिति तस्य अविद्यमानवद्भावो नेति बोध्यम्। एतेन दधतीत्यत्र नद्याद्युदात्तत्ववारणायान्तोदात्तादुत्तरपदादित्यत्यतोऽन्तोदात्तादित्यस्य "शतुरनुम" इतिसूत्रे सम्बन्धादस्य स्वरोद्देश्यकविधित्वमस्त्येवेत्यजादीत्यस्य वैयर्थ्यं स्यादेवेति परास्तम्, भ्यामादिनिष्ठहल्त्वादित्वज्ञानस्य अजादित्वाज्ञानप्रतिबन्धकत्वे सत्येऽपि निरुक्तस्वरोद्देश्यकत्वस्य तत्रासम्भवात्। आकर इत्युपादानं कैयटस्यापि संग्रहाय। *उच्चैरुदात्त इतीति*। तत्र सूत्रे अथ प्रथमानिर्दिष्टमजग्रहणमनुवर्तते उताहोनेति भाष्ये उक्तम्। अत्र कैयटः यत्र स्वरो विधीयते तत्र व्यञ्जनस्याविद्यमानत्वादच एव भविष्यति, "अनुदात्तादेरञ्" इत्यादावनुवादेऽपि न दोषः, स्वत एव हलोऽनुदात्तत्वं भवतु, अजुपरागवशाद्वेति, एवं तर्हि न्यायव्युत्पादनार्थं एवायं विचार इति अत्राजुपरागवशादित्यनेन अनुदात्तत्ववदुदात्तत्वस्य अपि अजुपरागवशाज्ज्ञानमित्यपि सूचितम्। *ध्वनितमिति*। तदग्रे भाष्ये एवमुक्तम्—"किञ्च अर्थोऽनुवृत्या वा अयमर्थः यद्येते व्यञ्जनस्यापि गुणा लक्ष्यन्ते"।

ननु च प्रत्यक्षमुपलभ्यत "इषेत्वोर्जेत्वा" नैते व्यञ्जनस्य गुणाः किन्तु अच एव स, तत्सामीप्यात्तु व्यञ्जनमपि ततगुणमुपलभ्यते तद्यथा द्वयोरक्तयोर्वस्त्रयोर्मध्ये शुक्लं वस्त्रं तद्गुणमुप-

तत्त्वप्रकाशिका।

*तत्तद्विशेषणेति*। स्वरत्वव्याप्यधर्मावच्छिन्नविषयता व्यञ्जनादौ व्यञ्जनान्ते चातिदि-

ननु एवमपि राजदृषदित्यादौ "समासस्य" ( ६-१-१६३ ) इति अन्तोदात्तत्वं षकाराकारस्य न स्यादत आह—

## हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवत् ॥ ८१ ॥

अस्याश्च "यतोऽनावः" ( ६-१-२१३ ) इति सूत्रेऽनौप्रतिषेधो ज्ञापकः। नाव्यमित्यत्राद्विर्नकारो न स्वरयोग्यो यश्चाकारस्तद्योग्यो नासावादिरिति स प्रतिषेधोऽनर्थकः। न चाद्विरेव नकार उदात्तगुणविशिष्टान्तरतमाज्रूपोऽस्त्विति वाच्यम्। तथा सति निमित्तभूतद्व्यच्कत्वस्य विनाशादुपजीव्यविरोधेनाद्युदात्तत्वाप्राप्तेरिति अन्यत्र विस्तरः। स्पष्टा चेयं "समासस्य" ( ६-१-२२ ) इति सूत्रे भाष्ये ॥ ८१ ॥

ननु "पूरणगुण" ( २-२-११ ) इति निषेधस्तव्यति स्यात्। "द्वि

भैरवी।

लभ्यत इति कुतो नु खल्वेतेऽज एव गुणाः अन्तरेणापि व्यञ्जनमेते गुणा लक्ष्यन्ते न पुनर्व्यञ्जनस्य गुणाः स्युस्तत्सामीप्यादन्तेऽपि तद्गुण उपलभ्यत इति न पुनरन्तरेण अचं व्यञ्जनस्योच्चारणमपि भवति। एतेनैतत्परिभाषाया अभावेऽपि व्यञ्जनादेर्व्यञ्जनान्तस्य वा अजुपरागवशादनुदात्तादित्वादिव्यवहारोपपत्तिर्भविष्यतीति ध्वनितमित्यर्थः ॥ ८० ॥

स्वरप्रसङ्गादाह—*नन्वेवमित्यादि*। *एवम्*। स्वरोद्देश्यकविधावेव अविद्यमानवद्भावस्वीकारे। *न स्यादिति*। अपि तु दकारस्य स्थाने आन्तरतम्यात् उदात्तो ऌकारः स्यादिति शेषः। *हल्स्वरप्राप्ताविति*। हलः स्थाने स्वरप्राप्तौ व्यञ्जनमविद्यमानवत् स्यादित्यर्थः। *अस्याश्चेति*। चकारस्त्वर्थे। *नाव्यमिति*। अन्यथेत्यादि। *विशिष्टान्तरतमाज्रूपः*। तादृशऌकाररूपः। *अस्त्विति*। स्यादित्यर्थः। एवञ्च तद्व्यावृत्त्यर्थं नौप्रतिषेधस्यावश्यकतया ज्ञापकत्वासम्भव इति भावः। *निमित्तभूतेति*। आद्युदात्तस्वरस्येत्यादि। *आद्युदात्तत्वाप्राप्तेरिति*। एवञ्च एतदर्थं प्रतिषेधोऽनर्थक एवेति। स ज्ञापक इति भावः। *अन्यत्र विस्तर इति*। ननु हलः स्थाने स्वरस्य प्राप्तेरेवाभावादियं परिभाषाऽयुक्ता। न च पूर्वोक्तरीत्या व्यञ्जनस्य स्थाने स्वरस्य प्रसङ्ग स्यादिति वाच्यम्। "उच्चैरुदात्त" इतिसूत्रे प्रथमान्तस्य "ऊकालोऽज्" इतिसूत्रस्थस्याजित्यस्य "अचश्च"इतिसूत्रस्थाऽच इत्यस्य चानुवृत्त्या उच्चैरुपलभ्यमानोऽजुदात्तः सचाचः स्थान इत्यर्थाद्व्यञ्जनस्याप्राप्तेरिति चेन्न। षष्ठ्यन्तेऽच इत्यत्र स्वरितत्वाभावात्तस्य स्वरूपपरत्वतात्पर्य्यकत्वाच्च। एवञ्च व्यञ्जनस्य स्थाने उदात्तादिशब्दद्वाच्यस्यापत्तिः परिभाषां विना स्फुटैव। *चेयमिति*। चोऽप्यर्थे। एवञ्चेयमपि स्पष्टा तथा च परिभाषाद्वयमपि भाष्यसम्मतमेवेत्युक्तम् ॥ ८१ ॥

स्वरप्रसङ्गात्तव्यतस्तकारस्य स्वरार्थत्वात् तस्य चानुबन्धत्वात् तत्प्रसङ्गेन आह—*ननु पूरणेति*। *तव्यतिस्यादिति*। तव्यत्यपि स्यादित्यर्थः। अस्यापत्तिः स्वकर्त्तव्यमि-

तत्त्वप्रकाशिका।

श्यत इत्यर्थेन ह्रस्वान्तत्वबुद्धेरभावात् ॥ ८० ॥

*विनाशादिति। नच स्वोपजीव्यभूतो यत्सन्निपातः स्वातिरिक्तः, तद्विघातं प्रति स्वयमनिमित्तमितिसन्निपातपरिभाषार्थस्य वक्ष्यमाणत्वे मोक्तविरोध इति वाच्यम्। स्वातिरिक्तेतिविशेषणस्य स्ववैयर्थ्यमूलकत्वेन आव्यमित्यादौ "यतोऽनाव" इत्यस्य चारितार्थ्याद्वैयर्थ्याभावेन स्वं प्रत्यपि निमित्तं न भवतीत्यदोषात् ॥ ८१ ॥

औत्" ( ७-१-८४ ) इत्यौत्वं दिवेः क्विप्यपि स्यात् । तथा "यतोऽनावः" (६-१-२१३) इति स्वरो ण्यत्यपि स्यात् । "ऋदृशोऽङि गुणः" (७-४-१६) इति चङ्यपि स्यात् । अत आह—

## निरनुबन्धकग्रहणे न सानुबन्धकस्य ॥ ८२ ॥

## तदनुबन्धकग्रहणे नातदनुबन्धकस्य ॥ ८३ ॥

वामदेवाड्ड्यड्ड्यौ" ( ४-२-९ ) इति सूत्रे, ड्यड्ड्यतोर्डित्वमनयोर्ज्ञापकम् । तद्धि—"ययतोश्चातदर्थे" ( ६-२-१५६ ) इत्यत्र तयोरग्रहणार्थम् । नञः परस्य ययदन्तस्योत्तरपदस्यान्त उदात्त इति तदर्थः । एवं च अवामदेव्येऽव्ययपूर्वपदप्रकृतिस्वर एव भवति । तन्मात्रानुबन्धकग्रहणे स च अन्यश्चानुबन्धो यस्य तद्ग्रहणं नेत्यन्त्यार्थः । एते च प्रत्ययाप्रत्ययसाधारणे "दिव औत्" ( ७-१-८४ ) इत्यादौ सञ्चारितत्वात् । वर्णग्रहणे चानयो·

भैरवी ।

त्यादौ । *दिवेः क्विप्यपीति* । अक्षद्यूरित्यादौ । *ण्यत्यपीति* । कार्य्यमित्यादौ । *चङ्यपीति* । न चैतेभ्यः केवलेभ्यो न चङ् सम्भवति णिजन्तेभ्य एव चङ् वाच्यस्तत्र णिचा व्यवधानाच्चाङ्परत्वमिति वाच्यम् । "ऋदृशोऽङि"इत्यस्य ऋदृशो ङीत्यतोऽङीत्यनुवर्त्तमाने "श्वयतेर" इत्यत्वं चङ्यपि स्यादित्यर्थात् । *तद्धीति* । डित्त्वं हीत्यर्थः । अव्ययपूर्वपदप्रकृतिस्वरः "तत्पुरुषे तुल्यार्थ" इतिसूत्रेण विहितः स्वरः । *तन्मात्रेति* । स एवानुबन्धो यस्येति नियमांशमन्तर्भाव्य समासादेतादृशार्थलाभस्तत्फलमाह—*स च अन्यश्चेति* । एवञ्चातदनुबन्धकस्येत्यत्रापि स एवानुबन्धो यस्य स तदनुबन्धकः, न तदनुबन्धकोऽतदनुबन्धकस्तस्य नेत्यर्थः स्वीकार्य्यः । एवं च तद्भिन्नानुबन्धकस्य ग्रहणं नेति फलितम् । ज्ञापकत्वसजातीयापेक्षत्वात्प्रत्ययमात्रस्य यत्र विचारस्तत्रैव परिभाषाद्वयप्रवृत्तिरिति भ्रमनिवारणायाह—*एते चेति* । *दिव औदित्यादाविति* । अत्राद्यपरिभाषायाः प्रवृत्त्या प्रत्ययाप्रत्ययसाधारण्यं तस्य उचितमिति भावः । न चाद्यायां भाष्यप्रामाण्यात् प्रत्ययविषयत्वेऽपि द्वितीयपरिभाषाया उभयसाधारण्ये किं मानमिति वाच्यम् । ओहाकः ककारस्य हश्च "व्रीहिकालयोः" इतिसूत्रे सामान्यग्रहणार्थस्य करणेन तथा कल्पनात् । यदि त्वन्त्यपरिभाषाया अन्यतरानुबन्धोच्चारणा एव प्रवृत्तेः वक्ष्यमाणत्वान्नेदं प्रयोजनमित्युच्यते, तदा "पूर्वपराभ्याङ्गः स्थकन्" "प्रसुल्व" इतिसूत्राभ्यां साहचर्य्यात् तन्मध्यपाठाच्चाननुबन्धकस्यैव ग्रहणमितिशङ्कावारणाय ककारो बोध्यः । न चैवं द्वितीयपरिभाषाया प्रत्ययाप्रत्ययसाधारण्येन प्रवृत्तौ मानालाभस्तदवस्थ एवेति वाच्यम् । "वामदेवाड्ड्यड्ड्यौ" इत्येकसूत्रस्थडकारोच्चारणेन ज्ञाप्यत्वात् प्रथमपरिभाषासाहचर्य्याच्च द्वितीयाया अपि तथात्वकल्पनात् ।

अतिप्रसङ्गं निराचष्टे—*वर्णग्रहणे चेति* । तत्र हि भाष्ये—ङकारः किमर्थ इति शङ्का अत्र कैयटः—औङ इति रूपं क्वापि न विज्ञातमिति तथोपादाने किं प्रयोजनमिति प्रश्नः । ततो भाष्ये—सामान्यग्रहणार्थ इत्युच्यमाने प्रथमाद्विवचनस्यैव स्यात् निरनुबन्धकपरिभाषयेति भावः । एवञ्च प्रथमाद्वितीयाद्विवचनयोर्ग्रहणार्थमत्र ङकार उच्चारितः । एवञ्चायं ङकारः स्वबोध्यस्यौकारस्योपकारकश्चित्रक इव, तदनुबन्धकपरिभाषा त्वत्र न प्रवर्त्तते ङकारोच्चारण·

तत्त्वप्रकाशिका ।

*चङ्यपि स्यादित्यर्थादिति* । नच श्वयतेश्चङोऽभावः, "विभाषाधेट्श्व्योः" "जॄस्तम्भुम्रुचु" इतिसूत्राभ्यां चङोर्विधानात् ॥ ८२ ॥

रप्रवृत्तिरिति स्पष्टम् "औङ आपः" ( ७-१-१८ ) इत्यत्र भाष्ये । येनानुबन्धेन सानुबन्धकत्वं द्व्यनुबन्धकत्वादि वा तदनुच्चारणे एवैषा धर्मिग्राहकमानात् । तेन "जश्शसोः" ( ७-१-२० ) इत्यत्र नैषेति निरनुबन्धकत्वात् तद्धितशस एव अत्र ग्रहणं स्यादिति न शङ्क्यम् । एवमन्त्यान्यतरानुबन्धोच्चारण एव । तेन "वनोरच" (४-१-७) इत्यादौ ङ्वनिप्क्वनिपोर्ग्रहणसिद्धिः । एकानुबन्धकग्रहणे सम्भवतीति त्वर्थो न भाष्यादिसम्मत इत्यन्यत्र विस्तरः ।। ८२ ॥ ८३ ॥

ननु कुटीर इत्यादौ स्वार्थिकत्वात् स्वार्थिकानां प्रकृतितो लिङ्गवचना-

भैरवी ।

सामर्थ्यादिति तात्पर्य्यम् । अथवा वर्णग्रहणमिदं भवति न चैतद्वर्णग्रहणेषु भवति अननुबन्धकग्रहणेन सानुबन्धकस्येति । अत्र कैयटः-प्रत्ययस्यानुबन्धे भावाभावाभ्यां निरनुबन्धकपरिभाषा व्यवस्थां करोति न वर्णस्येति. अनेन औ इत्युच्यमाने प्रथमाद्विवचनस्यैव ग्रहणं स्यादिति दोष उद्धृतः, वर्णग्रहणे निरनुबन्धपरिभाषाया अप्रवृत्तेः फलं त्वौपगव इत्यत्र "ओर्गुणस्य" वायव इत्यत्र "घेर्ङिति" इतिगुणस्य च सिद्धिः । वर्णग्रहणेऽपि एतत्परिभाषाप्रवृत्तौ निरनुबन्धकोकारान्ते भानव इत्यत्र "ओर्गुणस्य" चिकीर्षव इत्यत्र "घेर्ङिति" इति गुणस्य च चरितार्थत्वाड्डोप्रत्ययान्तोपगुशब्दावयवोकारस्य सानुबन्धकोऽणप्रत्ययान्तवायुशब्दावयवोकारे "घेर्ङिति" इतीत्यस्य च प्रवृत्तिर्न स्यात् । एवम् "आद्गुण" इति सूत्रस्य दैत्येश्वर इत्यत्र प्रवृत्तिः स्यादस्यापत्यमिः औपगवस्य इः औपगवेरित्यत्र प्रवृत्तिर्न स्यादिति बोध्यम् । यदुक्तं वर्णग्रहणे वानयोरिति, तस्यानयोर्न प्रवृत्तिः । द्वितीयायास्तु प्रवृत्तिरित्यर्थः तेन "ऋदृशोऽङिगुण" इति चङ्यपीत्यवतरणेन न विरोधः । अथ परिभाषाप्रवृत्तिविषये विशेषान्तरमाह—*येनेति* । *तदनुच्चारणे* । तस्यानुबन्धस्यानुच्चारणे । तत्राद्यपरिभाषाविषये आह-*नेनेति* । द्वितीयपरिभाषाविषये द्व्यनुबन्धकत्वमित्यस्य नातदनुबन्धकत्वमित्यर्थः । *येनेति* । याभ्यामित्यर्थकम् । तथाच उभयानुच्चारण इति फलितम् । तेन "ह्रस्वनुड्भ्याम्" इति सूत्रे मतुब्ग्रहणेन ड्मतुपो न ग्रहणम् । अन्यथा तन्त्रेण मतुब्ग्रहणेनोभयोर्ग्रहणे टिलोपेऽपि कुमुद्वानित्यत्र भूतपूर्वह्रस्वान्तत्वमादाय मतुप उदात्तत्वं स्यात्, वाशब्दश्चार्थे । *धर्मिग्राहकमानात्* । ड्यड्ड्यतोर्ङित्करणात् । *तद्धितशस इति* । लौकिकसाहचर्य्यपरिभाषापेक्षया ज्ञापकसिद्धैतत्परिभाषाया प्राबल्यादिति भावः । क्वचित्तु तद्धितसोऽपीति पाठः । तत्रापिना साहचर्य्यात् सुप्शसः संग्रहः । अविरोधाद्द्वयोरपि परिभाषयोः प्रवृत्तिः स्यादिति तद्भावः ।

*ग्रहणसिद्धिरिति* । अन्यथा वनिप एव ग्रहणं स्यात् । न च विधेयविषये उच्चारणार्थानामित्संज्ञयैव निवृत्तिस्वीकाराद्वनिपोऽपि द्व्यनुबन्धकत्वमिति वाच्यम् । अनुबन्धपदस्य निवृत्त्यतिरिक्तफलकेत्संज्ञकपरत्वात् । अन्योक्तपरिभाषार्थं खण्डयति-*एकेति* । एतादृशो यदि परिभाषार्थः स्यात्तदा "मतुवसोः" इतिसूत्रभाष्ये 'वन उपसङ्ख्यानम्' इतिवार्त्तिकस्य प्रातरित्वा इत्युदाहरणमुक्तं तस्यासङ्गतिः स्यात् । तत्र हि-अन्येभ्योऽपीति क्वनिप्, आदिना कैयटादिपरिग्रहः । कैयटेन हि "टिड्ढ" इतिसूत्रे तन्मात्रानुबन्धकग्रहण इत्यर्थस्यैव वर्णनात् "वनोरच" इत्यत्र दोषापत्तेश्च ॥ ८२ ॥ ८३ ॥

उक्तपरिभाषायास्तद्धितविधायकसूत्रज्ञाप्यत्वात् तत्प्रसङ्गेन आह—*ननु कुटीर इत्यादाविति* । "कुटीशमी" इतिसूत्रविहितस्येति शेषः । स्वार्थिकत्वादनिर्दिष्टार्थाः प्रत्ययाः स्वप्रकृत्यर्थे भवन्तीति न्यायेन स्वार्थिकत्वात् । *प्रकृतित इति* । प्रकृतिशब्दात् षष्ठ्यन्ता-

नुवृत्तन्यायप्राप्तत्वात् पुंस्त्वानुपपत्तिरप्कल्पमित्यत्र नपुंसकत्वैकवचनयोर-नुपपत्तिश्चेत्यत आह—

**क्वचित् स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते ॥८४॥**

"णचः स्त्रियाम्" (५-४-१४) इति सूत्रे स्त्रियामित्युक्तिरस्या ज्ञापिका । अन्यथा "कर्मव्यतिहारे णच् स्त्रियाम्" (३-३-४३) इति स्त्रियामेव विधानात् किं तेन । स्पष्टा चेयं बहुजूविधायके भाष्ये ॥ ८४ ॥

ननु सुपथी नगरीति "युवोरनाकौ" (७-१-१) इति सूत्रभाष्योदाहृत "इनः स्त्रियाम्" (५-४-१५२) इतिकप् स्यादत आह—

**समासान्तविधिरनित्यः ॥ ८५ ॥**

"प्रतेरंश्वादयस्तत्पुरुषे" (६-२-१९३) इत्यन्तोदात्तत्वायांश्वादिषु राजन् शब्दपाठोऽस्या ज्ञापकः । अन्यथा टचैवान्तोदात्तत्वे सिद्धे किं तेन । "द्वित्रिभ्यां पाद्दन्मूर्द्धसु (६-२-१९६) इति स्वरविधायके भाष्ये स्पष्टेयम् ॥ ८५ ॥

ननु शतानीत्यादौ नुमि कृते षट्संज्ञा प्राप्नोति ततश्च लुक् स्यात्तथोपादास्तेत्यत्रात्वे कृते "स्थाघ्वोरिच्च" (१-२-१७) इतीत्वं प्राप्नोत्यत आह-

**सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य ॥ ८६ ॥**

सन्निपातो द्वयोः सम्बन्धस्तन्निमित्तो विधिस्तं सन्निपातं यो विहन्ति त-

भैरवी ।

दाद्यादित्वात्तसिः । *न्यायेति* । यः प्रत्ययो यादृशेऽर्थे भवति तदन्तस्य तल्लिङ्गवचनकत्वमितिन्यायेन इत्यर्थः । *अप्कल्पमिति* । ईषन्न्यूना आप इति विग्रहे ईषदसमाप्तिविशिष्टे स्वार्थे कल्पप्प्रत्ययः । *क्वचिदित्यादि* । 'प्रकृतित' इत्यत्रापि षष्ठ्यन्तादेव पूर्ववत्तसिः । *अन्यथा* । परिभाषाया अभावे । एवञ्च लिङ्गांशे ज्ञापकसत्वाद्वचनांशेऽपि एकदेशानुमत्या प्रकृतिसम्बन्धिवचनानिवर्त्तनस्य कल्पनमिति भावः ॥ ८४ ॥

तद्धितप्रसङ्गादेवाह—*नन्विति* । *सुपथीति* । शोभनः पन्थाः यस्यामिति विग्रहः । *प्रतेरिति* । प्रतेः परं श्वादयस्तत्पुरुषेऽन्तोदात्ता इत्यर्थः । *सिद्धे इति* । प्रतिराजा इत्यत्रेत्यादिः । अत्र "राजाहः" इति टच् न ॥ ८५ ॥

समाससंज्ञाप्रसङ्गेन षट्संज्ञाया अपि स्मरणात्तत्राह—ननु शतानीति* । आदिना सहस्राणीत्यादेः परिग्रहः । *उपादास्तेति* ॥ दीङो रूपम् । *द्वयोः सम्बन्ध इति* । पूर्वपरयोर्वि-

तत्त्वप्रकाशिका ।

*किन्तेनेति* । ननु लिङ्गविशिष्टपरिभाषाया समासान्तविधावप्रवृत्तेः राज्ञी प्रतिगतः प्रतिराज्ञिरित्यत्र स्वरार्थमश्वादिषु राजन्शब्दपाठ आवश्यकः । नच स्वरविधावपि लिङ्गविशिष्टपरिभाषाया अप्रवृत्तिः, स्वरविधौ सङ्घातग्रहणे भाष्ये दोषदानेनावयवग्रहणेऽप्रवृत्तौ मानाभावादत आह-*द्वित्रिभ्यामिति* ।

केचित्तु क्वचिदवयवग्रहणेऽपि न प्रवर्तत इति वदन्ति ।

अन्येतु द्वित्रिभ्यामित्यतो ष इत्यनुवर्तमाने "बहुव्रीहौ सक्थ्यक्ष्णोः" इति षच्ग्रहणम् निरुक्तार्थज्ञापकमित्याहुः ॥ ८५ ॥

ननु शतानीत्यादौ षान्तसाहचर्यादौपदेशिकनान्तस्यैव ग्रहणे न दोषोऽत आह-*उपादास्ते-

स्यानिमित्तम्। उपजीव्यविरोधस्यायुक्तत्वमिति न्यायमूलेयम्। अत एवात्र सन्निपातशब्देन न पूर्वपरयोः सम्बन्ध एव, किन्तु विशेष्यविशेषणसन्निपातोऽपि गृह्यते। अत एव ग्रामणि कुलमित्यादौ नपुंसकह्रस्वत्वेऽपि "ह्रस्वस्य पिति कृति" (६-१-७१) इति तुग्न। प्रातिपदिकाजन्तत्वसन्निपातेन जातस्य ह्रस्वस्य तद्विघातकत्वात्। तुक्यजन्तत्वविघातः स्पष्ट एव। न चार्थाश्रयत्वेन ह्रस्वस्य बहिरङ्गतयाऽसिद्धत्वम्। अर्थकृतबहिरङ्गत्वानाश्रयणस्योक्तत्वात्।

किं च "षत्वतुकोरसिद्धः" इत्येतद्बलात्कृतितुग्ग्रहणाच्च तुग्विधौ बहिरङ्गपरिभाषाया अप्रवृत्तेः। सर्वविधसन्निपातग्रहणादेव वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्तं स्यादित्येतत्परिभाषादोषनिरूपणावसरे वार्त्तिककृतोक्तम्। नहि प्रत्ययः पूर्वपरसन्निपातनिमित्तकः स एव च सन्निपातशब्देन गृह्यत इति मत्वा न प्रत्ययः सन्निपातनिमित्तक इति शङ्कायां तदभ्युपेत्यैवाङ्गसंज्ञा

भैरवी।

शेषणविशेष्ययोर्वा सम्बन्धः इत्यर्थः। *उपजीव्यविरोधस्येति*। कारणविरोधस्येत्यर्थः। उपजीव्यशब्दो हि उपजीव्यत आश्रीयते कार्य्याय यदिति व्युत्पत्त्या कारणपरः उपजीवत्युत्पद्यते यदिति व्युत्पत्त्या उपजीवकशब्दः कार्य्यपरः। एवञ्च कारणविरोधो नोचित इति भावः। *अत एव*। सन्निपातपरिभाषाया न्यायमूलत्वादेव। परिभाषायां सन्निपातलक्षणशब्दो बहुव्रीहिसंज्ञकः विधिशब्दार्थोऽन्यपदार्थः स च कर्म्मक्विप्रत्ययान्तः तद्विघातस्येत्यत्र "कर्मणि" इत्यण्।

यत्तु कश्चिदाह—इयं परिभाषा "न तिसृचतसृ" इति निषेधेन ज्ञाप्यते। एतद्धि दीर्घनिषेधार्थमारभ्यते दीर्घस्य ऋकारस्थानिकस्य च प्राप्तिर्विभक्तिपरत्व एव, विभक्तिपरत्वञ्च विभक्तिसन्निपातनिमित्तिकयोस्तिसृचतस्रादेशयोर्ङीबभाव एव, ङीबभावश्च सन्निपातपरिभाषासाध्य इति, एतच्च स्वस्रादिषु अनयोः पाठो नास्त्येतदभिप्रायेण तन्न. यदीयमुक्तज्ञापकसाध्या तदा पूर्वपरसन्निपातस्य तिसृचतस्रादेशे निमित्तत्वात् ज्ञापकसाजात्यात्पूर्वपरसन्निपातस्यैव परिभाषाप्रवृत्तौ निमित्तत्वं स्यात्। न तु विशेषणविशेष्यसन्निपातस्यापि, एषा न्यायमूलेत्यस्यैव वक्तुमुचितत्वात्। *अत एव*। विशेषणविशेष्यसन्निपातस्यापि परिभाषाघटकसन्निपातपदेन ग्रहणादेव। ग्रामणीति भिन्नं पदम्। *कुलमिति*। नपुंसकत्वाभिव्यक्तये। *तद्विघातकत्वादिति*। तद्विघातकतुकं प्रत्यनिमित्तत्वादित्यर्थः। कैयटोक्तिं खण्डयति—*न चेत्यादिना*। अर्थो नपुंसकत्वरूपः। अर्थापेक्षान्तरङ्गबहिरङ्गभावमभ्युपेत्याह—*किञ्चेति*। "षत्वतुकोरसिद्धः" इतिसूत्रस्थतुग्ग्रहणस्य प्रयोजनमधीत्य प्रेत्येति, यदि तुग्विधौ बहिरङ्गपरिभाषाप्रवृत्तिः स्यात्तदान्तरङ्गे तुकि कर्त्तव्ये पदद्वयसम्बन्धिवर्णद्वयनिमित्तकत्वेन बहिरङ्गस्य दीर्घस्यासिद्धत्वात्तुकः सिद्धौ तत्र सूत्रे तुग्ग्रहणमनर्थकं स्यात्। एवं कृति तुग्विधावपि बोध्यम्। विशेषणविशेष्यसन्निपातस्यापि आश्रयणे भाष्यमपि प्रमाणमित्याह—*सर्व विधेत्यादिना*। *सर्वविधेति*। उभयविध इत्यर्थः। दाक्षिः प्लाक्षिरित्युदाहरणम्। अत्र वर्णाश्रयः प्रत्यय इञ् स्ववर्णविचालस्य "यस्येति" लोपस्यानिमित्तं स्यादित्यर्थः। *वार्त्तिककृतोक्तमिति*। वार्त्तिककृतेत्यस्य सिद्धान्तिनेत्यादि। एकदेशिमतमाह—*न हीति*। हिशब्दश्चार्थे। इति मत्वेति कथनेन अस्यैकदेश्युक्तित्वं ध्वनितम्। एतेनतद्भाष्यविरोधात्पूर्वपरसन्निपातः सन्निपातपरिभाषायां न गृह्यत इत्युक्तिर्निरस्ता—*अङ्गसंज्ञेति*। अकारान्त-

तर्हि निमित्तं स्यादित्येकदेशिनोक्तमिति न तद्भाष्यविरोधः ।

किं चैवं शैवो गार्ग्यो वैनतेय इत्यादावपि अङ्गसंज्ञाया लोपनिमित्तत्वानापत्त्या वर्णाश्रय इत्यस्य वैयर्थ्यम् । ग्रामणिकुलं ग्रामणिपुत्र इत्यादावुत्तरपदनिमित्तके ह्रस्वत्वे यथाकथञ्चिद्बहिरङ्गपरिभाषयापि वारणं सम्भवतीति "कृन्मेजन्तः" ( १-१-३९ ) इत्यत्र "ह्रस्वस्य पिति" ( ६-१-७१ ) इति सूत्रे चैकदेशिना तया परिभाषया तुग्वारितो भाष्ये । अत एव परिभाषाफलत्वेनेदमुक्तं "कृन्मेजन्त" इतिसूत्रे वार्त्तिककृतेति केचित् । सन्निपातलक्षणविधित्वमस्या लिङ्गम् । स्वप्रवृत्तेः प्राक् स्वनिमित्तभूतो यः सन्निपातस्तद्विघातकस्य स्वातिरिक्तशास्त्रस्य स्वयमनिमित्तमिति फलति ।

ननु एवं रामायेत्यादौ "सुपि च" ( ७-३-१०२ ) इति दीर्घानापत्तिः ।

भैरवी ।

प्रकृतौऽप्रत्ययसान्निपातनिमित्ताङ्गसंज्ञा पौर्वापर्य्यभावात्मकसम्बन्धनिमित्तैव सा अल्लोपनिमित्तं नस्यादित्यर्थः । एकदेशिनेतिकथनेनैतद्भाष्यबलेन सन्निपातपरिभाषायाः सङ्कोचो न न्याय्यः ।

अस्यैकदेश्युक्तित्वं स्पष्टयति—*किञ्चेति* । शैव इत्यादि अकारान्तशिवशब्दाण्प्रत्यययोः पौर्वापर्य्यभावस्याङ्गसंज्ञां प्रति निमित्तत्वमेवमुत्तरत्राप्यूहनीयम् । *वैयर्थ्यमिति*। तथा च 'वर्णाश्रय' इत्युपादानसामर्थ्याद्विशेषणविशेष्यसन्निपातोऽपि गृह्यत इति भावः ।

ननु एवं ग्रामणिकुलं ग्रामणिपुत्र इत्यत्र बहिरङ्गपरिभाषया तुको व्यावृत्तिः कृता "कृन्मेजन्त" सूत्रभाष्ये न त्वनया परिभाषयेति पूर्वपरसन्निपात एवाश्रीयत इति चेत्तत्राह—*ग्रामणीत्यादि* । यथा कथंचिदिति* । नाजानन्तर्य्यपरिभाषाया बाधिकाया विषयेऽपि बाध्यप्रवृत्तिस्वीकारात् । *अत एव । विशेषणविशेष्यसन्निपातस्यापि निमित्तत्वादेव । *इदमुक्तमिति । ग्रामणिकुलमित्याद्युक्तम् । *केचिदिति* । भाष्यतत्त्वविदः । एवञ्च यं सन्निपातं निमित्तं कृत्वा स्वस्य प्रवृत्तिस्तस्य सर्वथा विघटकं यच्छास्त्रं तस्य स्वप्रयोज्या प्रवृत्तिर्नेति फलितं तदा-*स्वप्रवृत्तेः प्रागित्यादि* । शङ्कते-*ननु इति* । *एवम्* । सन्निपातपरिभाषाङ्गीकारे । ननु सन्निपातलक्षणविधित्वस्यैतत्परिभाषालिङ्गत्वे तादृशविधिनिमित्तमेवैतत्परिभाषायामपि निमित्तमिति के सन्निपातनिमित्तकयादेशस्यान्तरङ्गस्य इष्टयाधिकापेक्षदीर्घ-

तत्त्वप्रकाशिका ।

ति* । *एकदेशिनोक्तमिति* । सर्वत्र स्वप्रवृत्त्युत्तरकालिकप्रवृत्तिमता शास्त्रेण यस्य साधुत्वं बोध्यते तदपि साध्विति अभ्यनुज्ञावाक्ये स्वोपजीव्यविघातकातिरिक्तत्वेन सङ्कोचात् संज्ञाशास्त्राणां साधुत्वविधायकत्वाभावेनाभ्यनुज्ञावाक्याभावेनैतद्भाष्यस्यैकदेश्युक्तित्वं स्पष्टमेव ।

इदमत्राकूतम्—एवमेव विधिशास्त्रे यत्किञ्चिद्बोधितसाधुत्वमुद्देश्यतावच्छेदकं स्वप्रवृत्त्युत्तरकालिकवृत्तिमता सन्निपातपरिभाषाप्रयोज्यस्वोपजीव्यविघातकातिरिक्तेनेति सङ्कोचवता शास्त्रेण यस्य साधुत्वं बोध्यते तदपि साध्वित्यभ्यनुज्ञावाक्यं च कल्पनीयम् । अत एव गगरी आनयेत्यादौ णत्वादिकं न, गगरी इति प्राकृतशब्दे यत्किञ्चिद्बोकधितसाधुत्वस्याभावेन यत्किञ्चिद्बोधितसाधुत्ववद्घटकस्यैवेको यणिवधानात् । अत एव सुन्दोपसुन्दन्यायेन एकस्मिन्नेव लक्ष्ये केनचिच्छास्त्रेण साधुत्वस्य पूर्वपूर्वप्रवृत्तशास्त्रेणाप्यङ्गीकृतत्वात् ।

*सन्निपातलक्षणविधित्वमस्या लिङ्गमिति* । विघातकशास्त्रत्वमस्या लिङ्गमिति वक्तव्यम् । पूर्वरीत्या अभ्यनुज्ञावाक्ये सङ्कोचे नीतिशास्त्रमेवानुसर्तव्यम्भवति न धर्मशास्त्रमित्यु-

अदन्ताङ्गङेसन्निपातेन जातस्य यादेशस्य तद्विघातकत्वात्। न च यञा-दिस्वसापेक्षदीर्घस्य बहिरङ्गतया असिद्धत्वान्नात्र सन्निपातविघात इति वाच्यम्। आरोपितासिद्धत्वेऽपि वस्तुतस्तद्विघातस्य जायमानत्वेनैतत्प्रवृत्तेः।

किञ्चान्तरङ्गे कर्त्तव्ये बहिरङ्गस्यासिद्धत्वेऽपि तत्र कृते तस्यासिद्धत्वे मानाभावः।

भैरवी।

स्यासिद्धत्वान्न परिभाषाप्रवृत्तिरित्याशयेन शङ्कते-*न च यञादिस्वेति। बहिरङ्गपरिभाषायाः प्रवृत्तिमभ्युपेत्यापि समाधत्ते—*आरोपितेत्यादि*। *एतत्प्रवृत्तेरिति*। सन्निपातपरिभाषाप्रवृत्तेरित्यर्थः।

वस्तुतस्तु बहिरङ्गपरिभाषाविषय एव नेत्याशयेन आह-*किञ्चेति। अत्रान्तरङ्गस्य यादेशस्य प्रवृत्त्युत्तरं भवद्रीत्या बहिरङ्गस्य दीर्घस्य प्रवृत्तिर्वक्तव्या। तत्र बहिरङ्गपरिभाषाया वाच्यार्थसत्वात् प्रवृत्तिर्न सम्भवतीति भावः। वास्तविकसन्निपातविघाताभावे एवैतत्परिभा-

तत्त्वप्रकाशिका।

पजीव्यविरोधो न न्याय्य इति न्यायमूलकत्वस्य व्याघातापत्तेः। अत एवेदन्निरपाध्यां न प्रवर्तते, विघातशास्त्रत्वप्रकारकज्ञानाभावात्, "न तिसृचतसृ" इतिनिषेधेन ज्ञापितेत्येषा सपादसप्ताध्यायोस्था, अन्यथा, तिसृणामित्यादौ ङीपि दीर्घे तदभावे वा तदसङ्गतिः स्पष्टैव। स्वस्रादिषु तिसृचतसृपाठोऽप्रमाणिक इति "क्रन्मेजन्त" इतिसूत्रे भाष्ये स्पष्टम्।

यत्तु 'वाचिह्रस्वश्च'इत्येव सिद्धे "वामि" "ङिति ह्रस्वश्च" इति पृथग्योगकरणेनैषा परिभाषा ज्ञाप्यते। श्रीणामित्यादौ नुक्यजादित्वविघातः स्पष्ट एवेतिपृथग्योगकरणं सार्थकमियङ्—उवङ्—आक्षिप्तप्रत्ययस्य विशेषणान्मत्युमेत्यादौ न दोषः। एतेनात्रैव दोषादिदंज्ञापकमसङ्गतमित्यपास्तम्। मतिचित्रे इत्यादौ चित्रङो ङित्वेन तत्र दोषवारणाय सैधातिकन्यासेऽपि प्रत्ययाक्षेपस्यावश्यकत्वादिति, तदसत्, "वाचि ह्रस्वश्च"इत्येव सिद्धे पृथग्योगकरणेन वामीत्यत्र "प्रथमलिङ्गग्रहणं च"इतिवार्तिकमस्ति, "ङिति ह्रस्वश्च"इत्यत्र नास्तीतिकल्पनाया आवश्यकतया एकयोगस्य कर्तुमशक्यत्वात्। स्पष्टं चेदं भाष्ये।

अस्याश्निपाद्यामप्रवृत्तिस्वीकारादेव जग्धं करिष्यति सञ्छम्भुः राज्ञ उत्तम्भनमित्यादौ धत्वषत्वछत्वश्चुत्वतत्वादीनि सिध्यन्ति। अन्यथा तादिनिमित्तकजग्ध्यादेशषत्वयोः स्यप्रत्ययनिमित्तकेटः शकारनिमितकतुकः अनन्तत्वनिमितकाल्लोपस्य स्तम्भुनिमित्तकपूर्वसवर्णस्य च तत्तन्निमित्तविघातपूर्वोक्तविधिप्रवृत्ति प्रत्यनिमित्तत्वापत्तेः। एवं षण्णामित्यत्र षट्संज्ञकनिमित्तको नुट् तद्विघातजश्त्वं प्रतिनिमित्तं न स्यात्। *स्वातिरिक्तशास्त्रस्येति*। अस्मिन्मते विघातकशास्त्रे एव सङ्कोचः, तथाच "षड्भ्यो लुक्" इत्यादौ स्वातिरिक्तस्वोपजीव्यविघातकत्वाभावविशिष्टो भवतीत्याद्यर्थः। शतानीत्यादौ लुकि स्वातिरिक्तस्वोपजीव्यसर्वनामस्थानविघातकत्ववानेव भवतीति न लुक्, अतः स्वातिरिक्तेतिवचनं स्ववैयर्थ्यमूलकम्। अत एव "यतो नावः" इतिज्ञापकोपपादनपरग्रन्थविरोधो न।

ननु वस्तुतो विघातस्य जायमानत्वेऽपि "ङ्येः" इत्यस्य "सुपिच" इत्येतद्विशेष्यकत्वोपजीव्यविघातकत्वप्रकारकज्ञानस्याभावेन "ङ्ये" इतिशास्त्रे "सुपि च" इत्यस्याभ्यनुज्ञां ददात्येव, हर एधीत्यादौ वस्तुतो एजव्यवहितपूर्वत्वस्य सत्त्वेऽपि एजव्यवहितपूर्वत्वप्रकारकज्ञानाभावेन वृध्यप्रवृत्तिवत् अस्मिन् शास्त्रे ज्ञानस्यैव प्रवृत्तिनिवृत्त्युपयोगित्वेन वस्तुस्थितेरकिञ्चित्करत्वादित्यरुचेराह—*किञ्चेति*।

ननु यादेशस्य जातत्वेऽपि अभ्यनुज्ञादानसमये "सुपि च" इतिशास्त्रे नोपजीव्यविघातकमि-

किञ्च आतिदेशिकसन्निपातविघाताभावमादायैतत्प्रवृत्तौ गौरीत्यादौ सम्बुद्धिलोपेऽपि स्थानिवत्त्वेन ह्रस्वनिमित्तसन्निपातविघाताभावात्तत्रैतस्या-तिव्याप्तिपरं "कृन्मेजन्तः" ( १-१-३९ ) इति सूत्रस्थभाष्यासङ्गतिः । सन्नि पातस्य अशास्त्रीयत्वान्नात्र स्थानिवत्त्वमिति चेत् तर्हि अत्रासिद्धत्वमपि कथमिति विभावय । अशास्त्रीयेऽसिद्धत्वाप्रवृत्तेः "ईदूदेत्" (१-१-११) इति-सूत्रे कैयटेन स्पष्टमुक्तत्वात् । एवं च पूर्वत्रासिद्धीयेऽपि कार्य्ये एतत्परिभा-षाप्रवृत्तिर्भवत्येवेति चेत्, न । "कष्टाय" ( ३-१-१४ ) इति निर्देशेनैतस्या अनित्यत्वात् ।

भैरवी ।

षाया अप्रवृत्तिरित्याशयेन आह—*किञ्चातिदेशिकेति* । गौरीति सम्बोधनविभक्त्यन्तमे-तत् । *स्थानिवत्वेनेति* । "प्रत्ययलोप" सूत्रन्तु नियमार्थमिति भावः । *भाष्येति* । नदी-ह्रस्वत्वं सम्बुद्धिलोपस्येति भाष्यमित्यर्थः । *कथमिति । पुक् ह्रस्वत्वस्येति भाष्यमप्येवं साध-कमिति बोध्यम् । अत्र "अचः परस्मिन्" इति स्थानिवद्भावस्य प्राप्तिरिति विशेषः । एव-ञ्चाशास्त्रीये कार्य्येऽसिद्धत्वाप्रवृत्तौ च । *कष्टायेति* । अत्र यादेशे यन्निमित्तमदन्तत्वं तस्य-दीर्घेण विनाशात् ।

तत्त्वप्रकाशिका ।

तिज्ञानस्य सत्त्वेनासमकालिकत्वेन भवत्येवान्तरङ्गपरिभाषाप्रवृत्तिरित्यरुचेराह—*किञ्चेति* ।

वस्तुतः शङ्कासमाधानादिकं प्राचीनरीत्या । *आतिदेशिकसन्निपातेति* । अत्रातिदेशप-देन एकदेशविकृतयदागमा एतदतिरिक्तातिदेशस्यैव ग्रहणम् । अत एव तेषां येषां शैवो गार्ग्य इत्यादिसिद्धिः । अन्यथा विभक्त्यानन्तर्यंनिमित्तीकृत्य जायमानन्त्यदाद्यत्वं सुटं प्रति गर्गा-दिप्रातिपदिकं निमित्तीकृत्य जायमानं यञादिकं तद्विघातक "यस्य" इति लोपं प्रति निमित्तं न स्यात् । अत एव "येषाञ्च विरोधः शाश्वतिकः" "आवट्याच" इतिनिर्देशाः सङ्गच्छन्ते ।

वस्तुतस्तु अन्यातिदेशेषु अतिदेशानुसन्धानात्प्राक्क्षणद्वयं सन्निपातविघातबुद्धेः सत्त्वेन एतन्न्यायद्वयस्य लौकिकत्वेन क्षणमात्रमपि सन्निपातविघातबुद्धेरभावेन युक्तिसिद्धमिदम् । *पूर्वत्रासिद्धीयेऽपीति* । चिन्त्यमिदम् । त्रिपाद्यां सन्निपातपरिभाषाप्रवृत्तौ बहूनां दूषणाना-मुक्तत्वात । *अनित्यत्वादिति* । अत्र केचित् सङ्कुचितसङ्कोचे गौरवात् सन्निपातपरिभाषा-प्रयोज्यः अभ्यनुज्ञावाक्ये स्वोपजीव्यविघातकातिरिक्तेनेति सङ्कोच एव न भवति । अत एव सन्निपातपरिभाषया अनित्यत्वात् प्रराणामितिमाधव इति कौमुदीग्रन्थः सङ्गच्छते । तथाहि— "नामि" इत्यारम्भसामर्थ्यात्परिभाषाया अनित्यत्वमावश्यकम् । तथाच—"ह्रस्वनद्यापो नुट्" इतिशास्त्रीयाभ्यनुज्ञावाक्ये सन्निपातपरिभाषाप्रयोज्यसङ्कोचाभावेन "नामि" इतिशास्त्रस्येव "रायो हलि" इत्यस्याप्यभ्यनुज्ञां दद्यात् । न च "सुपि च" इतिदीर्घो यद्यपीत्यादिकौमुदी-ग्रन्थ विरोध इति वाच्यम् । इष्टापत्तेरित्याहुः ।

अन्ये तु सङ्कुचितसङ्कोचाभावे सुलुनीत्यादौ नुमर्थं सन्निपातपरिभाषानित्यत्वस्यावश्यकत्वेन "ह्रस्वो नपुंसक" इति शास्त्रीयाभ्यनुज्ञावाक्ये सन्निपातपरिभाषाप्रयोज्यसङ्कोचाभावे नुम इव नुकोऽप्यभ्यनुज्ञां दद्यादिति सुलु इत्यादौ नुगापत्तिः । कुचितसङ्कोचे तु "इकोऽचि विभक्तौ" इत्येतदतिरिक्तं यत्स्वोपजीव्यविघातकं तदतिरिक्तेनेत्येव "ह्रस्वो नपुंसक" इतिशास्त्रीयाभ्यनु-ज्ञावाक्ये सङ्कोचो भवतीति नोक्तदोषः "ह्रस्वनद्यापो नुट्" इत्यत्रापि "नामि" इत्येतदतिरिक्तं-यत्स्वोपजीव्यविघातकमितिशास्त्रीयाभ्यनुज्ञावाक्ये सङ्कोचो भवतीति नोक्तदोषः । "ह्रस्वन-द्यापो नुट्"इत्यत्रापि "नामि" इत्येतदतिरिक्तं यत्स्वोपजीव्यविघातकं तदतिरिक्तेनेत्येव

ययोः सन्निपातस्य विघातकं शास्त्रं तयोः सन्निपातनिमित्तकविध्यावुपादानमपेक्षितमिति तु नाग्रहः। अत एव दाक्षिरित्यत्राकारान्तप्रकृतोऽसन्निपातनिमित्ताङ्गसंज्ञानया परिभाषयाल्लोपस्य निमित्तं न स्यादित्याशङ्क्याऽनित्यत्वेन समाहितं "कृन्मेजन्तः" (१-१-३९) इतिसूत्रे भाष्ये। न हि अङ्गसंज्ञायामदन्तस्याङ्गसंज्ञेत्युक्तमस्ति।

न च कुम्भकारेभ्य आधय इत्यादावव्ययसंज्ञाया अनया परिभाषया वारणपरभाष्यासङ्गतिः। अनया परिभाषया लुङ् मा भूत्, अव्ययत्वं तु स्यादेव, लुका हि तदीयसन्निपातस्य विघातो नाव्ययसंज्ञायाः, संज्ञाफलं त्वकच् स्यादिति वाच्यम्। एतदुदाहरणपरभाष्यप्रमाण्येन साक्षात् परम्परया वा स्वनिमित्तसन्निपातविघातकस्य स्वयमनिमित्तमित्यर्थेन अदोषात्। एतेनात्राकच् स्यादित्यपास्तम्। न च कार्य्यकालपक्षे लुगेकवाक्यतापन्नसंज्ञाबाधेऽप्यकजेकवाक्यतापन्ना संज्ञा स्यादिति वाच्यम्। अन्तरङ्गायां तदेकवाक्यतापन्नसंज्ञायां बहिरङ्गगुणादेरसिद्धत्वात्, लुगेकवाक्य-

भैरवी।

अत्र कश्चित्–ययोः सन्निपातस्य विघातकं शास्त्रं तयोर्यत्र सन्निपातनिमित्तकविध्यावुपादानं तत्रैवैतस्या परिभाषाया प्रवृत्तिः, यथा आधये चिकीर्षत्र इत्यात्रानया लुगभावः। अस्ति च सन्निपातलक्षणविधौ "घेर्ङिति" इत्यत्र तथेति रामायेत्यत्र न सन्निपातपरिभाषायाः प्राप्तिरिति तन्न। तत्रैव भाष्ये एतामाश्रित्य कुम्भकारेभ्य इत्यत्र दोषाभावप्रतिपादनविरोधात्तदाह—*ययोरित्यादि*। भाष्यान्तरविरोधमप्याह—*अत एवेति। पूर्वोक्तार्थानाश्रयणादेव। न च "कृन्मेजन्त" सूत्रभाष्ये आधय इत्यादौ अव्ययसंज्ञापादनमसङ्गतं "कृन्मेजन्त"-इत्यत्रान्तशब्दस्य नित्ययोगे बहुव्रीहिफलकत्वादिति वाच्यम्। अन्यार्थमावश्यकतया सन्निपातपरिभाषया दोषाभावे सिद्धे तत्रान्तशब्दस्यानावश्यकत्वात्।

भाष्यविरोधं परिहर्तुं शङ्कते–*न चेति*। *एतदुदाहरणपरेति*। अकच्रहितोक्तोदाहरणेत्यर्थः। *परम्परयेति*। एवञ्च साक्षात्कुम्भकारेभ्य इत्यादौ झलादित्वबहुवचनसन्निपातनिमित्तकस्यैत्वस्य यत्कार्य्यमव्ययत्वं तस्य तादृशसन्निपातविघातकत्वाभावेऽपि स्वफललुक्प्राप्तया परम्परया अव्ययत्वस्य तादृशसन्निपातविघातकत्वादस्त्येव सन्निपातपरिभाषाप्राप्तिरित्याशयः। *इत्यर्थेन*। उक्तपरिभाषाया इत्यर्थकरणेन। तेन उक्तार्थस्वीकारेणानयाप्यव्ययत्ववारणेन तादृशार्थकरणेनापि दोषाभावो नास्ति। संज्ञाकार्य्यभेदादिति तद्भाष्यमेकदेश्युक्तिरेवास्तु वृथायं परिश्रम इत्याशयेन शङ्कते—*न चेति। अन्तरङ्गायामिति*। अल्पनिमित्तकत्वेनान्तरङ्गत्वम्। *तदेकवाक्यतेति* । अकजेकवाक्यतेत्यर्थः। लुग्वारणपरभाष्यस्योपपत्तिमाह—*लुगे-

तत्त्वप्रकाशिका।

सङ्कोच इति प्रीणामित्यादावात्वन्न। अत एव "सुपिच" इति दीर्घो यद्यपीत्यादिकौमुदीग्रन्थः सङ्गच्छत इत्याहुः।

परे तु विघातकशास्त्र एव संकुचितसङ्कोचः। तथाच "सुपि च" इत्यादौ "ह्र्येः" इत्येतदतिरिक्तं यत्स्वोपजीव्यं तद्विघातकत्वाभावविशिष्टो भवतीत्यादिक्रमेणार्थ इत्याहुः।

*ययोरिति*। यद्रूपावच्छिन्नयोरित्यर्थः। *तयोरिति*। तद्रूपावच्छिन्नयोरित्यर्थः। यथा "ह्र्ये" "सुपिच" इत्युभयत्रापि अन्तत्वेनैवोपादानम्। *माग्रह इति*। चिन्त्यमिदम् तादृशोदाहरणासम्भवात्। *परम्परयेति*। परम्परा च संज्ञामात्रघटितैव। अत एव उक्त-

तापन्ना तु न गुणादितोऽन्तरङ्गोभयोरपि शब्दतः सुबाश्रयत्वात्।

"न यासयोः" ( ७-३-४५ ) इति निर्देशाच्चैषानित्या तेन नातिप्रसङ्गः। स्पष्टा चेयं "कृन्मेजन्तः" ( १-१-३९ ) इति सूत्रे भाष्ये। अस्या अनित्यत्वे फलानि भाष्ये परिगणितानि। वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्तम्, दाक्षिः। आत्त्वं पुग्विधेः, क्रापयति। पुग्घ्रस्वत्वस्य, अदीदपत्। त्यदाद्यकारष्टाब्विधेः, या सेति। इड्विधिराकारलोपस्य, पपिवान्। "ह्रस्वनुड्भ्यां मतुप्" ( ६-१-१७६ ) "अन्तोदात्तादुत्तरपदात्" ( ६-१-६९ ) इति मतुब्विभक्त्युदात्तत्वं पूर्वनिघातस्य, अग्निमान्, परमवाचा। नदीह्रस्वत्वं सम्बुद्धिलोपस्य, नदि कुमारीत्यादि। यादेशो दीर्घत्वस्य, कष्टाय। इतोऽन्यत्र प्रवृत्तिरेव, दोषाः खल्वपि साकल्येन परिगणिता इति भाष्योक्तेरिति

भैरवी

केति। सुबाश्रयत्वादिति*। कार्य्यकालपक्षे लुग्विधायकस्य संज्ञाशास्त्रस्य च सुपि परे यदेजन्तं तदव्ययं भवति तत्परस्य सुपो लुगित्यर्थोश्रयणात्। अत्रार्थे भाष्यमेव मानम्। एवञ्च परनिमित्तकत्वमुभयोरितिनान्तरङ्गबहिरङ्गभावः।

वस्तुतस्तु व्यवस्थितयोः कार्य्यकालयथोद्देशपक्षयोर्मध्येऽत्र यथोद्देशपक्ष एव भाष्यप्रामाण्यादाश्रयणीय इति न कश्चिद्दोषः।

अन्ये तु–बहिरङ्गपरिभाषाया अनित्यत्वादिह लुगेकवाक्यतापन्नसंज्ञायां चिकीर्षितायां तस्या अप्रवृत्तिरेव भाष्यप्रामाण्यात्कल्प्यत इत्याहुः।

ननु कष्टायेतिनिर्देशात् चतुर्थ्येकवचन एवानित्यत्वेन अप्रवृत्तिरस्त्वित्यत आह–*"न यासायोः" इति*। निर्देशरूपात कारणादित्यर्थः। *वर्णविचालः*। रूपान्तरापत्तिः। सा चात्र अभावप्रतियोगित्वसम्पत्तिरूपा। *आत्त्वं पुग्विधेरिति*। अनिमित्तं स्यादिति शेषः। एवमुत्तरत्रापि बोध्यम्। *क्रापयतीति*। अत्र क्रीङ्धातोर्णिचि वृद्धौ तस्यैव "क्रीङ्जीनाम्" इतिणिच्सन्निपातनिमित्तकमात्वं तादृशसन्निपातविघातकपुकं प्रत्यनिमित्तं स्यात्। आकारस्य पुगितिमतेऽवयवावयवः समुदायावयवो नेति च स्वीकृत्येदं दूषणम्। *अदीदपदिति*। आकारस्य णिच्सन्निपातेन पुकि कृते "णौ चङि" इतिह्रस्वत्वमनया परिभाषया न स्यादित्यर्थः। *इड्विधीति*। "वस्वेकाच्" इतिसूत्रस्य नियामकस्य विधिरूपेण प्रवृत्तिरितिमतेनेदम्। *मतुब्विभक्त्युदात्तत्वमिति*। मतुपो विभक्तेश्चोदात्तत्वं ह्रस्वनुड्भ्यामितिविहितं शेषनिघातस्यानिमित्तं स्यात्। अन्तोदात्तादित्यस्य तत्र सम्बन्धात्। *नदीह्रस्वत्वमिति*। "अम्बार्थनद्योः" इतिह्रस्वत्वं सम्बुद्धिसन्निपातनिमित्तकमित्यर्थः। *सम्बुद्धिलोपस्येति*। "एङ्ह्रस्वात्" इतिसूत्रविहितस्येति शेषः। *दोषा इति*। यद्यपि भाष्ये एते दोषाः समा भूयांसो

तत्त्वप्रकाशिका।

तुरित्यादौ सवर्णदीर्घः सिध्यति। अन्यथा स्वोपजीव्यलिटः गुरूपधत्वसम्पादनद्वारा आम इति लुक्सम्पादकसवर्णदीर्घं प्रति द्वित्वं निमित्तं न स्यात्, सवर्णदीर्घस्य परम्परया द्वित्वनिमित्तलिड्विघातकत्वात्। *क्रापयतीति*। नच पुक्यपि यदागमन्यायेन पुगन्ते क्रीङ्त्वस्य सत्त्वेन नात्र सन्निपातविघातः नचातिदेशिकसन्निपातविघाताभावमादायनैतत्परिभाषाप्रवृत्तिप्रतिबन्ध इत्युक्तत्वेन न दोष इति वाच्यम्? "यदागमा" इतिन्यायातिरिक्तत्वेन सङ्कोचकरणादिति वाच्यम्। आतः पुग्विधानेन क्रीङ्त्वस्य यदागमन्यायेनातिदेष्टुमशक्यत्वेन ग्रन्थसङ्गतेः। *इतोऽन्यत्रेति*। अनेन सन्धिकार्ये सन्निपातपरिभाषाऽनित्येति सूचितम्,

**अन्यत्र विस्तरः ॥ ८६ ॥**

भैरवी।

नेत्युक्तं, तत्र वार्तिककारोक्तानि प्रयोजनानि नव, दोषास्तु अष्टावुक्तास्तथापि स्थलान्तरेऽपि दोषसम्भावनया समत्वोक्तिरत एव भाष्ये यादेशः "सुपि च" इति दीर्घत्वस्येत्यदृष्टमन्यत्र लिखितम्।

न चैवं सति हे रम इत्यत्र प्रतिपदोक्तत्वेन हल्ङ्यादिलोपात् प्रागेत्वे सम्बुद्धिनिमित्तके कृते "एङ्ह्रस्वात्" इति सम्बुद्धिलोपः सन्निपातपरिभाषया न प्राप्नोतीतिशङ्कायां सन्निपातपरिभाषात्वनित्यत्वान्न प्रवर्त्तत इतिशब्देन्दुशेखरेऽभिहितं तदेतद्विरुध्यते नदीह्रस्वत्वमात्रस्यात्रोपादानादिति वाच्यम् । नदीह्रस्वत्वपदस्य सम्बुद्धिनिमित्तककार्योपलक्षकत्वात्। स्यादेतत्। उक्तानि यानि प्रयोजनानि तेषामन्यथासिद्धिः सम्भाव्यते।

तथाहि—आधये चिकीर्षवे कुम्भकारेभ्य एत्यत्र लक्षणप्रतिपदोक्तपरिभाषयापि अव्ययसंज्ञावारणं सम्भाव्यते वर्णग्रहणेऽपि लक्षणप्रतिपदोक्तपरिभाषाप्रवृत्तेरेतत्सूत्रभाष्यसम्भतत्वात्।

किञ्च "कृन्मेजन्त"सूत्रे मेज्ग्रहणस्य कृद्विशेषणत्वेन तदन्तलाभेऽन्तशब्दोपादानं नित्ययोगे बहुव्रीहिलाभार्थं तेनात्र न भविष्यति । न च ग्रामणिकुलमित्यत्र ग्रामण्यः कुलमितिसमासे उत्तरपदनिमित्तके ह्रस्वत्वे कृतेऽवयवावयवस्य समुदायावयवत्वाभावात् प्रत्ययलक्षणेन क्विपि प्राप्तस्य तुको व्यावृत्त्यर्थं परिभाषा आश्रयितव्येति वाच्यम्। अन्तरङ्गे तुकि कर्त्तव्ये बहिरङ्गस्य ह्रस्वत्वस्यासिद्धतया तुगभावस्य परिभाषां विनैव सिद्धेः, पदद्वयनिमित्तकं कार्यं बहिरङ्गमिति स्पष्टमेव, शरीरावयवहस्तावयवाङ्गुल्यादेः शरीरावयवत्ववदत्रापि तुकः पूर्वपदावयवत्वसम्भवेन सन्निपातपरिभाषया तुग्व्यावृत्तेः कर्त्तुमशक्यत्वाच्च प्रत्युत पूर्वपदग्रामणिच्छत्रमित्यत्र सन्निपातपरिभाषास्वीकारे तुगनापत्तिरतः सन्निपातपरिभाषामनाश्रित्य असिद्धपरिभाषाया लक्ष्यं साधनीयम्।

यदि च बहिरङ्गपरिभाषावृत्तिस्वीकारेऽपि तुकश्छकारमात्रनिमित्तकत्वेनोत्तरपदत्वपर्या । स्यधिकरणनिमित्तकह्रस्वत्वापेक्षयान्तरङ्गत्वेन ह्रस्वत्वासिद्धत्वेन तुङ् न स्यादेवेत्यसिद्धपरिभाषैकवाक्यतया अत्र तुगभाव इष्ट एवेति ब्रूषे, तदा उभाभ्यामेतद्वक्तव्यम् सन्निपातपरिभाषादोषेषु अस्या पाठेन अत्र तुकोऽप्रवृत्तिरिष्टेति वृत्रहभिरित्यत्र तु "नलोपः सुप्स्वर" इति नलोपस्यासिद्धत्वान्न तुक्। एतेनावयवावयवस्य समुदायानवयवत्वमिति पक्षे तुग्व्यावृत्त्यर्थं परिभाषा आरब्धव्येत्यपास्तम्। न च निकुचितमित्यत्र कुञ्चेर्भावे क्तप्रत्यये "अनिदिताम्" इति नलोपे "उदुपधाद्भावादिकर्म्मणोरन्यतरस्याम्" इत्यकित्वनिवृत्त्यर्थं परिभाषाऽऽश्रयितव्या, अत्र कित्वसन्निपातेन जातस्य नलोपस्य कित्वसन्निपातविघातकाकित्वं प्रत्यनिमित्तत्वमिति परिभाषाप्रवृत्तिः स्फुटैवेति वाच्यम्। "न धातुलोप आर्द्धधातुके" इतिकित्वाभावेऽपि गुणाभावस्य सिद्धेः। न च "नधातुलोप" सूत्रप्रत्याख्याने दोष एवेति वाच्यम्। निकुचितमित्यत्र "नधातुलोप" सूत्रमास्थाय सन्निपातपरिभाषाप्रयोजनान्यथासिद्धिप्रदर्शनपरभाष्यप्रामाण्येन "उदुपधात्" इत्यस्य विहितविशेषणत्वस्य सूत्रप्रत्याख्याने समाश्रयणात्। न चोपादास्तेत्यत्र "स्थाघ्वोरिच्च" इति सूत्रेणेत्वं प्राप्नोति। परिभाषासत्त्वे तु एज्विषये विधीयमानमात्वमकित्वनिमित्तकमितिकित्वविघाते न निमित्तमतस्तत्सन्नियुक्तमित्वमपि नेति वाच्यम्। 'दीङः प्रतिषेधः स्थाघ्वोरित्वे' इति वार्त्तिकेनैव समाधानात्। यदि च वार्त्तिकारम्भकृतमेव गौरवमिति विभाव्यते, तदा स्थाधातुसाहचर्य्येण एतल्लक्षणोपयोगिलक्षणप्रयोज्यैजन्तत्वायोग्यस्य घुसंज्ञकस्य ग्रहणमिति बोध्यम्। न च तिस्रस्तिष्ठन्ति चतस्रस्तिष्ठन्तीत्यत्र ङीपोऽनुत्पत्तये परिभाषाश्रयितव्येति वाच्यम्। "न तिसृचतसृ" इति दीर्घनिषेधा-

भैरवी।

रम्भसामर्थ्यात्तिसृचतसृभावे ङीपोऽप्रवृत्तेः। न च प्रियतिसृणां ब्राह्मणानामित्यत्र निषेधचारितार्थ्यमिति वाच्यम्। तत्राप्यवयवस्त्रीत्वात् ङीपः प्राप्तेः।

किञ्च ज्ञापकादेव ङीप् "त्रिचतुरोः" इतिसूत्रविहितादेशविषये नेति कल्प्यते। इति स्वस्रादिषु अनयोः पाठोऽपि न कर्त्तव्य इत्यपरमनुकूलम्। न च शतानि सहस्राणीत्यत्र नुमि कृते षट्संज्ञा प्राप्नोतीति सा कर्त्तव्येति वाच्यम् "बहुगण" इति सूत्रात् संख्याग्रहणानुवृत्त्या उच्चारणार्थाकारे ष्णा इत्यनेन विशेषणादन्तशब्दार्थलाभे सिद्धे पुनरन्तशब्दोपादानादौपदेशिकत्वप्रतिपत्तिरित्यदोषात्। नच शकटौ पद्धतावित्यत्र "अच्चघेः" इत्यत्त्वे टाप् स्यादिति सा कर्त्तव्येति वाच्यम्। "अत उत्सार्वधातुके" इत्यत्रेवादिति तपरकरणेन टाबभावस्य सुवचत्वात्। यदि तुत परकरणादेकादेशष्टापि कृते मा भूत्, टाप् तु स्यादेव, लक्षणद्वयबाधे मानाभावादिति मन्यते, तदा "सम्बुद्धौ शाकल्यस्य" इत्यादिनिर्देशो "अच्च घेः"इत्यनेनात्त्वे टाबभावकल्पक इति। न चेयेष उवोकेत्यत्र गुणे कृते आमभावार्थं सा कर्त्तव्येति वाच्यम्। "इजादेः" इतिसूत्रेऽनृच्छ इतिपर्य्युदासेन गुरुमत्त्वस्य लाभे सिद्धे गुरुमद्ग्रहणं नित्यगुरुमतो लाभार्थं तेनात्राप्राप्तेः। न चैवमनृच्छ इति पर्य्युदासवैयर्थ्यमृच्छेस्तुकि कृत एव गुरुमत्वादिति वाच्यम्, धातुसंज्ञाप्रवृत्तिकालिकगुरुमत्वस्याश्रयणात्। अत एवोम्भधातोराशीर्लिङि गुरुमत्वाभावेऽप्येतादृशगुरुमत्वसत्त्वेनोभाञ्चकारेत्यत्राम्सिद्धिः। नच शेषे लोपोऽन्त्यलोप इति पक्षे यूयमित्यत्र "जसः शी" इत्यनेन शीभावः प्राप्नोति परिभाषासत्त्वे यत्सन्निपातेन लोपस्त द्विघातान्न दोष इति वाच्यम्, "ङेः प्रथमयोरम्" "शसो न" इति संहितापाठे मकारान्तरप्रश्लेषेण सिद्धेः।

यद्यपि "जराया" इतिसूत्रेऽतिजरेणातिजरादित्यत्र सन्निपातपरिभाषया जरसादेशाभाव आकरसम्मतः परिभाषाभावेतु जरसादेशः प्राप्नोतीति तत्स्वीकार आवश्यक इति तदपि "टाङसि" इतिसूत्रे इनातोरिकारदीर्घोच्चारणप्रत्याख्यानपरभाष्यप्रामाण्येन विभक्त्यादेशस्य पूर्वविप्रतिषेधेन प्रवृत्तौ जरसादेशस्य सकृद्गतिन्यायेनाप्रवृत्त्या सिद्धम्।यदपि "जराया जरसन्यतरस्याम्" इतिसूत्रभाष्ये "अथेह लुक् कस्मान्न भवति? अजरसं पश्येतिपूर्वपक्षिणोक्ते, किं पुनः कारणं, द्वितीयैकवचनमेवोदाह्रियते, न पुनः प्रथमैकवचनमपि अतिजरसन्तिष्ठतीति, अस्त्यत्र विशेषः नात्राकृतेऽम्भावे जरस्भावः प्राप्नोति, किं कारणमचीत्युच्यते यदा च जरसभावः कृतस्तदा लुङ् न भविष्यति। "सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य" इति। यद्येवमतिजरसमतिजरसैरित्यत्र न प्राप्नोति। अतिजरमतिजरैरिति भवितव्यम्, गोनर्दीयस्तु आह—इष्टमेतत् संगृहीतमतिजरमतिजरैरिति भवितव्यं सन्निपातपरिभाषामाश्रित्योक्तम्। तत्परिभाषाया असत्त्वेऽप्युपपद्यते, तथाहि--अत्रैव सूत्रे भाष्येऽतिजरांसीत्यत्र नुम्जरसयोः। प्राप्तयोर्विप्रतिषेधेन जरसित्युक्तम्। तच्च विभक्तिसम्बन्धिकार्य्याणां पूर्वं प्रवृत्तौ सङ्गच्छते।

अन्यथा शीभावात् पूर्वमेव जरसः प्रवृत्तौ तदसर्वनामस्थानत्वाभावान्नुमाविप्रतिषेधविचारासङ्गतिस्तस्य तदुपपत्तये "जराया" इतिसूत्रस्थजरसशब्दे स्वरितत्वं स्वीकृत्याधिकः कारोऽधिकार इत्यर्थाश्रयणादिष्टानुरोधेन जरसादेशस्य प्रवृत्त्यप्रवृत्ती भविष्यतः इष्टपरिज्ञानञ्च भाष्यीयव्यवहारेण भविष्यति।

न च परिभाषाया अभावे कुलं ग्रामणीत्यत्र "ह्रस्वो नपुंसक" इति ह्रस्वत्वे तुक् स्यादिति वाच्यम्। तत्रापि प्रातिपदिकत्वनपुंसकत्वज्ञानं क्विबर्थकर्तृकज्ञानसापेक्षमिति क्विप्प्रकृत्युभयसापेक्षह्रस्वत्वापेक्षया वर्णमात्रापेक्षतुकोऽन्तरङ्गत्वेन तद्दृष्ट्या ह्रस्वत्वस्यासिद्धत्वसम्भवात्। न च "षत्वतुक्" इतिसूत्रे "नलोपः सुप्स्वर्" इतिसूत्रे च कृति तुग्ग्रहणकरणेन तुकि कर्त्तव्ये बहिरङ्गपरिभाषाया अप्रवृत्तिरिति वाच्यम्। न वयं बहिरङ्गपरिभाषाया अप्रवृत्तिं व-

ननु पञ्चेन्द्राण्यो देवता अस्य पञ्चेन्द्र इत्यादौ "द्विगोर्लुक्" (४-१-८८) इत्यणो लुकि "लुक्तद्धित" (१-२-४९) इति स्त्रीप्रत्ययलुक्यानुकः श्रवणापत्तिरत आह—

भैरवी।

द्रामोऽपि तु बहिरङ्गपरिभाषा अनित्येति ब्रूमः। एवञ्च "नाजानन्तर्ये" परिभाषापि गतार्थेतिलाघवं भवति सन्निपातपरिभाषाप्येतदर्थं नारब्धव्येति स्वीकारात्।

यत्तु सन्निपातपरिभाषया प्रीणामित्यत्रात्वन्नेति, सन्निपातलक्षणविधित्वावच्छेदेन सन्निपातविघातकसामान्यानिमित्तत्वस्य नञ्समभिव्याहाराद्युत्पत्तिसिद्धतया अत्रैव नुटि दीर्घत्वं न स्यादिति कतेर्नामीति वाच्ये "नामि" इतिसामान्यसूत्रारम्भसामर्थ्येन विरोधपरिहाराय लक्षणया सन्निपातलक्षणविधिशब्दस्य नुड्भिन्नत्वविशिष्टसन्निपातलक्षणविधित्वावच्छिन्नपरत्वं वक्तव्यम्। एवञ्च नुटि दीर्घत्वस्येवात्वस्यापि प्रवृत्तिर्भविष्यति। अतएव माधवेन प्राणामित्येवोदाहृतम्, स्वीकृतञ्चैवमेव केचित्तु इत्यादिना शब्देन्दुशेखरे तच्च उक्तपरिभाषाभावेऽनायासेन निर्वहति।

यदपि श्रीपायेत्यत्र सन्निपातपरिभाषया "आतो धातोः" इति लोपो नेति तदपि 'लक्षणप्रतिपदोक्त' परिभाषया गतार्थम्।

यत्तु गव्यित नाव्यितेत्यादौ गोशब्दात् क्यचि "वान्त" इतिसूत्रेण वान्तादेशा "भव्यगेय" इनिनिपातितभव्यशब्दादाचारक्विबन्तात्तृचि लुटि वा "यस्य हलः" इतिलोपः प्राप्नोतीति सा कर्त्तव्येति, तदपि न, "वान्त" इतिसूत्रे वकारस्य प्रश्लेषेणैवोक्तप्रयोजनान्यथासिद्धिसूचनात्।

तथाहि—गव्यतीत्यादौ "लोपः शाकल्यस्य" इतिसूत्रेण वकारलोपाभावो न वकारप्रश्लेषफलं "नः क्य" इतिनियमेन पदत्वाभावाल्लोपाप्राप्तेः, किं तु व इति लुप्तविभक्तिकं भिन्नपदम्, "वान्तो यि प्रत्यय" इति तत्र वर्तते। यि प्रत्यय इतिसप्तमीबलाद्वान्त इत्यस्यात्र षष्ठ्यन्तत्वं कल्प्यते। यादिप्रत्यये इति वा वर्त्तते, तथा च यादिप्रत्यये परो यो वान्तस्य वकारस्य यादिप्रत्ययोपश्लिष्ट एव भवति। न तु कदापि तयोर्विश्लेष इति। एवं क्षय्यजय्यशब्दस्याप्यावृत्तिं कृत्वातत्रापि पूर्ववत् "यस्य हल" इत्यस्याप्रवृत्तिरूहनीयेत्याहुः। तन्न, लोकप्रसिद्धोपजीव्यविरोधस्य अन्यायत्वमूलकसन्निपातपरिभाषयैव सकलेष्टसिद्धौ बहुतरक्लेशो नोचित इत्याशयेन सन्निपातपरिभाषारम्भात् वेत्यस्य पृथक्करणेऽपि 'प्रत्यय' इत्यस्य 'क्षय्यजय्य' इत्यस्यावृत्तौ मानाभावाच्च, "वाचि ह्रस्वश्च" इतिन्यासेन सिद्धे "वामि" ङिति ह्रस्वश्च" इतिकरणमस्या लोकन्यायसिद्धायाः शास्त्रेऽङ्गीकारे ज्ञापकमपि सम्भवति, तद्धि भ्रूणामित्यादावजादि प्रत्यये जातनदीसंज्ञायास्तद्विघातकनुडागमे निमित्तत्वं न स्यादिति क्रियते। परिभाषाया अभावे तु रूपसिद्धिः स्फुटैवेति तथैव कुर्यात्। सा चैषा परिभाषा "न यासयोः" इत्यादिनिर्देशादनित्येति भाष्योक्तदोषाणां परिहारो बोध्य इति दिक्॥ ८६॥

लुकः प्राक् प्रक्रमाल्लुगन्तरस्यापि स्मरणमिति प्रसङ्गसङ्गत्याह—*नन्विति। पञ्चेन्द्र इत्यादाविति*। अत्रादिना पञ्चर्धीत्यस्य परिग्रहः। सन्निपातपरिभाषाया उपजीव्यविरोधस्य अन्याय्यत्वमूलकत्वेन यद्यस्य उपजीवकं तत्तस्योपजीव्यस्य साहायकमेवेति फलितम्। तथा सन्नियोगशिष्टपरिभाषाया अपि सन्नियोगनिमित्तकत्वं तत्प्रसङ्गादाह—

तत्त्वप्रकाशिका।

अन्यथात्रैव पूर्वरूपं न स्यात्। अत एव "सोस्यादिः" इत्यादिनिर्देशः सङ्गच्छते। एवञ्च "इकोचि विभक्तौ" इत्येतद्विषयेऽप्यनित्यत्वं बोध्यमितिदिक्॥ ८६॥

## सन्नियोगशिष्टानामन्यतरापाये उभयोरप्यपायः ॥ ८७ ॥

अत्र च "बिल्वकादिभ्यश्छस्य लुक्" (६-४-१५३) इति सूत्रस्थं छग्रहणं ज्ञापकम् । तद्धि छमात्रस्य लुग्बोधनद्वारा कुको निवृत्तिर्यथा स्यादित्येतदर्थम् । कृतकुगागमा नडाद्यन्तर्गताबिल्वादय एव तत्र निर्दिष्टा बिल्वकादिशब्देन । न चैवमपि छग्रहणं व्यर्थम्, कृतकुगागमानुवादसामर्थ्यादेव तदनिवृत्तिसिद्धेः । अन्यथा "बिल्वादिभ्य" इत्येव वदेत्, 'लक्षणप्रतिपदोक्त' परिभाषया बिल्वादिपुरस्कारेण विहितप्रत्ययस्यैवलुग्विधानान्नातिप्रसङ्ग इति वाच्यम् । ततोऽपि प्रतिपदोक्तत्वेन "बिल्वादिभ्योऽण्" (४-३-१३६) इति विकाराद्यर्थस्य लुगापत्तिवारणार्थं कुगनुवादचारितार्थ्यात् ।

भैरवी ।

*सन्नियोगशिष्टानामित्यादिना* । निर्धारणे षष्ठी । *अन्यतरापाय इति* । शास्त्रतोऽन्यतरनिवृत्तिप्राप्तावित्यर्थः । *इत्यर्थम्* । इत्येतत्प्रयोजनकम् ।

ननु छग्रहणाभावे बिल्वशब्दार्थात् स्वार्थे के, ततो"अदूरभवश्च" इत्यणन्तादूगहादित्वाच्छे कृतेऽणोऽपि लुक् स्यादत आह-*कृतेति* । शीघ्रोपस्थितिकत्वाच्छस्यैव ग्रहणं भविष्यतीति भावः ।

ननु छग्रहणाभावे कप्रत्ययान्तबिल्वकशब्दात्परस्य प्रत्ययान्तरस्यापि लुक्सम्भावना स्यात्, किञ्च कृतेऽपि छग्रहणे बैल्वकीयो वृक्ष इत्यत्र गहादिछान्ताच्छैषिकेऽणि छस्यापि लुक् स्यादिति चेन्न । लक्षणप्रतिपदोक्तपरिभाषया कृते छग्रहणे कुगागमबिल्वकशब्दपुरस्कारेण विहितछप्रत्ययस्यैव अनेन लुग्विधानात् । प्रतिपदोक्तत्वं गणपाठेन कल्पयते, न तु सूत्रे तथा पाठेनादिपदोच्चारणेन गणकल्पना गणपाठदर्शनेन आदिशब्दस्य प्रकारवाचित्वाभावादिति कल्पनीयम् । बिल्वकेति तु आगन्तुनाकारेण निर्देशः। *ततोऽपि । नडादिछादपि, प्रति-

तत्त्वप्रकाशिका ।

*सन्नियोगशिष्टानामिति* । सन्नियोगशिष्टौ च सन्नियोगशिष्टौ सन्नियोगशिष्टौच सन्नियोगशिष्टाः । तेषां सन्नियोगशिष्टानां साहित्यावच्छिन्नविधेयताश्रयाणामित्यर्थः । *अन्यतरापाय इति* । सम्भावित इति शेषः । *उभयोरप्ययाय इति* । उभयोरप्यनुत्पत्तिरित्यर्थः । अत एव पञ्चेद्रः पञ्चैत इत्यादौ तकाराकारयोः श्रवणम्भवति । अन्यथा नकारानुकोरनेन न्यायेन निवृत्तावपि देवदत्तहन्तृहतन्यायेन तच्छ्रवणं न स्यात् । एतेन अन्यतरापाये जाते उभयोरभावेन उभयोरप्यपाय इत्यसङ्गतमित्यपास्तम् ।

अपरे तु अन्यतरापाये जाते उभयोरप्यपाय इत्यस्य आदेशे तत्कृतस्थानिनिवृत्त्योभयोरप्यपाय इत्यर्थः । तथाच पञ्चैतः पञ्चेन्द्र इत्यादौ नकारानुकोस्तत्कृतस्थानिनिवृत्त्या स्थानिस्थित्या अकारश्रवणमित्याहुः ।

यत्तु लुग्विषयेयं परिभाषा, अत एव खेयं फौल्लिः तार्त्तीयीकः इति सिध्यन्ति । अन्यथा गुणवृद्धिभ्यामित्वोत्वसंप्रसारणानां निवृत्तौ तत्संनियोगशिष्टानां क्यप् लस्चेककां निवृत्तिः प्रसज्येतेति, तन्न वातकिनोऽपत्यं वात इत्यादौ इनोपाये तत्सन्नियोगशिष्टस्य "वातातीसाराभ्यां कुक्च" इति कुको निवृत्त्यभावप्रसङ्गात् । खेयं फौल्लिः तार्त्तीयीक इत्यादौ न दोषः प्राधान्यादनुयोग्यपाये प्रतियोग्यपायो भवति नतु प्रतियोग्यपायेऽनुयोग्यपाय इति स्वीकारात्, "ईयसुन" इत्यत्र प्रत्ययाधिकारात्प्रत्ययस्य प्राधान्यम्, उक्तयुक्तेरितिदिक् । *कुगनुवादचारितार्थ्यादिति । नच "बिल्वादिभ्यःछस्य लुग्" इत्येव वक्तव्ये "बिल्वकादिभ्यो लु-

समुच्चयार्थकचशब्दयोगे तु विधेययोरेककालिकत्वैकदेशत्वनियमान्न्याय-सिद्धापीयम् ।

यत्तु "णाविष्ठवत्" इत्यनेन पुंवत्त्वविधानमेतदनित्यत्वज्ञापनार्थमन्यथैतयतीत्यादौ टिलोपेनैव ङीपि निवृत्ते सन्नियोगशिष्टपरिभाषया नस्यापि निवृत्त्यैतयतीत्यादिसिद्धौ पुंवत्त्ववैयर्थ्यं स्पष्टमेवेति "टेः" (५-४-१५५) इति सूत्रे कैयटस्तन्न । इडबिडमाचष्ट ऐडबिडयतीत्यादौ पुंवत्त्वस्य आवश्यकत्वात् । ऐनेयः श्यैनेय इत्यादि तु स्थानिवत्त्वेन सिद्धमिति अन्यत्र विस्तरः ॥ ८७ ॥

ननु चुरा शीलमस्याः सा चौरीत्यादौ "शीलम्" (४-४-६१) "छत्रादिभ्योऽणः" (४-४-६२) इति णे ङीप् न प्राप्नोतीत्यत आह—

भैरवी ।

पदोक्तत्वं, विशिष्योच्चारितत्वेन बोध्यम् । *समुच्चयार्थकचशब्दयोगे त्विति* । "वनोरच" इत्यत्र यथा बहुभिर्धीवरीभिः क्रीत इत्यर्थे आर्हीयस्य ठको "अध्यर्द्ध" इतिलुकि "लुक्तद्धितलुकि" इति स्त्रीप्रत्ययस्य निवृत्तौ रस्यापि निवृत्तिः, न च रेफस्य निवृत्तावपि नकारो श्रूयेत तदादेशेन नकारस्य पूर्वं निवर्त्तनादिति वाच्यम्, एतादृशे विषये लुगादिविधानेनापूर्वस्य नान्तस्य प्रयोग इत्येव बोध्यते । अतएव शब्दानां नित्यत्वस्योपपत्तिः । *एककालिकत्वेत्यादि* । युगपद्विहितानां कालिकप्रत्यासत्त्यापि समव्याप्तत्वमिति भावः ।

कैयटोक्तमनित्यत्वं दूषयितुं तदुक्तमनुवदति—*यत्त्विति* । "तुरिष्ठेयः सु" इतिसूत्रादनन्तरं यट्टेरितिसूत्रे तत्रत्यं भाष्यं णाविष्ठवत् प्रातिपदिकस्य णाविष्ठवद्भावः प्रातिपदिकस्य वक्तव्यः । किं प्रयोजनं पुंवद्भावरभावटिलोपयणादिपरलोपार्थम् । पुंवद्भावार्थम्, एनीं श्येनीं वा आचष्ट, एनयति, श्येनयतीति ।

अत्र कैयटः—तसिलादित्वादिष्टे पुंवद्भावो विहित इति णावपि भवति, टिलोपेनैव सन्नियोगशिष्टत्वात् नकारनिवृत्तौ सिद्धायां पुंवद्वचनं सन्नियोगशिष्टपरिभाषायाः अनित्यत्वस्य ज्ञापनार्थम्, तेन श्यैनेय इति सिद्धं भवतीति एतद्दूषयति—*इडबिडमित्यादिना* । इडविडोऽपत्यमितिविग्रहे "जनपदशब्दात्" इत्यञि "अतश्च" इति लुक् । आदिना दरदोऽपत्यमितिविग्रहे "द्व्यञ्मगध" इत्यण् तस्य "अतश्च" इति लुक् स्थानिवत्त्वेन "अचः परस्मिन्" इति विहितेन तस्य सूत्रस्य तन्त्रादिना भावसाधनविधिशब्दाश्रयणेन पूर्वस्य विधिं प्रति सत्तां प्रति स्थानिवत्त्वमित्यर्थाश्रयणात् । न च 'सन्नियोगशिष्टानाम्' इति परिभाषाया अनित्यत्वाभावे श्रौतमिति न सिद्ध्येदिति वाच्यम् । ज्ञापकसिद्धत्वेन असार्वत्रिकत्वात् ॥ ८७ ॥

उक्तपरिभाषायास्तद्धितछस्य लुग्विधानज्ञाप्यत्वात्तस्य तत्प्रसङ्गेन तद्धितविषय एवाह *ननु चुरेत्यादि* । ङीप् न प्राप्नोतीति । अण्णन्ताद्धि ङीपो विधानात् । इदन्तु णान्ते तत्वण-

तत्त्वप्रकाशिका ।

क्" इति कारणात्कुको निवृत्तिर्न भवतीति वाच्यम् । तृणवेतसशब्दयोः नडादौ उत्करादौ गहादौ च पाठेन बिल्वादिश्छस्य लुगित्युच्यमाने शास्त्रत्रयविहितस्यापि लुगापत्तेः । *इत्यन्यत्र विस्तर इति* । पूर्वविधिशब्दतन्त्रेण पूर्वत्वेन दृष्टस्य विधौ स्थितौ च कर्तव्यायां स्थानिवदिति, ऐनेय इत्यादौ न दोषः ।

वस्तुतस्तु तन्त्रस्य नोपयोगः । नच ऐनेय इत्यादौ पूर्वत्वेनादृष्टनस्य कोऽपि विधिर्नास्तीति वाच्यम् । एतत्परिभाषया अपायस्य कर्तव्यत्वेन तत्प्रतिबन्धार्थं स्थानिवत्वप्रवृत्तेः सूपपादत्वादिति दिक् ॥ ८७ ॥

## ताच्छीलिके णेऽण्कृतानि भवन्ति ॥ ८८ ॥

"अन्" ( ६-४-१६७ ) इत्यणि विहितप्रकृतिभावबाधनार्थं "कार्म्मस्ताच्छील्य" ( ६-४-१७२ ) इति निपातनमस्या ज्ञापकम् । ताच्छीलिकणान्तात् "अणो द्व्यचः" ( ४-१-१५६ ) इति फिञ्सिद्धिरप्यस्याः प्रयोजनमिति नव्याः । ताच्छीलिक इत्युक्तेः "तदस्यां प्रहरणम्" ( ४-१-५७ ) इति णे दाण्डेत्येव । "कार्म्मः" (६-४-१७२) इति सूत्रे भाष्ये स्पष्टा ॥८८॥

ननु कंसपरिमृड्भ्यामित्यादौ "मृजेर्वृद्धिः" दुर्वारेत्यतआह—

## धातोः कार्य्यमुच्यमानं तत्प्रत्यये भवति ॥ ८९ ॥

भ्रौणहत्ये तत्वनिपातनमस्या ज्ञापकम् । 'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्य्यविज्ञानम्' इतिपाठस्तु प्रसृड्भिरित्यादौ "अनुदात्तस्य चर्दुपधस्य" ( ६-१-५९ ) इत्यमापादनेन भाष्ये दूषितः । यत्कार्यं प्रत्ययनिमित्तकं तत्रेयं व्यवस्थापिका । तेन पदान्तत्वनिबन्धनं "नशेर्वा" ( ८-२-६३ ) इति

भैरवी ।

न्तम् । *ताच्छीलिक इत्यादि । तच्छीलमित्यर्थे जातस्ताच्छीलिकः । न च "छत्रादिभ्यो णः" इति सूत्रे शीलमित्येवाधिकारो नतु तच्छीलमिति वाच्यम् । प्रथमान्ताच्छीलमित्यर्थे विधानेन अस्य ताच्छीलिकत्वात् । *अण्कृतानि । अण्निमित्तकानि । ननु लाघवाय "छत्रादिभ्यो ण" इत्येव कुतो न सूत्रितमिति चेन्न । 'ज्ञापकसिद्धं न सर्वत्र' इति एतत्परिभाषाविषयत्वसूचनाय तथोक्तत्वात् । तेन छात्रा इत्यपि सिद्ध्यति । *नव्याः* । दीक्षितादयः । वस्तुत इदमसङ्गतम् । तत्र अपत्यर्थस्याणो ग्रहणात् 'सामान्यातिदेशे विशेषानतिदेशः' इति न्यायात् ॥ ८८ ॥

प्रत्ययप्रसङ्गादाह—*धातोः कार्य्यमिति* । तत्प्रत्यये* । धातुसंशब्दनेन विहितो यः प्रत्ययस्तस्मिन् । *अस्या ज्ञापकमिति* । परिभाषाया अभावे भ्रूणहन्शब्दाद् "ब्रह्मभ्रूण" इति क्विबन्ताद्भावे ष्यञि "नस्तद्धित" इति टिलोपं बाधित्वा परत्वात् "हनस्त" इति तकारादेशे सिद्धे तद्वैयर्थ्यं स्पष्टम् । न चोपधावृद्ध्यभावार्थं निपातनम्, आदिवृद्ध्या बाधात् ।

यद्यपि कुत्वाभावार्थं निपातनमिति वक्तुं शक्यं, तथाप्युभयप्रयोजनसम्भवे एकस्यैव कल्पनमनुचितम् । अत एव "मृजेर्वृद्धिः" इतिसूत्रे भाष्ये आचार्य्यप्रवृत्तिर्ज्ञापयति भवति एषा परिभाषा यदयं भ्रौणहत्येतितत्त्वं शास्तीत्युक्तम् । यद्यपि तद्धिते तकाराभावज्ञापकत्वेनापि चारितार्थ्यम् सम्भवति तथाप्यसति बाधके सामान्य प्रमाणानां पक्षपात इतिन्यायेन अस्यार्थस्य कल्पनमेव "मृजेर्वृद्धिः" इतिसूत्रभाष्यैकवाक्यतया कल्प्यते ।

तत्र हि—"कंसपरिमृड्भ्याम्" इत्यत्र वृद्धिवारणायैषा उक्ता । प्राचीनोक्तं परिभाषास्वरूपं खण्डयति—*धातोरिति* । "अनुदात्तस्य"इतिसूत्रे धातोः स्वरूपेणानुपूर्वी पुरस्कारेणोपादानाभावेन अस्याः परिभाषाया अप्रवृत्तिरिति भावः । ज्ञापकसाजात्यात् यस्मिन् कार्य्ये सप्तम्यन्तपदोपात्तस्य प्रत्ययस्य निमित्तत्वं तत्रैतस्याः परिभाषायाः प्रवृत्तिरित्याह—*यत्कार्यमिति* । एवं च प्रत्यये परतो यत्कार्यं धातोः प्राप्तं तद्धातुसंशब्देऽनेन विहिते प्रत्यये भवतीति परिभाषार्थः भवत्येवेति पक्ष इति शेषः ।

तत्त्वप्रकाशिका ।

*"धातोः कार्यमुच्यमानं तत्प्रत्यये भवति* । धातुत्वव्याप्यधर्मावच्छिन्नोद्देश्यताकं कार्यं धातुत्वव्याप्यधर्मावच्छिन्नोद्देश्यतानिरूपितविधेयताश्रये प्रत्यये भवतीत्यर्थः । अत

कुत्वं प्रणङ्भ्यामित्यादौ भवत्येव । इयङादिविधौ तु नैषा । "न भूसुधियोः" ( ६-४-८५ ) इति निषेधेनानित्यत्वात् । "मृजेर्वृद्धिः" (७-२-११४) इत्यत्र भाष्ये स्पष्टा ।। ८९ ।।

ननु सर्वक उच्चकैरित्यादौ सर्वनामाव्ययसंज्ञे न स्यातामत आह—

**तन्मध्यपतितस्तद्ग्रहणेन गृह्यते ।। ९० ।।**

"नेदमदसोरकोः" (८-१-११ ) इति सूत्रे ऽकोरितिनिषेधोऽस्या ज्ञापकः । 'तदेकदेशभूतं तद्ग्रहणेन गृह्यते' इति "येन विधिः" ( १-१-७२ ) इति सूत्रे भाष्ये पाठः ॥ ९० ॥

भैरवी ।

नन्वेवं "अचिश्नु" इत्यस्य प्रत्यये परतो विधानेन सुधियावित्यादौ प्रवृत्तिर्न स्यादत आह—*इयङादीति* । नच "न भूसुधियोः" "इत्यस्य" "इको यण्" इतिसूत्रविहियण्निवर्त्तकतया चरितार्थत्वेन नित्यत्वज्ञापकता न सम्भवतीति वाच्यम् । "इणो यण्" इतिसूत्रस्थयण्पदस्य "एरनेकाच" "ओःसुपि" इत्यनयोर्निषेधविधायकसूत्रे च अनुवृत्तेर्बाध्ययोः प्राप्तिरवश्यं वाच्येति ज्ञापकत्वं युक्तमेवेत्याशयात् ॥ ८९ ॥

प्रत्ययप्रसङ्गादाह—*ननु सर्वक इति । न स्यातामिति* । साकच्कस्य शब्दान्तरत्वादिति शेषः । *तन्मध्यपतित इति* । तन्मध्यपतितस्तद्घटक—यत्किञ्चिद्वर्णविषयज्ञानाधिकरणक्षणध्वंसाधिकरणक्षणवृत्तित्वे सति तच्चरमवर्णज्ञानोत्पत्तिप्रागभावाधिकरणक्षणवृत्तियज्ज्ञानं तद्विषयस्तद्ग्रहणेन तद्बोधकेन शब्देन गृह्यते इति । एवं चैतब्दोधकः शब्दस्तद्घटितसमुदायस्तत्बोधको भवतीति फलितम् । *अस्या ज्ञापक इति* ॥ यदि तद्बोधकः शब्दस्ताहशसमुदायस्य बोधको न स्यात । तदा साकच्कस्यशब्दान्तरत्वात् प्रसङ्ग एव नास्तीति अकोरिति प्रतिषेधोऽनर्थक स्यादितिभावः । तन्मध्यपतितत्वं समप्रविभागेन तु न युक्तमकचस्तथात्वविरहात् किं तु पूर्वोक्तमेवेत्याशयेन आह—*तदेकदेशभूतमिति* । एकदेशशब्दोऽवयववाची ॥ ९० ॥

तत्त्वप्रकाशिका ।

एवेयङादिविधाविदं नोपतिष्ठते, तत्र धातुत्वावच्छिन्नोद्देश्यताकत्वसत्त्वेऽपि धातुत्वेतरधातुत्वव्याप्यधर्मावच्छिन्नोद्देश्यताकत्वस्याभावात् । एतन्मूलकमेव इयङ्विधौ तु नैषेत्यादि वक्ष्यति । । प्रणङ्भ्यामित्यादौ भवत्येवेति ।

वस्तुतस्तु यत्कार्यं प्रत्ययनिमित्तक तत्रेयं व्यवस्थापिकेत्यनुक्तावपि न दोषः । धातुत्वव्याप्यधर्मावच्छिन्नोद्देश्यतानिरूपितविधेयताश्रयस्य क्विपः सत्त्वात् ॥ ८९ ॥

*संज्ञे न स्यातामिति* । नच सर्वके उच्चकैरित्यादौ अकज्विशिष्टे सर्वनामाव्ययत्वयोरसत्त्वेऽपि न दोषः । सुबन्तात्तद्धितोत्पत्तिरितिसिद्धान्तेन सुबुत्पत्त्यनन्तरमेवाकच्प्रवृत्त्या मासपूर्वाः अत्युच्चैसावित्यादौ शीलुको वारणाय "जसः शी" "अव्ययादाप्" इत्यादौ विहितविशेषणस्यावश्यकत्वेन "अव्ययसर्वनाम" विहितजससुपोः सत्त्वादिति वाच्यम्, "जसः शी" इत्यादौ अङ्गस्येत्यस्य तदादेरित्यस्य वा विशेषणत्वं स्वीकृत्य अङ्गतदादि वा यत्सर्वनाम ततः परस्य "जसः शी"विधानेन मासपूर्वा इत्यादौ दोषाभावेन तत्र विहितविशेषणानङ्गीकारेण अत्युच्चैसावित्यादौ दोषवारणस्य विहितखण्डनस्य च शेखरे एवोक्तत्वेन सर्वके उच्चकैरित्यादौ अङ्गाभिन्नसर्वनामाव्यवहितोत्तरत्वस्य अव्ययाव्यवहितोत्तरत्वस्य च सुप्यसत्त्वेनावतरणसङ्गतेः । *तन्मध्यपतित इतिः* । तत्वं च स्वघटकाव्यवहितोत्तरत्वस्वघटकाव्यवहितपूर्वत्वस्वनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्व एतत्त्रितयसम्बन्धेन स्वविशिष्टत्वम् ॥ ९० ॥

ननु "गातिस्थाघुपाभूभ्यः" (२-४-७७) इति सिचो लुगपासीदित्यादौ पातेरपि स्यादत आह—

लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य ॥ ९१ ॥

अस्याश्च ज्ञापकः "स्वरतिसूति" ( ७-२-४४ ) इति सूत्रे सूङिति वक्तव्ये सूतिसूयत्योः पृथङ्निर्देश इति कैयटः । तन्न । साहचर्यादलुग्विकरणस्यैव ग्रहणे प्राप्ते पृथङ्निर्देशस्य तज्ज्ञापकत्वासम्भवात् । ध्वनिता चेयं परिभाषा "यस्य विभाषा" (७-२-१५) इत्यत्र भाष्ये । तत्र हि विदित इति प्रयोगे निषेधमाशङ्क्य यदुपाधेर्विभाषा तदुपाधेर्निषेधो "विभाषा गमहनविदविशाम्" ( ७-२-६८ ) इति सूत्रे शब्विकरणस्य ग्रहणं लुग्विकरणश्चायमित्युक्तम् । तत्र चो हेतौ । यतोऽयं लुग्विकरणोऽतो विशिसाहचर्याच्छब्विकरणस्य ग्रहणं न तु हनिसाहचर्यादस्याप्येतत्परिभाषाविरोधादिति तदाशयः ।

अत एव परिभाषायां लुग्विकरणस्यैवेति नोक्तम् । कण्ठतस्तु भाष्य एषा क्वापि न पठिता । "गातिस्था" ( २-३-७७ ) इति सूत्रे पिबतेर्ग्रहणं कर्त्तव्यमिति वार्त्तिककृता सर्वत्रैव पाग्रहणे लुग्विकरणस्य ग्रहणमिति भाष्यकृता चोक्तम् । "स्वरति सूति" ( ७-२-४४ ) इति सूत्रे कैयटेन च

भैरवी ।

धातोः कार्य्यमितिपरिभाषायां धातुशब्दसत्त्वात्तत्प्रसङ्गेन आह-*ननु गातिस्थेत्यादीति । पातेरपीति* । पञ्चम्यन्तमेतत् । अपिना पिबतेः समुच्चयः पारूपत्वादिति शेषः । लुग्विकरणेत्यादि* । अत्रालुग्विकरणस्येति सावधारणं । *कैयटः । "स्वरतिसूति" इति* । सूत्रभाष्यस्थः पूङ इत्यत्र ङकारः षू प्रेरण इत्येतद्व्यावृत्त्यर्थः । ज्ञापकत्वं विघटयति-*तन्नेत्यादिना । साहचर्य्यात्* । पूर्वपरसाहचर्य्यात् । ननु यदीयं न ज्ञापकसाध्या तर्हि निर्मूला स्यादत आह-*ध्वनितेति । विदित इति* । वेत्तेरिदं रूपं, दिवादितुदादिरुधादिपठितानां तु अनुदात्तत्वादेव निषेधो भवतीति भावः । *यदुपाधेरिति* । पञ्चम्यन्तमेतत् । अत्रोपाधिपदं विशेषणपरं य उपाधिर्यस्य तस्यादित्यर्थः ।

अयं भावः—यदि साहचर्य्यं व्यवस्थापकं स्यात्तदा हनिसाहचर्य्यविशिसाहचर्य्याभ्यामुभयोर्ग्रहणं स्यादेतत्परिभाषासत्त्वे तु साहचर्य्यमात्रं न हेतुः । किन्तु एतत्परिभाषापीत्यलुग्विकरणस्य ग्रहणमित्येतद् ध्वनितमित्यर्थः । अयम्विदित इति प्रयोगघटकः । *अत एव* । उक्तभाष्येण ध्वननादेव । *इति नोक्तमिति* । यदीयं परिभाषा सूतिसूयत्योः पृथङ्निर्देशरूपज्ञापकसाध्या स्यात्तदा प्राथम्याल्लुग्विकरणस्यैव ग्रहणमित्येव ज्ञाप्यताम्, तावतापि उभयोः पृथङ्निर्देशस्य आवश्यकत्वं लभ्यते एवेत्यलुग्विकरणस्यैवेति कथनान्न ज्ञापकसाध्येति भावः । *एषा* । एवमानुपूर्वीका । एवमानुपूर्वीका विशिष्य भाष्ये न पठितेत्यत्रैव साधकान्तरमाह-*गातिस्थेतीति । सर्वत्रेति* । सर्वत्रैवेत्येवकारेण प्रकृतसूत्र एव । *कैयटेन चेति* ।

तत्त्वप्रकाशिका ।

*कैयट इति* । नच स्वरतिसाहचर्यादलुग्विकरणस्यैव ग्रहणं स्यादित्युभयोर्ग्रहणार्थं पृथगुपादानं सार्थकमिति वाच्यम् ? स्वरतिषूङ्सुदित्सुङोवेत्येव सिद्धे पृथङ्निर्देशस्य ज्ञापकत्वसंभवात् । नचैवमपि 'लुग्विकरणालुग्विकरणयोर्लुग्विकरणस्यैव' इत्येव कस्मान्न कल्प्यत इति वाच्यम् ? "यस्यविभाषा" इति सूत्रभाष्यानुसारेण तथा कल्पनात् । एतेन अत एव परिभा-

स्पष्टमुक्ता ॥ ९१ ॥

ननु प्रजिघाययिषतीत्यादौ "हेरचङि" ( ७-३-५६ ) इति विधियमानं कुत्वं न स्यादत आह—

## प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणम् ॥ ९२ ॥

अचङीतिप्रतिषेध एवास्या ज्ञापकः । इयं च कुत्वविषयैव । "हेरचङि" इति सूत्रे भाष्ये स्पष्टेयम् ॥ ९२ ॥

ननु युष्मभ्यमित्यादौ "भ्यसः" ( ७-१-३० ) इत्यश् भ्यमिति च्छेदे भ्यसो भ्यमि कृतेऽन्त्यलोप एत्वं स्यादत आह—

## अङ्गवृत्ते पुनर्वृत्तावविधिः ॥ ९३ ॥

अङ्गेऽङ्गाधिकारे वृत्तं निष्पन्नं यत्कार्यं तस्मिन् सति पुनरन्यस्याङ्गकार्य्यस्य वृत्तौ प्रवृत्तावविधानं भवतीत्यर्थः । एषा च "ज्यादादीयसः" (६-४-१६०) इत्यात्विधानेन ज्ञापिता । अन्यथा इकारलोपेन "अकृत्सार्व-" ( ७-४-२५ ) इति दीर्घेण च सिद्धे तद्वैयर्थ्यं स्पष्टमेव । अत एव भिन्नस्थानिकाङ्गकार्य्यविषयाप्येषा । इयं च अनित्या "ह्वयोः" ( १-२-५९ । ५-३-९२ ) इति निर्देशात् । अनित्यत्वबललभ्यार्थमादायैव "भ्यासोभ्यम्" ( ७-१-३० ) इतिसूत्रे भाष्ये निष्ठितस्येति पठितम् ।

भैरवी ।

चस्त्वर्थे ज्ञेयः ॥ ९१ ॥

आतुप्रसङ्गादाह—*ननु प्रेति । न स्यादिति* । "हेरचङि" इति सूत्रस्य अङ्गाधिकारस्थत्वेन प्रत्यासत्त्या द्वित्वनिमित्तप्रत्ययनिमित्तकस्याङ्गस्य हिनोतेरभ्यासात्परस्य हकारस्येत्यर्थेन कुत्वाप्राप्तेरिति भावः । प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणे तु णिजन्तमपि हिनोतिग्रहणेन गृह्येत, ततश्च कुत्वं प्राप्तमतश्चङि प्रतिषेधः सार्थकः । *कुत्वविषयैवेति* । एवकारे चिकीर्षिते ण्यधिकस्य न ग्रहणमिति बोधितम्। तदुक्तं भाष्ये—"हेश्चङि प्रतिषेधानर्थक्यमङ्गान्यत्वात् ज्ञापकं त्वन्यत्र ण्यधिकस्यापि कुत्वभावस्य" इति ।

एतेन "नभाभूपूकमिगमि" इति सूत्रे "ण्यन्तानाञ्चभादीनामुपसङ्ख्यानम्" इतिवार्त्तिकारम्भादियमनित्या तेनाङ्पूर्वाद्धन्तेर्ण्यन्तात् "आङो यमहनः" इत्यात्मनेपदं नेति वदन्तोऽभिषावयतीत्यत्राभेर्ण्यन्तार्थविशेषकत्वेऽपि षत्वं भवतीति वदन्तश्चापास्ताः ॥ ९२ ॥

प्रत्ययस्योपस्थितत्वात् तत्प्रसङ्गेनाह-*ननु युष्मभ्यमिति । आदिना अस्मभ्यमित्यस्योपसङ्ग्रहः । परिभाषार्थमाह-*अङ्ग इत्यादिना* । परिभाषास्वीकारे तु युष्मभ्यमित्यादावङ्गवृत्तं यत्कार्य्यं शेषे लोपस्तस्मिन् सति पुनरन्यस्याङ्गाधिकारीयस्यैत्वस्याविधानं सिद्धं भवति । "अङ्गवृत्त" इतिबहुव्रीहेः सति सप्तमी, यद्वा कर्तृक्तान्तवृत्तशब्दस्य सप्तम्यन्ताङ्गशब्दस्य "सुप्सुपा" इतिसमासः । *अत एव* । अत्विधानस्य ज्ञापकत्वादेव । ज्यात्परस्येयसो लोपोज्यस्य तु दीर्घ इति भिन्नस्थानिकत्वं स्पष्टमेव । अपिना समानस्थानिकस्य समुच्चयः । तेन युष्मभ्यमित्यादेः सिद्धिः । अभिधानमित्यस्यानिष्पत्तिरप्रवृत्तिरित्यर्थः । *ह्वयोरिति निर्देशादिति* । यदीयमनित्या न स्यात्तदा ह्वयोरित्यत्र "त्यदादीनाम" इत्यत्वे "ओसि च" इत्योत्वं न स्यादिति भावः । *निष्ठितस्येति* । अङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्येति

तत्त्वप्रकाशिका ।

धातुग्विकरणस्येत्येव नोक्तमिति कैयटखण्डनं न परास्तम् ॥ ९१ ॥

केचित्तु अनया परिभाषया न किञ्चिल्लक्ष्यं साध्यते । अत एव "ज्ञाजनोर्जा" (७-३-७९) "ज्यादादीयसः" (६-४-१६०) इति सूत्रयोरेनां ज्ञापयित्वा किं प्रयोजनम् ? इति प्रश्ने पिबतेर्गुणप्रतिषेध उक्तः, स न वक्तव्य इत्येव प्रयोजनमुक्तं न तु लक्ष्यसिद्धिरूपम् ।

तदुक्तम्—"भ्यसोभ्यम्" इत्यत्राभ्यमितिच्छेदः "शेषे लोपश्च" अन्त्यलोप एव "अतो गुणे" ( ६-१-९७ ) इतिपररूपेण सिद्धे युष्मभ्यमित्यन्यत्र निरूपितम् । एवं च सूत्रद्वयस्थमेतज्ज्ञापनपरं भाष्यं "भ्यसोऽभ्यम्" इतिसूत्रस्थं च भाष्यमेकदेश्युक्तिरित्याहुः ।। ९३ ।।

यस्त्वोरोदितिवाच्ये "ओर्गुणः" ( ६-४-११६ ) इति गुणग्रहणात्—

## संज्ञापूर्वकविधेरनित्यत्वम् ॥ ९४ ॥

इयं च विधेयकोटौ संज्ञापूर्वकत्व एव । तेन स्वायम्भुवमित्यादि सिद्धम् ।। ९४ ।।

भैरवी ।

पठितमित्यर्थः । एतदर्थस्तु अङ्गे अङ्गाधिकारे वृत्तं वर्त्तनं यस्य तस्मिन् कृते सति निष्टितस्य प्रयोगार्हस्य शब्दस्य पुनरङ्गाधिकारीयकार्य्यान्तरस्य अविधानमिति । *केचित्त्विति* । भाष्यानुसारिण इत्यर्थः । *अत एव* । अस्याः परिभाषायाः लक्ष्यासाधकत्वादेव । *एनां पठित्वेति* । तत्र जादेशविधानस्यैव ज्ञापकतोक्ता, अन्यथा जानातीत्यादौ "ज्ञाजनोः" इतिसूत्रेण जभाव एवास्तु तस्मिन् कृतेऽमि "अतो दीर्घो यञि" इति दीर्घेण रूपसिद्धिः स्फुटैवेति स न वक्तव्य इति, एतत्परिभाषया गुणाभावस्य सिद्धेरिति भावः । *इत्येवेति* । पिबतीत्यत्र गुणाभावस्य पिबादेशस्य अदन्तत्वेन सिद्धिर्भवत्येवेतिपरिभाषायाः प्रयोजनं नास्तीति भावः ।

*तदुक्तमिति* । प्रयोजनमुक्तमित्यर्थः । प्रयोजनान्यथासिद्धिमाह-*भ्यसोभ्यमित्यादिना । अभ्यमिति छेद इति* । अत एव नवादेशो हलादिरस्तीतिभाष्यं सङ्गच्छते । अन्त्यलोप एव* । अत एव "साम आकम्" इतिसूत्रे लिङ्गाभावाट्टिलोपवचनानर्थक्यमितिभाष्यं सङ्गच्छते । "शेषे लोप" इतिसूत्रे शेषग्रहणं तु प्रत्याख्यातमेव ।

ननु परिभाषाया अभावे दवयति स्वजयतीत्यत्र वृद्धिर्लोपे लुकि च कृते प्राप्नोतीति चेन्न, इष्टवदित्यनेन अभावातिदेशोऽपि स्वीक्रियत इतिवृद्ध्यभावस्य सिद्धेः । न चैवं सति प्रापयतीत्यत्र "अचो ञ्णिति" इतिवृद्धिर्न स्यादितिवाच्यम् , परिभाषायाः सत्त्वेऽनित्यत्वात् तत्प्रवृत्त्या प्रापयतीत्यत्र वृद्धिवत्तदभावे "टेः" इतिसूत्रस्थभाष्यप्रामाण्येनोपधावृद्ध्यभावस्यैवातिदेशात् । तत्र हि इष्टवद्भावस्य प्रयोजननिरूपणासरे पटुमाचष्टे पटयति दूरमाचष्टे दवयति प्रियमाचष्टे प्रापयतीत्युक्तम् । *सूत्रद्वयस्थम्* । "ज्ञाजनोर्जा" "ज्यादादीयस" इतिसूत्रद्वयस्थम् । *सूत्रस्थं च भाष्यमिति* । भ्यमितिछेदपक्षे अनया एत्वव्यावृत्तिप्रदर्शनपरभाष्यमित्यर्थः ॥ ९३ ॥

केचित्तु इत्यारभ्याहुरित्यन्तेनाङ्गवृत्त इतिपरिभाषा खण्डिता, तया खण्डनीयत्वसाधर्म्यादन्यामपि प्राचीनपठितां परिभाषां खण्डयति-*यस्त्वित्यादिना । विधेयकोटौ* । विधेयांशे-ज्ञापकसाजात्यादिति शेषः । तेन "ओरोत्" इतिसूत्रस्य भाधिकारीयत्वेऽपि गुणग्रहणमनित्यत्वसाधकमचरितार्थम् । अत एव "नपदान्त" सूत्रे सार्थकम् । अन्यथा "अचः परस्मिन्" इति सूत्रस्याचूसंज्ञापूर्वकत्वेन अनित्यत्वेनैव इष्टसिद्धौ तद्वैयर्थ्यं स्पष्टमेव ॥ ९४ ॥

तथानिलोडित्येव सिद्धे आनिग्रहणात्—

## आगमशास्त्रमनित्यम् ॥ ९५ ॥

तेन सागरं तर्तुकामस्येत्यादि सिद्धम् ॥ ९५ ॥

तथा तनादिपाठादेव सिद्धे "तनादिकृञ्भ्यः" ( ३-१-७९ ) इतिसूत्रे कृञ्ग्रहणात्—

## गणकार्यमनित्यम् ॥ ९६ ॥

तेन न विश्वसेदविश्वस्तमित्यादि सिद्धम् ॥ ९६ ॥

तथा चक्षिङो ङित्करणात्—

## अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम् ॥ ९७ ॥

तेन 'स्फायन्निर्मोकः' इत्यादि सिद्धम् ॥ ९७ ॥

तथा विनार्थनञा समासेनानुदात्तं पदमनेकमित्येव सिद्धे वर्जग्रहणात्—

## नञ्घटितमनित्यम् ॥ ९८ ॥

तेन "नेयङुवङ्" ( १-४-४ ) इत्यस्यानित्यत्वाद्धे सुभ्रु इति सिद्धमिति तन्न, भाष्येऽदर्शनात् । भाष्यानुक्तज्ञापितार्थस्य साधुताया नियामकत्वे मानाभावात् । भाष्याविचारितप्रयोजनानां सौत्राक्षराणां पारायणादावदृष्ट-

भैरवी ।

*आनिग्रहणादिति* । आकारविशिष्टनिग्रहणादाकारोपादानादिति यावत् । *तेन* । आगमशास्त्रस्य अनित्यत्वेन । *तर्तुकामस्येति* । अत्रेडभावेऽपि नासाधुता । आदिना क्षुब्धो राजा, शाकं पचानस्य, इत्यनयोः संग्रहः । आद्ये इडभावस्य द्वितीये मुगागमस्याभावेऽपि साधुत्वम् ॥ ९५ ॥

खण्डनीयत्वादेवाह—*तथेति* । *न विश्वसेदिति* । अत्र "आदिप्रभृतिभ्य" इति शपो लुङ् न, एतत्स्वीकारादेव "स चापि गदया दैत्यः, सर्वा एवाहनत् पृथक्" इत्यस्य साधुत्वम् ॥ ९६ ॥

खण्डनीयत्वादेवाह—*तथेति* । *ङित्करणादिति* । न चैकारो नानुदात्त इति वाच्यम्, आख्यानमित्यत्र "अनुदात्तेतश्च हलादेः" इति युच् न स्यात् । नच ङकाराभावे "इदितो नुम् धातोः" इति नुम् स्यात्, तत्सत्त्वे त्वन्तेदित्वविरहान्न नुमितिवाच्यम् । इकारस्य स्थानेऽकारस्य पाठेनापि नुमभावस्य सिद्धेरित्याशयात् । *अनुदात्तेत्त्वलक्षणमात्मनेपदम्* । अनुदात्तङित आत्मनेपदम्" इतिसूत्रविहितमात्मनेपदम् । तेत ङित्त्वप्रयुक्तमात्मनेपदं क्वचिन्न । तेन "सत्यः शपामि तन्नाहं, न तु वेद्मि सुखावहम्" इत्यस्य साधुत्वोपपत्तिः । स्फायन्नित्यत्र त्वनुदात्तेत्त्वलक्षणात्मनेपदस्यैवाभावस्य सिद्धिः । शपामीत्यत्र तु गणकार्य्यस्य अनित्यत्वात् ङित्त्वप्रयुक्तात्मनेपदस्य च तथात्वात् सिद्धिरिति विशेषः ॥ ९७ ॥

खण्डनीत्यत्वादेवाह—*तथेति* । *नञ्घटितमिति* । नञ्घटितसूत्रविधेयमित्यर्थः । *इति सिद्धमिति* । तत्र नदीसंज्ञानिषेधाप्रवृत्त्या नदीसंज्ञायाम् "अम्बार्थनद्योः" इत्यस्य प्रवृत्तिर्भवतीत्यस्य सिद्धिरित्यर्थः । एतत् खण्डयति—*तन्नेति* ।

ननु भाष्येऽदर्शनं न अभावसाधकं, येषां सूत्राणां भाष्येऽविचारणं तेषामप्यप्रामाणिकत्वापत्तेरत आह—*भाष्येति* । *मानाभावादिति* । तेन 'संज्ञापूर्वक' इत्यादिसर्ववचनानां न साधुतानियामकत्वमित्युक्तम् ।

मात्रार्थकत्वकल्पनाया एवौचित्यात् ।

किञ्च ज्ञापितेऽप्यानीत्यस्य न सार्थक्यमाडागमशून्यप्रयोगस्य अप्रसिद्धेः । आङ्ग्रहणं तु लोड्ग्रहणवदिति बोध्यम् । अत एव "घोर्लोपो लेटि वा" (७-३-७०) इतिसूत्रे वेति प्रत्याख्यातम् । लोपेऽप्याट्पक्ष आटः श्रवणं भविष्यति दधादिति, अटि दधदिति आगमशास्त्रस्यानित्यत्वेत्वाट्यसति दधादित्यसिद्धया वाग्रहणस्यावश्यकत्वेन तत्प्रत्याख्यानासङ्गतिः स्पष्टैव ।

एतेन यत्कैयटेन केचिदित्यादिनास्यैव वाग्रहणस्य तदनित्यत्वज्ञापकतोक्ता सापि चिन्त्या प्रत्याख्यानपरभाष्यविरोधात् । चक्षिङो ङकारस्यान्त इदित्त्वाभावसम्पादनेन चारितार्थ्याच्च । "तनादि" सूत्रे कृञ्ग्रहणस्य भाष्ये प्रत्याख्यानाच्च ॥ ९८ ॥

भैरवी ।

ननु एवं तेषां ज्ञापकत्वेनान्योक्तसाफल्यकानां गुणादिशब्दानां वैयर्थ्यापत्तिरत आह—*भाष्याविचारितेति* । एवं सर्वसाधारणदोषमुक्त्वा द्वितीयमसाधारणदोषेण खण्डयति—*किञ्चेति* । *अप्रसिद्धेरिति* । तथा च ज्ञापकत्वासङ्गतिरिति भावः । *आङ्ग्रहणमिति* । आट् गृह्यते येन तदाङ्ग्रहणमानीतिसमुदायस्योच्चारणमित्यर्थः । *लोड्ग्रहणवदिति* । यथा लोड्ग्रहणमदृष्टार्थं तथेत्संज्ञकटकारोपलक्षितस्य अकारस्य उच्चारणमप्यदृष्टार्थमिति भावः । *अत एव* । आगमशास्त्रमनित्यमित्यस्याभावादेव । *वेति प्रत्याख्यातमिति* । वेत्युपादानं दधात् दधदित्युभयसिद्ध्यर्थम्, तच्च लोपस्य नित्यत्वेऽपि सिध्यतीति भावः । *आट्यसतीति* । भवत्सम्मतपरिभाषया आट्यसतीत्यर्थः ।

ननु यदीयं परिभाषैव न तदास्या अनित्यतायाङ् "घोर्लोप" इति सूत्रस्थं वाग्रहणं ज्ञापकमिति । कैयटोक्तं विरुध्यत इतिशङ्कानिवारणाय कैयटमतं दूषयति—*एतेनेति* । एतेन प्रत्याख्यानपरभाष्यप्रामाण्येन । एतेनेत्यस्यार्थं स्वयमेवाह—*प्रत्येति* । चतुर्थपरिभाषाविषय आह—*चक्षिङ इति* । *अन्त इदित्वाभावेति* । "इदितो नुम् धातोः" इतिसूत्रे "गोः पादान्त" इति सूत्रादन्त इत्यनुवर्तितम् "इर इत्संज्ञावाच्या" इतिवार्तिकस्येकाररेफयोः पृथगित्संज्ञामाश्रित्य प्रत्याख्यानं च कृतमत एवेरिद्धातोर्नुमागमो वारितस्तत्पक्षाभिप्रायेणेदम् । नच चक्षिङित्यत्रेकारस्य स्थानेऽकारं पठित्वा नुमागमो वार्यताम्, एवं चेदित्वाभावोऽन्त्येनेति ङकारोच्चारणं ज्ञापकं भविष्यतीति वाच्यम् । पाणिनिपठितानुपूर्व्या त्यागकल्पनेन ङस्य ज्ञापकत्वकल्पने ज्ञाप्यस्यार्थस्य अपाणिनीयत्वस्य दुर्वारत्वात् । इष्टापत्तिस्तु कर्तुमशक्या तद्वचनसाध्यस्य प्रयोगस्य असाधुत्वापत्तेः । सिंहावलोकनन्यायेन तृतीयपरिभाषाविषय आह—*तनादीति* ॥ ९८ ॥

तत्त्वप्रकाशिका ।

*वेतिप्रत्याख्यातमिति* । न च "घोर्लोपोलेटि वा" इतिसूत्रे वाग्रहणसत्त्वेऽपि दधात् दधत् आगमशास्त्रस्यानित्यत्वाद्दध इतिरूपत्रयं वाग्रहणप्रत्याख्यानेऽपि रूपत्रयमिति कथं तदसङ्गतिरितिवाच्यम् ।

वाग्रहणसत्त्वे दधात् इत्यन्तोदात्तमाद्युदात्तं च भवति प्रत्याख्यानेतु आद्युदात्तमिति फलभेदेन प्रत्याख्यानासङ्गतेः । तथाहि–वाग्रहणसत्त्वे आटोऽभावे लोपाभावे दधात् इतिरूपसिध्या "अनुदात्तेच" इत्यस्य प्राप्त्यभावेन अन्तोदात्तं लोपे आटि च "अनुदात्तेच" इत्याद्युदात्तमिति, प्रत्याख्याने तु आटि दधात इतिरूपसिध्या आद्युदात एवेति फलभेदः स्पष्ट एव ।

एवमेव—

आतिदेशिकमनित्यम् ॥ ९९ ॥

सर्वविधिभ्यो लोपविधिरिड्विधिश्च बलवान् ॥ १०० ॥

इत्यादि भाष्यानुक्तं बोध्यम् ।

स्वायम्भुवमित्यादि लोकेऽसाध्वेवेति अन्यत्र विस्तरः ॥ १०० ॥

भैरवी ।

खण्डनीयत्वसाधर्म्यादर्वाचीनपठिता अन्या अपि परिभाषाः खण्डयति—*एवमेवेति* । *अनित्यमिति* । "स्थानिवदादेश" इत्येव सिद्धे "प्रत्ययलोपे प्रत्ययलक्षणम्" इतिसूत्रमातिदेशिककार्य्यस्य अनित्यत्वे ज्ञापकमिति तद्भावः । एतत्फलमुभये इति । अत्र स्थानिवद्भावेन तयप्प्रत्ययान्ततया विकल्पो नेति । *सर्वविधिभ्यो लोपविधिरिति* । अत्रापि "प्रत्ययलोप" इतिसूत्रमेव यावता विनानुपपत्तिस्तस्य सर्वस्य ज्ञाप्यत्वादिति न्यायेन ज्ञापकम् । अन्यथा प्रत्ययलोपात् पूर्वमेव प्रत्ययनिमित्तकार्य्यस्य सिद्धौ तद्वैयर्थ्यमस्त्येवेति तद्भावः । तेन कानि सन्तीत्यादिप्रयोगाणां सिद्धिः । *इड्विधिश्चेति* । अत्र ज्ञापकम्—"सनिग्रहगुहोश्च" इति सूत्रे चकारकरणम्, तद्धि बुभूषतिरूपतीत्यादाविडभावाय, "श्र्युकः क्किति" इति सूत्रादुकोऽनुकर्षणार्थं कृतम्, यदीड्विधेर्बलवत्त्वं न स्यात् तदा तत्रेडागमात्पूर्वं सनोझलादित्वात् "इको झल्" इति कित्वे श्र्युक इत्येवेण्निषेधे सिद्धे चकारवैयर्थ्यं स्पष्टमेवेति । *इत्यादीति* । आदिपदेन प्राचीनोक्तस्य क्रियाविशेषणानां कर्मत्वम्, तेषाञ्च नपुंसकत्वम् योगविभागसिद्धस्य बलवत्वम् क्रियाविशेषणबोधकानित्यैकवचनान्तत्वमिति वचनकूटस्य परिग्रहः । *भाष्यानुक्तमिति* । तथा चैतानि वचनानि निर्मूलानि अप्रामाणिकानीति भावः ।

ननु "आतिदेशिकमनित्यम्" इतिवचनस्य यत् फलमुभय इत्यत्र स्थानिवद्भावेन तयप्प्रत्ययान्ततया "प्रथमचरम" इति सर्वनामसंज्ञाया विकल्पो नेति तस्य का गतिरिति चेन्न, अन्तरङ्गत्वेनायचः प्रत्ययान्तरत्वेन वा तत्र नित्यसंज्ञाया एव प्रवृत्तेः । "प्रत्ययलोप" इतिसूत्रनियामकताया एव भाष्यसम्मतत्वाच्च । यच्चोक्तं "सनिग्रहगुहोश्च" इत्यत्र चकारकरणं ज्ञापकमिति तन्न, अनुवृत्त्यर्थकचकाराणां भाष्ये प्रत्याख्यानात् ।

किञ्च तस्य चग्रहणस्य ज्ञापकत्वमपि न सम्भवति, "इको झल्" इत्यत्र झल्ग्रहणात्, तद्धि यत्रेडागमस्तद्व्यावृत्त्यर्थम् । यदीडागमस्य बलवत्त्वं न स्यात्, तदा सर्वत्रैवेडागमात्पूर्वं झलादित्वसत्त्वेन तद्वैयर्थ्यं स्पष्टमेवेति । क्रियाविशेषणानां कर्मत्वादेर्युक्तिसिद्धत्वस्य अन्यत्र स्पष्टतया न तत्र वचनापेक्षा, योगविभागस्य बलवत्त्वञ्च योगविभागसामर्थ्यात् सिद्धम् ।

यदपि सर्वविधिभ्य इड्विधिर्बलवानित्यस्य फलमुक्तम्—'स्वपित्वा इति, अत्रेडागमात्पूर्वं क्त्वाप्रत्ययस्य कित्वात्सम्प्रसारणे रूपासिद्धिरिड्विधेर्बलवत्त्वे तु पूर्वमिटः प्रवृत्तौ "न क्त्वासेट्" इति कित्वप्रतिषेधेऽनेन न सम्प्रसारणमिति, तदपि न, स्वपित्वेत्यत्र नित्यत्वात् सम्प्रसारणात् पूर्वमिडागमस्य प्रवृत्तौ कित्वप्रतिषेधस्य सिद्धत्वात् । न च 'शब्दान्तरात् प्राप्नुवतो विधेरनित्यत्वस्य' अभ्युपगमेनेटोऽनित्यत्वात् पूर्वं सम्प्रसारणे उगन्तत्वेनेण्निषेधः स्यादिति वाच्यम् । "श्र्युकः" इतिसूत्रे उपदेशपदसम्बन्धेनोपदेशे य उगन्तस्तत्रैवेण्निषेधात् । सून इत्यत्र तु "ओदितो निष्ठायाम्" इत्यनेन सिद्धः ।

ननु एवमुक्तवचनप्रयोजनानां स्वायम्भुवमित्यादीनां का गतिरत आह—*स्वायम्भुवमि-

तत्त्वप्रकाशिका ।

अन्येतु आगमशास्त्रमनित्यमित्यस्य प्रवर्तत इति चेत्प्रवर्त्तत एव नेतिचेन्नैव नत्वेकस्मिल्लक्ष्ये कदाचित्प्रवर्तते न प्रवर्तत इत्यर्थ इति प्रत्याख्यानकल्पे रूपत्रयासिध्या तदसङ्गतिः स्पष्टैवेत्याहुः ॥९७॥

यद्यपि ननु हन्तेर्यङ्लुकयाशीर्लिङि वधादेशो न स्यादत आह—

## प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम् ॥ १०१ ॥

षाष्ठद्वित्वस्य द्विः प्रयोगत्वसिद्धान्तेन प्रयोगद्वयरूपे समुदाये प्रकृतिरूप·

भैरवी ।

स्यादीति* । लोक इत्यनेन छान्दसानां तु बाहुलकत्वात्सिद्धिरित्युक्तम् ॥ ९९ ॥ १०० ॥

खण्डनीयत्वादेवाह—*यद्यपीति* । *न स्यादिति* । लिङ्प्रकृतेः समुदायस्य हन्रूप· त्वाभावात् । *प्रकृतिग्रहण इत्यादि* । गृह्यते यस्मिन् तत् ग्रहणं प्रकृतेर्ग्रहणमिति समासः । एकदेशे ग्रहधात्वर्थे षष्ठ्यर्थविषयत्वस्य अन्वयः । तथा च प्रकृतिबोधकशब्दो यङ्लुगन्तस्यापि बोधक इति फलितोऽर्थः । इयं परिभाषा न्यायसिद्धेत्याह-*षाष्ठद्वित्वस्येति* । *सिद्धान्तेनेति* ।

अयं भावः-षाष्ठं द्वित्वं द्विर्वचनरूपमेव उच्चारणपदाध्याहारेण तन्निरूपितकर्मषष्ठीत्वस्यै· काच इत्यत्रोचितत्वात् यस्य मते स्थाने द्विर्वचनं तेनापि "षष्ठीस्थान" इतिपरिभाषाबलात् स्थानपदाध्याहारेण तन्निरूपितसम्बन्धार्थकत्वं कल्पनीयमित्यध्याहारस्य उभयत्र तुल्यत्वात् ।

किञ्च स्थाने द्विर्वचने चिचीषति तुष्टूषतीत्यत्र सनः सकारेण विशिष्टस्य 'नटभार्य्यावद्य· अनानि भवन्ति" इतिन्यायेन द्विर्वचने प्रकृतिप्रत्ययविभागसम्मोहेन प्रत्ययावयवसकारस्य षत्वं विधीयमानं न स्यात् ।

यदि च "पूर्वत्रासिद्धीयमद्विर्वचने" इति षत्वे कृते द्विर्वचनमिति विभाव्यते, तथापि सन्· परत्वबुद्ध्याभावात् "अज्झनगमाम्" इतिदीर्घत्वं न प्राप्नोति । न च कृते द्विर्वचने चिचीषति दीर्घत्वस्याप्राप्त्यानित्यं दीर्घत्वम्, द्विर्वचनमपि शब्दान्तरस्य प्राप्त्या अनित्यमिति परत्वा· दीर्घत्वे ततो द्विर्वचनादेशे तस्य सिद्धिरिति वाच्यम्, एवमपि जुहूषतीत्यत्र सकारविशिष्ट· स्यादेशे सम्मोहेन "ह्वः सम्प्रसारणम्" इति सम्प्रसारणाप्राप्तेः । यदित्वभ्यस्तीभविष्यत इत्यर्थस्य ह्वेञोऽभ्यस्तस्य इत्युच्यते नच ह्वयतिमात्रमभ्यस्तमिति अभ्यस्तीभविष्यतो ग्रहणं विज्ञास्यत इतिभाष्यसम्मतत्वेन पूर्वं सम्प्रसारणमित्याश्रीयते, तथापि पिपक्षतीत्यत्र सनः सकारेण विशिष्टस्य आदेशे सन्परत्वबुद्ध्यभावात् "सन्यत" इतीत्वं न स्यात् । सूत्रं त्वने· काज्भ्यो विहिते सनि दिदरिद्रिषतीत्यादौ चरितार्थम् ।

किञ्च पापच्यत इत्यादौ पकारविशिष्टस्यादेशे यङ्परत्वबुद्ध्यभावात् "दीर्घोऽकितः" इति· सूत्रे यङ्ग्रहणानुवृत्तिसामर्थ्येन द्वित्वनिमित्तकाङ्गावयवाभ्यासकार्य्यं कृतेऽपि द्विर्वचने विधान· कालिकतत्प्रत्ययपरत्वं निमित्तीकृत्य भवतीति कल्प्यते, तथापि संमोहेन एव जिघांसतीत्यत्र कुत्वमाटिटदित्यत्र णिलोपः प्रतीषिषतीत्यत्र एकस्य सन्परत्वबुद्ध्यभावात् "सन्यत" इतीत्वञ्च न स्यात् ।

न च "स्तौतिण्योः" इतिसूत्रेऽभ्यासादित्युपादानेन अस्य द्वित्वोत्तरमेवप्रवृत्तेस्तत्र सन्परत्वबुद्ध्यभाव इति द्विर्वचनात् प्राग् यस्थानिस्थान्यवयवान्यतरसम्बन्धिव्यवहारः स द्विर्वचनान्तरमपि समुदायावयवे भवतीति ज्ञाप्यत इति न कोऽपि दोष इति वाच्यम् । ज्ञापकाश्रयणे महागौरवात् । तस्माद्द्विः प्रयोगरूपमेवद्विर्वचनमित्याश्रयणीयम् । नच अस्मिन् पक्षे बेभिद्यशब्दाद्यङन्तात् क्विप परभागादेकाचः परत्वादिण्निषेधमाशङ्क्यै· काचोऽङ्गादित्युक्तं भाष्ये, एवञ्च "अचः परस्मिन्" इतिसूत्रे पूर्वविधावित्यत्र प्रत्य· पिपञ्चित्यत्र जुसभावव्यावृत्तये पञ्चमीसमासस्य आवश्यकतया बेभिदिता बेभिदितुमित्यत्र यकारवालोपस्य स्थानिवत्त्वादिण् निषेधाप्राप्तावपि बिभित्सतीत्यत्रैकाच इतीण्निषेधो न प्राप्नोतीति वाच्यम्, एकाचोऽङ्गादिति व्याख्यानेन समाधानात् ।

अयम्भावः—अङ्गस्वस्य विधानप्रतिबद्धतया एकाचो विहितादित्यर्थेन दोषाभाव इति बेभिदितेत्यत्र हि न एकाचो विधानं बिभित्सतीत्यत्र त्वेकाच एवेत्याशयः । एतच्च भाष्यम्

त्वबोधनेनेदं न्यायसिद्धम् । अत एव जुहुधीत्यादौ द्वित्वे कृते धित्वसिद्धि-

भैरवी ।

"एकाच उपदेश" इति सूत्रे उपदेशपदमनुदात्तस्यैव विशेषणमितिपक्षाभिप्रायेण, यदि च समुदाये वाक्यापरिसमाप्तिरितिन्यायेन तदुत्तरभाष्योक्तरीत्या अकृत्वस्य प्रत्ययपरकसमुदाय एव विश्रान्तेर्बिभित्सतीत्यत्र दोष एवेति विभाव्यते तदोपदेशेऽनुदात्तादेकाचः श्रूयमाणादित्यर्थेनोपदेशपदस्योभयविशेषणत्वेन वा तत्रेट्प्रतिषेधो बोध्यः ।

न चैवमपि तस्यैव वारद्वयं प्रयोगात्परभागस्य तत्त्वेन सिषेधेत्यत्र सेधेत्यस्य पदसंज्ञायां "सात्पदाद्योः" इतिषत्वनिषेधः स्यादिति वाच्यम् ? "सुप्तिङन्तंपदम्" इतिसूत्रे "यस्मात्प्रत्ययविधिः" इत्यस्यानुवृत्त्या दोषाभावात् । तथा हि "लिटि" इत्यस्य विषयसप्तमीत्वेन पूर्वं द्विर्वचने ततः समुदायाल्लिड्विधानेन यस्मात्तिड्विधानात् तदादितिङन्तत्वस्य प्रथमसिधशब्दाद्यवयवकसमुदाय एव स्वीकारात् ।

न चैवं समुदायस्य भ्वादिगणपठितत्वाभावेन क्रियावाचकत्वाभावेन च धातुत्वाभावात् ततो लिण्न सम्भवतीति वाच्यम् । लिटीत्यस्य परसप्तमीत्वेऽप्यदोषात् । सिषेधेत्यत्र षत्वप्रतिषेधमाशङ्क्य तावेवसुप्तिङौ यौ ततः परौ सैव प्रकृतिराद्या समुदायपदत्वमेतेनेति भाष्ये उक्तम् । 'आगन्तूनामन्ते सन्निवेशः' इति न्यायेन द्वितीयोच्चारणस्यैव विधेयत्वम्, यतो विधानं, तत्वन्तु पूर्वभाग एव, उच्चारणक्रियाया एव भेदो, न तु उच्चार्य्यमाणस्येतिप्रथमस्यैव तत्वम् ।

न चैवं जाहेतीत्यत्र दीर्घत्वं न स्यात्, हाधातोर्द्वित्वेऽभ्यासात्परत्वाभावात् कित्वात् "दीर्घोऽकितः" इत्यत्राकित्पदे लाघवात् कर्म्मधारस्य सत्त्वात्, स्थाने द्विर्वचनपक्षे तु क्वचिदनुबन्धकार्य्येऽपि "अनल्विधौ" इतिप्रतिषेधस्य श्नादेशस्य शानचः शित्त्वेन ज्ञापकेन स्वीकारात्, समुदायस्य स्थानिवत्त्वेनाकित्वाद्दीर्घत्वं सिध्यतीति वाच्यम्, वनीवञ्चीत्यस्य सिध्यर्थं नविद्यतेकिद्यस्येति बहुव्रीहेरेवाश्रयणात् । न च द्विःप्रयोगपक्षेऽभ्यासस्यैव प्रकृतिराद्येतिपूर्वोक्तरीत्या तत्स्वीकारात् स्थितस्यार्थस्य शब्दार्थस्य सम्बन्धस्य नित्यत्वात्त्यागाभावेन 'नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे' इति परिभाषायामनभ्यासविकार इत्युपादानमनर्थकमिति वाच्यम्, "दयतेर्दिगि लिटि" इतिसूत्रे "आर्द्धधातुक" इत्यस्य परसप्तमीत्वपक्षे अस्तेर्लेटि द्वित्वे परस्य भूभावे पूर्वस्य श्रवणं प्राप्नोतीति भाष्ये उक्तं, तत्प्रामाण्येन परस्यार्थवत्त्वमवश्यं स्वीकर्त्तव्यं प्रत्ययप्राग्वृत्तित्वाच्च तथा स्वीकार्य्यम् । अर्थस्य भानञ्च वारद्वयं नास्ति "तस्य लोपः" इति सूत्रेऽभ्यासस्यानर्थकत्वाभिप्रायेण परिभाषायामनभ्यासविकार इत्युक्तमतः पूर्वभागेऽनर्थकत्वमर्थसम्बन्धशून्यत्वरूपं न, किन्तु स्वप्रकृतिकप्रत्ययजन्यद्विर्वचननिष्पाद्यपरभागप्रतिबद्धार्थबोधकत्वशक्तिमत्त्वं परिभाषायांचानर्थकत्वं प्रतिबन्धकाभावविशिष्टार्थबोधकत्वशक्त्यभाववत्वमेव निवेश्यते, स च विशिष्टाभावः क्वचिद्विशेषणाभावात् क्वचिद्विशेष्याभावाद्वेत्यदोषात् ।

केचित्तु-परिभाषायामनभ्यासविकार इत्युक्त्या क्रियावाचित्वं समुदाय एवेति तन्न उत्तरखण्डसाहित्याभावेऽभ्यासमात्रादर्थबोधो न बहुषु स्थलेषु इति तस्यानर्थकत्वव्यवहारः, उत्तरखण्डस्य तु प्रत्ययप्राग्वर्त्तिनः केवलस्यापि अर्थवत्तायाः पेचतुरित्यादौ दृष्टत्वेन तद्दृष्टान्तेन सर्वत्रोत्तरखण्डस्यैवार्थवत्ताया उचितत्वात् ।

यद्यपि यातिरित्यत्र केवलपूर्वभागस्याप्यर्थवत्त्वं दृष्टम्, तथापि क्वचिदियानित्यत्र प्रत्ययमात्रस्य अर्थवत्त्वं दृष्टमिति न सर्वत्र प्रत्यय एव बोधकः प्रतिकृतिरनर्थिकेति कल्प्यते। अपितु उभयोरपि तथा, तथात्रापि पूर्वभागमात्रस्यार्थबोधकत्वस्य दर्शनेऽपि सर्वत्र नैवं कल्प्यत इति दिक् । *इदम्* । परिभाषारूपं वचनम् । *अत एव* । प्रयोगद्वयसमुदाये प्रकृतिरूपत्वस्वी-

रिति तदपि न, भाष्येऽदर्शनात् ।

किञ्च, तेन सिद्धान्तेन प्रत्येकं द्वयोस्तत्त्वबोधनेऽपि समुदायस्य तत्त्वबोधनेऽपि समुदायस्य तत्त्वबोधने मानाभावः । अत एव "इयनेर्दिग" (७-४-९) इति सूत्रेऽस्तेः परत्वाद् द्वित्वे कृते परस्यास्तेर्भूभावे कृते पूर्वस्य श्रवणं प्राप्नोतीत्याशङ्क्य विषयसप्तम्याश्रयणेन परिहृतं भाष्ये । अन्यथा त्वदुक्तरीत्यैकाजद्विर्वचनन्यायेन समुदायस्यैव आदेशापत्तौ तदसङ्गतिः स्पष्टैव । तस्मादुत्तरखण्डमादायैव यथायोगं तत्तत्कार्य्यप्रवृत्तिर्बोध्या । "भूसुवोः" (७-३-८८) इत्यस्य तदन्ताङ्गस्येत्यर्थात् प्राप्तस्य गुणनिषेधस्य बोभूत्विति नियम इति न तद्विरोधः । तस्माद्धन्तेर्यङ्लुकि वध्यादित्यादि माधवाद्युदाहृतं चिन्त्यमेवेत्यन्यत्र विस्तरः ॥ १०१ ॥

यदपि ननु "वृद्धिर्यस्याचामादिः" (१-१-७३) इत्यत्रेक्परिभाषोपस्थितौ शालीयाद्यसिद्धिरत आह—

## विधौ परिभाषोपतिष्ठते नानुवादे ॥ १०२ ॥

### भैरवी ।

कारादेव । *अदर्शनात्* । प्रयोगद्वयस्य प्रकृतिरूपत्वेन कार्य्यस्यादर्शनात् ।

पूर्वोक्तसिद्धान्तदर्शनमात्रेण तादृशसमुदाये तत्त्वमित्यस्य लाभोऽपि नेत्याह—*किञ्चेति* । *तत्त्वम्* । प्रकृतिरूपत्वम् । *अत एव* । प्रत्येकं प्रकृतिरूपत्वसत्त्वादेव । *अन्यथा* । समुदायस्य प्रकृतिरूपत्वस्वीकारे ।

ननु यथा समुदायस्य तत्त्वं तथा प्रत्येकमपि तत्त्वमिति कदाचित्तस्यापि स्यादिति विषयसप्तम्याश्रयणमावश्यकमेवेत्याह-*एकाजिति* । *तदसङ्गतिः* । तादृशसमाधानस्यासङ्गतिः । जुहुधीत्यादेरुपपत्तिमाह-*तस्मादिति* ।

ननु उत्तरखण्डादेरङ्गत्वाभावे "भूसुवोः" इति सूत्रबोध्यगुणाभावस्य बोभूत्वित्यत्राप्राप्तौ "दाधर्ती" इति सूत्रे बोभूत्वितिनिपातनं विध्यर्थमेव भविष्यतीति लोध्येत्येवं नियमार्थं निपातनमितिभाष्यकारीयकथनासङ्गतिरत आह-*भूसुवोरिति* । *तदन्ताङ्गस्य* । भूस्वन्ताङ्गस्य । अगुणस्य गुणनिषेधस्य । *तद्विरोधः* । नियमार्थं निपातनमित्येतत्कथनविरोधः । *तस्मात्* । समुदायस्य प्रकृतिरूपत्वाभावात्, परिभाषाया अभावाच्च ॥ १०१ ॥

खण्डनीयत्वसाधर्म्यादेवाह—*यदपीति* । *परिभाषोपस्थिताविति* । गुणवृद्धिशब्दौ

### तत्त्वप्रकाशिका ।

*समुदायस्यैवादेशापत्ताविति* । नच "आर्द्धधातुक" इत्यनेन तदाद्युपस्थितया अस्त्येतद्रूपः तदादितदवयवो यो निर्दिश्यमान आर्धधातुकाव्यवहितपूर्वश्च तस्य भू इत्यस्तेर्भूरित्यस्यार्थेन परस्यैव भूरादेशो न पूर्वस्य आर्द्धधातुकपरकत्वाभावादितिपरस्य भूभावे कृते पूर्वस्य श्रवणम्प्राप्नोतीतिभाष्यं सङ्गतमितिपरस्यैवार्थवत्त्वमित्येतद्भाष्यं कथं गमकं "आर्द्धधातुक" इत्यस्य परसप्तम्याश्रयणेन एतद्भाष्यप्रवृत्तेरिति वाच्यम् ? 'नानर्थके' इतिपरिभाषायां 'अनभ्यासविकार' इतिपर्युदासस्यैवोत्तरखण्डस्यैवार्थवत्त्वमित्यत्र गमकत्वात् । अन्यथा अभ्यासस्याप्यर्थवत्त्वेन "अलोन्त्यस्य" इत्यनेनैव बिभेतीत्यादिलक्ष्यसिद्धौ तदसङ्गतिः स्पष्टैव ॥१०१॥

*विधौ परिभाषोपतिष्ठते नानुवादे* । परिभाषया प्रधानविधेयसंस्कारे कर्त्तव्ये यावती परम्परा माप्राप्ता ततोऽधिकपरम्परा परिभाषाप्रवृत्तिं न प्रयोजयति । तथा च—"षष्ठीस्थान" इति परिभाषया विधिसंस्कारे कर्तव्ये स्वोपस्थाप्यर्थस्य "इको यणचि" इत्यादौ चारितार्थ्यात्

अनूद्यमानविशेषणेषु तन्नियामकपरिभाषा नोपतिष्ठते इति तदर्थः। विध्यङ्गभूतानां परिभाषाणां विधेयेन असिद्धतया सम्बन्धासम्भवेऽपि तद्विशेषणे व्यवस्थापकत्वेन चरितार्थानां तद्विशेषणव्यवस्थापकत्वे मानाभाव इति तर्कमूलेयम्।

किञ्च "उदीचामातः स्थाने" ( ७-३-४६ ) इति सूत्रे स्थाने ग्रहणमस्या लिङ्गम्। अन्यथा "षष्ठीस्थाने" ( १-१-४९ ) इति परिभाषयैव तल्लाभे तद्वै-

भैरवी।

यत्रोच्चार्य्यते तत्रेक इति पदमुपतिष्ठत इत्यर्थेन तस्य षष्ठ्यन्तस्य तत्रोपस्थितौ "वृद्धिर्यस्य" इतिसूत्रजन्यो महावाक्यार्थबोधो यस्याचामादिरिकः स्थाने वृद्धिस्तद्वृद्धमिति स्यात्तदा शालीयाद्यसिद्धिः स्यादिति भावः। 'विधौ परिभाषोपतिष्ठत' इत्यत्र, विधावित्यस्य नियामिकेति शेषः। विधिपदस्य विधेयविशेषणे लक्षणा, तथा च विधेयविशेषणनियामिका परिभाषा भवतीति फलितम्। ननु विधिपदं विधिसूत्रपरम्, सर्वासां परिभाषाणां विधिसूत्राङ्गतायाः सिद्धत्वादेतत्परिभाषाया एव व्यर्थत्वापत्तेः। नानुवाद इत्यत्रानुवादपदमनूद्यमानविशेषणे लाक्षणिकं तदाह—*अनूद्यमान इत्यादि*। न च "इको यणचि" इत्यादिसूत्रेऽनूद्यमानमिक इति तस्य विशेषणमचीति तन्नियामिका तस्मिन् इतिपरिभाषा भवतीति कथमेतदिति वाच्यम्, अनूद्यमानविशेषणनियामिका परिभाषा न भवतीत्यस्यार्थः। "इको यणचि" इत्यादावचीत्याद्यनूद्यमानस्येक इत्यादेर्विशेषणं, न त्वनूद्यमानविशेषणमित्यनूद्यमानविशेषणनियामिका "तस्मिन्निति निर्दिष्टे" इतिपरिभाषा भवत्येवारम्भसामर्थ्यान्नैवं कल्प्यते। वृद्धिर्यस्य इतिसूत्रे इक्परिभाषोपस्थितौ तु इक्स्थानिकादिवृध्यवयवकाच्समुदायावयवकसमुदायस्य वृद्धिसंज्ञेत्यर्थः स्यात्। तथा च वृद्धिपदार्थस्यौपगवीय इत्यादावनूद्यमानौपगवेतिसमुदायविशेषणात् समुदायस्य यद्विशेषणं वृद्धिस्तन्नियामकत्वमिक्परिभाषाया इति तत्र नानुवाद इति निषेधो भवत्येवेति भावः। विधेयविशेषणनियामकत्वं तु "षष्ठीस्थान" इति परिभाषाया "इको यणचि" इत्यादौ प्रसिद्धमेव, तेन सूत्रेण विधेयस्य यण इक्स्थानिकस्यैव साधुत्वबोधनात्। पूर्वोक्तस्य परिभाषाघटकदलद्वयार्थस्य युक्तिसिद्धत्वमित्येतद्दर्शयति—*विध्यङ्गभूतेति*। अङ्गत्वमुपकारकत्वम्। "तस्मिन्" इत्यादिपरिभाषाविषय आह—*विधेयेनासिद्धतयेति*। यथा "इको यण्" इति सूत्रविधेयो यण् तद्विशेषणत्वमचीत्यस्य न सम्भवति यण असिद्धत्वात्। *तद्विशेषणेति*। विधेयविशेषणे अनूद्याने इक इत्यादौ तत्र व्यवस्थापकत्वे चारितार्थ्यम्। तादृशविधेयविशेषणस्येक इत्यस्य यद्विशेषणमचीति तन्नियामकत्वं तद्विशेषणाव्यवस्थापकत्वमित्यस्य विधेयविशेषणानूद्यमानविशेषणनियामकत्वं भवत्येवेति फलितम्। *तद्विशेषणेत्यादि*। अनूद्यमानविशेषणव्यवस्थापकत्वमित्यर्थः। न च "वृद्धिर्यस्य" इत्यत्र वृद्धेर्नानूद्यमानसमुदायनिरूपितसाक्षाद्विशेषणत्वमिति कथमेतदिति वाच्यम्, विशेषणविशेषणत्वस्य साक्षात्परम्परासाधारणस्य विवक्षितत्वात् परिभाषाया विध्यङ्गत्वमुपकारकत्वं तच्चानूद्यमानविशेषणविशेषणनियामकत्वेऽपि सम्भाव्येतेति भावः। *तर्कः*। न्यायः।

अस्या न्यायसिद्धत्वेऽपि ज्ञापकमाह—*किञ्चेति*। न चात इत्यस्यानूद्यमानविशेषणत्वमेव न त्वनूद्यमानविशेषणत्वमिति ज्ञापकत्वासम्भव इति वाच्यम्, 'श्रुतानुमितयोः श्रुतसम्बन्धो बलीयान्' इतिन्यायेनात इत्यस्य यकपूर्वाविशेषणत्वं तस्य वाच्छब्दार्थविशेषणत्वमस्त्येवेति ज्ञापकत्वसम्भवात्, आतः स्थानिकत्वविशिष्टयकपूर्वत्वविशिष्टाभिन्नो

तत्त्वप्रकाशिका।

"उदीचामात" इत्यादौ तदधिकपरम्परयोपकारकत्वे ऽप्रवृत्तौ स्थाने ग्रहणम्। "तस्मिन्" इतिपरिभाषोपस्थाप्यस्य विधिसंस्कारे कर्तव्ये उद्देश्यमात्रघटिता परम्परा नाप्राप्तेति "अङ्गो-

यथ्यं स्पष्टमेवेति तन्न, "उदात्तस्वरितयोर्यणः" ( ८-२-४ ) इत्यादौ "ष्यङः सम्प्रसारणम्" ( ६-१-१३ ) इति सूत्रभाष्योक्तरीत्या "अल्लोपोऽनः" (६-४-१३४) इत्यादौ चैतस्या व्यभिचरितत्वात्, भाष्यानुक्तत्वाच्च । स्थानसम्बन्धो न परिभाषालभ्य इत्यर्थस्य "षष्ठी स्थाने" (१-१-४९) इति सूत्रे भाष्ये स्पष्टमुक्तत्वेन त्वदुक्तज्ञापकासम्भवाच्च । तत्र स्थाने ग्रहणन्तु स्पष्टार्थमेव ।

किञ्च विधौ परिभाषेतिप्रवाद "इको गुणवृद्धी" ( १-१-३ ) "अचश्च" ( १-२-२८ ) इत्यनयोर्विधीयते इत्यध्याहारमूलकोऽन्यत्र तु नास्याः फल-

भैरवी ।

योऽस्तस्येत्वमित्यर्थः । स्थाने पदभावेऽपि "षष्ठीस्थान" इतिपरिभाषोपस्थित्या स्यादित्यभिमानः । इमां परिभाषां खण्डयति—*तन्नेत्यादिना* । *उदात्तस्वरितयोरिति* । अत्रानूद्यमानो अनुदात्तस्तद्विशेषणं यण् तस्य विशेषणमुदात्तेति तन्नियामकत्वं "षष्ठीस्थान" इतिपरिभाषायाः स्फुटमेवेति भावः । *भाष्योक्तेति* । तत्र हि—ष्यङन्तपूर्वपदावयवस्य यणः सम्प्रसारणमित्यर्थे वाराहीपुत्रे आद्यवकारस्य सम्प्रसारणं प्राप्नोतीतिशङ्कायां अनन्त्यविकार इति परिभाषाया निराकरणं कृत्वा कान्येतस्याः परिभाषायाः प्रयोजनानीति प्रश्ने ? "अल्लोपोऽनः" इत्यनेनाल्लोपोऽनस्तक्ष्णेत्यत्राद्याकारस्य न भवतीत्युक्त्वा तत्प्रयोजनान्यथासिद्धिनिरूपणावसरेऽङ्गभसंज्ञया यचीत्यस्याक्षिप्तस्यान्विशेषणत्वमुक्तम् । अत्र अनूद्यमानावाकारविशेषणान्विशेषणत्वमचीत्यस्य स्पष्टमेव । एवम् "अचोरहाभ्याम्" इत्यत्रापि व्यभिचारो द्रष्टव्यः । आदिपदग्राह्यमप्येतदस्तु ।

ननु "संख्याव्ययादेः" इतिसूत्रे आदिग्रहणादेषा अनित्या, तद्धि "बहुव्रीहेरूधस" इतिसूत्रादनुवर्त्तमानस्य बहुव्रीहेरित्यस्य विशेषणम् संख्याव्ययादित्युच्यमान ऊधसो विशेषणं स्यात् "तस्मादित्युत्तरस्य" इतिपरिभाषया अव्यवहितात्सङ्ख्याव्ययात्परस्यैवोधसो ग्रहणं स्यात् । एवं च द्विपरमोध्नीत्यत्र न स्यादित्येवं क्रियते, यदि त्वियन्नित्या तदा अनूद्यमानबहुव्रीहिविशेषणोधस्विशेषणस्य संख्याव्ययस्य नियामिका तस्मादितिपरिभाषा न भविष्यतीतिदिग्वाचकपरशब्दाध्याहारेण संख्यावाचकद्विशब्दाद्व्यवहितादपि परस्योधस्शब्दस्य ग्रहणेन द्विपरमोध्नीत्यस्य सिद्धावादिग्रहणं व्यर्थमेवेति "उदात्तस्वरितयोः" इत्यादौ न दोष इत्यत आह—*भाष्यानुक्तेत्यादि* । *स्थानसम्बन्धः* । स्थानपदार्थनिरूपितसम्बन्धः । *न परिभाषालभ्यः* । न "षष्ठीस्थान" इतिपरिभाषालभ्यः । किन्तु अन्तरङ्गत्वादेव लभ्य इति हि तत्र सूत्रे भाष्यकृता प्रत्याख्यानसमये उक्तम् ।

ननु यदीयं परिभाषा स्थानेग्रहणेन न ज्ञाप्यते तदा तस्य वैयर्थ्यं स्यादत आह—*तत्र स्थान इति* । ननु यदि विधावितिपरिभाषा नाङ्गीक्रियते तदा "वृद्धिर्यस्य" इत्यादावुक्तदोष एवेत्यत आह—*किञ्च विधाविति* । *अध्याहारमूलक इति* । तथा च गुणवृद्धिशब्दाभ्यां गुणवृद्धी यत्र विधीयेते तत्रेक इत्युपतिष्ठत इतिसूत्रस्यार्थ इति "वृद्धिर्यस्य" इत्यत्र वृद्धेर्विधानाभावान्नेकोगुणवृद्धीत्यस्योपस्थितिरिति अध्याहारेण तस्य व्याख्यानमित्यत्र मूलं च "मालादीनां च" इति सूत्रमित्यन्यत्र स्पष्टम् ।

किञ्च स्थानेग्रहणस्य ज्ञापकत्वमत्र न समञ्जसम्, गुणशब्दार्थस्य जातिशब्दार्थविशेषणत्वमन्यत्र क्लृप्तमित्यत्रापि यकपूर्वत्वमातो विशेषणं तच्चात इत्यस्य साक्षादनूद्यमानविशेषणत्व-

तत्त्वप्रकाशिका ।

पोऽनः" इत्यादौ एतदुपस्थितौ उद्देश्योद्देश्यतावच्छेदकोभयघटिता परम्परा प्रयोजिका भवतीति अनया परिभाषया तदनुपस्थितौ "ष्यङः सम्प्रसारम्" इति सूत्रस्थभाष्यविरोध

मित्यन्यत्र विस्तरः ॥ १०२ ॥

ननु नमस्करोति देवान्नमस्यति देवानित्यादौ "नमः स्वस्ति" (२-३-१६) इति चतुर्थी दुर्वारेत्यत आह—

उपपदविभक्तेः कारकविभक्तिर्बलीयसी ॥ १०३ ॥

कारकविभक्तित्वं च क्रियाजनकार्थकविभक्तित्वं तच्च प्रथमाया अप्यस्तीति सापि कारकविभक्तिरिति "सहयुक्त" ( २-३-१९ ) इत्यादिसूत्रेषु भाष्ये ध्वनितम्। इयं च वाचनिक्येव। अत एव "यस्य च भावेन" ( २-३-३७ ) इति सप्तम्यपेक्षयाधिकरणसप्तम्या बलवत्त्वमनेन न्यायेन "तत्र च दीयते" ( ५-१-९६ ) इति सूत्रे भाष्ये ध्वनितं कैयटेन स्पष्टमुक्तम्।

भैरवी।

मेव न त्वनूद्यमानविशेषणविशेषणत्वमित्यपि बोध्यम् ॥ १०२ ॥

"षष्ठीस्थान" इतिसूत्रघटकषष्ठीपदार्थस्य विभक्तित्वात् तत् प्रसङ्गेनाह—*ननु नमस्करोतीति*। *उपपदविभक्तेरित्यादि*। उपपदविभक्तित्वं पदयोगनिमित्तकविभक्तित्वम्। कारकविभक्तिशब्दार्थमाह—*कारकेत्यादिना*। कारकपदस्य क्रियाजनकार्थतया तदधिकारे तासां विधानात्। *भाष्ये ध्वनितमिति*। तत्र हि—अप्रधानग्रहणं शक्यमकर्तुम्, न चैवं पितुरपि पुत्रेण सहागतः पितेत्यत्र तृतीयापत्तिः, "उपपदविभक्तेः कारकविभक्तिर्बलीयसी" इति प्रथमा भविष्यतीत्युक्तम्, एवं न्यायप्रदर्शनेन प्रथमायाः साधने तस्याः क्रियाजनकार्थकविभक्तित्वं विना अनुपपन्नमिति सा कारकविभक्तिरिति ध्वनितम्। इयं परिभाषोपपदविभक्त्यपेक्षया कारकविभक्तेरन्तरङ्गत्वमिति न्यायमूलिकेतिप्राचीनमतं दूषयितुमाह—इयञ्चेति*।

यत्तु कैयटानुयायिनः कारकविभक्तित्वं क्रियान्तरानपेक्षक्रियान्वय्यर्थप्रयोज्यविभक्तित्वम्। अत एवैषा अन्तरङ्गन्यायमूलिका कारकार्थकपदस्य क्रियायामन्वयं विना अन्वयबोधजनकत्वं नास्तीतिकारकविभक्तेरन्तरङ्गत्वमुपपदस्य तु यत्रान्वयो विवक्षितस्तत्र नादौ साक्षादन्वयः, किन्तु क्रियाद्वारक एवेति तद्योगनिमित्ता विभक्तिर्बहिरङ्गा इति तन्मतं खण्डयति-*अत एवेत्यादिना*। *अत एव*। अस्या वाचनिकत्वादेव। बलवत्त्वमित्यस्य ध्वनितमित्यत्र स्पष्टमुक्तमित्यत्र च अन्वयः। *"तत्र च दीयत" इति*। तत्र च दीयत इत्यस्य कार्यमित्यस्य च प्रयोजननिरूपणावसरे मास इति न भावलक्षणसप्तमी किं तर्हि औपश्लेषिकेऽधिकरणे इत्युक्तम्। एतेन कारकविभक्तेर्बलवत्त्वं ध्वनितमित्यर्थः।

किञ्च क्रियान्तरानपक्षे क्रियान्वय्यर्थप्रयोज्यत्वमित्यस्य क्रियान्तरानन्वयिनी या क्रिया तदन्वयी योऽर्थस्तत्प्रयोज्यत्वमित्यर्थोऽभिमतोऽथवा क्रियान्तरान्वयाप्रयोज्यं यत् क्रियान्वयित्वं तत् प्रयोज्यत्वमिति उभयमप्यसङ्गतम्। ओदनं भुक्त्वा व्रजतीत्यत्राद्ये ओदनमिति द्वितीयायाः कारकविभक्तित्वं न स्यात्। भुजधात्वर्थक्रियायाः समानकर्तृकत्वस्योत्तरकालिकत्वोभयसम्बन्धेन व्रजनक्रियायामन्वयात्। नान्त्यः गोषु दुह्यमानासु गत इत्यादौ गोष्वि-

तत्त्वप्रकाशिका।

इति भावः ॥ १०२ ॥

*चतुर्थी स्यादिति*। नच नमस्करोति देवानित्यादौ कृञ्धात्वर्थफलेऽन्वयविवक्षायां द्वितीयाप्राप्तिः, नमःपदार्थेऽन्वयविवक्षायां चतुर्थी, निपातानां द्योतकत्वेन द्योतकवाचकसमभिव्याहारे विनिगमनाविरहेण विषयताया उभयप्रयोज्यत्वोकारेण "नमः स्वस्ति" इत्यस्य नमःप्रयोज्यविषयतानिरूपितविषयताप्रयोजकत्वेन तात्पर्यविषयाच्चतुर्थीत्यर्थकरणेन नमस्करोति देवानित्यादौ कृञ्धात्वर्थफलेऽन्वयविवक्षायां द्वितीयाचतुर्थ्योर्युगपत्प्राप्तेस्सत्त्वेनावतरणसङ्गतेः।

एतेन क्रियान्वयित्वं कारकत्वमित्यपास्तम् । "यस्य च भावेन" इति सप्तम्या अपि क्रियान्वयित्वात् । ये तु प्रधानीभूतक्रियासम्बन्धनिमित्तकार्य्यत्वेन कारकविभक्तीनां बलवत्त्वं वदन्ति, तेषामुभयोरपि क्रियासम्बन्धनिमित्तकत्वेन तदसङ्गतिः स्पष्टैव । एतेन "नमो वरिवः" (३-१-१९) इतिसूत्रे नमस्यति देवानित्यादौ चतुर्थीवारणाय भाष्य उपन्यासस्यासङ्गतिश्च ।

एतेन क्रियाकारकसम्बन्धोऽन्तरङ्ग इति तन्निमित्ता विभक्तिरन्तरङ्गोपपदार्थेन तु यत्किञ्चित्क्रियाकारकभावमूलकः सम्बन्ध इति तन्निमित्ता बहिरङ्गेत्यपास्तम् । नमस्यतीत्यत्र नमःपदार्थेऽपि क्रियाकारकभावेनैवान्वयात् । अत्र च नमःपदार्थस्यापि क्रियात्वं मुण्डयतौ मुण्डस्येव । "सहयुक्ते"

भैरवी ।

तिसप्तम्याः कारकविभक्तित्वापत्तेः । गोपदार्थे यद्दुहधात्वर्थफलाश्रयत्वं तत्र क्रियान्तरान्वयित्वस्याप्रयोजकत्वात् नमस्करोति देवान्नमस्यति देवानित्यत्रानेन न्यायेन देवपदाच्चतुर्थीवारणपरभाष्यविरोधापत्तेश्च। अत्राद्ये नमः पदस्य द्योतकतया कृधोतोरेव स्वनिष्ठापकृष्टत्वप्रकारज्ञानानुकूलव्यापारोऽर्थ इति कृधात्वार्थान्वयित्वेनैव चतुर्थीप्राप्तिर्वाच्या, द्वितीये नमस्यधात्वर्थेऽन्वयविवक्षयैव तत्प्राप्तिरित्युभयत्र क्रियान्तरान्वयप्रयोज्यक्रियान्वयित्वं न चतुर्थीप्राप्तिप्रयोजकमिति चतुर्थ्या दुर्बलत्वस्य भवदुक्तस्याभावात् ।

प्राचामुक्तिं खण्डयति—*एतेनेति* । एतेन वक्ष्यमाणप्रकारेण । तं प्रकारमेवाह—*यस्य च भावेनेतीति* । प्राचीनान्तरोक्तं दूषयति—*येत्विति* । *उभयोरपि* । गोपु दुह्यमानासु गत इत्यादौ सत्सप्तम्यधिकरणसप्तम्योः । *तदसङ्गतिः* । "तत्र च दीयत" इति सूत्रस्य भाष्यासङ्गतिः । *एतेन* । "नमोवरिव" इति सूत्रस्थभाष्यविरोधरूपदोषेण । दोषान्तरमाह—*नम इत्यादिना* । *असङ्गतिश्चेति* । नमस्यपदार्थे देवपदार्थस्य क्रियाकारकभावसम्बन्धेनान्वयादेवोभयोः प्राप्तिरितिचतुर्थीद्वितीययोः समत्वादस्य न्यायस्य भवदुक्तरीत्या प्रवृत्तिर्न स्यादिति भाष्यासङ्गतिरिति भावः । एतेन यत्र एकस्या एवोपपदविभक्तित्वं कारकविभक्तित्वञ्च सम्भवति तत्रास्य न्यायस्य प्रवृत्तिरिति यत् कस्यचित्कथनं तदपि निरस्तम् । "नमोवरिव" इतिसूत्रस्थोक्तभाष्यविरोधात् "सहयुक्तेऽप्रधाव" इतिसूत्रस्थाप्रधानग्रहणप्रत्याख्यानपरभाष्यविरोधापत्तेश्च । कैयटोक्तिं खण्डयति—*एतेनेति* । *अन्तरङ्ग इति* । एतादृशसम्बन्धं विना पदार्थान्तरस्यान्वयबोधो न भवतीत्यतोऽन्तरङ्गत्वमिति भावः । *तन्निमित्तेति* । सः क्रियाकारकभावसम्बन्धो निमित्तं यस्या सा अन्तरङ्गा यत्किञ्चित् क्रियाकारकभावमूलकसम्बन्ध इत्यनेन पूर्वापेक्षया वैलक्षण्यं ध्वनितम्, तत्र क्रियाकारकभाव एव सम्बन्धो न तु तन्मूलक इति यथा राज्ञः पुरुष इत्यत्र पुरुषनिष्ठस्य राजपदार्थनिरूपितस्वस्वामिभावात्मकसम्बन्धस्य क्रयणपोषणादिक्रियाकर्मभावो निमित्तं तद्वत । *अन्वयादिति* । देवादेरित्यादिः ।

ननु नमः पदस्य नामत्वेन तदर्थस्याक्रियात्वात् तत्र क्रियाकारकभावसम्बन्धेन अन्वय इत्यनुपपन्नमत आह—*अत्रचेति* । नमस्यतीत्यत्रेत्यर्थः । *मुण्डस्येवेति* । यथा तत्र णिजन्तस्य धातुत्वात् तद्घटकमुण्डशब्दार्थस्य क्रियात्वं तथा नमस्यतीत्यत्र क्यजन्तस्य धातुत्वात् तद्घटकनमः पदार्थस्य क्रियात्वमिति भावः ।

यत्तु "नमः स्वस्ति" इति सूत्रे स्वस्तिसाहचर्य्येण स्वरादिपठितनमः पदस्य योगे चतुर्थी नमस्यतीत्यत्र तु नमः शब्दस्य गतित्वमूर्यातिस्वादित्यस्य द्योतकत्वमेव क्यप्रत्ययमात्रस्य कृञ्गतार्थवृत्तित्वमिति कृञर्थनिरूपितकर्म्मत्वादेव देवपदाद्द्वितीयायाः सिद्धौ नात्र "उपप-

( २-३-१९ ) इत्यादौ च प्रधाने प्रथमासाधनार्थमियं भाष्य उपन्यस्तेत्यन्यत्र विस्तरः ॥ १०३ ॥

नन्वदमुयङ्ङित्यादौ पूर्वस्यापि मुत्वापत्तिरत आह—

अनन्त्यविकारेऽन्त्यसदेशस्य ॥ १०४ ॥

अन्त्यसदेशानन्त्यसदेशयोरेकप्रयोगे युगपत् प्राप्तावन्त्यसदेशस्यैवेति तदर्थः। अन्यथा धात्वादेर्नत्व सत्वे नेता सोतेत्यादावेव स्यातां न तु नमति सिञ्चतीत्यादौ। अनन्त्यविकार इति च लिङ्गम्। अन्त्येन समानो देशो

भैरवी ।

दविभक्तेः" इतिन्याययोग इति तत्र, नमस्करोति देवानित्यत्र मुनित्रयं नमस्कृत्येत्यत्र च तथा यद्यपि वक्तुं शक्यं तथापि नमस्यतीत्यत्र प्रत्ययमात्रस्य वाचकत्वं भाष्यकारासम्मतत्वाद्वक्तुमशक्यमित्येतदर्थमुपपदविभक्तेरित्यस्यावश्यकत्वात्।

यदि अत्र नमः पदस्य वाचकता न स्यात्तदा "नमोवरिव" इतिसूत्रभाष्ये चतुर्थीवारणायैतस्याः परिभाषायाः प्रवृत्त्युपपादनं विरुध्येतेति स्पष्टमेव। यत्र तु विष्णवे नमस्कुर्यादित्यादौ चतुर्थी दृश्यते तत्र "क्रियार्थोपपदस्य" इतिसूत्रेण तस्योपपत्तिः कार्येति दिक् ॥१०३॥

पूर्वपरिभाषायां वाचनिकत्वमुक्तं तत्साजात्यादन्यामपि वाचनिकीं परिभाषां वक्तुमुपक्रमते-*नन्वदमुयङ्ङित्यादाविति। अनन्त्यविकार इत्यादि*। अनन्त्यविकार इत्यस्यानन्त्यस्य विकारो येन शास्त्रेण तत्रेत्यर्थः। *अन्त्यसदेशस्य*। अन्त्येन समानो देशो यस्य तस्येत्यर्थः। सर्वं वाक्यमसति बाधके साधारणमितिन्यायेन लभ्यमर्थमाह—*अन्त्यसदेशस्यैवेत्यर्थ इति। तदर्थः*। वचनघटकस्यान्त्यसदेशस्येत्यस्यार्थः। अन्यथा अन्त्यसदेशानन्त्यसदेशयोर्युगपत् प्राप्तावित्यस्यानङ्गीकारे।

ननु अन्त्यसदेशस्येत्येवास्तु तावतैवोक्तार्थलाभात् अनन्त्यविकार इत्यस्यैव वैयर्थ्यमत आह-*अनन्त्यविकार इतीति। "अन्त्यसदेश" इत्यत्र भाष्यकारीयवचनप्रामाण्यात् समान-

तत्त्वप्रकाशिका ।

*अन्यत्र विस्तर इति*। परे तु "उपपदविभक्तेः कारकविभक्तिर्बलीयसी" इति समानानुपूर्वीकम्परिभाषाद्वयं, तत्र "तत्र च दीयत" इति कैयटोक्तपरिभाषाया कारकविभक्तित्वं लोकोक्तमेव, तत्र बीजन्तु "तस्मिन्"इतिपरिभाषोद्देश्यान्यथानुपपत्त्या यत्र कारकविभक्त्यर्थे उपपदविभक्त्यर्थे च सन्देहः तत्रासति प्रमाणान्तरे कारकविभक्त्यर्थे एव तात्पर्यमवधारणीयमिति। तथाच--"व्याख्यानत" इति परिभाषाशेषम्। "सहयुक्त" इतिभाष्योक्तपरिभाषा तु प्रधानन्यायमूला, तथाच तत्र कारकविभक्तित्वं प्रधानीभूतार्थनिमित्तकविभक्तित्वम्।

अत एव अप्रधानप्रत्याख्यानं "सहयुक्त" इतिसूत्रस्थं सङ्गच्छते। अन्यथा पुत्रेण सहागतस्य पितुर्धनमित्यादौ षष्ठ्याः मूलोक्तकारकविभक्तित्वाभावेन पितृपदोत्तरं तृतीयावारणाय अप्रधानग्रहणस्यावश्यकत्वेन तदसङ्गतिः स्पष्टैव।

अत एव राज्ञः पुरुष इत्यादौ प्रतियोगिवाचकादेव षष्ठी नानुयोगिवाचकात्। अनेन न्यायेन अनुयोगिवाचकाद्विभक्त्यन्तरस्य सिद्धत्वात्। नच नमस्यति देवान् नमस्करोतिदेवानित्यादौ धात्वर्थफल एवान्वयविवक्षायां द्वितीयाचतुर्थ्योः प्राप्त्या भाष्योक्तमेतत्परिभाषाफलत्वेनोपन्यसनमसङ्गतं स्यादिति वाच्यम्। अणुरपि विशेषोऽध्यवसायकर इतिन्यायेन कर्मसंज्ञायां

कर्तृपदसत्त्वेन द्वितीयायां कर्तृनिष्ठव्यापारस्यापि प्रयोजकत्वेन प्रधानीभूतार्थनिमित्तकविभक्तित्वरूपकारकविभक्तित्वस्य द्वितीयायामेव सत्त्वात् इत्याहुः ॥ १०३ ॥

*अनन्त्यविकारइति च लिङ्गम्*। अन्त्यं विकारयतीत्यन्त्यविकारः, न अन्त्यविकारः

यस्य सोऽन्त्यसदेशः। तत्त्वं च अन्त्यवर्णतद्वर्णयोरितराव्यवधानेन बोध्यम्। अत एव विद्ध इत्याद्यर्थं "न सम्प्रसारणे" (६-४-१३४) इति चरिता-

भैरवी।

शब्दस्य सादेशो बहुव्रीहिश्च द्रष्टव्यः।

ननु अत्रदेशपदेनाकाशस्य प्रयोगस्य कालस्य वा ग्रहणं कर्त्तव्यम्। सर्वथा पक्षद्वये स्थूल-कालमादाय तृतीयेऽप्यदमुयङित्यत्र दोषस्तदवस्थ एवेत्यत आह—*तत्त्वञ्चेति। अन्त्यसदेश-त्वञ्चेत्यर्थः। *तद्वर्णेः*। तत्तच्छास्त्रविधेयकार्य्यप्रवृत्तियोग्यवर्णः। इतरेण अव्यवधानमित्यत्र इतरपदं तत्तच्छास्त्रविधेयकार्य्यप्रवृत्तियोग्यताक्रान्तपरम्। एवञ्च अत्र अन्यपदश्रवणेन यावता कालेन उभयोरव्यवधानेनोच्चारणं सम्भवति तावान् कालो देशपदेन विवक्षितः इतरेण व्य-वधानयोग्यकालव्यावृत्तये इतराव्यवधानेत्यस्य कथनम्। *अत एव*। इतराव्यवधानेनेत्यस्य उपादानादेव तदनिवेशे सर्वत्रैवेतत्परिभाषाप्रवृत्तौ विद्ध इत्यादावनयैव परिभाषया आद्यवर्ण-व्यावृत्तौ सिद्धायां "न सम्प्रसारणे सम्प्रसारणम्" इतिसूत्रवैयर्थ्यापत्तिः। तन्निवेशे तु विद्ध इत्यत्र अन्त्यवर्णो धकारस्तद्वर्णो यकारस्तयोः इतरेणाकारेणव्यवधानादस्याः परिभाषाया अप्रवृत्त्या प्रथमस्य वकारस्य सम्प्रसारणव्यावृत्तये "न सम्प्रसारणे" इतिसूत्रं सार्थकम्। एवञ्चेतराव्यवधाननिवेशे "न सम्प्रसारण" इतिसूत्रमेव ज्ञापकमितिबोध्यम्।

तथा च-अन्त्यवर्णतद्वर्णयोरितरेणाव्यवधानमनन्त्यविकारश्च यत्रास्ति तत्र अन्त्यसदेशस्ये-त्युपतिष्ठत इति सिद्धम्। न चादद्रि अव इति स्थितेऽन्त्यवर्णेकाररेफयोरितराव्यवधाने ऽप्यन्त्येकारदकारयो रेफेण व्यवधानाददद्र्यङित्येव स्यादिति वाच्यम्, इतरपदार्थस्य न च्छा-स्त्रविधेयकार्य्योद्देश्यत्वानाक्रान्तत्वरूपेण निवेशाद्रेफस्यापि तच्छास्त्रविधेयकार्य्योद्देश्यतया तादृशेतराव्यवधानसत्त्वेनादोषात्। चलीक्लृप्यत इत्यत्र तु अन्त्यवर्णः पकारस्तद्वर्णोरेफो

तत्त्वप्रकाशिका।

तस्मिन् अनन्त्यविकारे अन्त्यवृतिविकाराप्रयोजके इत्यर्थः। यत्किञ्चित्समुदायविशिष्टे शास्त्रे अन्त्यसदेशस्येत्युपतिष्ठत इति यावत्। वैः स्वान्त्यवृत्तिविकाराप्रयोजकत्व-स्वान्त्य-सदेशानन्त्यसदेशोभयवृत्तिविकारप्रयोजकत्व स्वनिरूपितावयवत्वावच्छिन्नोद्देश्यताकत्व-स्वनिरूपितावयवत्वावच्छिन्नोद्देश्यताकत्व एतत्त्रितयसम्बन्धेन, अत्र प्रथमसम्बन्धदानेन "सुपो धातु" इत्यादौ नास्या उपस्थितिः, द्वितीयसम्बन्धदानेन "णो न" इत्यादौ नास्या उपस्थितिः, तृतीयसम्बन्धदानेन नमनंनेता इत्येतद्घटकनमनने इति समुदायमादाय "णोन" इत्यादावेव नास्या उपस्थितिः, अदद्रिइत्येतत्समुदायमादाय "अदसोसेः" इत्यत्र वैशिष्ट्यस्य सत्वात्। तत्रान्त्यसदेशस्येत्युपस्थित्या अदमुयङित्यादौ नदोषः। नच पूर्वाङि शालाङि अग इत्येतत्समुदायवैशिष्ट्यस्य निरुक्तसम्बन्धत्रयेण "सुपो धातु" इत्यादौ सत्त्वेन तत्रान्त्यसदेश-स्येत्यस्योपस्थितौ अनन्त्यसुपो लुगनापत्तिरिति वाच्यम्। यत्किञ्चिद्रूपविशिष्टे शास्त्रे अन्त्यसदेशस्येत्युपतिष्ठत इति स्वीकारेणादोषात्। वैः स्वावच्छिन्ननिरूपितान्त्यत्ववद्वृत्ति-विकाराप्रयोजकत्व स्वावच्छिन्नान्त्यसदेशानन्त्यसदेशोभयवृत्तिविकारप्रयोजकत्व स्वावच्छि-न्ननिरूपितावयवत्वावच्छिन्नोद्देश्यताकत्व एतत्त्रितयसम्बन्धेन, रूपञ्च अदःशब्दत्वधा-तुत्वप्रातिपदिकत्वादिकं ग्राह्यम्, तथा च-स्वावच्छिन्नं यद्राजन् ङस् पुरुष सु इति तदन्तवृत्ति-विकारप्रयोजकत्वमेव "सुपोधातु" इत्यस्येति न दोषः। नच अदःशब्दत्वावच्छिन्नं यद्-दावित्यादि तदन्तवृत्तिविकारप्रयोजकत्वमेव "अदसोसेः" इत्यादेरिति अदमुयङित्यस्या-सिद्धिरिति वाच्यम्, दस्य म इतिशास्त्रे अदः शब्दत्वरूपवैशिष्ट्यसत्त्वेन तत्रान्त्यसदेशस्यो-पस्थितौ अनन्त्यसदेशदकारस्य मत्वाप्रवृत्तौ सन्नियोगशिष्टन्यायेनोत्वस्याप्यप्रवृत्तेरिति दिक्।

*इतराव्यवधानेनेति*। नच हंसशिरांसीत्यादावन्त्यतद्वर्णयोर्नकारव्यवधानसत्वादिदम-

र्थम् । "अल्लोपोऽनः" ( ६-४-१३४ ) इत्यादेरनस्तक्ष्णेत्यादावाद्याकारादावप्रवृत्तिरप्यस्याः फलम्, यजादिस्वादिपरान्नन्ताङ्गस्याकारस्य लोप इत्यर्थस्यैवाङ्गांशे प्रत्ययस्योत्थिताकाङ्क्षत्वौचित्यादङ्गावयवयजादिस्वादिपरस्यान इत्यादिक्रमेणानेकत्रानेकक्लिष्टकल्पनापेक्षयास्य उचित्वात् । न चैषा "ष्यङः सम्प्रसारणम्" ( ६-१-१३ ) इतिसूत्रे भाष्ये प्रत्याख्यातेति भ्रमितव्यम् । वार्तिकोक्तफलानामनेकक्लिष्टकल्पनाभिरन्यथासिद्धिं प्रदर्श्यापि

भैरवी ।

ऋकारावयवस्तयोर्मध्येऽज्भागस्य सत्त्वेनेतरेण व्यवधानस्य सत्त्वमित्यस्याः परिभाषाया अप्रवृत्त्योभयो रेफयोर्लत्वस्य सिद्धिः ।

एवञ्च तत्तच्छास्त्रविधेयं यद्यत्कार्य्यं तत्तन्निरूपितस्थानित्वपर्य्याप्त्यधिकरणं यद्यत्तद्व्यक्तितावच्छिन्नप्रतियोगिताकभेदवत्व्यवहितं यद्यत्तद्भिन्नान्त्यसदेशस्य कार्य्यं भवतीत्यर्थस्य सत्वाददमुयङ्ङित्यस्य चलीक्लृप्यत इत्यस्य च सिद्धिः ।

न चानस्तक्ष्णेत्यत्राद्याकारस्य लोपनिवृत्तिः परिभाषाफलत्वेनोक्ता सा नोपपद्यते । अधिकस्य उभयातिरिक्तस्य कालस्य व्यवधायकस्य सत्त्वादिति वाच्यम् । अर्द्धमात्राकालस्य सर्वत्रैव व्यवधायकतयाऽसम्भवापत्त्या अतिरिक्तस्य वर्णस्यैव ग्रहीतुमुचितत्वात् ।

न चैवमपि हंसशिरांसीत्यत्राद्यस्य हकाराकारस्य दीर्घव्यावृत्तिरेतत्परिभाषायाः प्रयोजनं भाष्य उक्तम् । तत्र अन्त्यवर्णः सकारस्तद्वर्णो हकाराकारस्ताभ्यां भिन्नेन नकारेण व्यवधानात् परिभाषाप्रवृत्तिर्न स्यादिति वाच्यम्, तद्वर्णविशेषणभिन्नत्वस्यापि निवेशनीयत्वात् "सान्तमहत" इतिसूत्रस्य दीर्घविधायकतया "अचश्च" इतिपरिभाषया "अच" इत्यस्योपस्थितौ उपधापदस्य पूर्वत्वावच्छिन्ने लाक्षणिकतया सान्तसंयोगावयवनकारपूर्वस्याचो दीर्घ इत्यर्थे नकारस्य तद्वर्णविशेषणत्वमस्त्येवेति दोषाभावात् ।

न चैवं सति "कृप उ रः ल" इति व्याख्यानेन कृपेर्ऋकारस्य रेफविशेषणतया अन्त्यवर्णतद्वर्णतद्विशेषभिन्नेन व्यवधानाभावेन परिभाषायाः प्रवृत्तावुभयोर्लत्वं न स्यादिति वाच्यम्, ऋकारस्य विशेषणत्वेऽपि ऋकारावयवाज्भागस्य विशेषणत्वाभावेनोक्तत्रितयभिन्नेन तेन व्यवधानस्य सत्वात् ।

वस्तुतस्तु "न सम्प्रसारणे सम्प्रसारणम्" इति ज्ञापकादन्त्यवर्णतद्वर्णेतरो योऽच्त्वपर्य्याप्त्यधिकरणविषयकप्रतीत्यविषयकस्तद्व्यवधानाभावो विवक्षितः । अस्ति च अच्त्वपर्य्याप्त्यधिकरणऋकारविषयकप्रतीत्यविषयत्वमृकारावयवाज्भागेऽपीति तेन व्यवधानात् परिभाषाया अप्रवृत्तावुभयत्र लत्वस्य सिद्धिः । एवञ्चेतरपदार्थे तत्तच्छास्त्रविधेयकार्य्योद्देश्यत्वानाक्रान्तत्वं न निवेशनीयमित्यपि लाघवम् ।

परिभाषाया प्रयोजनान्याह—*"अल्लोपो न" इत्यादेरिति* । *अस्याः* । उक्तपरिभाषायाः । *प्रत्याख्यातेति* । उक्तरीत्या प्रयोजनान्यथासिद्धिप्रदर्शनेनेत्यादिः । *वार्त्तिकोक्तेति* । "न सम्प्रसारणे सम्प्रसारणम्" इतिसूत्रे विद्ध इत्याद्यर्थं न वक्तव्यमिति, तथा "सान्तमहत" इति दीर्घत्वं हंसशिरांसीत्यत्राकारस्य न भवतीति, तथा अनस्तक्ष्णेत्यत्राद्याकारस्य "अल्लोपोऽनः" इति लोपो न, मृजेर्वृद्धिर्न्यमार्ट् इत्यत्राटो न, "वसोः सम्प्रसारणम्" इति विदुष इत्यत्र विदेर्वकारस्य नेतरेषाम् । *अन्यथासिद्धिमिति* । "न सम्प्रसारणे सम्प्र-

तत्त्वप्रकाशिका ।

सङ्गतमिति वाच्यम् । अन्त्यवर्णविशिष्टत्वमन्त्यसदेशत्वमिति परिष्कारेणादोषात् । वैः स्वावधिकपूर्वत्वस्वावधिकपूर्वाच्कर्तृकव्यवधानशून्यत्व एतदुभयसम्बन्धेन ।

वस्तुतः सर्वमिदं चिन्त्यम्, "ष्यङः संप्रसारणम्" इतिसूत्रस्थभाष्यविरोधात्, तत्र हि

यान्येतस्याः परिभाषायाः प्रयोजनानि तदर्थमेषा कर्त्तव्या प्रतिविधेयं दोषे·

भैरवी ।

सारणम्” इतिसूत्रमुक्तरीत्याकार्य्यमेव । “सान्तमहत” इत्यत्रापि न दोषः सर्वनामस्थाने इत्यस्य सान्तसंयोगविशेषणत्वात् । अनस्तक्ष्णेत्यत्रापि न दोषः असर्वनामस्थानयजादिस्वादिप्रत्ययस्यानुविशेषणत्वात् न्यमार्डित्यत्राटोऽपि वृद्धिर्मृजेरिति न भविष्यति “इको गुणवृद्धी” इति परिभाषयेक इत्यस्य तत्रोपस्थितिस्वीकारात् विदुष इत्यत्रापि निर्दिश्यमानपरिभाषया दोषाभावसम्भवात् । एवं प्रकारेण अन्यथासिद्धिप्रदर्शने क्लेशश्च प्रत्ययस्याङ्गाकाङ्क्षोत्थिता अनार्षत्वे तु तस्य निराकाङ्क्षतयोपस्थाप्याकाङ्क्षया सम्बन्धकल्पनमेवेति । न च निमित्तत्वेन आश्रितस्य प्रत्ययस्याङ्गविशेषणत्वञ्चेत् “सान्तमहत” इतिसूत्रस्य सर्वनामस्थानपरं यदङ्गं तस्यावयवो यः सान्तसंयोगावयवनकारात्पूर्वोऽच् तस्य दीर्घ इत्यर्थः स्यात्तथा च हंस इत्यत्रापि दीर्घत्वं प्राप्नोतीति वाच्यम् । संयोगग्रहणस्यावृत्त्या प्रत्यासत्याश्रयणेन च यत्सान्तसंयोगान्तमङ्गं तस्य संयोगस्यावयवो यो नकारस्ततः पूर्वस्याच इत्यर्थाश्रयणेनादोषात् । आवृत्तौ मानञ्च सर्वनामस्थानस्य सान्तसंयोगविशेषणत्वपक्षे यथा हंस इत्यत्र दीर्घाप्राप्तिस्तथास्मिन्नपि पक्षे दीर्घाप्राप्तेरकथनमेव यानोत्यत्र बहुवचनमुक्तस्थलानां बहुत्वात् । प्रदर्श्यापीत्यपिना अन्यथासिद्धिप्रदर्शनमनास्थयेति सूचितम् । अत एव यानीत्याद्युक्तिः सङ्गच्छते । *प्रयोजनानीति* । यथा अदमुयङ् मिमार्जिषति प्रत्यक्चेति त्यदादीनि उत्थितकाङ्क्षतया सम्बन्धकल्पने तु “सान्तमहत” “अल्लोपोनः” “विभाषा ङिश्योः” इत्येतद्विषयेऽपि प्रयोजनम् । *दोषेष्विति* । दोषाश्च भाष्ये आदिविधित्यदादिविधिसंयोगादिलोपकुत्वभष्भावषत्वणत्वेषु अतिप्रसङ्ग इत्यनेन दर्शिताः । एतेषु कुत्रचिद्दोषो यथाश्रुतार्थे भवति यथा आदिविधिः “धात्वादेः षः स” “णोन” इति इहैव स्यात् नेता सोता नमति सिञ्चतीत्यत्र न स्यादिति एष दोषस्त्वन्त्यसदेशानन्त्यसदेशयोर्युगपत्प्राप्तावित्यनेन उद्धृत एव, त्यदादिविधिः “तदोः सः सौ” इतिसत्त्वम् । तच्च त्यदाद्यत्वे कृते स इत्यत्र स्यात् । स्य इत्यत्र न स्यादिति, अस्य दोषस्य चोक्तरीत्या अव्यवधानविवक्षयापि परिहारः, सम्भवत्येव, संयोगादिलोपो मङ्क्ता इत्यत्र स्यात मङ्क्तुमित्यत्र न स्यादिति पदान्त्यसदेशत्वाभावात् कुत्वमिहैव स्यात पक्ता पक्तव्यमित्यत्र न स्यात्, षत्वमिहैव स्याद्द्रष्टा द्रष्टव्यमित्यत्र न स्यात्, णत्वमिहैव स्यात् माषवापेण माषवापीणामित्यत्र न स्यादिति, एतेषामपि यथाश्रुत एव सम्भवः यदि पूर्वोक्तयुगपत्प्राप्तिविषयकत्वमस्याः परिभाषाया इति परीक्षा तदा नेति, न हि अस्याः परिभाषाया युगपत्प्राप्तिविषय एव प्रवृत्तिरित्येषा स्वकल्पनैव किन्तु भाष्यकृतैव प्रागुक्तदोषाणामुदात्तनिर्देशात् सिद्धमित्यनेन परिहारं कृत्वा स तर्हि उदात्तनिर्देशः कर्त्तव्यः न कर्त्तव्यः यत्रैवान्त्यसदेशश्चानन्त्यसदेशश्च युगपत्समवस्थितौ तत्रैषा परिभाषा भवतीत्युक्तं वार्त्तिकोक्तमित्यनेनादमुयङित्येतदर्थमस्या आवश्यकत्वं ध्वनितम् । स्पष्टप्रतिपत्तयेऽन्यत्रापि परिभाषाप्रयोजनमाह—

तत्त्वप्रकाशिका ।

इमां परिभाषामुक्त्वा किमेतस्याः परिभाषायाः प्रयोजनमिति प्रश्ने “न संप्रसारणम्” इति सूत्रं न कर्त्तव्यं भवतीत्युक्तम् । भवदुक्तान्त्यसदेशत्वपरिष्कारे “न सम्प्र” इति सूत्रस्य कर्तव्यतया तद्विरोधः स्पष्ट एव ।

तस्मादन्त्यवर्णविशिष्टत्वम् अन्त्यसदेशत्वम् वै० स्वावधिकपूर्वत्ववत्वस्वावधिकपूर्वत्वस्कार्यिकर्तृकव्यवधानशून्यत्व एतदुभयसम्बन्धेन, कार्यित्वं साक्षात्स्थानिद्वारा वा बोध्यम् । तेन यून इत्यादौ परस्य सम्प्रसारणे न पुनः पूर्वस्य सम्प्रसारणं स्थानिद्वाराकार्यिव्यवधानसत्त्वात्, तथा च नैतस्याः परिभाषायाः प्रयोजनानीति भाष्यं कक्लेशेन नैतान्येतस्याः परि·

षु प्रतिविधानं चोदात्तनिर्देशात्सिद्धमित्युपसंहारात्, मिमार्जिषतीत्याद्यर्थं च सा तत्र वृद्धेः पूर्वमन्तरङ्गत्वाद्द्वित्वे परत्वादभ्यासकार्ये ततोऽभ्यासेकारस्य वृद्धिवारणायावश्यकी। न च वृद्धौ पुनरभ्यासह्रस्वत्वेन सिद्धिः "लक्ष्ये लक्षणस्य" इतिन्यायेन पुनरप्रवृत्तेः॥

यत्तु "न सम्प्रसारणे" इति सूत्रे भाष्ये नैतस्याः परिभाषायाः प्रयोजनानीत्युक्तं तस्यायमर्थः—एतत्सूत्रप्रयोजनान्येतस्याः परिभाषायाः प्रयोजनानि न भवन्ति व्यधादावन्त्यसमानदेशयणोऽभावादिति। नैतान्येतस्याः प्रयोजनानीति पाठोऽपि क्वचिद् दृश्यते॥ वाचनिक्येवैषा। स्पष्टा च "ष्यङः" (६-१-१३) इति सूत्रे "अदसोऽसेः" (८-२-८०) इति सूत्रे च केचिदन्त्यसदेशस्येत्यनेन भाष्ये इति अन्यत्र विस्तरः॥ १०४॥

भैरवी।

*मिमार्जिषतीति*। अत्र चशब्दः पूर्वोक्तप्रयोजनसमुच्चायकः। *अन्तरङ्गत्वाद्*। द्वित्वे अपरनिमित्तकत्वेन अस्यान्तरङ्गत्वम्। *परत्वात्*। वृद्धेः परत्वात्। अभ्यासकार्यमुरदत्वम्। "हलादिः शेषः" "सन्यतः" इतीत्वम्। पर्जन्यवल्लक्षणन्यायेन ह्रस्वत्वे कृते इति शेषः भाष्येऽप्युदात्तनिर्देशात् सिद्धमित्युक्तम्। तस्यायमर्थः यथा "यथासंख्य" इति सूत्रे "स्वरितेन" इत्यस्य सम्बन्धात् यत्र यथासङ्ख्यमभिप्रेतं तत्र स्वरितत्वं प्रतिज्ञातमिति कल्पना तथेहापि अनन्त्यविकारेऽन्त्यसदेशस्योदात्तनिर्देश इति पठनीयमिति अनन्त्यविकारबोधकशब्दश्च तत्र तत्रोदात्तगुणकः पठनीय इति भावः। परिभाषास्वीकारे "न सम्प्रसारणे" इतिसूत्रस्थभाष्यविरोधशङ्कानुत्थानायाह—*यत्त्विति*। *क्वचिद्दृश्यत इति*। अस्योपपादितरीत्या स चायुक्त इति शेषः केचिदन्त्यसदेशस्येत्यनेनेति ध्वनितेति शेषः॥ १०४॥

तत्त्वप्रकाशिका।

भाषाया इति पाठभेदेन च योजनं वृथैवेति सुधियो विभावयन्तु। *मिमार्जिषतीत्यर्थं च सेति*। चिन्त्यमिदम्। 'द्विः प्रयोगो द्विर्वचनं षाष्ठम्' इति सिद्धान्तेन प्रत्येकं मृजुत्त्वसत्त्वे समुदाये तत्कार्याभावेन पूर्वोक्तपरिभाषालिङ्गाभावेन परिभाषाया अप्रवृत्तेः, मृजमृज इस इतिस्थिते परमपि हलादिः शेषादिकं बाधित्वा पूर्वोत्तरखण्डयोः "मृजेर्वृद्धिः" इतिवृद्धौ पश्चात् "हलादिः शेषे" ह्रस्वे इत्वे च रूपसिद्धेः, मृजधात्वन्तंयदङ्गन्तदवयवो निर्दिश्यमानस्तदवयवस्य इकोवृद्धिरिति मृजेर्वृद्धिरित्यस्यार्थेनाभ्यासे वृद्ध्यप्राप्तेश्च, षष्ठीप्रकृतिजन्यशाब्दबोधीयविषयताश्रयत्वे सति षष्ठीप्रकृतिजन्यशाब्दबोधीयविषयताश्रयसमभिव्याहृतवर्णाऽघटितत्वरूपनिर्दिश्यमानत्वस्याभावात्। अत एव अनस्तक्षणेत्यादौ पूर्वानोऽकारस्य लोपो न, अत एव "ष्यङः संप्र" इतिसूत्रे भाष्ये एनां परिभाषामुक्त्वा, किमेतस्याः परिभाषायाः प्रयोजनमिति प्रश्ने? "न संप्रसारणे" इतिसूत्रं न कर्त्तव्यं भवतीत्युक्तन्न तु लक्ष्यसिद्धिप्रयोजनमुक्तम्, एतद्विरोधेन मूलोक्तान्त्यसदेशत्वं तु चिन्त्यमेव। अत एव "न संप्रसारणे" इतिसूत्रस्थं नैतस्याः परिभाषायाः प्रयोजनानीति भाष्यं सङ्गच्छते। हंसशिरांसीत्यादौ तु न दोषः। सर्वनामस्थान इति सान्तसंयोगे एव विशेषणात्। अदमुयङ्ङितिरूपमेव न भवति किं त्वदद्र्यङ्ङित्येव नेत्येक इतिमुख्यार्थक एकशब्दप्रयोगात् असेर्हि दृश्यत इति हेतुबोधकहिशब्दघटितत्वाच्च। पूर्ववार्तिकद्वयस्य केचित्पदघटितत्वेन अरुचिग्रस्तत्वाच्च सहेतुकं हि वाक्यं प्रमाणं भवतीति "तस्य लोप" इति सूत्रभाष्याच्च। एवं चेयं परिभाषा निष्फलेति दिक्॥ १०४॥

ननु "अव्यक्तानुकरणस्यातः" (६-१-९८) इति पररूपं पटत् इति पटितीत्यादौ "अलोऽन्त्यस्य" (१-१-५२) इत्यन्त्यस्य प्राप्नोतीत्यत आह—

**नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे ॥ १०५ ॥**

अनभ्यासेत्युक्तेर्बिभर्त्तीत्यादौ "भृञामित्" (७-४-७६) इत्याद्यन्त्यस्यैव। अभ्यासोऽनर्थकोऽर्थावृत्त्यभावात् किन्तु उत्तरखण्ड एवार्थवानिति अन्यत्र निरूपितम् ॥ एषा "अलोऽन्त्यात्" सूत्रे भाष्ये स्पष्टा। फलानामन्यथासिद्धिकरणेन प्रत्याख्याता चेति तत एवावधार्य्यम् ॥ १०५ ॥

ननु ब्राह्मणवत्सा च ब्राह्मणीवत्सश्चेत्यादौ "पुमान् स्त्रिया" (१-२-६७) इत्येकशेषापत्तिः स्त्रीत्वपुंस्त्वातिरिक्तकृताविशेषाभावादत आह—

**प्रधानाप्रधानयोः प्रधाने कार्यसंप्रत्ययः ॥ १०६ ॥**

तेन प्रधानस्त्रीत्वपुंस्त्वातिरिक्ताप्रधानस्त्रीत्वपुंस्त्वकृतविशेषस्यापि स·

भैरवी।

अनन्त्यविकार इत्यनेन शब्देनापस्थितौ प्रतियोगिताया अनन्त्यविकारस्य विशेषणत्वादलोऽन्त्यपरिभाषाप्युपस्थिता तत्प्रसङ्गादाह—*ननु अव्यक्तेति*। *प्राप्नोतीति*। तथा च पटतीति स्यादिति भावः। *तत एवावधार्य्यमिति*। 'वाम्रेडितस्य, इत्येवसिद्धे "नाम्रेडितस्यान्त्यस्य तु वा" इति ज्ञापकात् पटितीत्यस्य सिद्धिः, अनादेशे कृते हलि नकारस्य एव लोपेनाभ्यामित्यस्य सिद्धिः द्विशकारकनिर्देशेन "श्वसोः" इति लोपः सर्वादेशः "अत्र लोपोऽभ्यासस्य" इति सूत्रेऽत्रग्रहणादयं लोपः सर्वादेशः अस्याः परिभाषाया अभावादेव "तस्य लोप" इति सूत्रे तस्य ग्रहणं चरितार्थम्। तद्धि-"आदिर्ञि" इति सूत्रेण ञीत्यादेः समुदायस्य लोपार्थम्। अन्यथा "अलोऽन्त्यस्य" स्यात्, परिभाषासत्वे त्वन्त्यस्य नैव प्राप्नोतीति तद्व्यर्थं स्यात्। न च"इदोय्पुंसि"इति सूत्रे इद्ग्रहणमिदाऽयादेशो यथा स्यादिति एवमर्थकृतं कृतेऽपि तस्मिन् अलोऽन्त्यविधिश्चेद्दश्चेतिसूत्राद् इत्यनुवृत्त्यैव सिद्धेइद्ग्रहणं व्यर्थमिति तदस्यां परिभाषायां ज्ञापकम्, पिपर्त्तीतिनिर्देशश्च तस्य अनभ्यासविकार इत्यंशे ज्ञापकोऽस्त्वितिवाच्यम्, परिभाषायाः सत्त्वे इत्थं ज्ञापकत्वासम्भवात् तथाहि यदि द् इत्यस्यानुवृत्तिः क्रियते तदा दकारस्यैव स्यादिद्ग्रहणे त्वादेशस्य अनेकाल्त्वात् सर्वस्येति विशेषस्य स्पष्टत्वात्।

किञ्च तस्यासत्वेऽपि द् इत्यस्यानुवृत्तिः क्रियते इद्ग्रहणञ्च न क्रियते चेद्दकारमात्रस्यैव स्यादिद्ग्रहणे तु तत्सामर्थ्यात् समुदायस्यादेश इतीद्ग्रहणस्य आवश्यकत्वमिति ॥ १०४ ॥

नानर्थक इति परिभाषयामर्थस्य प्रतियोगित्वेन आश्रयणादर्थसामान्यस्य उपस्थितावाह—*ननु ब्राह्मणेति*। *तेन*। प्रधानाप्रधानयोरितिन्यायस्वीकारेण। लौकिको ह्ययं न्यायः यथा सैनिकानां जयेऽपि लोके राज्ञ एव जयव्यवहार इति बहुष्वपि सैन्येषु गच्छत्सु कोऽयमि·

तत्त्वप्रकाशिका।

*फलानामन्यथासिद्धिकरणेनेति*। "हलि लोप" इत्यादौ अन्पदमनुवर्त्य तदन्तलोपे पररूपे दीर्घे च आभ्यामिति सिद्धमिति तदर्थं नैषा। एवं तस्तु वेत्येव सिद्धे अन्त्यस्य तु वेतिकरणात् "अव्यक्तानुकरणस्य" इत्यत्रालोन्त्यपरिभाषा नोपतिष्ठत इति न दोष इत्यादि भाष्ये स्पष्टम् ॥ १०५ ॥

*प्रधानस्त्रीत्वेति*। स्त्रीत्वावच्छिन्नमुख्यविशेष्यकबोधतात्पर्येणोच्चरितेन सहोक्तौ पुंस्त्वावच्छिन्नमुख्यविशेष्यकबोधतात्पर्येणोच्चरितं शिष्यते मुख्यविशेष्यतावच्छेदकस्त्रीपुंस्त्व·

त्वेन न दोषः । स्पष्टा चेयं "पुमान् स्त्रिया" ( १-२-६७ ) "नपुंसकमनपुंसकेन" ( १-२-६९ ) इत्यनयोर्भाष्ये । अन्तरङ्गोपजीव्यादपि प्रधानं प्रबलमिति "हेतुमति च" ( ३-१-२६ ) इत्यत्र भाष्यकैयटयोः ॥ १०६ ॥

ननु स्वस्त्रादित्वप्रयुक्तो मातृशब्दस्य ङीपूनिषेधः परिच्छेत्तृवाचकमातृशब्दोऽपि स्यादत आह—

## अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी ॥ १०७ ॥

तेन शुद्धरूढस्य जननीवाचकस्यैव ग्रहणं न परिच्छेत्तृवाचकस्य । योगजबोधे तदनालिङ्गितशुद्धरूढिजोपस्थितिः प्रतिबन्धकेति व्युत्पत्तिरेव तद्बीजम् । रथकाराधिकरणन्यायसिद्धोऽयमर्थः ।

भैरवी ।

तिप्रश्ने ? राजेत्युत्तरं दृश्यते इति । *स्पष्टा चेयमित्यादि* । आद्योदाहरणं तु उक्तमेव द्वितीये अनयैव परिभाषया सूत्रप्रत्याख्यानं कृतम् । नपुंसकस्य प्राधान्यन्तु सन्दिग्धेऽप्यर्थे नपुंसकलिङ्गस्य प्रयोगदर्शनेन कल्प्यत इति अन्यत्रापि विषयता परिभाषाया अस्तीति दर्शयति—*अन्तरङ्गोपजीव्यादपीति* । अन्तरङ्गादुपजीव्याच्चेत्यर्थः । *भाष्यकैयटयोरिति* । तत्र हि—"हेतुमति" इत्यस्य प्रकृत्यर्थविशेषणत्वं खण्डयित्वा प्रत्ययार्थविशेषणत्वपक्षे पाचयत्योदनं देवदत्तो यज्ञदत्तेन इत्यादौ प्रयोज्यस्य यज्ञदत्तस्य अन्तरङ्गत्वादुपजीव्यत्वाच्च स्वव्यापाराश्रयत्वेन कर्तृत्वं प्राप्नोतीति "गतिबुद्धि" इति सूत्रं विध्यर्थमस्तु इत्याशङ्क्य प्रयोजनव्यापारस्य प्राधान्यात् तदनुरोधेऽपि कार्य्यस्य बलवत्वमाश्रित्य गत्याद्यर्थकधातुयोगे कर्मत्वस्य प्राप्तौ "गतिबुद्धि" इतिसूत्रं नियमार्थमित्युक्तम् । सर्वथा प्रधानस्य लोके बलवत्वं दृश्यत इति लौकिकव्यवहारदर्शनमेव एतद्बीजम् राजाज्ञया हि व्यवहारो यथेति ॥ १०६ ॥

प्रधानकार्य्यस्य प्राबल्यप्रतिपादनेन अन्यत्रापि तत्प्रसङ्गेन बलवतः स्वरूपमाह—*अवयवप्रसिद्धेरित्यादिना* । अवयवशक्तिग्रहसहकृतसमुदायशक्तिग्रहात् । *समुदायप्रसिद्धिः* । अवयवशक्तिग्रहानपेक्षसमुदायशक्तिग्रहः । *बलीयसीति* । एतस्या बलवत्वं चैतज्जन्यबोधस्य अवयवशक्तिग्रहसहकारेण यस्यार्थस्योपस्थितिसम्भावना सा न भवतीति लौकिकव्यवहारादेव तथा च शुद्धरूढार्थवाचको यो जननीबोधको मातृशब्दस्तस्यैव च स्वस्त्रादिषु ग्रहणम् , परिच्छेतृवाचकस्तु प्रकृतिप्रत्ययशक्तिग्रहसहकारेणार्थबोधकोऽतो न गृह्यते । एवं च यादृशः प्रतिबध्यप्रतिबन्धकभावः फलितस्तमाह—*योगजबोध इत्यादिना* । योगः अवयवशक्तिग्रहजन्यावयवार्थोपस्थितिस्तज्जन्यो यो बोधः शाब्दबोधस्तस्मिन् । *तदनालिङ्गितेति* । योगार्थानालिङ्गितेत्यर्थः । एतेन पङ्कजपदात् पङ्कजनिकर्तृ पद्ममित्याकारबोधाङ्गीकारेऽपि न क्षतिः, तत्र रूढिजन्या या रूढ्यर्थतावच्छेदकपद्मत्वप्रकारकोपस्थितिः, तस्या अवयवशक्तिग्रहजन्यावयवार्थोपस्थितिसहकृतत्वात्, तदनालिङ्गितत्वं तदसहकृतत्वमेव, एवञ्च प्रतिबन्धकस्य विशेषणाभावप्रयोज्योऽभावोऽस्तीति तादृशशाब्दबोधस्य उपपत्तिः, प्रतिबन्धकस्य उदाहरणन्तु मण्डपः कुशलः प्रवीण इत्यादिः । एवञ्च यौगिकरूढस्थलेऽयं प्रतिबध्यप्रतिबन्धकभाव इति सिद्धम् । स च मणिमन्त्रादिन्यायेन कल्पनीयोऽनुभवबलात् । *रथकाराधिकर-

तत्त्वप्रकाशिका ।

मात्रकृतस्तयोः कृत्स्नो विशेषश्चेदिति "पुमान् स्त्रिया" इत्यस्यार्थादितितत्वम् । एवं पुंस्त्वावच्छिन्नमुख्यविशेष्यकतात्पर्येणोच्चरिताच्छसः सस्य नोभवतीति "तस्माच्छसो न" इत्यस्यार्थस्तेन राजकुमारीः पश्येत्यादौ न दोषः ॥ १०६ ॥

कश्चित्तु "दीधीवेवीटाम्" ( १-१-६ ) इत्यत्र अनया परिभाषाया दीधीङ्वेवीङोरेव ग्रहणं न दीङ्धीङ्वेवीनामिति । तन्न । तथा सति दीवेधीवीटामित्येव वदेदित्यन्ये ॥ १०७ ॥

ननु वातायनार्थे गवाक्षेऽवङो वैकल्पिकत्वाद्गोक्ष इत्याद्यपि स्यादत आह—

**व्यवस्थितविभाषयापि कार्य्याणि क्रियन्ते ॥ १०८ ॥**

लक्ष्यानुसाराद्व्यवस्था बोध्या । "शाच्छोः" (७-४-४१) इति सूत्रे "ल-

भैरवी ।

णेति* । तत्र रथकारपदस्य 'रथकारोऽग्नीनादधीत' इत्यत्र सत्वात् सन्देहः रथं करोतीति व्युत्पत्त्या रथकारः कश्चन ब्राह्मणो रथकारपदबोध्यः प्रकृतवाक्यजन्यमहावाक्यार्थबोधविषयो ग्राह्यः उत रूढः सङ्करजातीय इति अपूर्वा या अग्न्याधानोपयोगिनीविद्या तस्या अकल्पनानुरोधेन द्विज एव रथकारपदबोध्य इति पूर्वः पक्षः । माहिष्योग्रौ प्रजायेते, विट्शूद्राङ्गनयोर्नृपात् । शूद्रायाङ्करणो वैश्याद्विन्नास्त्वेष विधिः स्मृतः । माहिष्येण करण्यान्तु रथकारः प्रजायत इति मनुना करण्यो माहिष्येणोत्पन्नस्य रूढिरियं रथकार इति प्रदर्शितम् पूर्वोक्तप्रतिबध्यप्रतिबन्धकभावेन तस्यैव ग्रहणं तदन्यथानुपपत्त्या अग्न्याधानोपयोगिविद्याया अध्ययनस्यापि कल्पनमिति सिद्धान्तितम् ।

पूर्वोक्तप्रतिबध्यप्रतिबन्धकभावानभिज्ञस्य यथाश्रुतार्थग्राहिण उक्तिं खण्डयति—*कश्चित्त्विति* । *तथा सति* । धातुचतुष्टयस्य ग्रहणेऽभिप्रेते सति । *इत्येव वदेदिति* । असन्देहायेति शेषः । तथा च सिद्धान्ते दीधीवेवीग्रहणप्रत्याख्यानपरभाष्यप्रामाण्यादेव समुदायस्य ग्रहणं न तु तत्रास्याः परिभाषाया उपयोग इति दर्शितम् ॥ १०७ ॥

रूढिप्रसङ्गादाह—*ननु वातायनेति* । *गवाक्षे* ।। गवाक्षशब्दे । सामानाधिकरण्येन निर्देशस्तु वाच्यवाचकयोस्तादात्म्यात् । *व्यवस्थितविभाषयेति* । व्यवस्थिता व्यवस्थासंजाता अस्याः सा, सा च व्यवस्था क्वचिदर्थविशेषे भावकार्यमेव क्वचिदभाव एव क्वचित्तु भावाभावोभयम् । एवञ्च एतादृशव्यवस्थानिश्चयो लक्ष्यैकचक्षुष्कसाध्य इति भाष्यकारीयव्याख्यानतो निर्णयः कार्य्यः । एवञ्च व्यवस्थितविभाषया कार्य्याणि क्रियन्त इत्यस्य क्वचिदिति शेषः । भाष्यकृता च—

देवत्रातो गलो ग्राह, इति योगे च सद्विधिः ।
मिथस्ते न विभाष्यन्ते, गवाक्षः संशितव्रतः" ॥

इति वाक्ये गवाक्ष इति पठितम्, तेन वातायनेऽवङादेश एव भवति न त्वन्यत् । यतो व्यवस्थितविभाषानिश्चयो लक्ष्यैकचक्षुष्कसाध्योऽतएवाह—*लक्ष्यानुसारादिति* । *शाच्छोरित्यादि* । आद्ये देवत्रात इत्यादिनोक्ताः । अन्त्ये कौवंतः पाचतः प्रपचतितरामि-

तत्त्वप्रकाशिका ।

*व्यवस्थितविभाषयापीति* । व्यवस्थितविभाषाशास्त्रीयोद्देश्यतावच्छेदकव्याप्यं यद्रूपन्तद्रूपव्यापकभावाभावान्यतरविधायकत्वम् । यथा विभाषाशास्त्रं "सर्वत्रविभाषागोः"इति । तदीयोद्देश्यतावच्छेदकं अजव्यवहितपूर्वत्वविशिष्टैङन्तगोशब्दत्वम्, तद्व्याप्यरूपं वातायनबोधकघटकाजव्यवहितपूर्वत्वविशिष्टगोशब्दत्वं तद्व्यापकभावविधायकत्वं सर्वत्रविभाषेत्यत्र । एवं विभाषाशास्त्रम् "अचि विभाषा" इति तदीयोद्देश्यतावच्छेदकं अजव्यवहितपूर्वत्ववद्गृधात्ववयवरत्वं तद्व्याप्यं रूपंविषतात्पर्येणोच्चरितघटकाजव्यवहितपूर्वत्वाविशिष्टगृधातुसम्बन्धिरत्वम् तद्व्यापकाभावविधायकत्वम् "अचि विभाषा" इत्यस्य । एवंरीत्यासर्वत्र

टः शतृ" ( ३-२-१२४ ) इत्यादिसूत्रेषु च भाष्ये स्पष्टा ॥ १०८ ॥

## विधिनियमसम्भवे विधिरेव ज्यायान् ॥ १०९ ॥

नियमे ह्यश्रुताया अन्यनिवृत्तेः सामर्थ्यात्परिकल्पनमुक्तानुवाददोषश्चेति लाघवाद्विधिरेवेति बोध्यम् । "यस्य हलः" ( ६-४-४९ ) इत्यत्र "इजादेः सनुमः" इत्यादौ च भाष्ये स्पष्टेयम् ॥ १०९ ॥

ननु "आशंसायां भूतवच्च" (३-३-१३२) इत्यनेन लुङ इव लुङ्लिटोरप्यतिदेशः स्यादत आह—

## सामान्यातिदेशे विशेषानतिदेशः ॥ ११० ॥

सामान्योपस्थितकाले नियमेन विशेषोपस्थापकसामग्र्यभावोऽस्या बी-

भैरवी ।

त्यादेश्च शत्रादेशतदभावाभ्यां साधनं कृतम् ॥ १०८ ॥

विकल्पविधिप्रसङ्गादाह—*विधीत्यादि* । विधिरपूर्वविधिः । सम्भव इत्यनेनोभयकोटिसम्भावना यत्र तत्रैतस्याः परिभाषाया उपस्थितिः यत्रासम्भवस्तत्र तु तयोरन्यतरस्य एव निर्णयः । ज्यायस्त्वे हेतुमाह—*नियमे हीति* । अश्रुतायाः शाब्दबोध्याया एतेन तत्र नियमस्य विधिरूपेण वाच्यपुरस्कारेण प्रवृत्तिरिति दर्शितम् । *उक्तानुवादः* । शास्त्रान्तरसिद्धार्थानुवादः । न चैवं परिसङ्ख्यापेक्षयापि विधौ लाघवात् तस्य अनुक्तौ न्यूनतेति वाच्यम् । अत्र शास्त्रे परिसङ्ख्यापि नियमपदेन उच्यते नियमे यथा गौरवं तथा परिसङ्ख्यायामपीत्याशयात् । *दोषश्चेति* । चकारेण प्राप्तबाधसमुच्चयः । एवञ्च दोषत्रयस्य नियमे परिसङ्ख्यायाञ्च सम्भवाद्विधौ तु तदभावाल्लाघवमिति लाघवमूलिकेयम् । *"यस्य हलः" इति* । आद्ये "यस्य" इति सङ्घातग्रहणमितिपक्षे अन्त्यलोपस्य "अतो लोप" इतिसूत्रेण सिद्धौ समुदायलोपार्थमुत हल एव यस्य लोपो न तु अन्यत्र लोलूयितेत्यादाविति संशये उक्तरीत्या विधित्वमेव युक्तम् । अन्त्ये "इजादेः" इतिसूत्रे "णेर्विभाषा" इत्यतो णिग्रहणसम्बन्धेन विकल्पे प्राप्ते लाघवान्नित्यार्थो विधिरिति पूर्वपक्षिणोक्तम् । ततः सिद्धान्तिना हलश्चेजित्यतो हल्ग्रहणानुवृत्त्या नियमत्वमुक्तम् । तेन प्रेङ्खणीयमित्यादौ णत्वस्य सिद्धिः । प्रमङ्गनमित्यादौ तु न भवति । तेन यद्यपि लाघवाद्विधेर्ज्यायस्त्वं तथापि लक्ष्यानुसार्याकरव्याख्यानात् नियमत्वस्य कल्पनेति बोध्यम् ॥ १०९ ॥

विधिप्रसङ्गादाह—*ननु आशंसायामिति* । अतिदिश्यत इत्यतिदेशः सामान्यस्यातिदेशः, सामान्यपदं सामान्यधर्मावच्छिन्नपरम्, तन्निमित्तकत्वं षष्ठ्यर्थः । एवञ्च सामान्यधर्मावच्छिन्ननिमित्तककार्य्येऽतिदिश्यमाने सति विशेषधर्मावच्छिन्ननिमित्तककार्य्यातिदेशो नेति फलितम् । परिभाषायां बीजमाह—*सामान्योपस्थितीति* । यथा लोके ब्राह्मणवदस्मिन् क्षत्रिये वर्त्तितव्यमित्युक्ते ब्राह्मणसामान्यस्य यत्कार्य्यमभ्युत्थानादिकंतदतिदिश्यते न तु माठरकौण्डिन्यप्रयुक्तकार्य्यस्यातिदेशो भवति लोके, तथैव शास्त्रेऽपि व्यवस्थेति लोकन्यायसिद्धेयमिति केचित् ।

तत्त्वप्रकाशिका ।

लक्षणसमन्वयः ॥ १०८ ॥

ननु "यस्यहलः" इत्यत्रात इत्यनुवर्त्य नियामकत्वमुत तदननुवर्त्य विधायकत्वं चेति संशये आह—*विधिनियमसंभव इति* ॥ १०९ ॥

*सामान्यातिदेशे विशेषानतिदेशः* । सादृश्यप्रतियोगितावच्छेदकधर्मव्यापकधर्मस्यैवातिदेशो नतु सादृश्यप्रतियोगितावच्छेदकधर्माव्यापकधर्मस्येत्यर्थः । तथाच भूतत्वव्यापकभूतत्व-

ञम् । तेन अनद्यतनभूतरूपे विशेषे विहितयोस्तयोर्नातिदेशः । इयमनित्या "नल्यपि" ( ५-४-६९ ) इति लिङ्गात् । तेन स्थानिवत्सूत्रेण विशेषातिदेशोऽपि । स्पष्टं चैतत् सर्वं स्थानिवत्सूत्रे भाष्ये ॥ ११० ॥

ननु "तित्स्वरितम्" ( ६-१-१८६ ) इति स्वरितत्वं किरतीत्यादावपि स्यादत आह—

**प्रत्ययाप्रत्यययोः प्रत्ययस्य ग्रहणम् ॥ १११ ॥**

इयं च "अङ्गस्य" ( ६-४-१ ) सूत्रे भाष्ये पठिता । वर्णग्रहणे च न प्रवर्त्तत इति तत्रैव कैयटे स्पष्टम् । अत एव "सनाशंसभिक्ष उः" (३-२-१६८) "वले" ( ६-३-११८ ) इत्यत्र सन्वलयोः प्रत्यययोर्ग्रहणम् ।

परे तु "तित्स्वरितम्" ( ६-१-१८५ ) इति सूत्रे एषा परिभाषा लक्ष्यसंस्काराय भाष्ये क्वापि नाश्रितेति कैयटेनोक्तम् । "अङ्गस्य" ( ६-४-१ ) इति सूत्रे तत्प्रत्याख्यानायैषा भाष्य एकदेशिनोक्ता । अत एव तितिप्रत्यय

भैरवी ।

वस्तुतस्तु लोकेऽपि विशेषधर्मावच्छिन्ननिमित्तककार्य्याभावे विशेषधर्मावच्छिन्नोपस्थापकसामग्र्यभाव एव बीजमिति, तथात्रापि शास्त्रे तादृशसामग्र्यभावादेव विशेषधर्मावच्छिन्ननिमित्तककार्य्याभावः कल्प्यते ।*तेन* । परिभाषाङ्गीकारेण ।*लिङ्गादिति* । यदीयं नित्या स्यात्, तदा "नक्त्वासेट्" इति कित्वस्य निषेधेन कित्वस्य विशेषधर्मतया न इत्यस्य अतिदेशाभावेनेत्वाप्राप्तेस्तद्व्यर्थमेव स्यात् । *तेन* । अस्याः परिभाषाया अनित्यत्वेन ।*अतिदेशोऽपीति* । तेनाग्रहीदित्यत्र कृते दीर्घं स्थानिवद्भावेनेट्त्वातिदेशात् "इट ईटि" इत्यस्य प्रवृत्तिः । अन्यथा सामान्यस्य आगमत्वस्यातिदेशः स्यात् । प्रखाय प्रखन्येत्यत्रात्वविकल्पस्य च सिद्धिः एधिष्यत इत्यत्र लृट्त्वस्य सेहात इत्यत्र लिट्त्वस्य च व्यवहारः ॥ ११० ॥

प्रत्ययप्रसङ्गादाह—*ननु तित्स्वरितमितीति* । किरतीत्यत्र "ऋत इद्धातोः" इति सूत्रेणेतस्तितो विधानात् । *अङ्गसंज्ञा सूत्रे इति* । अङ्गसंज्ञाया सूत्रमिति समासः । तत्प्रयोजनप्रदर्शकम् "अङ्गस्येति अधिकारप्रदर्शकमिति यावत् । पठितेत्यनेनास्या वाचनिकत्वं ध्वनितम् । *न प्रवर्त्तते इति* । "तस्मादित्युत्तरस्य" इति निर्देशात्, तेन सुद्ध्युपास्य इत्यत्र यणादेशसिद्धिः प्रत्ययस्यैव ग्रहणे त्वस्यापत्यमिः एरयनम् ययनमित्यत्रैव स्यात्, "आद्गुण" इति गुण औपगवे इत्यादावेव स्यात् । *अत एव* । "प्रत्ययाप्रत्यययोः" इति परिभाषास्वीकारादेव । *इति सूत्रे इति* । कैयटेनोक्तमित्यत्रान्वयः । एकदेशिनोक्त इत्यनेन इयमनारब्धव्येतिसूचितम् । परिभाषामाश्रित्य तत्प्रत्याख्यानापेक्षयाङ्गस्येत्यधिकारे लाघवम् ।

तत्त्वप्रकाशिका ।

स्यैवातिदेशो नतु तद्व्यापकभूतानद्यतनपरोक्षत्वम् । *विशेषातिदेशोऽपीति* । वस्तुतश्चिन्त्यमिदम् । स्थानिवत्सूत्रस्थतदादेशः तत्स्थानिवद्भवतीत्यस्य संग्राहकवाक्यत्वेन अयं ल्यप् एतत्क्त्वावद्भवतीति अतिदेशवाक्यकल्पनेन सादृश्यप्रतियोगितावच्छेदकैतत्क्त्वावृत्ति तद्व्यक्ति त्वव्यापकत्वस्य कित्वे सत्त्वेन तदतिदेशस्य सुलभत्वेन "नल्यपि" इत्यस्य वैयर्थ्याभावात्फलाभावाच्च । न च सूत्रे येन रूपेण स्थानिता आदेशता च तेन रूपेणातिदेशवाक्यकल्पने च मूलं मृग्यमिति वाच्यम् । जजागरतुरित्यादौ गुणानापत्तेः अतुस् तसवद्भवति परस्मैपदवद्वा भवतीत्यतिदेशवाक्यकल्पने भवन्मते विशेषातिदेशसत्त्वेन आहतुरित्यादौ तसो ङित्त्वेन तस्य जजागरतुरित्यादावतिदेशे अविच्छिन्नङित्त्वितिपर्युदासादितिदिक् ॥ ११० ॥

ग्रहणं कर्त्तव्यमिति वार्तिककृतोक्तम्। उक्तसूत्रयोर्व्याख्यानात् प्रत्यययोरेव ग्रहणमित्याहुः ॥ १११ ॥

ननु "विपराभ्यां जेः" (१-३-१९) इत्यात्मनेपदं परा सेना जयतीत्यर्थके पराजयति सेनेत्यत्र प्राप्नोतीत्यत आह—

## सहचरितासहचरितयोः सहचरितस्यैव ग्रहणम् ॥ ११२ ॥

तेन विशब्दसाहचर्य्यादुपसर्गस्यैव पराशब्दस्य ग्रहणमिति तत्रैव भाष्ये स्पष्टम्। सहचरणं सदृशयोरेवेति सहचरितशब्देन सादृश्यावानुच्यते रामलक्ष्मणावित्यादावपि दृष्टसादृश्यमेव नियामकम्। सदृशयोरेव सह विवक्षा तयोरेव सह प्रयोगे इत्युत्सर्गाच्च। ध्वनितं चेदं "कर्म्मप्रवचनीययुक्ते द्वितीया" (२-३-८) इति सूत्रे भाष्ये। तत्र हि—"पञ्चम्यपाङ्परिभिः"

भैरवी।

परिभाषाया निरुक्तं दुरुतमित्यादिसकललक्ष्यसाधकत्वाभावाच्च सैकदेश्युक्तिः। *अत एव*। उक्तपरिभाषाया अभावादेव। "अपृक्त एकाल्प्रत्ययः" इति सूत्रे प्रत्ययपदोपादानेन सूत्रकृतापि तदभावो ध्वनितः।

ननु उक्तसूत्रयोः सन्वल्ग्रहणेन प्रत्ययस्यैव ग्रहणमित्यस्य कथं सिद्धिरत आह—*उक्तसूत्रयोरिति*। *व्याख्यानादिति*। आद्ये गर्गादिषु विजिगीषुशब्दपाठमूलकात्, अन्त्ये "मतो बह्वचोऽनजिरादीनाम्" इति एतत्साहचर्य्यमूलकात् "उपसर्गस्य घञ्यमनुष्ये" इति सूत्राद्बहुलग्रहणानुवृत्तिमूलकाद्वा व्याख्यानादित्यर्थः ॥ १११ ॥

प्रत्ययप्रसङ्गादेवाह—*ननु विपराभ्यामिति* । *सहचरितेत्यादि*। अत्र सहचरितशब्देन सादृश्यवानुच्यते, तस्य चाभिधानियामकत्वम् "संयोगो विप्रयोगश्च साहचर्यं विरोधिता"इत्यत्र प्रसिद्धम्। *तेन*। "सहचरितासहचरितयोः" इति परिभाषास्वीकारेण। विशब्दसाहचर्य्यादित्यनेन परस्परसाहचर्य्यस्याभिधानियामकत्वं तत्रेति बोधितम्। यदुक्तं सदृशयोरेव सह प्रयोग इति तन्न, सर्वत्र लादेशेन सह विकरणस्य सह प्रयोगेऽप्यर्थाबोधकत्वादत आह—*उत्सर्गाच्चेति* । *ध्वनितञ्चेदमिति* । सदृशयोरेव सहप्रयोग इत्येतत्। एतेन रामलक्ष्मणावित्यत्रैव सहचरणमुपसर्गाणां न दृष्टम्। इत्यनया परिभाषया न निर्वाह इति शङ्कापि परास्ता, प्रादीनां सादृश्यस्य तत्संज्ञकत्वेन सत्त्वात्। लक्षणादयो "लक्षणेत्थम्भूत"

तत्त्वप्रकाशिका।

इत्याहुरिति*। वस्तुतस्तु इयं परिभाषात्यन्तमावश्यकी। अन्यथा "नपदान्ताट्टोः" इतिसूत्रे नमतीति नाम इत्यस्य, "वसुस्रंसु" इतिसूत्रे वसुस्तम्भे इत्यस्य, वले इत्यत्र वलधातोः, "वनो रच" इत्यत्र वनधातोः, "सन्यत" इत्यादौ सनधात्वादेश्च ग्रहणस्य दुर्वारत्वात्। नच "अङ्गस्य" इतिसूत्रे एकदेशिनोक्तत्वेन इयं नास्त्येवेति वाच्यम्। यदंशे एकदेश्युक्तित्वम् तदंशे तस्य तत्त्वेऽपि एकदेश्युक्तत्वमात्रेण तस्याः तत्त्वाभावात्। अन्यथा अन्तरङ्गपरिभाषाया अपि 'नवा बहिरङ्गलक्षणत्वाद्वा' इत्याद्येकदेश्युक्तित्वेन परिभाषाया अपि एकदेश्युक्तित्वापत्तेः। 'तितिप्रत्ययग्रहणं कर्तव्यम्" इतिवार्तिकन्तु प्रत्ययपरिभाषामबुद्ध्वा प्रवृत्तम्। ईकारान्तं यद्द्विवचनं तदन्तमितिकल्पे "अन्तरङ्गानपि" इतिन्यायमबुध्वा अशुक्ले शुक्ले सम्पद्येते शुक्ली अभवतामित्यत्र प्रगृह्यसंज्ञाया अभावाय प्रगृह्यसंज्ञाप्रकरणे भाष्ये निषेधवचनवदितिदिक् ॥ १११ ॥

*सहचरितस्यैवेति*। अत्र च बीजं सहचरितस्य शक्तिज्ञानाधीनोपस्थितिः सादृश्यज्ञाना-

( २-४-१० ) इति सूत्रेण लक्षणादिद्योतकपरियोगे पञ्चमीमाशङ्क्य यद्यप्ययं परिदृष्टापचारो वर्जने चावर्जने चायं खल्वपशब्दोऽदृष्टापचारो वर्जनार्थ एव कर्मप्रवचनीयस्तस्य कोऽन्यः सहायो भवितुमर्हत्यन्यो वर्जनार्थाद्यथा अस्य गोः सहायेनार्थ इति गौरेवानीयते नाश्वो न गर्दभ इत्युक्तम्।

तेन हि-सदृशानामेव प्रयोगे सहायभावो बोधितः। "द्वित्रिश्चतुः" ( ८-३-४३ ) इति सूत्रे साहचर्य्येणैव कृत्वोऽर्थस्य ग्रहणे सिद्धे कृत्वोऽर्थग्रहणादेषा अनित्या। तेन "दीधीवेवीटाम् ( १-१-६ ) इत्यत्र धातुसाहचर्य्येऽप्यागमस्येटो ग्रहणमिति अन्यत्र विस्तरः ॥ ११२ ॥

ननु "अस्थि" ( ७-१-७५ ) इत्याद्यनङ् प्रियसक्थ्ना ब्राह्मणेनेत्यत्र न स्यादङ्गस्य नपुंसकत्वाभावादत आह—

## श्रुतानुमितयोः श्रुतसम्बन्धो बलवान् ॥ ११३ ॥

श्रुतेनैव सम्बन्धो नानुमितेन प्रकरणादिप्राप्तेनेत्यर्थः। प्रकरणादितः श्रुतेर्बलवत्त्वादिति भावः। एवं च तत्र लिङ्गमस्थ्यादीनामेव विशेषणं नाङ्ग-

भैरवी।

इति सूत्रप्रसिद्धाः। *दृष्टापचारः*। दृष्टव्यभिचारः अनियतार्थक इति यावत्। तदेवाह—*वर्जने चेति*। अवर्जन इत्यनेन अनर्थकस्यापि संग्रहः। कर्मप्रवचनीय इत्यत्रान्वयः। अदृष्टपचार इत्यस्य व्याख्या वर्जनार्थ एवेति। एवं च कर्मप्रवचनीयसंज्ञकत्वेन प्रकृते सादृश्यं विवक्षितमिति भावः।

अस्याः परिभाषाया अनित्यत्वे ज्ञापकमाह-*द्वित्रीत्यादिना। साहचर्य्येण*। सुजन्ताभ्यां साहचर्य्येण, कृत्वोऽर्थग्रहणे सिद्धे। कृत्वोऽर्थे जायमानसुजन्तस्य चतुःशब्दस्य ग्रहणे सिद्धेः। *तेन*। अस्या अनित्यत्वेन। *आगमस्येति*। एवम् "आदृगमहन" इतिसूत्रे आदृग्रहणसाहचर्य्येऽपि ऋग्रहणेन ऋधातोर्ग्रहणस्य सिद्धिः, यतः सहचरितशब्दः सादृश्यवद्बोधकोऽत एव, 'संयोगो विप्रयोगश्च" इति हरिकारिकाव्याख्यानावसरे हेलाराजेन "पञ्चम्यपाङ्परिभिः" इत्युदाहृतम्। *अन्यत्र*। उद्योतादौ ॥ ११२ ॥

साहचर्य्यप्रसङ्गादाह-*ननु अस्थीति*। "श्रुतानुमितयोः" इत्यत्र श्रुतत्वं साक्षादुच्चरितत्वमन्यतराकाङ्क्षाजन्यसम्बन्धत्वं वा। श्रुतेनैवेत्येवकारव्यवच्छेद्यमाह-*नानुमितेति*। अत्र बीजमाह—*प्रकरणादित इति*। बलवत्त्वञ्च तन्त्रान्तरेऽपि प्रसिद्धम्। यथा प्रत्यक्षस्य सामग्रीसत्त्वेऽनुमितेश्च सामग्रीसत्वे समाने विषये आदौ प्रत्यक्षमेव उत्पद्यते। ततोऽनुमितिसामग्रीसत्वे सा भवति एतादृशानुभवसिद्धत्वेन प्रत्यक्षसामग्र्याः प्रथमोत्पन्नप्रमितिजनकत्वात् तादृशसामग्रीजन्यप्रमितिकरणं प्रत्यक्षप्रमाणं, दुर्बलसामग्रीजन्यानुमानापेक्षया प्रबलमिति व्यवहारः। तथा साक्षात् श्रुतस्थले शाब्दसामग्रीसम्भवात् तत्रापि अनुमानापेक्षया शाब्दप्रमितिकरणस्य प्राबल्यमिति। प्रकृतोपयोगमेवाह—*एवञ्चेति। तत्र*। "अस्थिदधि" इति सूत्रे। तत्र, "नपुंसकस्य झलचः" इतिसूत्रात् नपुंसकस्य इत्यनुवर्त्तते तस्य प्रातिपदिकसाकाङ्क्ष-

तत्त्वप्रकाशिका।

त्वीनोपस्थितिश्चेतिउपस्थितिद्वयम्। *अनित्येति*। वस्तुतस्तु चिन्त्यमिदम्। "दीधीवेवीटाम्" इत्यत्र हलनुबन्धकत्वेन साहचर्येण आगमस्यैव ग्रहणात्, नहि धातुत्वेनैव साहचर्यं ग्राह्यं नतु हलनुबन्धकत्वेनेत्यत्र राजाज्ञास्ति, "द्वित्रिश्चतुः" इतिसूत्रे कृत्वोर्थग्रहणन्तु सुजन्तत्वेनैव साहचर्यं नत्वन्येनेत्यत्र बोधनद्वारा स्पष्टार्थमेव। नत्वेतस्या अनित्यत्वे गमकम् ॥११२॥

स्य । शिशीलुङ्नुम्विधिषु तु गृह्यमाणस्याभावात् प्रकरणप्राप्ताङ्गस्यैव विशेषणम् । अत एव "वा नपुंसकस्य" ( ७-१-७९ ) इति सूत्रे वा शाविति न कृतम् । तत्र नपुंसकग्रहणं हि गृह्यमाणस्य शत्रन्तस्यैव नपुंसकत्वे यथा स्यात् । बहवो ददतो येषु तानि कुलानि बहुददतीत्यत्र मा भूद्बहूनि ददन्ति येषु ते बहुददन्त इत्यत्र यथा स्यादित्येवमर्थम् । स्पष्टं चेदं "स्वमोर्नपुंसकात्" ( ७-१-२३ ) इत्यत्र भाष्ये ।

केचित्तु "अचो रहाभ्यां द्वे" ( ८-४-४६ ) इत्यत्र श्रुतेन रेफस्य निमित्तत्वेन यरन्तर्भावादनुमितं कार्य्यित्वं बाध्यत इत्येतदुदाहरणमाहुः । तन्न । तक्रकौण्डिन्यन्यायेन सिद्धेरिति अन्यत्र विस्तरः ॥ ११३ ॥

ननु "तत्पुरुषे तुल्यार्थ" ( ६-२-२ ) इति स्वरः परमेण कारकेण परमकारकेणेत्यादौ स्यात्तथा "गातिस्थाघुपाभूभ्यः" ( २-४-७७ ) इति लुक्

भैरवी ।

त्वात् द्वितीयं श्रुतत्वमत्र सम्भवति अस्थ्यादीनाञ्च साक्षात् श्रुतत्वम् । *विशेषणमिति* । लिङ्गमिति शेषः । *प्रकरणप्राप्ताङ्गस्येति* । अङ्गस्य अनुमितित्वमुभयाकाङ्क्षारूपप्रकरणप्राप्तस्वरूपं बोध्यम् । श्रुतानुमितयोरित्यर्थो न केवलं युक्तिसिद्ध एव किन्तु अत्र ज्ञापकमप्यस्तीत्याह-*अत एवेति* । द्वितीयं गृह्यमाणत्वमत्र द्रष्टव्यम् । *स्पष्टञ्चेदमिति* । तत्र हि शिशीलुङ्नुम्विधिषु नपुंसकग्रहणं शब्दग्रहणं वा स्यादर्थस्य वेति विचारे, सिद्धन्तु प्रकृतार्थविशेषणत्वात्, सिद्धमेतत्, कथं ? प्रकृतस्यार्थो विशेष्यते, किञ्च प्रकृतमङ्गम्, अङ्गस्य शिशीलुङ्नुमो भवन्ति नपुंसके वर्त्तमानस्य, कथम् प्रियसक्थ्ना ब्राह्मणेन, अस्थ्यादिषु शब्दग्रहणम् । अस्थ्यादिषु नपुंसकग्रहणं शब्दग्रहणं द्रष्टव्यम् । एतदुत्तरं युक्तं पुनरिदं विचारयितुमितिशङ्का अर्थस्य नपुंसकत्वात् तद्विशेषणत्वमेव युक्तमितिभावः । किं तर्हि उच्यते अस्थ्यादिषु शब्दग्रहणमिति इदन्नोचितमिति भावः । अत्राप्यर्थग्रहणमेव इत्युक्तम् ।

अत्र कैयटः-अर्थधर्मत्वाल्लिङ्गस्य नपुंसकार्थाभिधायित्वादस्थ्यादयो नपुंसकशब्देन अभिधीयन्ते गृह्यमाणसम्भवे तद्विशेषणमेव लिङ्गग्रहणं तदभावे प्रकृतस्य अङ्गस्येति निर्णयः । अत्र वाशाविति वक्तव्ये "वा नपुंसकस्य" इति सूत्रनिर्देश एव मानम् । गृह्यमाणशत्रन्तस्येति अत्र गृह्यमाणत्वं द्वितीयं द्रष्टव्यम् ।

सीरदेवाद्युक्तं खण्डयितुमुपन्यस्यति--*केचित्त्विति* । साक्षात् श्रुतेन साक्षाच्छब्दबोधितेन । *अनुमितमिति*। अत्रानुमितत्वं न प्रकरणप्राप्तत्वं किन्तु सामान्यधर्मप्रकारकप्रतीतिविषयत्वम् । *तक्रकौण्डिन्येति* । ननु "येन नाप्राप्तन्याय"निरूपणावसरे तक्रकौण्डिन्यन्यायोऽनवकाशविषयो विधेयविषयश्च इत्युक्तम् । अत्र तु तक्रकौण्डिन्यन्यायेन सिद्धेरित्युच्यते । एतत् पूर्वोक्तविरुद्धम्, निमित्तत्वस्य अविधेयत्वादिति चेन्न, तक्रकौण्डिन्यन्यायस्थलीयो यो यो न्यायः युक्तिरनवकाशत्वरूपा तया सिद्धेरित्यर्थात् । यत्र यत्र रेफस्य निमित्तत्वं तत्र सर्वत्र वाक्यान्तरेण कार्य्यित्वस्य प्रसक्तया निमित्तत्वमनवकाशमिति तेन न्यायेन तद्रीत्या इत्यर्थात् ॥ ११३ ॥

शीघ्रोपस्थितिकत्वप्रसङ्गादाह-*ननु तत्पुरुष इति* । परमेणेत्यादि परिनिष्ठितविभक्त्या समासस्य प्रदर्शनेन । इत्यादावित्यादिपदेन परमे कारक इत्यस्य परिग्रहः । ननु लोके स्वरो

तत्त्वप्रकाशिका ।

*तक्रकौण्डिन्यन्यायेन सिद्धेरिति* । वस्तुतस्तु माठरपरिवेषणन्यायेन सिद्धेरिति वक्तव्यम् । अन्यथा मद्रह्रद इत्यादौ रेफस्य द्वित्वापत्त्यादिपूर्वोक्तदूषणावतारः स्यात् ॥११३॥

पै शोषण इत्यतः कृतात्त्वात्परस्यापि स्यादत आह—

लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम् ॥ ११४ ॥

लक्षणेनेत्यर्थः । लक्षणं लाक्षणिकमुपचारात् । तत्तद्विभक्तिविशेषाद्यनुवादेन विहितो हि समासादिः प्रतिपदोक्तस्तस्यैव ग्रहणं शीघ्रोपस्थितिकत्वात् । द्वितीयो हि विलम्बोपस्थितिकः । पै इत्यस्य पा इति रूपं लक्षणानुसन्धानपूर्वकं विलम्बोपस्थितिकं पिबतेस्तु तच्छीघ्रोपस्थितिकम् । इदमेव ह्येतत्परिभाषाबीजम् । इयं च वर्णग्रहणेऽपि "ओत्" सूत्रे भाष्ये सञ्चारितत्वात् ।

भैरवी ।

न नियतः छन्दसि तु छान्दसत्वेनैव दोषनिराकरणमत आह-*तथेति । उपचारादिति* । लक्षणशब्दादर्शआद्यच्वा, तथाच यस्य स्वरूपलक्षणानुसन्धानजन्यसाधुत्वप्रतिपत्तिविषयस्तल्लाक्षणिकम् । प्रतिपदोक्तत्वन्तु साक्षादुच्चरितत्वं, यथा पा रक्षण इति धातौ, क्वचित् तत्तच्छास्त्रानुवादेन विहितत्वरूपं तत्, यथा "विभाषादिक्समासे" इतिसूत्रे "दिङ्नामान्यन्तराले" इतिसूत्रविहितसमाससंज्ञकस्य तत्तद्विभक्तिरित्यादि, तथा "तृतीया तत् कृतार्थेन गुणवचनेन" इति द्वितीयः, परिनिष्ठितविभक्त्या समासपक्षेऽपि "विशेषणं विशेष्येण" इति विहितः । *इदमेव* । शीघ्रोपस्थितिकत्वमेव । एतेन लौकिकलाघवगौरवमूलकत्वमस्यार्थादुक्तम् । *इयं वर्णग्रहणे ऽपीति । प्रवर्त्तत इति शेषः । "ओत्"सूत्र इति* । तत्र हि-अनड्वः अदः समभवदोऽभवदित्यत्र च्व्यन्तत्वात् निपातसंज्ञायां प्राप्तप्रगृह्यसंज्ञाया अनया वारणं कृतम् ।

तत्त्वप्रकाशिका ।

*लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्* । अत्र लक्षणपदमुपचाराल्लाक्षणिकार्थकम् । प्रतिपदोक्तत्वं चात्र, स्वीयोद्देश्यतावच्छेदकसमर्पकज्ञानविषयीभूतानुपूर्वीसजातीयानुपूर्वीमत्पदघटितशास्त्रविधेयत्वम् । यथा स्वं "घुमास्थ" इति तदीयोद्देश्यतावच्छेदकसमर्पकज्ञानविषयीभूतानुपूर्वी पाशब्दस्वरूपा तादृशानुपूर्वीमत्पदघटितं शास्त्रं पा पाने इति तद्विधेयत्वं पाशब्दादावितिलक्षणसमन्वयः ।

नन्वेवं "गतिकारक" इति शास्त्रीयोद्देश्यतावच्छेदकसर्पकज्ञानविषयीभूता या गतित्वरूपानुपूर्वी तादृशानुपूर्वीमत्त्पदघटिशास्त्रविधेयत्त्वं "कुगतिप्रादय" इति समासस्यैवेति तस्यैव प्रतिपदोक्तत्वाद्ग्रहणं नतु "अनेकमन्यपदार्थे" इति समासस्येति नेयङुवङितिभाष्योदाहृते आध्यै प्रध्यै इति बहुव्रीहौ यण् न । अत्र हि-प्रकृष्टाधोध्यानं यस्येति बहुव्रीहिः, एवं "इकोगुणवृद्धी"इत्यत्र भाष्योक्तगुणवृद्धिपदानुवृत्तेर्वैयर्थ्यञ्च"त्यदादीनामः" इत्यादौ स्वीयोद्देश्यतावच्छेदकसमर्पकज्ञानविषयीभूता या गुणपदस्वरूपा आनुपूर्वी तद्वत्घटितत्वस्याभावात्, एवं लक्षणप्रतिपदोक्तपरिभाषया तु नात्र निर्वाह इति "इको गुणवृद्धी" इतिसूत्रशेखरविरोध इति चेन्मैवम्, लाक्षणिकत्वेनाभिमतं प्रतिपदोक्तत्वेन चाभिमतं यच्छास्त्रद्वयं तादृशशास्त्रद्वयीयविधेयतावच्छेदकरूपावच्छिन्नोद्देश्यताकत्वमेतत्परिभाषाप्रवृत्तौ लिङ्गमिति स्वीकारेणादोषात् । यथा "तत्पुरुषे तुल्यार्थ" इत्यादौ लक्षणिकत्वेन प्रतिपदोक्तत्वेनाभिमतं यच्छास्त्रद्वयं "विशेषणं विशेष्येण" "तृतीया तत्कृत" इत्यादि तदीयविधेयतावच्छेदकं यत्तत्पुरुषत्वं तद्रूपावच्छिन्नोद्देश्यताकत्वं वर्तते, यथा वा "गातिस्थाघुपा" इतिशास्त्रे पा पान इत्यस्य विधेयतावच्छेदकमानुमानिकस्थान्यादेशभावकल्पनया "आदेच" इत्यस्य विधेयतावच्छेदकं च यदात्वं तद्रूपावच्छिन्नोद्देश्यताकत्वं वर्तते । एवम् "इकोगुणवृद्धी" इत्यत्र लाक्षणिकत्वेन प्रतिपदोक्तत्वेनाभिमतं "त्यदादीनाम" इत्यादि "मिदेर्गुण" इत्यादि शास्त्रद्वयं, तत्रैकविधेयतावच्छेदकस्यैवाभा-

यत्तु वर्णग्रहणे नैषा "आदेचः" ( ६-१-४५ ) इत्यत्रोपदेशग्रहणादिति, तत्तु तस्मिन्नेव सूत्रे शब्देन्दुशेखरे दूषितमिति तत एव द्रष्टव्यम्। अनित्या चेयं "भुवश्च महाव्याहृतेः" ( ८-२-७१ ) इति महाव्याहृतिग्रहणादिति अन्यत्र विस्तरः ॥ ११४ ॥

नन्वेवं देङो दोधातोश्च कृतात्त्वस्य घुसंज्ञा न स्यात्तथा मेङ आत्त्वे प्रणिमातेत्यादौ "नेर्गदनद" ( ८-४-१७ ) इति णत्वं न स्यात्तथा गै इत्यस्यात्त्वे "घुमास्था" ( ६-४-६६ ) इतीत्वं न स्यादत आह—

## गामादाग्रहणेष्वविशेषः ॥ ११५ ॥

भैरवी।

प्राचीनोक्तं खण्डयति—*यत्त्विति*। *उपदेशग्रहणादिति*। तद्धि चेता स्तोता इत्यत्र माभूदित्येवमर्थं कृतम्। यदि वर्णग्रहणेऽपि परिभाषाप्रवृत्तिस्तदा परिभाषयैव निर्वाहे तस्य वैयर्थ्यमेव स्यादिति। *दूषितमिति*। ओत्सूत्रस्थभाष्यविरोधेन उपदेशग्रहणस्य अन्यार्थत्वप्रदर्शनेन दूषितमित्यर्थः।

ननु इयं वर्णग्रहणेऽपि प्रवर्त्तते चेदत्र "आदेच उपदेश" इत्यादिसूत्रविहितमात्वं तत्र उवङ् न स्यादत आह—*अनित्येति*। भुवश्चेति*। "भुव" इत्यनेन महाव्याहृतेर्विकल्पेन रेफो विधीयते। तत्र महाव्याहृतेर्ग्रहणं भूशब्दस्य जसन्तस्य व्यावृत्त्यर्थम्। तस्य तु लाक्षणिकत्वादेव व्यावृत्तौ तद्ग्रहणं सत्तत्र ज्ञापकम् ॥ ११४ ॥

*नन्वेवम्*। लक्षणप्रतिपदोक्तपरिभाषास्वीकारे। *न स्यादिति*। सर्वेषां लाक्षणिकत्वादिति शेषः। *अविशेष इति*। व्यवस्थापकपरिभाषया विशेषस्यैव ग्रहणमिति नेत्यर्थः।

तत्त्वप्रकाशिका।

वेनाप्रवृत्तिः। •

नच "गतिकारकेतर" इत्यत्र प्रतिपदोक्तत्वेन लाक्षणिकत्वेन चाभिमतं यत् "कुगति" "अनेकमन्यपदार्थे" इति शास्त्रद्वयं तदीयविधेयतावच्छेदकसमासत्वावच्छिन्नोद्देश्यताकत्वस्य सत्वात् तदवस्थमिति वाच्यम्। गतिकारकपूर्वस्यैवभाष्ये पठितत्वेन पूर्वपदाभावेन समासाक्षेपासम्भवात्। एतद्वार्तिकानियमलभ्यार्थानुवादकत्वाद्गतिकारकेतरपूर्वपदस्येति कौमुदीपाठस्य।

अथवा यत्किञ्चिच्छास्त्रविशिष्टत्वं प्रतिपदोक्तत्वं वैशिष्ट्यञ्च स्वीयोद्देश्यतावच्छेदकरूपावच्छिन्नविधेयताकत्व स्वीयोद्देश्यतावच्छेदकसमर्पकज्ञानविषयीभूतानुपूर्वीविशिष्टविधेयताकत्व एतदुभयसम्बन्धेन, आनुपूर्वीवैशिष्ट्यंचस्वावच्छिन्नत्व स्वावच्छिन्नप्रयोज्योद्देश्यतानिरूपितत्व एतदन्यतरसम्बन्धेन। प्रथमसम्बन्धदानेन "गतिकारक" इत्यादौ न दोषः, द्वितीयसम्बन्धदानेन "विशेषणं विशेष्येण बहुलम्" इत्यादिलाक्षणिके न दोषः, द्वितीयसम्बन्धान्तर्गतावच्छिन्नत्वसम्बन्धदानेन पा पान इत्यादौ नाव्याप्तिः। एवं तदन्तर्गतस्वावच्छिन्नप्रयोज्योद्देश्यतानिरूपितत्व सम्बन्धदानेन "तृतीयात्कृता" इत्यादौ नाव्याप्तिरिति सुधियो विभावयन्तु। *दूषितमिति*। वस्तुतस्तु एतदप्रवृत्तिरेव ज्यायसी फलाभावात्। नच अद्योभवदित्यादौ एतत्परिभाषया वारणपर "ओत्" सूत्रस्थभाष्यविरोध इति वाच्यम्। तस्यैकदेश्युक्तित्वेनादोषात्। तस्य तु तदुक्तित्वं अगोभवदित्यादौ गौणमुख्यन्यायेन व्यापकसमाधानं च ददता भाष्यकृता ध्वनितमिति दिक् ॥ ११४ ॥

*गामादाग्रहणेष्विति*। दाशब्दस्य ग्रहणं यस्मिन्सूत्रे तद्दाग्रहणं गाश्चमाश्च दाग्रहणं च गामादाग्रहणानि। तथाच-गाविषये माविषये दापदघटिते सूत्रे च लुग्विकरणपरिभाषा लक्षणप्रतिपदोक्तपरिभाषा निरनुबन्धकपरिभाषा अर्थवद्ग्रहणपरिभाषा च नोपतिष्ठत इत्यर्थः।

अत्र च ज्ञापकं दैपः पित्त्वम् । तद्वयदाबिति सामान्यग्रहणार्थम् । अन्यथा लाक्षणिकत्वादेव विधौ तदग्रहणे सिद्धे किं निषेधे सामान्यग्रहणार्थेन पित्त्वेन । तेन चैकदेशानुमतिद्वारा सम्पूर्णपरिभाषा ज्ञाप्यते । इयं च लक्षणप्रतिपदोक्तपरिभाषानिरनुबन्धकपरिभाषा लुग्विकरणपरिभाषाणां बाधिका "दाधाघु" (१-१-२०) इति सूत्रे भाष्ये स्पष्टा । "गातिस्था" (२-४-७७) इति सूत्र इणादेशगाग्रहणमेवेष्यत इति न दोष इत्यन्यत्र विस्तरः ॥ ११५ ॥

ननु वृद्ध्यादिसंज्ञाः समुदाये स्युरत आह—

**प्रत्येकं वाक्यपरिसमाप्तिः ॥ ११६ ॥**

देवदत्तादयो भोज्यन्तामित्यत्र भुजि(१)वत् ॥ ११६ ॥

भैरवी ।

अत एव वक्ष्यति इयं चेत्यादिना । *अत्र च* । उक्तपरिभाषायां च । *अदाबितीति* । अत्रेति शेषः । *निषेध इति* । अदाबिति निषेध इत्यर्थः ।

ननु दैपः पित्वं दाधातुविषय एव ज्ञापकमस्त्वित्यत आह—*तेन चेति* । दैपः पित्त्वेन चेत्यर्थः । *परिभाषाणामिति* । तथा च-शाब्यसामान्यचिन्ता अत्राश्रयणीयेत्युक्तं भवति । क्वचित् तु विशेषस्य ग्रहणमित्याह—*गातिस्थेतीति* । *इष्यत इति* । अत्र मानं तु गापोर्ग्रहणे इणपिबत्योर्ग्रहणमिति भाष्यमेव । अर्थवत्परिभाषायाः सहचरितासहचरितयोरिति परिभाषायाश्च नेयं बाधिका। तेन दाश्धात्ववयवदाशब्दस्य "ह्वावामश्च" इतिसूत्रे सानुबन्धकह्वावासाहचर्य्यान्माङ्मेङोरेव ग्रहणम् । न मा मान इत्यस्येति व्यवस्थायाः सिद्धिः॥११५॥

"गातिस्था" इतिसूत्रे घुशब्दस्य संज्ञात्वात् तत्प्रसङ्गेन स्मृतवृद्धिसंज्ञाविषय आह—*प्रत्येकमित्यादि* । अत्र वाक्यशब्देन वाक्यजन्यशाब्दबोधीयोद्देश्यताविषयता उच्यते तस्याः समाप्तिश्च सम्यगाप्तिः सम्बन्धः पर्य्याप्तिलक्षणः प्रत्येकवृत्तिधर्म्मस्तत्पर्य्याप्त्यवच्छेदक इति यावत् । एवञ्च "वृद्धिरादैच्" इति संग्राहकवाक्याद्वृद्धिशब्दाभिन्ना आदैच् इति शाब्दबोधे जातेऽपि समुदायस्य संज्ञायां फलाभावात् प्रत्येकवृत्तिधर्म्मस्य वाच्यतावच्छेदकत्वकल्पनेन लक्ष्यस्य सिद्धिः कर्त्तव्या । तत्र दृष्टान्तमाह—*देवदत्तादय इति* । आदिना यज्ञदत्तविष्णुमित्रयोः परिग्रहः । अत्र समुदायस्य क्रियाकर्तृत्वं प्रत्येकस्य क्रियाकर्तृत्वं विना अनुपपन्नमेवेति भुजिक्रियायाः सम्बन्ध एकैकमात्रसम्बन्धी कल्प्यत इति ॥ ११६ ॥

तत्त्वप्रकाशिका ।

ततश्च धेटोऽपि घुसंज्ञा सिध्यति ।

यत्तु गामादानां ग्रहणं यत्र तत्रैतत्परिभाषाचतुष्टयं नोपतिष्ठत इति तन्न, "घुमास्था" इति सूत्रे कृतात्वस्य पै इत्यस्य ग्रहणापत्तेः ॥ ११५ ॥

*समुदाये स्युरिति* । अयम्भावः संज्ञास्थले सर्वत्र उद्देश्यतावच्छेदकपर्याप्त्यनुयोगितावच्छेदकीभूतो यो धर्मः स एव विधेयपर्याप्त्यनुयोगितावच्छेदको भवतीति नियमेनोद्देश्यतावच्छेदकपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तविधेयकत्वं संज्ञासु नियतमिति यावत् । तथा च "वृद्धिरादैच्" इत्यादौ द्वन्द्ववाच्यसाहित्यस्योद्देश्यतावच्छेदकत्वेन तत्पर्याप्त्यनुयोगितावच्छेदकं त्रित्वमिति तदेव वृद्धिसंज्ञापर्याप्त्यनुयोगितावच्छेदकं भवतीति प्रत्येकं संज्ञा न स्यादिति प्रत्येकं वाक्यपरिसमाप्तिः । "वृद्धिरादैच्" इत्यादौ साहित्यस्योपलक्षणत्वेन उद्देश्यतावच्छेदक आत्वं ऐत्वं औत्वं चेति तत्पर्याप्त्यनुयोगितावच्छेदकं तत्तद्व्यक्तित्वमिति तदेव वृद्धिसंज्ञादेः पर्याप्त्यनुयोगितावच्छेदकमिति प्रत्येकं संज्ञासिद्धिरिति भावः॥११६॥

---

( १ ) भुजिवदिति । अत्र षष्ठ्यन्ताद्वतिर्ज्ञेयः ।

नन्वेवं संयोगसंज्ञा समाससंज्ञाऽभ्यस्तसंज्ञा अपि प्रत्येकं स्युरत आह—

## क्वचित्समुदायेऽपि ॥ ११७ ॥

गर्गाः शतं दण्डयन्तामर्थिनश्च राजानो हिरण्येन भवन्तीत्यादौ दण्डनवत् । लक्ष्यानुरोधेन च व्यवस्था ॥ ११७ ॥

ननु "यूस्त्र्याख्यौ" ( १-४-३ ) इत्यत्र व्यक्तिपक्षे दीर्घनिर्देशादनण्त्वेन ग्राहकसूत्राप्राप्त्योदात्ताद्यन्यतमोच्चारणेऽन्यस्वर(१)कस्य संज्ञा न स्यादत आह—

## अभेदका गुणाः ॥ ११८ ॥

भैरवी ।

*नन्वेवम्* । प्रत्येकं वाक्यपरिसमाप्त्यङ्गीकारे । *स्युरिति* । तथा च दृषत्करोतीत्यत्र संयोगान्तलोपस्य राजपुरुष इति समासपूर्वपदस्यापि समाससंज्ञायां समासस्येत्यन्तोदात्तत्वस्य पूर्वपदेऽभ्यस्तसंज्ञायाः प्रत्येकपरिसमाप्तौ जुह्वतीत्यत्र उत्तरभागस्य "स्वरभिन्नस्य प्राप्नुवन् विधिरनित्य" इति अनित्यं यणादेशं परत्वाद्बाधित्वा "अभ्यस्तानामादिः" इत्युदात्तत्वे "उदात्तस्वरितयोर्यण" इतिस्वरितत्वस्य चापत्तिः स्यादिति भावः । *क्वचिदिति* । तथा च-पूर्वप्रतिद्वन्द्वितया लक्ष्यानुरोधेनेयमपि परिभाषा आश्रीयते ।

तत्र दृष्टान्तमाह-*गर्गा इत्यादिना* । अत्र समुदाये वाक्यपरिसमाप्तिश्च वाक्यजन्यशाब्दबोधीयविषयतायाः समुदायवृत्तिधर्मावच्छिन्नपर्य्याप्तिकत्वमित्यस्य कल्पनमिति । समुदाये वाक्यपरिसमाप्तौ हेतुमाह-*अर्थिनश्चेति* । इत्यादावित्यादिपदं तादृशवाक्यशेषपरम् । तेन च प्रत्येकं दण्डयन्ति दण्डिनश्चेह ग्रहणार्थो न तु निग्रहार्थ इति लब्धम् । शतमिह प्रधानं कर्म्म स्वीकारविशेषानुकूलव्यापारस्य धात्वर्थत्वात अपादानस्थानापन्ना गर्गा अप्रधानं कर्म्म यदि अत्र प्रत्येकं गर्गेभ्यो ग्रहणं भवेत्तदा प्रधानस्य शतस्याप्रधानगर्गानुरोधेनावृत्तिः स्यात् । न हि प्रधानस्याप्रधानानुरोधित्वमुचितमिति ।

ननु उक्तयोर्न्याययोः कथं व्यवस्थेत्यत्र आह-*लक्ष्यानुरोधेनेति* । अत्र एव क्वचिदुक्तप्रकारद्वयमपि न, यथा "अट्कुप्वाङ्" इति सूत्रे हि व्यस्तैर्यथासम्भवं मिलितैश्चेति व्याख्यातम् ॥ ११७ ॥

संज्ञाप्रसङ्गादाह-*ननु "यूस्त्र्याख्य" इति* । जातिपक्षेऽस्यानुपयोगो वक्ष्यमाण एवेत्याशयेन । *व्यक्तिपक्ष इति* । अभेदका इत्यस्य स्वरूपेणोपात्ता अपीत्यादिः । एतेन यत्फलितं तदाह-

तत्त्वप्रकाशिका ।

*प्रत्येकं स्युरिति* । "वृद्धिरादैच्" इत्यादाविव "उभे अभ्यस्तम्" इत्यादावपि द्वित्वादिकमुपलक्षणं स्यादिति भावः । *समुदाये वाक्यपरिसमाप्तिः* । "उभे अभ्यस्तम्" इत्यत्रोभे ग्रहणसामर्थ्यादुभपदार्थतावच्छेदकं द्वित्वं "सह सुपा" इत्यत्र सहग्रहणसामर्थ्यात्सहार्थसाहित्यम् "हलोनन्तरा" इत्यत्रानन्तरा इत्युक्तेर्हल इत्यत्र एकशेषप्रयोजकीभूतं साहित्यं च विवक्षितमिति न प्रत्येकं संज्ञेति । *अर्थिनश्च राजान इति* । तथा च शतस्य विधेयत्वेन प्राधान्यात्तस्य अप्रधानगर्गानुरोधेन आवृत्तिर्न न्याय्येति भावः ॥ ११६ ॥

*संज्ञा न स्यादिति* । अयं भावः-"स्वंरूपम्" इतिसूत्रे रूपपदेन श्रावणप्रत्यक्षविषयतावच्छेदकधर्मस्य ग्रहणादत्त्वादिजातेरिव उदात्तत्वनिरनुनासिकत्वादेरपि ग्रहणे "यूस्त्र्याख्यौ" इत्यादौ निरनुनासिकोदात्तादिग्रहणे उदात्तत्वविशिष्टनिरनुनासिकत्वविशिष्ट इत्याद्यवच्छिन्ने एव स्वंरूपमित्यनेन शक्तेर्बोधितत्वेन अनुनासिकानुदात्तादेर्नदी संज्ञा न स्यादिति ।

---

( १ ) अन्यस्वरकस्येति । अनुदात्तादेरुपलक्षणमिदम् ॥

असति यत्ने स्वरूपेणोच्चारितो गुणो न भेदको न विवक्षित इत्यर्थः। अत्र च "अस्थिदधि" (७-१-१८) इत्यादावनङादेरुदात्तस्यैवोच्चारणेन सिद्ध उदात्तग्रहणं ज्ञापकम्। स्वरूपेणोच्चारित इत्युक्तेरनुदात्तादेरन्तोदात्तादित्युदात्तादिशब्दोच्चारणे विवक्षैव। "उञः" (१-१-१७) "ऊँ" (१-१-१८) इत्यत्र अननुनासिक एव उच्चारणीये यत्नाधिक्येनानुनासिकोच्चारणाद्विवक्षा बोध्या। "पथिमथ्यृभुक्षाम्" (७-१-८५) इत्यादौ स्थान्यनुरूपतयाननुनासिक एवोच्चारणीय निरनुनासिकोच्चारणात्तद्विवक्षा। एतदर्थमेवासति यत्ने इत्युक्तम्।

न चैवमस्थ्यादीनां "नब्विषयस्य" (फि० २-३) इत्याद्युदात्ततया अन्त्यादेशस्यानङः स्थान्यनुरूपेऽनुदात्त एवोच्चारणीय उदात्तोच्चारणं विवक्षार्थं भविष्यतीति कथमस्य ज्ञापकत्वमिति वाच्यम्। परमास्थिशब्दादावन्तोदात्त उदात्तगुणकस्यापि स्थानित्वेन विवक्षायां मानाभावात्। चतसर्य्याद्युदात्तनिपातं करिष्यते वधादेश आद्युदात्तनिपातनं करिष्यते

भैरवी।

*असतीत्यादिना। अत्र च*। अस्यां परिभाषायां च। आदिना "चतुरनडुह" इत्यस्य संग्रहः। विशेषणस्य फलमाह-*स्वरूपेति*। शब्दोच्चारण इत्यनेन यत्र उदात्तादिशब्दस्य यः संज्ञी तत्तद्गुणविशिष्टो यस्तस्यैव यत्रोच्चारणं तत्राविवक्षा अस्त्येव, यत्र तु यत्नस्तत्र विवक्षा भवत्येव। अत्र दृष्टान्तमाह-*उञ ऊमिति*। उच्चारणीयमिति स्थान्यनुरूपत्वादित्यादिः। *एतदर्थमेव*। उक्तोभयार्थमेव। इदं सम्प्रदायमतेन विधेयाणविषये विशेषस्य वक्ष्यमाणत्वात्।

स्थान्यनुरूपोच्चारणस्थले विवक्षास्वीकारे "अस्थि" इतिसूत्रघटकोदात्तशब्दस्य ज्ञापकत्वं न सम्भवतीत्याशङ्कते-*न चैवमिति। ज्ञापकत्वमिति*। स्वस्मिन्नचारितार्थ्यादिति शेषः। *अस्य*। उदात्तशब्दोच्चारणस्य। *अन्तोदात्ते*। समासस्वरेण अन्तोदात्ते। अपिरसमासस्थलीयानुदात्तस्य समुच्चायकः। एवं वा समासेऽनुदात्तगुणक एव स्यादितिसूत्र उदात्तशब्दोच्चारणमावश्यकमिति भावः।

ननु निपातनस्थले यत्र विशेषाभावाच्चतसरीत्यादिभाष्यासङ्गतिरत आह-*चतसर्य्या-

तत्त्वप्रकाशिका।

*गुणा अभेदका इति*। अस्याः "स्वंरूपम्" इतिपरिभाषाया अपवादभूतत्वेन तत्र रूपपदेन अनुनासिकत्वनिरनुनासिकत्वोदात्तत्वानुदात्तत्वस्वरितत्वातिरिक्तश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्ने एव शक्तिबोधनेन अनुनासिकानुदात्तादेरपि विसंज्ञासिध्यतीतिभावः। एतन्मूलकमेव—*असतियत्न इति*। अनुनासिकत्वनिरनुनासिकत्वोदात्तत्वानुदात्तत्वस्वरितत्वानि गुणाः "स्वंरूपम्" इतिसूत्रे रूपपदेनाविवक्षिता इति परिभाषार्थः। अक्षरार्थस्तु गुणा अभेदका अव्यावर्तकाः "स्वंरूपम्" इतिसूत्रे रूपपदेनाग्रहणद्वारेति। *ज्ञापकमिति*। नच ज्ञापितेऽपि पुनरप्युदात्तग्रहणं व्यर्थम्। "भाव्यमानेन" इतिनिषेधेन "गुणा अभेदका" इत्यस्याप्रवृत्तेरिति वाच्यम्। तस्यां परिभाषायां स्वरातिरिक्तत्वेन सङ्कोचेनादोषात्। अत एव "बहुवचने झल्येत्" इत्येकारः वृक्षेभ्य इत्यादौ उदात्तः, पूर्वेभ्य इत्यादौ अनुदात्तः, चैत्रेभ्य इत्यादौ स्वरितश्च भवतीति दिक्। *अनुनासिके एवोच्चारणीये इति*। नच पथीयतेः क्विपि पथा इत्यादौ स्थानिनिरनुनासिकस्यापि सम्भवादिदमसङ्गतमिति वाच्यम्। तस्यानभिधानेनादोषात्। स्पष्टं चेदं "पथिमथ्यृभुक्षामात्" इतिसूत्रे शेखरे ततसूत्रस्थशब्दरत्नेचेति बोध्यम्। *स्थान्यनुरूपेति*। नच हनधातोरेकाच्त्वेनान्तोदात्त आद्युदात्तश्चेत्याद्युदात्तवधादेशो-

पदादयोऽन्तोदात्ता निपात्यन्ते सहस्य स उदात्तो निपात्यते इत्यादि-भाष्यं त्वेकश्रुत्याष्टाध्यायीपाठे क्वचिदुदात्ताद्युच्चारणं विवक्षार्थमित्याशयेन । त्रैस्वर्य्येण पाठे इति पक्षे तु ज्ञापकपरं भाष्यमिति कैयटादयः ।

परे तु निपातनं सामान्यादृशे प्रयोगे प्राप्तेऽन्यादृशप्रयोगकरणं तद्रूपात् यत्नात्तत्र तत्रोदात्तादिविवक्षा । "तिसृचतसृ" इत्यत्र द्वन्द्वप्रयुक्तेऽन्तोदात्त उच्चारणीय आद्युदात्तोच्चारणमन्यत्र स्थान्यनुरूपे स्वर उच्चारणीये तत्तदुच्चारणं विवक्षार्थम् । सम्पूर्णाष्टाध्याय्याचार्य्येणैकश्रुत्या पठितेत्यत्र न मानम् ।

क्वचित्पदस्यैकश्रुत्यापि पाठो यथा "दाण्डिनायनादि" सूत्र ऐक्ष्वाकेति । यद्यप्यध्येतार एकश्रुत्यैवाङ्गानि पठन्ति ब्राह्मणवत्तथापि व्याख्यानतोऽनुनासिकत्वादिवदुदात्तनिपातनादिज्ञानमित्याहुः । विधेयाण्विषये त्वप्रत्यय इति निषेधान्न गुणाभेदकत्वेन सवर्णग्रहणम् । अत एव घटवदित्यादौ मतो-

भैरवी ।

द्युदात्तेति* । नन्वेवम् "अस्थि" इतिसूत्रघटकोदात्तशब्दोच्चारणस्य ज्ञापकत्वासम्भवोऽत्रापि एकश्रुत्या पाठे कर्त्तव्य उदात्तगुणकस्यानङ उच्चारणेनैव अविवक्षायाः सम्भवादुदात्तशब्दोच्चारणं व्यर्थमेवेत्यत आह-*त्रैस्वर्य्येणेत्यादि । पाठे इति* । अष्टाध्याय्यामिति शेषः । कैयटादय इत्यनेन सूचितामरुचिं प्रकटयन्नाह-*परे त्वित्यादिना* । सामान्येनोक्तमर्थं विशिष्य दर्शयति-*तिसृ इति* । अत्रापिशब्दो भ्रमात्पतितः । *अन्यत्र* । वधादौ अस्य स्थानी हन्धातुः स यथानुदात्तस्तथैवानुदात्ते वधशब्दे उच्चारणीये इति भावः । *तत्तदुच्चारणम्* । उदात्तोच्चारणमित्यर्थः । यथा हन्धातोरनुदात्तत्वात्तदादेशोऽपि तेन तुल्योऽनुदात्त उच्चारयितुमर्हः । एवं "पादस्य पदाज्याति" इतिसूत्रविहितादेशः "स्वाङ्गशिटाम्" इत्याद्युदात्तस्य स्थानिन आद्युदात्त एवोच्चारणयोग्यः । एवं चादेराकृतिगणत्वात् निपातत्वेनाद्युदात्तः सहशब्दः तस्य स्थाने यः सादेशः स उदात्तानुदात्तोभयस्थानिकत्वेन स्वरितत्वयोग्यः । भाष्यविरोधपरिहारायाह-*क्वचिदिति । एकश्रुत्यापीत्यपिना त्रैस्वर्य्यपरिग्रहः-*ऐक्ष्वाकेतीति* । अत्र हि इक्ष्वाकुशब्दात् "जनपदशब्दात्" इत्यञ्प्रत्यये तदन्त आद्युदात्त एक ऐक्ष्वाकशब्दः अपर इक्ष्वाकुषु जात इत्यर्थे "कोपधादण्" इतिसूत्रविहिताणन्तोदात्त उभयोरप्येतत् निपातनम् । उकारस्य लोपोऽत्र निपात्यते । यदि अत्रैकश्रुत्या पाठस्तदात्र निपातनमाद्युदात्तस्य उतान्तोदात्तस्येति संदेहे सत्येकशेषेणोभयोरप्येतत् निपातनमिति समाधिर्युक्त एव ।

यद्यपि अत्र द्वन्द्वे समासान्तोदात्तत्वे शेषनिघाते च शङ्का अयुक्तैव, तथापि तदीयविग्रहवाक्येऽयं विचारो बोध्यः । यद्यपि पाणिनेस्तत्र तत्र तत्स्वरस्य पाठस्तथापि अध्येतॄणामेकश्रुत्यैव पाठदर्शनेनोदात्तादिज्ञानाभावात् कथं स्वरनिर्णय इत्यत आह-*यद्यपि इति* ।

ननु "यूस्त्र्याख्यौ" इत्यादावनुवादे सर्वसंग्रहार्थमियं परिभाषावश्यमारब्धव्या "अणुदित्" सूत्रस्य तु नात्र व्यापारोऽनण्त्वात्, एवञ्च विधेयाण्विषयेऽस्य प्रवृत्त्यापत्तावतिप्रसङ्ग इत्यत्र आह-*विधेयेति । इति निषेधादिति* । 'अप्रत्यय' इत्यनेनैकदेशानुमत्या बोधिता या 'भाव्यमानेन सवर्णानां ग्रहणं न' इति परिभाषा, तया निषेधादित्यर्थः । *अत एव* । भाव्यमानेनेति परिभाषास्वीकारादेव । *अत एव* । मतुपो मकारस्यानुनासिकत्वका-

तत्त्वप्रकाशिका ।

चारणमपि संभवतीति अन्तोदात्ते उच्चारणीये आद्युदात्तोच्चारणंविवक्षार्थमित्यसङ्गतमिति वाच्यम् । "धातोः" इत्येनेनान्तोदात्त एव पठनीये आद्युदात्तोच्चारणस्य विवक्षार्थत्वात् । हनधातो-

र्मस्य नानुनासिको वकारः । अत एव "तद्वानासाम्" ( ४-४-१२५ ) इति सूत्रनिर्देशः । अन्यथा "प्रत्यये भाषायाम्" इति नित्यमनुनासिकः स्यात् । जातिपक्षे तु नास्योपयोग इति बोध्यम् । यू इत्यादौ दीर्घमात्रवृत्तिजातिनिर्देशान्न क्षतिरिति अन्यत्र विस्तरः ॥ ११८ ॥

ननु "सर्वनामानि" ( १-१-२७ ) इत्यत्र णत्वाभावनिपातनेऽपि लोके सणत्वप्रयोगस्य साधुत्वं स्यादत आह—

**बाधकान्येव निपातनानि ॥ ११९ ॥**

तत्तत्कार्य्ये नाप्राप्ते निपातनारम्भात् । "पुराणप्रोक्तेषु" ( ४-३-१०५ )

भैरवी ।

राभावादेव । यदस्याः परिभाषाया अवतरणे व्यक्तिपक्ष इत्युक्तं तस्य फलमाह—*जातिपक्ष इति । नास्योपयोग इति* । एतेन जातिपक्षस्य आवश्यकता तेनैव सकललक्ष्यसंग्रह इति ध्वनितम् ।

ननु यदि जातिपक्षस्यैव स्वीकारस्तदा यू इत्यत्रातिप्रसङ्ग इत्यत आह—*यू इत्यादाविति* । एतेनाश्रीयमाणो गुणो भेदक इति परिभाषान्तरमिति कस्यचिदुक्तिरसङ्गतेति सूचितम् ॥ ११८ ॥

"यूस्त्र्याख्यौ" इतिसूत्रे प्रसक्तस्य दोषस्य परिहारं कृत्वा तत्प्रसङ्गेन अन्यत्रापि सूत्रेऽतिप्रसङ्गं परिहर्त्तुमाह—*नन्विति*। अत्र "पूर्वपदात्" इति णत्वं प्राप्तं तदभावस्य निपातनेऽपि लौकिकप्रयोगे णत्वापत्तिरित्यर्थः । "अट्कुप्वाङ्" इतिसूत्रस्य तु न प्राप्तिः। समानपदत्वाभावात् । तद्धि निमित्तानधिकरणनिमित्तिमत्पदाघटितत्वम् निमित्तानधिकरणत्वं निमित्तानवयवकत्वम् । निमित्तिमत्वं नकारावयवकत्वम् । पदत्वञ्च न पदसंज्ञाकत्वम् गन्धर्वगानमित्यादौ सुबुत्पत्तेः प्राक्कृदन्तस्य गानेत्यस्य समासेन पदसंज्ञाया अभावेन णत्वापत्तेः । किन्तु विभक्तीतरानपेक्षया अर्थबोधकत्वेन दृष्टत्वम् । मातृभोगीण इत्यत्र भोगिणेत्यस्य प्रत्ययमात्रस्य वा न तादृशपदत्वमितिणत्वस्य सिद्धिः ।

न चैवमपि सर्वनाथप्रभुणेत्यत्र णत्वं न स्यात् निमित्तानधिकरणेन निमित्तिमता पदेन नाथेत्यनेन घटितत्वादिति वाच्यम् । निमित्तानधिकरणत्वनिमित्तमत्वाभाववद्यत्पदं तदवयवभिन्नस्य नस्य णत्वमित्यस्मिन् समुदितार्थे तात्पर्य्यात् । पदत्वञ्च पूर्वोक्तमेव । एवञ्च सर्वनाथप्रभुणेत्यस्य समुदायस्योभयवत्त्वेन तदवयवस्य नादेशावयवनस्य तद्भिन्नत्वात् णत्वस्य सिद्धिः। तद्घटकनाथशब्दावयवस्य तु न, नाथेत्यत्रैकसत्त्वेऽपि द्वयं नास्तीतिरीत्या तदुभयाभावस्य सत्त्वेन तादृशोभयाभाववत्पदावयवत्वस्य सत्त्वात् । *तत्तत्कार्य्यं इति* । एवमभिधानेनास्याः परिभाषाया येन नाप्राप्तन्यायमूलकत्वमिति ध्वनितम् ।

ननु बाधकान्येवेति नियमस्वीकारे "सायंचिरम्" इतिसूत्रेण पुराशब्दाद्भवार्थे ट्युप्रत्यये

तत्त्वप्रकाशिका ।

राद्युदात्तेऽपि "धातोः"इत्यनेनान्तोदात्तसामर्थ्यादेव उपदेशत्वावच्छेदेन एवोच्चारणीये आद्युदात्तोच्चारणस्य विवक्षार्थत्वाद्वेति दिक् । *अत एव तद्वानासामिति* । न च "तसौ मत्वर्थे" इत्यत्र दकारस्यापि प्रश्लेषेण तदो दान्तत्वेन भसंज्ञया अनुनासिकाप्राप्तिरिति न निर्देशाऽसङ्गतिरिति वाच्यम् । तद्वानिति असुब्वत इति "प्रत्ययस्थात्कात्" इतिसूत्रोदाहृतोपलक्षणत्वेनादोषात् ॥ ११८ ॥

*णत्वाभावनिपातन इति* । न च कृतणत्वेन यत्र संज्ञावगमस्तत्रैव "पूर्वपदात्" इति णत्वं भवति । अत एव रघुनाथादिशब्दे णत्वं न, तथा च प्रकृते कृतणत्वेन संज्ञावगमाभावा-

इति निपातितपुराणशब्देन पुरातनशब्दस्य बाधः प्राप्तोऽपि पृषोदरादित्वा-न्नेति बोध्यम्। पुराणेति पृषोदरादिः पुरातनेति चेत्यन्ये। इयं सर्वादिसूत्रे भाष्ये स्पष्टा। अबाधकान्यपि निपातनानीति तु भाष्यविरुद्धम्॥ ११९॥

ननूखधातोर्द्वित्वे स्वत एव ह्रस्वत्वात् पूर्वमभ्यासह्रस्वत्वाप्रवृत्तौ हलादिःशेषे सवर्णदीर्घे ह्रस्वापत्तिरत आह—

## पर्जन्यवल्लक्षणप्रवृत्तिः॥ १२०॥

एवं च ह्रस्वस्यापि ह्रस्वत्वे कृते 'लक्ष्ये लक्षणस्य' इति न्यायेन न पुनर्ह्रस्वः। तदुक्तम्—"इको झल्" (१-४-६) इति सूत्रे भाष्ये-कृतकारि खल्वपि शास्त्रं पर्जन्यवदिति। सिद्धेऽपि ह्रस्वादिकारीत्यर्थः। न च लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिरित्यत्र न मानमिति वाच्यम्, "समो वा लोपमेके" इति लोपेनैकसकारस्य, द्वित्वेन द्विसकारस्य, पुनर्द्वित्वेन च त्रिसकारस्य सिद्धौ "समः सुटि" (८-३-५) इति सूत्रस्यैव मानत्वात्। "सम्प्रसारणाच्च (६-१-१०८) सिचि वृद्धिः" (७-२-१) इत्यादौ भाष्ये स्पष्टमुक्तत्वाच्च। अत्र 'विकारकृतो लक्ष्यभेदो न' इति "सिचि वृद्धिः" इति

भैरवी।

तस्य तुडागमेऽवश्यंप्राप्ते तदभावनिपातनेन पुरातनशब्दस्य बाध एव प्राप्नोतीत्यत आह—*पुराणेति पृषोदरादित्वात्*। तस्मिन् गणे तुट्सहितस्य पाठकल्पनात्।

अन्ये तु पुरातनशब्दः "सायंचिरम्" इतिसूत्रसिद्ध एव। पुराणशब्द एव पृषोदरादिः कल्पनीयः। एवं हि निपातनद्वयकल्पना नेति लाघवमित्याशयेन आह—*पुराणेति*। कैयटाद्युक्तिं खण्डयति—*अबाधकेति*। *भाष्यविरुद्धमिति*। बाधकान्येव हि निपातनानीति तत्रोक्तेः॥ ११९॥

संज्ञाशब्दे निपातनप्रसङ्गेन संज्ञान्तरस्य स्मृतौ अभ्याससंज्ञापि स्मृतेति तदुद्देश्यककार्यविषये आह—*नन्विति*। *पर्जन्यवदिति*। यथा पर्जन्यस्य सिद्धेऽपि जलौघे प्रवृत्तिस्तथासिद्धेऽपि कार्य्ये स्वोद्देश्यतावच्छेदकधर्म्मसत्वे लक्षणस्य प्रवृत्तिर्भवतीति तदर्थः। *एवञ्च*। एतत्परिभाषास्वीकारे च। एवञ्च अयं न्यायो लौकिक इति ध्वनितम्। एतस्य आश्रयणादेव "प्रवाहणस्य ढे" इत्युत्तरपदवृद्धिविधानमपि चरितार्थम्। इयं परिभाषा भाष्यकारसम्मतापीति आह-*तदुक्तमिति*।

नन्वेतस्य न्यायस्य स्वीकारे लक्षणे प्रवृत्ते पुनस्तस्य लक्षणस्य प्रवृत्त्यभावसम्पादकं यत् 'लक्ष्ये लक्षणं सकृदेव प्रवर्त्तते' इति वचनं तन्निर्मूलमेव भविष्यतीति आशङ्कानिराकरणद्वारा तमपि न्यायं दर्शयितुमाह-*न चेति*। *समोवेति*। संस्कर्त्तेत्यादावित्यादिः। भाष्ये स्पष्टमुक्तत्वाच्चेति। तत्र हि-उदवोढामित्यत्र "सहिवहोरोद" इतिसूत्रात्परत्वात् "वदव्रज" इति वृद्धौ वर्णपदसामर्थ्येनाकारस्यौत्वं साधितम्। ततश्च पुनर्ढलोपस्यासिद्धत्वात् हलन्तलक्षणा वृद्धिः प्राप्ता सा लक्ष्ये लक्षणमितिन्यायेन वारिता विकारकृतलक्ष्यभेदो नेत्यतः सम्प्र-

तत्त्वप्रकाशिका।

णत्वप्राप्तिरेव नेतीदमसङ्गतमिति वाच्यम्, "सर्वनामानि" इति आधुनिकसङ्केतत्वेन, पाणिनिर्यदि कृतणत्वेन संज्ञाक्रियेत तर्हि कृतणत्वे संज्ञावगमो भविष्यतीति णत्वाभावनिपातनस्य सङ्गतत्वात॥ ११९॥

भाष्यात् प्रतीयत इत्यन्यत्र विस्तरः ॥ १२० ॥

ननु स्यन्दूधातोः स्यन्त्स्यतीत्यादौ सकारादिविशेषापेक्षत्वादात्मनेपद-निमित्तत्वाभावनिमित्तत्वाच्च "न वृद्भ्यश्चतुर्भ्यः" (७-२-५९) इति निषेधस्ये बहिरङ्गत्वेन अन्तरङ्गत्वादूदिल्लक्षणस्येड्विकल्पस्यापत्तिरत आह—

**निषेधाश्च बलीयांसः ॥ १२१ ॥**

अन्तरङ्गादुपजी(१)व्यादपि बलीयांस इत्यर्थः । 'चतुर्भ्य' इति तु स्पष्टार्थमेव । अत एव तत्प्रत्याख्यानं भाष्योक्तं सङ्गच्छते । अत एव सवर्णसंज्ञादेर्निषेधविषये न विकल्पः । अन्यथा मीमांसकरीत्या विधेरुपजीव्यत्वेन प्राबल्यात्तस्य सर्वथा बाधानुपपत्त्या दुर्वारः स इति मञ्जूषायां विस्तरः । अत एव "द्वन्द्वे च" (१-१-३१) "विभाषा जसि" (१-१-३२) इति चरितार्थम् ।

भैरवी ।

सारणमित्याह-*अन्यत्र* । *अन्यत्रेति* । उद्योतादौ ॥ १२० ॥

धातुसम्बन्धिकार्य्यविधानप्रसङ्गादाह-*नन्विति*। *धातोरिति*। तत्प्रकृतिकत्वं षष्ठ्यर्थः । ननु "न वृद्भ्य" इत्यस्य सकारादित्ववदूदिल्लक्षणस्यापि वलादित्वापेक्षत्वेन समत्वमत आह-*आत्मन इति* । एतच्च अल्पापेक्षमन्तरङ्गमिति प्राचीनरीत्या । *निषेधाश्चेति* । निषेधशास्त्रमित्यर्थः ।

ननु उक्तफलस्य चतुर्ग्रहणसामर्थ्यादेव सिद्धौ न्यायानुपयोग इत्यत आह—*चतुर्भ्य इतीति* । उपजीव्यादपि निषेधशास्त्रस्य प्राबल्ये साधकमाह—*अत एवेति* । उपजीव्यादपि प्राबल्यादेव । *अत एव* । उक्तार्थत्वादेव । *मीमांसकरीत्येति* । यजतिषु ये यजामहं करोति नानुयाजेषु इत्यादौ पर्य्युदास एव, न प्रसज्यप्रतिषेध इति तैरुक्तम् । एवञ्च उपजीव्यान्निषेधस्य प्राबल्यानङ्गीकारे "नाज्झलौ" इतिसूत्रे "तुल्यास्य" इतिसूत्रस्य उपजीव्यत्वाद्विकल्पापत्तिरिति भावः । *अत एव । निषेधस्य प्राबल्येन विकल्पाभावादेव । अन्यथा

तत्त्वप्रकाशिका ।

*इत्यन्यत्र विस्तर इति* । तल्लक्ष्यत्वं च स्वीयप्राथमिकप्रवृत्तौ उद्देश्यतावच्छेदकावच्छिन्नत्वेन आश्रीयमाणो यावान् शब्दसमुदायः तद्घटको यस्तद्घटकमात्रोद्देश्यकविकारागमातिरिक्तस्तदघटितत्वे सति स्वीयप्राथमिकप्रवृत्त्युत्तरकालिकप्राप्तिभिन्नप्राप्तिविषयाघटितत्वम् । विकारे स्वघटकमात्रोद्देश्यकविशेषणदानेन काण्डे इत्यादौ पूर्वान्तत्वेन प्रातिपदिकत्वमादाय पुनर्ह्रस्वशङ्कापरमभाष्यं सङ्गच्छते । विकारातिरिक्तत्वविशेषणदानेन उदवोढामित्यादौ पुनर्न वृद्धिः । आगमातिरिक्तत्वविशेषणदानेन सर्वेषामित्यादौ पुनर्नसुट् । द्वितीयविशेषणदानेन एधेत भूयास्तामित्यादौ "लिङः सलोप" इति सलोपसिद्धिः । स्वीयप्राथमिकप्रवृत्तिसमकालिकत्वं विशेषणविशेषणं स्वीयप्राथमिकप्रवृत्त्युत्तरकालिकप्राप्तिभिन्नत्वविशेषणदानेन पदत्सु इत्यादौ पुनश्चर्त्वसिद्धिः । अन्यथा "खरि च" इत्यत्र पदस्येत्यधिकारात्स्वीयप्राथमिकप्रवृत्तिसमकालिकप्राप्तिविषयाघटितत्वस्य सत्त्वेन पुनश्चर्त्वं न स्यात् । निरुक्तविशेषणदानेन स्वीयप्राथमिकप्रवृत्त्युत्तरकालिकप्राप्तिभिन्ना प्राप्तिः पुनः प्रवृत्तेः प्राक्कालिकीप्राप्तिः तद्विषयघटितत्वेनेति न दोषः ॥ १२० ॥

*चरितार्थमिति* । अन्यथा उत्सर्गनिषेधयोर्विकल्पेन 'सर्वनामानि' 'द्वन्द्वेच' इत्याभ्यामेव

---

(१) उपजीव्यादपि । विधिशास्त्राभावे निषेधरूपाभावस्य प्रतियोग्यप्रसिद्ध्या अभावस्याप्रसिद्धिः स्यादिति भावः ।

विध्युन्मूलनाय प्रवृत्तिरस्या बीजम् । "न लुमता" ( १-१-६३ ) "कमेर्णिङ्" ( ३-१-३० ) इत्यनयोर्भाष्ये स्पष्टैषा ॥ १२१ ॥

ननु अत्यन्तस्वार्थिकानामर्थप्रत्यायकत्वरूपप्रत्ययत्वानुपपत्तिरत आह—

## अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे ॥ १२२ ॥

यस्यार्थः प्रकृत्या प्रत्याय्यते (१)सोऽपि प्रत्यय इत्यस्याप्यङ्गीकारात्तस्य प्रत्ययत्वमिति न दोषः । स्वार्थ इत्यस्य स्वीयप्रकृत्यर्थ इत्यर्थः । महासंज्ञाबलादर्थाकाङ्क्षायामन्यानुपस्थितिरस्या बीजम् । "सुपि स्थः" ( ३-२-४ ) इत्यादिसूत्रेषु भाष्ये स्पष्टैषा ॥ १२२ ॥

भैरवी ।

"द्वन्द्वे च" इत्यनेनैव विकल्पलाभे तद्वैयर्थ्यं स्पष्टमेव । न च "विभाषा जसि" इतिसूत्रस्यैव "विभाषा"इतिनियमार्थमस्त्विति वाच्यम्,"विधिनियमसम्भवे" इतिन्यायेन विध्यर्थकत्वकल्पनाया उचितत्वात् । इयं च परिभाषा लोकसिद्धन्यायमूलिका इत्याह-*विध्युन्मूलनायेति* । प्राप्तस्य विधेर्निवर्त्तनायेत्यर्थः । एतेन येन नाप्राप्तन्यायेन विधिशास्त्रस्य निषेधशास्त्रेण बाध इति दर्शितम् । लोकेऽपि यस्य उन्मूलनाय यस्य प्रसक्तिर्भवति ततस्तस्य बलवत्वं कंसात् कृष्णस्येव । *नलुमतेति* । आद्ये "उत्तरपदत्वे चापदादिविधौ" इति वचनस्य प्रत्याख्यानसमयेऽसर्वनामस्थान इति प्रतिषेधो 'निषेधाश्च बलीयांस' इति न्यायेन प्राप्नोतीति, अन्त्येऽपि णिङोऽनुबन्धयोः "णेरनिटि" इत्यत्र णिसामान्यग्रहणार्थत्वेन सावकाशत्वेन प्रतिषेधबलीयस्त्वात्"क्ङिति च" इति प्रतिषेधः प्राप्नोतीति चोक्तम्, इक्प्रकरणाददोष इति त्वन्यत्॥१२१॥

"कमेर्णिङ्" इतिसूत्रस्योक्तत्वेन तस्य प्रत्ययस्य स्वार्थिकत्वस्य इष्टत्वेन तत्प्रसङ्गेन आह—*ननु इति* । *अनिदिष्टा इत्यादि* । अनिर्दिष्टो विशेषतः, शब्दविशेषेणाप्रतिपादितोऽर्थो येषामित्यर्थः ।

ननु अर्थेन सह शब्दस्य वाच्यवाचकभावात्मकसम्बन्धनिर्णयोऽन्वयव्यतिरेकाभ्यां भवति स च अन्वयव्यतिरेकोऽत्यन्तस्वार्थिकेषु न सम्भवतीत्यत आह—*यस्यार्थ इति* । यदर्थत्वेनाभिमत इत्यर्थः । एतेन विकारागमयोर्न प्रत्ययसंज्ञेत्युक्तं भवति । प्रकृत्या प्रत्याय्यत इत्यनेन यथा लोहितान्मणाविति कनोनुच्चारणेऽपि लोहितशब्देन सोऽर्थोभिधीयतेऽतः कनः प्रत्ययत्वन्नैवम्प्रकारो विकारागमस्थलेऽस्ति विकारागमयोरभावे प्रकृतिप्रयोगाभावादिति भावः । अत एव महासंज्ञाकरणेन स्वस्वप्रकृत्यन्यतरार्थप्रत्यायकस्य प्रत्ययसंज्ञेति अन्यत्र उक्तम् ।

ननु अत्यन्तस्वार्थिकस्यार्थ एव अप्रसिद्ध इति स्वार्थ इति अनुपपन्नमत आह—*स्वार्थ इत्यस्येति* । एवञ्च आत्मीयवाचकः स्वशब्दस्तत्र द्रष्टव्य इत्यर्थो दर्शितः । इयं च परिभाषा न्यायसिद्धेति आह—*महेति । भाष्ये इति* । तत्र हि—आखूत्थमित्यस्य योगविभागेन साधनावसरे भाव एवाण् कर्मादावित्युक्तम् ॥ १२२ ॥

तत्त्वप्रकाशिका ।

रूपसिद्धौ "विभाषा जसि" इत्यस्य वैयर्थ्यं स्पष्टमेव ॥ १२१ ॥

*प्रकृत्यर्थ इति*। उपस्थितं परित्यज्य अनुपस्थितपरिकल्पने मानाभाव इति भावः॥१२२॥

---

( १ ) सोऽपीति । अपिना स्वार्थपरिग्रहः । तथा च—स्वस्वप्रकृत्यन्यतरार्थप्रत्यायकत्वं प्रत्ययत्वमित्यर्थः ।

## योगविभागादिष्टसिद्धिः ॥ १२३ ॥

इष्टसिद्धिरेव न त्वनिष्टापादनं कार्य्यमित्यर्थः । तत्तत्समानविधिकद्वितीययोगेन विभक्तस्यानित्यत्वज्ञापनमेतद्बीजम् ॥ १२३ ॥

## पर्य्यायशब्दानां लाघवगौरवचर्चा नाद्रियते ॥ १२४ ॥

तत्र तत्रान्यतरस्यां विभाषा वेति सूत्रनिर्देशज्ञापितमिदम् ॥ १२४ ॥

## ज्ञापकसिद्धं न सर्वत्र ॥ १२५ ॥

स्पष्टमेव पठितव्येऽनुमानाद्बोधनमसार्वत्रिकत्वार्थमित्यर्थः । तेन ज्ञापकसिद्धपरिभाषयानिष्टं न आपादनीयमिति तात्पर्यम् । भाष्येऽपि ध्वनितमेतच्छ्यास्सूत्रादौ । ज्ञापकेति न्यायस्याप्युपलक्षणम् । न्यायज्ञापकसिद्धानामपि केषाञ्चित्कथनमन्येषामनित्यत्वबोधनायेति भावः । यथा तत्स्थानापन्ने तद्धर्मलाभ इति न्यायसिद्धं स्थानिवत्सूत्रं, ज्ञापकसिद्धं च तत्र अनल्विधाविति ॥ १२५ ॥

ननु द्रोग्धा द्रोग्धा द्रोढा द्रोढेत्यादौ घत्वादीनामसिद्धत्वात् पूर्वं द्वित्वे एकत्र घत्वमपरत्र ढत्वमित्यस्याप्यापत्तिरत आह—

## पूर्वत्रासिद्धीयमद्वित्वे ॥ १२६ ॥

भैरवी ।

"सुपिस्थ" इति सूत्रे योगविभागकरणात् तत्प्रसङ्गेन स्मृतामन्यामपि परिभाषां व्याचष्टे—*योगविभागेति* । सर्वस्यैव वाक्यस्य असति बाधके सावधारणत्वमित्याशयेन आह—*इष्टसिद्धिरेवेति* । एवकारव्यवच्छेद्यमाह—*न त्वनीति । तत्तदिति*। विभक्तैकयोगेनेत्यर्थः । *विभक्तस्येति* । एकस्येति शेषः ॥ १२३ ॥

योगविभागेन द्वयोः समानफलकत्वं कल्पयित्वान्यतरस्यानित्यत्वकल्पने यथा गौरवस्य सत्त्वेऽपि अङ्गीकारस्तथा अन्यत्रापि गौरवाङ्गीकार इत्याह—*पर्य्यायशब्दानामिति* । अत्र ज्ञापकमाह—*तत्रेत्यादिना* ॥ १२४ ॥

बहुषु परिभाषासु ज्ञापकोपवर्णनात् तत्प्रसङ्गेन आह—*ज्ञापकेति* । अस्या लाभप्रकारमाह—*स्पष्टमेवेति* । ज्ञापकशब्दार्थमाह—*अनुमानादिति । तेन* । तस्य असार्वत्रिकत्वेन । *भाष्येऽपीति* । श्याप्सूत्रादौ भाष्येऽपीत्यन्वयः । एवं तत्परिभाषास्वीकारादेव छात्रा इत्यस्य सिद्धिः । अत्र हि—"कार्म्मस्ताच्छील्ये" इत्यनेन 'ताच्छीलिकेऽण्कृतानि भवन्ति" इति ज्ञापितेऽपि "टिड्ढा" इति ङीप् न भवति । *ध्वनितमिति* । यथा तत्र ज्ञापकेन लिङ्गविशिष्टपरिभाषामुक्त्वा अनया परिभाषया द्विषतीताप इत्यत्र "द्विषत्परयोः" इति नेति सूचितम् । नन्वेवं न्यायसिद्धानां सार्वत्रिकत्वापत्तिरत आह—ज्ञापकेतीति* ।

ननु "तत्स्थानापन्नस्तद्धर्मं लभतः" इति न्यायेनादेशः स्थानिवदित्यस्य "अदो जग्धिः" इति सूत्रे तिकितीत्येव सिद्धे ल्यप्ग्रहणेनाल्विधौ स्थानिवत्त्वम् नेत्यस्य च लाभे सिद्धे "स्थानिवत्' इति सूत्रं किमिति आरभ्यत इत्यत आह—*न्यायज्ञापकेति । अन्येषामिति* । न्यायज्ञापकसिद्धानामिति शेषः । पूर्वोक्तमेव स्पष्टार्थं दर्शयति—*यथेति* ॥ १२५ ॥

विकल्पस्य प्रसङ्गादाह—*ननु द्रोग्धेति । इत्यादाविति* । साधनीय इति शेषः । घत्वादीनामित्यादिना ढत्वस्य परिग्रहः । *द्वित्वे* । "नित्यवीप्सयोः" इति द्वित्वे । *इत्यस्याप्यापत्तिरिति* । अत्रापिशब्दः क्रमव्यत्यासेनापत्तिशब्दानन्तरं द्रष्टव्यः । तेन पाक्षिकी इष्टस्य सिद्धिः सूचिता । *पूर्वत्रासिद्धीयमित्यादि । यत् तत्रोपतिष्ठत इत्यस्य अध्याहारः ।

द्वित्वभिन्ने पूर्वत्र कर्त्तव्ये परमसिद्धमित्यर्थः । "पूर्वत्रासिद्धम्" (८-२-१) इत्यधिकारभवं शास्त्रमस्या लिङ्गम् । यत्र च सिद्धत्वासिद्धत्वयोः फले विशेषस्तत्रैवेयम् । कृष्णर्द्धिरित्यादौ जश्त्वात्पूर्वमनन्तरं वा द्वित्वे रूपे विशेषाभावेन नास्याः प्रवृत्तिरिति अन्यत्र विस्तरः । "सर्वस्य द्वे" (८-१-१) इति सूत्रे भाष्ये स्पष्टेयम् ॥ १२६ ॥

ननु गोषु अश्वेषु च स्वामीत्यादिवद्गोषु अश्वानां च स्वामीत्यपि स्यात् । "स्वामीश्वर" (२-३-१९) इति सूत्रेण षष्ठीसप्तम्योर्विधानादत आह—

**एकस्या आकृतेश्चरितः प्रयोगो द्वितीयस्याः तृतीयस्याश्च न भविष्यति ॥ १२७ ॥**

यत्र अन्याकृतिकरणे भिन्नार्थत्वसम्भावना तद्विषयोऽयं न्याय इत्यन्यत्र विस्तरः । "कृञ्चानुप्रयुज्यते" (३-१-४०) इति सूत्रे भाष्ये स्पष्टेयम् ॥१२७॥

ननु विध्याधेत्यादौ परत्वाद्धलादिः शेषे वस्य सम्प्रसारणं स्यादत आह—

**सम्प्रसारणं तदाश्रयं च कार्यं बलवत् ॥ १२८ ॥**

भैरवी ।

पूर्वत्रासिद्धीयपदं तदधिकारभवशास्त्रपरम् । एवञ्च पूर्वत्रासिद्धमित्यनेनैकवाक्यतया तदधिकारभवं यच्छास्त्रं तत्राद्वित्व इत्युपतिष्ठत इत्यर्थस्तत्फलितमाह—*द्वित्वभिन्न इत्यादिना* । परिभाषाया उक्तार्थत्वं ध्वनयन् तस्य पदस्य सार्थक्यमाह—*पूर्वत्रासिद्धमिति* । पूर्वत्रासिद्धीयमित्यत्र गहादित्वाच्छः ।

अस्याः परिभाषायाः फलमाह—*यत्रेति* । द्वित्वपदञ्च विनिगमनाविरहात्पदद्वित्ववर्णद्वित्वोभयपरम् । *फले विशेष इति* । यथोदाहृतस्थले । तत्रैवेत्येवकारव्यवच्छेद्यं स्पष्टयति—*कृष्णर्द्धिरित्यादिना* । अनित्या चेयम् "उभौ साभ्यासस्य" इति लिङ्गात् । तेन प्रणिनायेत्यादिसिद्धिः । *अन्यत्र* । शेखरादौ । वाकूवाक्क् इत्यस्य साधनावसरे इति शेषः । *स्पष्टेयमिति* । उक्तप्रयोगसिद्ध्यर्थं तत्र वार्त्तिकरूपेण पठिता । केचित्तु "नमुने" इति सूत्रे नेति योगो विभज्यते तेनेयं सिध्यतीत्याहुः, तन्न, तस्य योगविभागस्य भाष्येऽदर्शनात् ॥ १२६ ॥

कार्य्यद्वयविधानप्रसङ्गादाह—*ननु गोषु इति* । एकस्या इत्यादि* । अस्य यत इत्यादिः । आकृतिपदं स्वरूपपरम् । *चरितः* । कृत अत इति शेषः । एतस्य न्यायस्य विषयमाह—*यत्रेति । यथा अश्वानां स्वामी गोषु इति प्रयोगे अश्वानां स्वामी गोषु तिष्ठतीत्यर्थान्तरमपि सम्भाव्यत इति षष्ठीसप्तम्योरुभयोरेकशास्त्रविधेयत्वेऽपि भेदेनैकस्मिन् वाक्ये न प्रवृत्तिः । किन्तु उभयत्र षष्ठ्येव सप्तम्येव वा प्रयोक्तव्या । एतेन सार्थकानेकविषयकोऽयं न्याय इति सिद्धम । तथा च—अनेन न्यायेनैव द्रोग्धा द्रोढेत्यस्य वारणं न युक्तम् । अयं च न्यायो लौकिकी या झटिति जायमाना प्रतिपत्तिस्तन्मूलक इति बोध्यम् । तदाह—*अन्यत्रेति* । उद्योतादौ । *भाष्य इति* । तत्र हि आमन्तस्य अपरिसमाप्तार्थकतयानुप्रयोगे सिद्धे सूत्रस्य वैयर्थ्यमित्याक्षेपे लिटिपरस्यैवानुप्रयोगोऽन्यपरस्य माभूदिति नियमार्थमेतत्सूत्रमित्येतत् खण्डनाय इयमुपन्यस्ता ॥ १२७ ॥

'पूर्वत्रासिद्धीयमद्वित्व' इत्यत्र द्वित्वस्य प्रतियोगितया निवेशात् तत्प्रसङ्गेन द्वित्वसामान्यस्योपस्थितिसत्त्वात् "लिटि धातोः" इत्यपि उपस्थितम् , तत्र द्वित्वे सति यथा "हलादिः शेषः" इत्यस्य प्रवृत्तिर्भवति तथा अन्यत्रापि शास्त्रप्रवृत्तिक्रममाह-*ननु इत्यादिना* ।

तदाश्रयं "सम्प्रसारणाच्च" ( ६-१-१०८ ) इति पूर्वरूपम् । वस्तुतो "लिट्यभ्यासस्य" ( ६-१-१७ ) इति सूत्रे उभयेषां ग्रहणस्योभयेषां सम्प्रसारणमेव यथा स्यादित्यर्थकत्वेनेदं सिद्धमित्येषा व्यर्थेति "लिट्यभ्यासस्य" इति सूत्रे भाष्ये स्पष्टम् । फलान्तरान्यथासिद्धिरपि तत्रैव भाष्ये स्पष्टा । "णौ च संश्चङोः" ( ६-१-३१ ) इत्यादौ संश्चङोरित्यादि विषयसप्तमीति तत्रापि न दोष इति अन्यत्र विस्तरः ॥ १२८ ॥

यत्तु—

**क्वचिद्विकृतिः प्रकृतिं गृह्णाति ॥ १२९ ॥**

तेन "निसमुपविभ्यो ह्वः"(१-३-३०)इत्यत्र ह्वाग्रहणेन ह्वेञो ग्रहणसिद्धिः १२९

**औपदेशिकप्रायोगिकयोरौपदेशिकस्यैव ग्रहणम् ॥ १३० ॥**

तेन "दादेर्धातोः" (८-२-३२) इत्यत्र औपदेशिकधातोरेव ग्रहणमिति । तन्न । तयोर्निर्मूलत्वाद्भाष्याव्यवहृतत्वाच्च । न च विकृतिः प्रकृतिं गृह्णातीति "ग्रहिज्या" (६-१-१६) इति सूत्रस्थभाष्येणाद्यायास्तिरस्कारात्च, "निसमुपविभ्यो ह्वः" इत्यादौ ह्वेञोऽनुकरणे सौत्रः प्रयोगः । आत्वविषये एव आ-

भैरवी ।

परत्वादित्यस्य सम्प्रसारणापेक्षयेत्यादिः । इदं वचनं नापूर्वमित्याह-*वस्तुत इति । इदं सिद्धमिति* । विव्याधेतिरूपं सिद्धमित्यर्थः ।

ननु एतत्परिभाषानङ्गीकारे भृशः जुहुवतुः शुश्रुवुरित्यादौ रमालोपेयङ्यणादीनां प्रवृत्त्यापत्तिः । यणादेशस्य तु शुश्रुवुरित्यत्रैव सम्प्रसारणे पूर्वरूपापेक्षया परत्वात् प्राप्तिरत आह-*फलान्तरेति* । उक्तफलान्तरस्यर्थः । *भाष्ये स्पष्टेति* । सम्प्रसारणस्य नित्यत्वेन एतेषां सिद्धिः । एवं सम्प्रसारणपूर्वत्वस्यान्तरङ्गत्वात् प्रवृत्तिः ।

ननु श्विधातोर्णिजन्ताल्लुङि चङि द्वित्वे वृध्यामान्तरङ्गत्वात् सम्प्रसारणात्पूर्वं प्रवृत्तौ अशूशवदित्यस्यासिद्धिरत आह-*णौ चेति* । एवं च द्वित्वात् प्राक् सम्प्रसारणे ततो णिचि चङि वृद्धावावादेशे "णौ चङि" इति ह्रस्वेऽस्य सिद्धिरिति भावः ।

वस्तुतस्तु अभ्यासविकारे बाध्यबाधकभावो नास्तीति परिभाषायाः सत्त्वेनेष्टानुरोधेन कार्य्यप्रवृत्त्या विव्याधेत्यादौ न दोष इत्यपि बोध्यम् ॥ १२८ ॥

अन्यसम्मते धातुप्रकारिके परिभाषे खण्डयति-*यत्त्विति* । आद्यपरिभाषायाः प्रयोजनं निरूप्यते अत्र आत्मनेपदसिद्धिः । द्वितीयपरिभाषाप्रयोजनं तु मूल एव स्फुटम् । *निर्मूलत्वादिति* । ज्ञापकशून्यत्वादित्यर्थः ।

ननु प्रथमपरिभाषाया नव्यो लिटीतियोग एव ज्ञापकोऽस्तु, तथा द्वितीयायां "श्वीदित" इति सूत्रे श्विग्रहणं ज्ञापकम् , तद्धि शून इत्यत्र "श्र्युकः किति" इत्यस्याप्रवृत्तौ सार्थकन्तस्याप्रवृत्तिश्चैतत्परिभाषा साध्या । न च तीर्णमित्यस्य सिध्यर्थं "श्र्युकः" इतिसूत्रे उपदेशग्रहणानुवृत्तिः कार्य्या । एवञ्च शुन इति न सेटस्यतीति वाच्यम् । तदनुवृत्त्यभावेऽपि अनया परिभाषया सिद्धेरत आह-*भाष्याव्यवहृतत्वादिति* ।

ननु 'अप्रतिषिद्धमनुमतं भवति' इतिन्याय एवानुग्राहक इत्यत आह-*न च विकृतिरिति* । परिभाषाप्रयोजनान्यथासिद्धिमाह-*निसमुपेति* ।

वस्तुतस्तु तस्य ह्व इति निर्देशस्य सौत्रत्वकल्पनमयुक्तम् । "आदेच उपदेशेऽशिति" इति सूत्रेऽशितीत्यत्र प्रसज्यप्रतिषेधस्यैवाश्रयणात् कृतात्वनिर्देशफलं तु विषयविशेषपरिचयार्थमिति आह-*आत्वविषय एव* । एवञ्च "आदेच" इति सूत्रेण वा कृतात्वानुकरणाद्वा

त्मनेपदं प्रयोगस्थानामेवानुकरणस्य घुसंज्ञासूत्रे भाष्ये स्पष्टमुक्तत्वादित्यन्ये । अन्त्यापि तत्र तत्र उपदेशग्रहणं कुर्वतः सूत्रकृतो वार्त्तिककृतश्चासम्मता ।

इह हि व्याकरणे सर्वेष्वेव सानुबन्धकग्रहणेषु रूपमाश्रीयते यत्र अस्यै-तद्रूपमिति रूपनिर्ग्रहश्च शब्दस्य नान्तरेण लौकिकं प्रयोगं तस्मिंश्च लौकिके प्रयोगे सानुबन्धकानां प्रयोगो नास्तीति कृत्वा द्वितीयः प्रयोगः उपास्यते, क उपदेशो नामेति घुसंज्ञासूत्रस्थभाष्येण प्रायोगिकासम्भवे औपदेशिकस्य ग्रहणमित्यर्थस्य लाभेन भाष्यासम्मता च । भाष्ये सानुबन्धकेत्यादि प्रकृताभिप्रायेण । "दादेः" इति सूत्रे दादिपदस्यौपदेशिकदादित्ववति लक्षणेति न दोष इति अन्यत्र विस्तरः ॥ १३० ॥

यदपि ननु अजर्घा बेभिदीतीत्यादौ तत्तद्गणप्रयुक्ता धिकरणा यङ्लुकि स्युस्तथा यङ्लुकि बेभिदितेत्यादौ "एकाच" ( ७-२-१० ) इति इण्निषेधः स्यादत आह—

**श्तिपा शपानुबन्धेन निर्दिष्टं यद्गणेन च ।**
**यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि ॥ १३१ ॥**

अनुबन्धनिर्देशो द्विधा स्वरूपेण ङित इत्यादिपदेन च । हन्ति याति वाति । "सनीवन्त" ( ७-२-४६ ) इति सूत्रे भरेति । "दीङो युडचि" (६-४-६३ ) "अनुदात्तङितः" ( १-३-१२ ) । "दिवादिभ्यः श्यन्" ( ३-१-६९ ) । "एकाच उपदेशे" ( ७-२-१० ) इत्युदाहरणानि । द्वित्वं "सनाद्य-

भैरवी ।

तस्य सिद्धिः । कृतात्वानुकरणमितिभाष्यसम्मतमपीति भावः ॥ १२९ ॥

द्वितीयां खण्डयति-*अन्त्यापीति* । वार्त्तिककारासम्मतत्वमुपपाद्य भाष्यकारासम्मतत्वमाह-*इहहीत्यादिना* । यत्रास्यैतद्रूपमित्यनेन सानुबन्धकनिर्देशे उपदेशावस्थायामेव घुसंज्ञाप्रवर्त्तते लक्ष्यस्थस्य तु स्थानिवद्भावेन ग्रहणमिति ध्वनितम् ।

ननु "दादेः" इति सूत्रे सानुबन्धकनिर्देशाभावेऽप्युक्तरीत्यौपदेशिकस्य ग्रहणञ्चेद्भाष्यकृतस्तथोपपादनाभावात् न्यूनतेत्यत आह-भाष्ये सान्विति* । स्वरूपमित्यनेन रूपपरिग्राहस्य सूचनात् । "दादेः" इति सूत्रे गतिमाह-*दादेरितीति* । *लक्षणेति* । एतच्च शेखरे स्फुटम् ॥ १३० ॥

अन्यामपि प्राचीनसम्मतपरिभाषां खण्डयितुमुपक्रमते-*यदपीति* । दोषान्तरमाह-*तथेति* । *श्तिपाशपेत्यादि* । अत्रानुबन्धनिर्देशस्य द्वैविध्यं स्पष्टयति-अनुबन्धेति* ।

नन्वेतत्परिभाषासत्त्वे "सन्यङोः" इति द्वित्वं यङ्लुकि न स्यात्तत्राप्येकाच इत्यस्य सम्बन्धादत आह-द्वित्वमिति* । ननु "सनाद्यन्ता" इति सूत्रम् भाष्यकृता प्रत्याख्यातम् , तथा हि वदन्ति, नेवादयः "वसित्रपियजिराजिव्रजिसहिहनिवाशिवारिभ्य इञ्" इतिसूत्रेण विधीयमान इञबाहुलकाद्धेरपीत्याशयः । भुवो वादयो भूवादय इत्येवसिद्धम् , न सिध्यति, पाठेन धातुसंज्ञा क्रियते न चैते तत्र पठ्यन्ते, यदि पाठेन धातुसंज्ञा आणयत्यादिनिवृत्त्यर्थं क्रियते तदा "अस्तेर्भूः" "चक्षिङः ख्याञ्" "ब्रुवो वचि" इत्यादीनां कथमित्याशयकोक्त्यनन्तरं

तत्त्वप्रकाशिका ।

"औपदेशिकप्रायोगिक" इति परिभाषया औपदेशिकधातोर्ग्रहणे 'दामलिट्' इत्यादावतिव्याप्तिवारणेऽपि 'अधोक्' इत्यादौ नाव्याप्तेः परिहारः इत्याशयेनाह-*दादिपदस्येति॥१३०॥

न्ताः" ( ३-१-३२ ) इति "भूवादयः" ( १-३-१ ) इति च धातुत्वं च भवत्येव "गुणो यङ्लुकोः" (७-४-८२) इत्यादिभिर्निषेधानित्यत्वकल्पनात् । तेन भष्भावोऽप्यजर्घा इत्यादौ भवति । अत एव "श्वीदितः" ( ७-२-१४ ) इति सूत्रे कैयटे यत्रैकाज्ग्रहणं किञ्चिदिति पाठः । "एकाच उपदेशेऽनुदात्तात्" (७-२-१०) इति सूत्र एकाज्ग्रहणेन एकदे(१)शानुमत्यैषा ज्ञाप्यते । अन्यथोपदेशेऽनेकाचामुदात्तत्वस्यैव सत्त्वेन तद्वैयर्थ्यं स्पष्टमेवेति । तदपि न भाष्यानुक्तत्वात्, एकाज्ग्रहणस्य वधिव्यावृत्त्यर्थमावश्यकत्वाच्च ।

भैरवी ।

यद्यपि ते न पठ्यन्ते प्रकृतयस्तु तेषामपि पठ्यन्ते तत्र स्थानिवद्भावात् सिद्धम् । इमे तर्हि यद्यपि न पठ्यन्ते येषां त्वर्थं आदिश्यन्ते ते तत्र पठ्यन्ते । येषामिण्यादीनाम् , इमे सनादयो येषामर्थे आदिश्यन्ते तेषां धातुपाठेन धातुत्वात् स्थानिवद्भावेन धातुसंज्ञा भविष्यति । षष्ठीनिर्दिष्टस्यादेशः स्थानिवद्भवति नचैतेषष्ठीनिर्दिष्टस्यादेशाः, षष्ठीग्रहणं निवर्त्तिष्यते, अपवादे उत्सर्गकृतं प्राप्नोति, श्यन्नादीनां शित्करणादिति ।

ननु स्थानिवत्सूत्रे आदेशशब्दः क्रियावाचकश्चेत् स्वीक्रियते तदा स्थानिवद्भावेन सनादिप्रत्ययानामेव धातुसंज्ञा प्राप्नोतीति चेन्न कर्मकर्तुमिच्छति करणाङ्गे इत्यर्थे 'सर्वे सर्वपदादेशा' इति न्यायेन वर्त्तमानस्येषेः प्रसङ्गे चिकीर्षशब्दः सन्नन्त आदिश्यत इति सिद्धं तदन्तस्य धातुत्वमिति कैयटेन समाधानात् । एवं समभिव्याहारविशिष्टलवनक्रियावाचि लूशब्दप्रसङ्गे लवशब्द आदिश्यते गुपप्रसङ्गे गोपायशब्द इति ।

एवम्प्रकारेण प्रत्याख्यानेऽपि आह-*भूवादय इति* । वस्तुतस्तु तत्प्रत्याख्यानपरं भाष्यमेकदेश्युक्तिः । स्थानिवत्सूत्रे आदेशग्रहणसामर्थ्यादानुमानिकादेशस्य यः स्थानिवद्भावः स यत्रादेशविधायकसूत्रे पठितयोः स्थान्यादेशबोधकशब्दयोर्लक्षणयार्थस्य विलक्षणशब्दरूपस्य बोधकत्वं तत्रैव, यथा "एरुः" इत्यादावुपात्तयोरेकारोत्वनयोर्लक्षणया तदन्तपरत्वमिति, यत्र तु न कथमपि स्थान्यादेशबोधकशब्दोपादानं न तत्रादेशस्यानुमानिकत्वमिति न तत्र स्थानिवद्भावस्य प्रसक्तिरिति । *कल्पनादिति* । निषेधस्य नित्यत्वे यङ्लुकि द्वित्वाभावेनाभ्यासाभावादभ्यासस्य गुणविधानमनुपपन्नमिति तज्ज्ञापकमिति भावः । *तेन* । निषेधस्यानित्यत्वेन । भष्भावोऽपीत्यपिनोक्तफलसंग्रहः । *अत एव* । उक्तनिषेधस्यानित्यत्वादेव किञ्चिदित्यस्यैकाज्घटितं किञ्चिदेव न प्रवर्त्तत इत्यर्थः । अस्य कैयटीयवाक्यघटकस्य किञ्चिदित्यस्य सर्वत्रान्वयेन सामान्यतो निषेधवाक्यस्यानित्यत्वलाभः । किञ्चित्पदेन केषाञ्चिदेव कार्याणां तत्राप्रवृत्तिर्न तु सर्वेषामिति ध्वनितम् । *अनुमत्या* । अनु मतिद्वारा । *अन्यथा* । अस्या अभावे । *तद्वैयर्थ्यम्* । एकाच्पदवैयर्थ्यमित्यर्थः । *भाष्यानुक्तत्वादिति* । "शितपाशपा"

तत्त्वप्रकाशिका ।

*एकदेशानुमत्येति* । अयं भावः-"अच" इत्येव सिद्धे एकग्रहणं व्यर्थं सत्परिभाषायां ज्ञापकम् । नच सूत्रे 'लिङ्गवचनम्'इतिपरिभाषया एकग्रहणाभावे "अच" इत्येकत्वविवक्षाया वक्तुमशक्यत्वेन एकग्रहणं न व्यर्थमिति कथं ज्ञापकम् , न च सिद्धान्तेऽपि अनुदात्तोपदेशानामेकाच्त्वेन एकग्रहणं व्यर्थमेवेतिवाच्यम् , उपदेशत्वावच्छेदेन य एकाजित्यर्थलाभायावश्यकत्वात् ।

अत एव वधादेशस्य हन्त्युपदेश एकाच्त्वेऽपि नेण्निषेध इति वाच्यम् , अनच्कधातोरभावेन अच इत्यस्य वैयर्थ्येन एकत्त्वविवक्षया एकाच इत्यर्थलाभेन एकग्रहणस्य वैयर्थ्यात् । नचाजन्त इत्यर्थलाभाय"अच" इतिसार्थकमिति वाच्यम्, हलन्तानामनुदात्तोपदेशत्ववैयर्थ्यापत्तेः । *आवश्यकत्वाच्चेति* । वस्तुतस्तु 'अच' इत्येतत्सामर्थ्यादेव उपदेशत्वावच्छेदेनैकाच-

(१) एकदेशानुमत्येति । स्थालीपुलाकन्यायमूलकमेतदितिभावः ।

न च वधिः स्थान्युपदेश एकाजेवेति वाच्यम्, साक्षादुपदेशसम्भवेनैतद्विषये स्थान्युपदेशाग्रहणादुपदेशत्वावच्छेदेनैकाजित्यर्थाच्च ।

किञ्च उत्तरार्थमेकाज्ग्रहणम् । अत एव जागर्तिवानित्यादावुपदेश उगन्तत्वमादाय "श्र्युकः किति" ( ७-२-११ ) इतीण्निषेधो न । तत्रोपदेश इत्यनुवृत्तिश्च स्तीर्णमित्यादाविण्निषेधायेत्याकरे स्पष्टम् ।

न च भाष्ये यङ्लोपे बेभिदितेत्यादाविट्प्रवृत्त्यर्थमुपदेशेऽनुदात्तादेकाचः श्रूयमाणादङ्गादित्यर्थे सनीट्प्रतिषेधो वक्तव्यो बिभित्सतीति दोषोपन्यासवद्यङ्लुकि दोषानुपन्यासेन तत्रेडिष्टः । यङ्लोपेत्यादि भाष्यं तूपक्रमोपसंहारबलेन न यङ्लुग्विषयम् ।

किञ्च तस्य तद्विषयकत्वे यङ्लोपे स्थानिवत्त्वस्येव यङ्लुक्युपायप्रदर्शनेन न्यूनतापत्तिरिति वाच्यम् । इड्विषये यङ्लुको लोकेऽनभिधानेन छन्दसि सर्वविधीनां वैकल्पिकत्वेन च तत्र दोषानुपन्यासेनादोषात् । अन्यथैकाज्ग्रहणं किमर्थमिति प्रश्नस्य उत्तरत्र जागर्त्यर्थमिह च वध्यर्थमित्युत्तरस्य च भाष्ये निरालम्बनतापत्तेः ।

न च आर्द्धधातुकाक्षिप्तधातोरेकाच इति विशेषणम् । एवं च बिभित्स-

भैरवी ।

इतिनिषेधवचनस्य भाष्यानुक्तत्वादित्यर्थः ।

ननु 'अप्रतिषिद्धमनुमतं भवति' इतिन्यायेन भाष्यकारस्येदं वचनमनुमतमेवेत्यत आह—*एकाज्ग्रहणस्येति* । वधादेशस्यादन्तत्वादिति ज्ञापकशून्यत्वेनेयं परिभाषा निर्मूलेति भावः । *न चेति । एकाजेवेति* । एतेनैतद्व्यावृत्त्यर्थमेकाज्ग्रहणमनर्थकमेवेति तज्ज्ञापकमेवेति भावः । *साक्षादिति । मुख्यत्वादिति भावः । *उपेत्यादि* । उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयस्य औत्सर्गिकतया एवं व्याख्यानं योग्यमेवेति तस्य ज्ञापकत्वं न घटत्येवेति भावः ।

प्रकारान्तरेणैकाज्ग्रहणस्य ज्ञापकत्वं खण्डयति—*किञ्चेति । *अत एव* । तत्रैकाज्ग्रहणानुवृत्तेरेव । तत्रानुवृत्तिफलमाह—*तत्रेति* । चस्त्वर्थे । *निषेधायेति* । अन्यथा "ऋत इद्धातोः" इतीत्त्वे कृते उगन्तत्वाभावात् निषेधो न स्यादिति भावः ।

यद्यपि इयं परिभाषा भाष्यकृता कण्ठतो नोक्ता तथापि ध्वनितेत्याशयेन परिभाषासत्वमाशङ्क्य निराचष्टे—*नचेत्यादिना* । प्रवृत्त्यर्थमित्यस्येत्यर्थ इत्यत्रान्वयः । कृते इति शेषः । *बिभित्सतीति* । अत्र श्रूयमाणादेकाचः परत्वाभावाद्वचनाभावे निषेधो न स्यादिति भावः । *दोषानुपन्यासेनेति* । यङ्लुकीट्प्रतिषेधो वक्तव्य इति रीत्या दोषानुपन्यासेनेत्यर्थः । *तत्र* । यङ्लुकि । *इष्ट इति* । स च "श्वितपाशपा" इति परिभाषासाध्य इति शेषः । बलेनेति* । तत्राल्लोपस्य स्थानिवद्भावेन निषेधाप्रवृत्तिसम्पादनमुपसंहारस्तद्बलेनेत्यर्थः ।

ननु लोपत्वस्य व्यापकतया यङ्लोप इति भाष्येणैव तत्रापि दोषोपन्यासः कृत एवेत्यत आह—*किञ्च तस्येति । न्यूनतापत्तिरिति* । उभयत्राशङ्कोत्तरयोः समत्वादिति भावः । *तत्र* । यङ्लुकि । *अन्यथा* । उक्तप्रकारानङ्गीकारे । *उत्तरत्र* । 'श्र्युक' इत्यत्र । ननु यद्येकाज्ग्रहणमुत्तरार्थं तर्हि तत्रैव कर्तव्यमित्यत आह—*इह चेति । आपत्तेरिति* । यङ्लुग्व्यावर्त्तकत्वेनोक्तरीत्या तस्य साफल्ये प्रश्नोत्तरयोर्निरालम्बनत्वापत्तेरित्यर्थः ।

ननु पूर्वोक्तमेकाचः श्रूयमाणादिति भाष्यमसङ्गतमेकाचो धातोरित्येवमन्वयस्योचित-

तत्त्वप्रकाशिका ।

इत्यर्थसम्भवेन एकग्रहणं ज्ञापकमेव ॥ १३१ ॥

तीत्यादावुत्तरखण्डस्य धातोरेकाच्त्वमस्त्येवोत्तरखण्डेऽस्तित्ववत् । एतच्च "दयतेः" ( ७-४-९ ) इति सूत्रे भाष्ये स्पष्टम् । एवं च प्रकृतभाष्यासङ्गतिरिति वाच्यम् । आक्षेपे आक्षिप्तस्यान्वये च मानाभावात्। अङ्गत्वं तु विशिष्ट एवेति "एकाचो द्वे" ( ६-१-१ ) इति सूत्रे भाष्ये स्पष्टम् । निरूपितं च तन्नादिशेषे शब्देन्दुशेखरे । धातुत्वं तु उत्तरखण्ड एव । अत एव "एकाचो बशो भष् झषन्तस्य स्ध्वोः" ( ८-२-३७ ) इति सूत्रे धातोरवयवस्यैकाच इति वैयधिकरण्येनान्वये गर्धप्सिद्धिः प्रयोजनमुक्तं भाष्ये, न तु प्रसिद्धमजर्घा इति । अजर्घा बेभिदीतीत्यादौ श्नम्श्यनादयस्तु चर्करीतं चेत्यस्यादादौ पाठेन यङ्लुगन्ते गणान्तरप्रयुक्तविकरणस्याप्राप्त्या न भवन्ति । छान्दसत्वादेव कार्यान्तराणामपि छन्दसि दृष्टप्रयोगेषु अदृष्टानामभावो बोध्यः । भाषायां तु तादृशानामभाव एव । श्तिपा शपादिनिर्देशास्तु "भवतेरः" (७-४-७३)इत्यादि सूत्रस्थ तन्निर्देशवन्नार्थसाधका इति अन्यत्र विस्तरः॥१३१॥

ननु जभोऽचि रधेश्च नेट्यलिटीत्येव सूत्र्यतां किं द्वी रधिग्रहणेनेत्यत आह—

**पदगौरवाद्योगविभागो गरीयान् ॥ १३२ ॥**

भैरवी ।

त्वादित्याशङ्क्य निराचष्टे—*नचेत्यादिना* । *भाष्यासङ्गतिरिति* । एवञ्च तद्भाष्यस्यैकदेश्युक्तित्वेन प्रकृतार्थासाधकत्वमिति भावः । *आक्षेप इति* । अस्य मानाभावादित्यत्रान्वयः । यथा पीनत्वस्योपपादकं रात्रिभोजनं तथा न प्रकृतेऽस्तीति भावः । अभ्युपेत्यापि आह—*आक्षिप्तस्येति* । *मानाभावादिति* । पदवृत्त्युपस्थापिते एवार्थे शाब्दबोधीयप्रकारताविशेष्यतास्वीकारात् । एकाचोऽङ्गादित्यर्थे प्रसक्तंदोषं वारयति-*अङ्गत्वन्त्विति* । अङ्गसंज्ञासूत्रे [illegible]दिग्रहणाद् द्विःप्रयोगपक्षस्यैव सिद्धान्तितत्वात् तत्र यो यच्छब्दस्तेन प्रथमस्यैव ग्रहणं [illegible]तीयस्यागन्तुकानामितिन्यायेन द्विर्वचननिष्पाद्यत्वमिति भावः ।

ननु यथा समुदायेऽङ्गत्वं तथा धातुत्वमपि प्रथमे समुदाये वा द्विःप्रयोगसत्त्वात् कुतो नेति तटस्थशङ्कामाह—*धातुत्वमिति । उत्तरखण्ड एवेति* । प्रत्ययसन्निहितत्वादिति शेषः । अतएवाभ्यासस्यानर्थकत्वव्यवहारः प्रपञ्चितं चैतत् प्राक् । अत्रार्थे भाष्यमपि प्रमाणमिति आह—*अत एवेति* । धातुत्वस्योत्तरखण्डीयत्वादेव । *भाष्य इति* । "दादेः" इति सूत्र इति शेषः । सामानाधिकरण्येन सम्बन्धे एकाचो झषन्तस्य धातोरवयवस्य बश इत्यर्थेऽजर्घा इत्यत्र उत्तरखण्डस्य तथात्वमस्त्येवेति, नच दूषणमुपन्यस्तम् । किन्तु गर्द्धबित्यत्रैवोक्तम् ।

यदि सर्वत्र द्विर्वचनस्थले समुदायस्यैव धातुत्वं नतूत्तरभागस्य तदा अजर्घा इत्येतत्सिद्धिरपि प्रयोजनं वदेदिति भावः । "श्तिपाशपा" इतिवचनसाध्यप्रयोजनान्यथासिद्धिमाह—*अजर्घा इत्यादिना* । चर्करीतञ्चेत्यस्येति चर्करीतमिति यङ्लुकः संज्ञा तत्सामर्थ्यात् तदन्तस्यादादित्वम्, एवं पाठस्य "आदिप्रभृतिभ्य" इति सूत्रप्रवृत्तिरेव प्रयोजनमिति तत्र सर्वत्र "कर्त्तरि शप्" इति सूत्रमेव प्रवर्त्तत इति भावः । *कार्यान्तराणाम्* । "श्तिपाशपा" इति वचनसाध्यानाम् । *अभाव इति* । 'छन्दसि सर्वविधीनां वैकल्पिकत्वात्' इति शेषः ।

ननु एवमपि भाषायां तादृशप्रयोगासिद्धिरेवेत्यत आह—*भाषायामिति* । श्तिपादिनिर्देशस्य परिभाषाया अभावे वैयर्थ्यं तर्हि स्यादत आह—*श्तिप्शबादीति* । "भवतेरः" इत्यत्र लिटो निमित्तत्वेन यङ्लुकि नैतस्य सूत्रस्य प्राप्तिरिति तादृशनिर्देशस्य साधुत्वबोधनद्वारा अदृष्टार्थत्वं यथा तथा अन्यत्रापि श्तिबादिनिर्देशोऽदृष्टार्थ एवेति भावः ॥ १३१ ॥

धातुप्रसङ्गादाह-*नन्विति* । *सूत्र्यतामिति* । त्रिसूत्रीक्रियतामित्यर्थः । *पदगौर-

प्रतिवाक्यं भिन्नवाक्यार्थबोधकल्पनेन गौरवं स्पष्टमेव । परन्तु भाष्यासम्मतेयम् । "टाङसि" ( ७-१-१२ ) इतिसूत्रस्थभाष्यविरुद्धा च । तत्र चेनादेशे इकारप्रत्याख्यानं योगविभागेनैव कृतमिति बहवः ॥ १३२ ॥

## अर्द्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः ॥१३३॥

"एओङ्" "ऐऔच्"सूत्रयोर्ध्वनितैषा भाष्ये । तत्रानेकपदघटितसूत्रे प्रायेण पदलाघवविचार एव, न तु मात्रालाघवविचार, इति "ऊकालोऽच्" ( १-२-२७ ) "अपृक्त एकाल"( १-२-४१ ) इत्यादिसूत्रेषु भाष्ये ध्वनितम् ।

तत्र हि—सूत्रेऽल्ग्रहणहल्ग्रहणयोर्विशेषविचारे संज्ञायां हल्ग्रहणं "ण्यत्त्रि य"(३-४-४८) इति सूत्रेऽणिओरिति वाच्यमिति त्रीणि पदान्यल्ग्रहणे-तदेकं स्वादिलोपे हल्ग्रहणं ण्येतिसूत्रेऽणिओरिति न वाच्यमपृक्तस्येति वाच्यमिति त्रीण्येव पदानीति नास्ति लाघवकृतो विशेष इत्युक्तम् ।

भैरवी ।

वादिति* । अधिकोपादानप्रयुक्तपदगौरवादित्यर्थः । गौरवमुपपादयति-*प्रतिवाक्यमिति* । योगविभागे सति वाक्यार्थबोधसिद्धयेऽधिकवाक्यसम्पादकतिङन्तस्याप्यधिकस्य कल्पनायां प्रतिपत्तिगौरवमिति । *भाष्यासम्मतेयमिति* । तदनुक्तत्वादिति शेषः ।

ननु अप्रतिषिद्धेतिन्यायेन इयमस्त्वित्यत आह—*टाङसीति* । तत्र तेनादेशावयवेकारस्य प्रत्याख्यानाय "आङि चापः" इत्यत्र योगविभागस्तत्र दर्शितः । एवं तत्र योगविभागेन प्रत्याख्यानादेतस्याः परिभाषाया अप्रामाणिकत्वमिति भावः । द्विरन्धिग्रहणन्तु एकयोगनिर्दिष्टानां क्वचिदेकदेशोऽनुवर्त्तत इतिपरिभाषाया अनित्यत्वस्य सूचनाय ॥ १३२ ॥

भाष्ये बहुषु स्थलेषु लाघवोपन्यासेन सर्वोपकारकतया अन्त उपन्यासा[illegible]ह-*अर्द्धमात्रेति* । अर्द्धमात्रालाघेवनापि पुत्रोत्सवं मन्यते किमुत ततोऽधिकानुपादानप्रयु[illegible]लाघवेनेति तात्पर्य्यार्थः । *ध्वनितैषेति* ।

तत्र हि-"एच इक्" इत्यस्य प्रत्याख्यानावसरेऽर्द्धैकाराद्धौकारौ यदि स्यातां तावेवायमुपदिशेदित्युक्तम् । न चैवं तपरकरणाद्वृद्धिगुणसंज्ञा मात्रिकाणां न प्राप्नोतीति वाच्यम् । नच मात्रिकयोः स्वरूपेण निर्देशः कर्त्तव्य इत्याशयात् ।

एतेन अर्द्धमात्रा लाघवम्भवतीति ध्वनितमित्यर्थः । मात्रापदलाघवविषये व्यवस्थामाह-*तत्र अनेकेति* । "अपृक्त एकाल्" इत्यादिना "प्रत्ययस्य लुक्श्लुलुपः" "ए ओङ्" "ऐऔच्" इति सूत्रपरिग्रहः । *तत्र हि* । तयोर्मध्ये । *सूत्रे* । "अपृक्त एकाल्" इतिसूत्रे । उक्तमित्यत्रान्वयः । *अल्ग्रहणेति* । संज्ञायामित्यादिः । *तदेकम्* । अल्ग्रहणमेकम् । *अपृक्तस्येति वाच्यमिति* । न चात्रापि पदविभागसत्वान्न लाघवमिति वाच्यम्, तस्य अखण्डस्य संज्ञात्वात् । *इत्युक्तमिति* । अन्यथा मात्रालाघवकृतविशेषस्य सत्वात् तदसङ्गतिः स्पष्टैव । एवमन्यत्रापि लाघवं भाष्ये स्फुटमिति तत एवावधार्य्यम् । यदुक्तं पूर्वत्र प्रायेणेति तस्य फल-

तत्त्वप्रकाशिका ।

*बहव इति* । यद्यपि वर्णगौरवाद्योगविभागगरीयस्त्वस्य निरुक्तभाष्यविरुद्धत्वं तथापि "पदगौरवाद्योगविभागो गरीयान्" इति परिभाषाया लोकसिद्धत्वे न भाष्यविरोधः इति केचित् ॥ १३२ ॥

*लाघवेनेति* । "प्रकृत्यादिभ्यः उपसंख्यानम्" इत्यनेन तृतीयैषा तेनार्धमात्रालाघवाभिन्नं पुत्रोत्सवं पुत्रजन्मरूपे सुखजनकं व्यापारं मन्यन्ते वैयाकरणाः । हेतावेषा तृतीयेति-

"अचि श्नु"(६-४-७७)इति सूत्र इण इत्येव सिद्धे य्वोरिति संमृग्यग्रहणात् न पूर्वेणेणग्रहणं तत्र विभक्तिनिर्देशे सम्मृग्यग्रहणे च सार्धास्तिस्रो मात्रा इण ग्रहणे तिस्रो मात्रा इति लण्सूत्रे भाष्योक्तेः । तथा "ओतः श्यनि" (७-३-७१) इति सूत्रे शितीति न वक्तव्यम् । तत्रायमप्यर्थः "ष्ठिवुक्लमु" (७-३-७५) इति सूत्रे शितीति न कर्तव्यं भवतीति भाष्ये न केवलं मात्रालाघवं यावदयमप्यर्थ इति कैयटोक्तेः प्रायेणेति शिवम् ॥ १३३ ॥

इति श्रीमदुपाध्यायोपनामकशिवभट्टसुतसतीगर्भजनागेशभट्टकृतः
परिभाषेन्दुशेखरः समाप्तः ।

---

भैरवी ।

माह—*अचिश्नुरिति* । *संमृग्य ग्रहणादिति* । आदेशेन तौ निवर्त्यग्रहणादित्यर्थः । तद्वोपपादयति--*तत्रेत्यादिना* । *संमृग्यग्रहण इति* । यकारवकारादेशाभ्यामिकारोकारौ निवर्त्यग्रहणे इत्यर्थः । *तिस्रो मात्रा इति* । इदं पदच्छेदाभिप्रायेण संहितया पाठे तु सार्द्धमात्राद्वयमेव ।

अन्यत्राप्याह—*तथोत इति* । इतिभाष्य इत्यस्य कैयटोक्तेत्यत्रान्वयः । *अर्थ इति* । प्रयोजनमित्यर्थः । अपिना पदलाघवस्य परिग्रहः । अत्रेदमवधेयम्—अत्र ग्रन्थादौ "लण्" "अइउण्"सूत्रयोः णकारस्य एवोपादाने णिण्ग्रहणे सन्देहादनिर्णयः प्राप्नोति तद्यावृत्त्यर्थं "व्याख्यानत" इति परिभाषोपनिबद्धान्ते परिभाषान्तराणां व्याख्यानभकृत्वा अर्द्धमात्रालाघवेतिपरिभाषा व्याख्यानद्वारैवोपनिबद्धा, न तु परिभाषान्तराणामिवास्या अवतरणपूर्वकोपन्यासः कृत इति व्याख्यानस्य शिष्टकृतस्य मुख्यत्वं दर्शितम् । तेन अनित्यपरिभाषाणां शिष्ट[illegible]ानेन लक्ष्यानुरोधेन प्रवृत्त्यप्रवृत्तिकल्पनमेवमेकयोगनिर्दिष्टानां क्वचिदेव प्रवृत्तिरि[illegible]चिदेकदेशस्यानुवृत्तिरित्यपि व्याख्यानेनैव कल्पनीयमिति भावः । एवमत्र प्राचीनव्याकरणतन्त्रे वाचनिकानीत्युक्तम् । अर्द्धमात्रालाघवेनापि पुत्रोत्सवं मन्यन्ते किम्पुनर्बहूनां वचनानां ज्ञापकेन संग्रहे सिद्धे तेषामानुपूर्वीरूपेणापाठेऽपि लाघवमिति च सूचितमिति शिवम् ॥ १३३ ॥

नेत्राष्टभूतिचन्द्राब्दे वत्सरे दुर्मुखे रवौ ॥
ज्येष्ठमासस्यसितेपक्षे ग्रीष्मर्तौ विश्ववासरे ॥ १ ॥
पूर्णयन्तनुतामोदं यथाशक्ति विवेचिता ॥
विदुषां वक्षसि हरेर्न्यस्ता सा सिद्धिमाप्नुयात् ॥ २ ॥

इति श्रीमहामहोपाध्यायागस्त्यगोत्रोत्पन्नवन्दीमिश्रात्मज-
लक्ष्मणमिश्रसुतभवदेवमिश्रसूनुभैरवमिश्रकृता
परिभाषाविवृतिव्याख्या सम्पूर्णा ।

---

तत्त्वप्रकाशिका ।

केचित् । *तिस्रो मात्रा इति । 'य्वोः' इत्यस्य स्थाने 'इण' इत्युच्चारणे इण इयङुवङावित्यत्र इत्वयत्वयलोपेषु तु सार्धमात्राद्वयमिति बोध्यम् । *शिवमिति* । ग्रन्थादौ ग्रन्थमध्ये ग्रन्थान्ते च मङ्गलमाचरणीयमिति शिष्टाचारविषय इति ज्ञापनायेत्यलम् ॥ १३३ ॥

पं० लक्ष्मणशर्मणा अन्येन च पण्डितवरेण संगृहीता तत्त्वप्रकाशिका सम्पूर्णा ॥

# विक्रेयाणि-संस्कृत-पुस्तकानि ।

१ व्याकरणमहाभाष्यम् । म. म. श्रीकैयटोपाध्याय-नागोजीभट्टाभ्यां प्रदीपोद्योताख्य-विवरणाभ्यां समुल्लसितम् नवाह्निकपर्यन्तम् । प्रथमाध्याय द्वितीयपादादि समाप्तिपर्यन्तं म. म. श्रीकैयटविरचित प्रदीप सहितम् । संपूर्णम् । २५-०

२ व्याकरणमहाभाष्यम् । कैयटविवरण सहितम् । नवाह्निकपर्यन्तम् । ३—०

३ व्याकरणमहाभाष्यम् । अङ्गाधिकार प्रकरणम् । २—८

४ शब्दकौस्तुभः । सर्वतन्त्रस्वतन्त्र श्रीमद्भट्टोजिदीक्षितविरचितः । प्रथमाध्यायमारभ्य तृतीयाध्यायद्वितीयपादपर्यन्तं चतुर्थाध्यायप्रथमपादमारभ्य चतुर्थाध्याय[illegible]र्थपाद पर्यन्तम् । संपूर्णः । १८—०

५ शब्दकौस्तुभः । नवाह्निकपर्यन्तः । ६—०

६ व्याकरणसिद्धान्तसुधानिधिः । अयं व्याकरणशास्त्रस्यापूर्वो ग्रन्थः प्रथमाध्यायतः तृतीयाध्यायान्तः सम्पूर्णः । अस्मिन् ग्रन्थेऽपूर्वा लेखचातुरी दृश्यते । यथा ग्रन्थकारस्य न्यायादिसकलशास्त्रपारीणत्वं परिदृश्यते । बहुषु स्थलेषु शब्दकौस्तुभादिग्रन्थानां महाभाष्याद्याशयानवबोधमूलकत्वं प्रख्याप्यतेऽनेन । रचयिता चास्य ग्रन्थस्य विश्वेश्वराभिधः, यो हि तत्पित्राराधनेन प्रीयमाणो विश्वेश्वरः अहमेव त्वद्गृहेऽवतरिष्यामीत्युक्त्वा साक्षात् ज्ञानकलयावतीर्णो विश्वेश्वर एव । अतोऽयं ग्रन्थः व्याकरणादिशास्त्ररसिकैरवश्यं पर्यालोचनीयः । १५-०

७ वैयाकरणसिद्धान्तलघुमञ्जूषा । श्रीमद्दुर्बलाचार्यविरचित "कुञ्जिका", श्रीमद्बालम्भट्ट विरचित "कला" इति टीका द्वयेन संवलिता । संपूर्णा । १५—०

८ पाणिनीयव्याकरणमिताक्षरा । श्रीमदन्नंभट्टप्रणीता । संपूर्ण । १५—०

९ बृहद्वैयाकरणभूषणं पदार्थदीपिका सहितम् । श्री कौण्डभट्टविरचितम् । संपूर्णम् ६—०

१० वैयाकरणभूषणसारः । सपरिष्कृत दर्पण व्याख्या सहितः । ४—०

११ वैयाकरणभूषणसारः । सरलाव्याख्या सहितः । १—८

१२ लघुशब्देन्दुशेखरः । म० म० पण्डित श्रीनित्यानन्दपन्तपर्वतीयकृत [illegible]काख्येन टिप्पणेन समुज्वलितः । अव्ययीभावान्तः । [illegible]

१३ लघुशब्देन्दुशेखरः । (भैरवि) चन्द्रकलाटीकासहितः । अव्ययीभावान्तः । प्रथमोभागः ५—०

१४ लघुशब्देन्दुशेखरः । (भैरवि) चन्द्रकला टीका सहितः । तत्पुरुषादि समाप्ति पर्यन्तः द्वितीयो भागः ८—०

१५ परिभाषेन्दुशेखरः । श्रीमन्नागेशभट्ट विरचितः । म० म० श्री भैरवमिश्रविरचितभैरवीत्यपराख्यपरिभाषाविवृत्या-तत्त्वप्रकाशिकयाटीकया च सहितः । २—८

१६ प्रौढमनोरमा । शब्दरत्नभैरवीव्याख्या सहिता । श्रीयुत पं० माधवशास्त्रिभाण्डारीविरचित प्रभानामकटीप्पणी तथा अव्ययीभावप्रकरणोपरि श्रीयुत पं० जगन्नाथशास्त्रि विरचित शब्दरत्नप्रदीपनामक टिप्पणी सहितः । अव्ययीभावान्तः । ५-०

१७ प्रौढमनोरमा । शब्दरत्नव्याख्या सहितः सटीप्पण । संपूर्ण । १२-०

१८ सिद्धान्तकौमुदी । सभाष्य शिक्षाऽष्टाध्यायीगणवार्त्तिकधातुपरिभाषोणादिसूत्रफिट्सूत्रलिङ्गानुशासनसूत्रपाठैः सहिता । अष्टाध्याय्यष्टकाकाराद्यनुक्रमसूचिभिः संवलिता । मूलमात्र गुटका । ३—०

---

प्राप्तिस्थानम्—चौखम्बा संस्कृत पुस्तकालय, बनारस सिटी ।